❁ श्रीः ❁

हरिदास-संस्कृत-ग्रन्थमाला

२३



प्रभा–विभा–ज्योत्स्ना-कुचमर्दिनी-संवलित

सशब्दरत्न–

# प्रौढमनोरमा



प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी।

१९३४

THE

HARIDAS SANSKRIT SERIES.

23

THE

# Praudhamanoramā

Of

BHAṬṬOJI DĪKSHITA

( Avyayībhāvānta )

*With Laghu s'abdaratna of S'rī Hari Dīkshita,*

*The Jyotsnā Commentary*

By

VYĀKARAṆĀCHĀRYA

PANDIT S'RI JAGANNATHA S'ASTRI PĀNDEYA

*Notes(Prabha)*–by M.M.Pt. Madhava S'astri Bhandari

*and*

THE KUCHAMARDINĪ COMMENTARY

*Of*

PANDITA RĀJA JAGANNĀTHA

*Edited with*

*Ratnadīpikā and Notes (Vibhā)*

*By*

PANDIT SADĀSHIVA SHARMA SHASTRI

॥ श्रीः ॥

हरिदास–संस्कृत–ग्रन्थमाला

२३

# प्रौढमनोरमा

महामहोपाध्यायश्रीभट्टोजीदीक्षितविरचिता।

( अव्ययीभावान्ता )

तत्पौत्रमहामहोपाध्यायश्रीहरिदीक्षितविरचित-
लघुशब्दरत्नाख्यव्याख्यया समेता।

आजमगढस्थसनातनधर्मसंस्कृतपाठशालाप्रधानाध्यापक—व्याकरणाचार्यायुर्वेदाचार्यादि-
पदवीकपाण्डेय–इत्युपाव्ह–जगन्नाथशास्त्रिकृतयाज्योत्स्नाटीकया, महामहोपाध्याय-
भाण्डारीत्युपाह्वश्रीमाधवशास्त्रिकृतप्रभानाम्न्या टिप्पण्या च संवलिता,
पण्डितराजजगन्नाथकृतकुचमर्दिनी चान्ते संयोजिता।

श्रीस्याद्वादसंस्कृतमहाविद्यालयाध्यापकसाहित्योपाध्यायव्याकरणशास्त्रिपदवीकेन-
जोशीत्युपनामकसदाशिवशास्त्रिणा विभानाम्न्या टिप्पण्या विभूष्य
सपरिष्कारं संशोध्य, आदौ बृहद्भूमिकयाऽन्ते स्वकृत-
प्रश्नोत्तरीरूपपरिशिष्टेन च संयोज्य सुसम्पादिता।

प्रकाशकः—

चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी।

१९९१

॥ श्रीः ॥

# भूमिका ।

इह खल्वनेककल्मषकलुषिते करालकलिकालव्याकुले निखिलभूतले आधिभौतिकाध्यात्मिकाधिदैविकसकलदुःखमलापहारककर्मोपासनजीवब्रह्मैक्यज्ञाने परमसाधनभूताः परब्रह्मणो निश्वासभूताः परमपूतास्तत्रभवन्तो भगवन्तो वेदा विजयन्तेतरामिति को नाम विचक्षणो न विजानाति ।

अत्र मनुः—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ इति ॥

वेदो नाम—विदन्ति—जानन्ति, विद्यन्ते—भवन्ति, विन्दन्ति—लभन्ते, विन्दन्ते—विचारयन्ति, सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा तथा विद्वांसश्च भवन्ति, ते वेदाः ॥

अथवा—

वेद्यन्ते—ज्ञाप्यन्ते, धर्मार्थकाममोक्षा अनेन, इति व्युत्पत्त्या चतुर्वर्गज्ञानसाधनभूतो ग्रन्थविशेषः ।

अथवा—

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः ।

उक्तञ्च श्लोकवार्तिके—

श्रेयः साधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ इति ।

अन्यच्च—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति ।

अस्य श्रीमद्भगवतो वेदस्य प्रामाण्यं यथार्थबोधकत्वान्नित्यत्वाच्च स्वयमेवास्ति । पौरुषेयवाक्यं तु बोधकं सदपि पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते, न तथा वेदः । तस्य हि परब्रह्मणो निश्वासभूतत्वेन नित्यत्वाद्वक्तृदोषशङ्कानुदयात् ।

अत्र "तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्" इति जैमिनिसूत्रादेतदेव प्रतीतम्भवति ।

एक एवायं वेद उपाधिवशात्त्रयश्चत्वारो वेति व्यवहारविषयतामाहुः । तत्राप्येकशतमध्वर्युशाखाः, सहस्रवर्त्मा—सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः, इत्युपाधिभेदेनानेकविधः । अस्य भगवतो वेदस्य सार्थं सानुपूर्व्यमध्ययनं द्विजातीनामत्यावश्यकम् ।

अत्रागमः—'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति ।

अत्र मनुः—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति च ।

अतिगम्भीरतरस्यास्य भगवतो वेदस्यार्थमवबोधयितुं मानुषशेमुष्यशक्यतया शिक्षादीनि षडङ्गानि प्रवृत्तानि । तेषु षडङ्गेषु मध्ये व्याकरणस्य वेदमुखत्वान्मुख्यतमत्वमिति न तिरोहितं विपश्चिताम् ।

उक्तञ्च तत्रभवता भास्कराचार्येणापि—

यो वेद वेदवदनं सदनं हि सम्यक् ।
ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम् ॥
यस्मादतः प्रथममेतदधीत्य धीमान् ।
शास्त्रान्तरेषु भवति श्रवणेऽधिकारी ॥ १ ॥

तथाचोक्तमभियुक्तेन—

यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥

तत्रभवता पतञ्जलिनाप्युक्तम्—

'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" ॥ इति ।

एवञ्च व्याकरणस्य 'वेदरक्षा, ऊहः, आगमः, लाघवम्, असन्देहः' इत्यादिप्रयोजनत्वादवश्यमध्येतव्यं व्याकरणमित्यलम्पल्लवितेन ।

व्याकरणं नाम—अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादीन् विशेषेण—संस्कारविशेषेण, आसमन्तात्—वैदिकान् लौकिकांश्च शब्दान् करोतीति तथाभूतः पाणिन्यादिमहर्षिप्रणीतो ग्रन्थसमूहः ।

अस्य व्याकरणस्य प्रणेतारोऽष्ट नव वा आचार्या बभूवुः ।

तथाहि—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥ १ ॥

एतेषु सत्स्वपि सर्वेषु व्याकरणेषु सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकं पाणिनीयव्याकरणमेव वरीवर्ति ।

अत एवास्य वेदाङ्गत्वम् । इदमेवाभिप्रेत्य "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तम्, यथाऽऽचार्या ऊचुः, ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विदमक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः" इति ऋक्तन्त्रव्याकरणेऽस्य चतुर्दशसूत्रकदम्बकस्याम्नायत्वमुक्तम् । तन्मूलकत्वादेवास्य व्याकरणस्य वेदाङ्गत्वं युक्तम् । अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यमिति स्पष्टं शब्देन्दुशेखरे तत्रभवता नागेशेन प्रतिपादितम् ।

छान्दोग्योपनिषदि व्याकरणमुपक्रम्य "वेदानां वेदः" इत्युक्तम् ।

अत्र पराशरोपपुराणम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥ १ ॥ इति ।

अन्यच्च—

काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् । इति च ।

सर्वव्याकरणनिकरेषु निकषायमाणस्य पाणिनीयव्याकरणस्यातिसारवत्तरत्वं बहुमत्यां विदुषां विदितचरमेव ।

## पाणिनिः—

अत्र सूत्रकाराणां परिचयस्तावत्-आसीत्किल ईसवीयाब्दात्प्राक् पणिनामा सुगृहीतनामधेयः कश्चन महर्षिः । तस्मात् पाणिननामकः सूत्रकारस्य जनको जनिमवाप । ऋषिवर्योऽयं दाक्षसुतामुदुह्य तस्यां पाणिनिनामानं तनूजमजनयत् । अतिक्रम्य बालकेलिं कृतमौञ्जिको विद्याग्रहणाय पुण्यस्थलमुपत्रसत्तं पुण्यश्लोकं पण्डितवरिष्ठं विद्यागरिष्ठं वर्षाचार्यमुपजगाम ।

## वर्षाचार्यः—

अयं विद्वद्वराग्रणीर्वर्षाचार्यो नन्दनाम्नो नृपतेः पाटलीपुत्रनामधेये नगरे निवासिनः श्रीशङ्करस्वामिनो लब्धजन्माराधितशरजन्मा बाल्याचरितबालिशस्तपस्तोषितस्वामिकुमाराल्लब्धोत्तमभागधेय आप्तसकलविद्य आसीत् ।

अस्य महर्षेः सविधे पूर्वं वररुचिः, व्याडिः, इन्द्रदत्तश्चेति त्रयः शिष्याः परमाख्यातिङ्गता आसन् ।

## वररुचिः—

श्रीमद्भगवतो महेश्वरादवाप्तप्रसादः सकलगुणवरिष्ठः पुष्पदन्ताभिधानः सर्वगन्धर्वराजो दैवदुर्विपाकात् पार्वत्या शप्तः कौशाम्बीनगरे सोमदत्तशर्मणो द्विजाद्वसुदत्तायां जातो दिव्यधिषणाधिष्ठितस्वान्तो वररुच्यभिधानेन ख्यातिङ्गत आसीत् ।

## व्याडि-इन्द्रदत्तौ—

कदाचिद्दैववशादिन्द्रदत्तव्याडिनामानौ पितृविहीनौ जनन्येकशरण्यौ विद्यायै तपस्तोषितसेनान्यौ स्वप्ने "वर्षाख्यगुरोर्विद्यामवाप्स्यथ" इति लब्धवरौ विप्रवरौ तं वररुचिं समगच्छेताम् । ते त्रयोऽपि वर्षाचार्याणां सविधे विद्याग्रहणाय ययुः । तत्र सकृच्छ्रुतग्राहिवररुचिम्, द्विश्रुतग्राहिव्याडिम्, त्रिश्रुतग्राहीन्द्रदत्तम्, अवाप्यातिख्यातिङ्गतस्य वर्षाख्यगुरोः सविधे बहवश्छात्राः समागता आसन् । तेषु मन्दधीः पाणिनिरपि समायातः ।

सरित्सागरे—

अथ कालेन वर्षस्य शिष्यवर्गो महानभूत् ।
तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् ॥

कस्मिंश्चित् काले विवदमानेषु तेषु पराजितः शुश्रुषापरिक्लिष्टः पाणिनिः पराजयजन्यनिर्वेदस्य परां काष्ठां गतो विद्याकामो हिमालयं तपसेऽगच्छत् ।

सरित्सागरे—

स शुश्रूषापरिक्लिष्टः प्रेषितो वर्षभार्यया ।
अगच्छत्तपसे खिन्नो विद्याकामो हिमालयम् ॥

तत्र तावत् सर्वाधीशं महेशं महता तपसा समाराध्य तोषितादिन्दुशेखरात्सर्वविद्यामुखमभिनवं व्याकरणं लब्धवान् ।

सरित्सागरे—

तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात् ।
सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् ॥ इति ।

( पाणिनेर्जन्मवंशः ) ( पाणिनेर्विद्यावंशः )
( पिता ) पाणिः शङ्करस्वामी ( पिता )
|
( पुत्रः ) पाणिनः वर्षाचार्यः ( पुत्रः )
|
( पुत्रः ) पाणिनिः (शिष्यः) वररुचीः, व्याडिः, इन्द्रदत्तः, ( शिष्याः )
|
(शिष्यः) व्याघ्रभूतिः श्वोभूतिः ( शिष्यः )

ततो हृष्टान्तस्वान्तः सुस्नातो दर्भपाणिः पाणिनिः महेश्वराल्लब्धं चतुर्दशसूत्रात्मकाम्नायकदम्बकमुररीकृत्य कृतमहेश्वरस्मरणः सन् "वृद्धिरादैच्" इत्याद्यं सूत्रमारभ्य "अ अ" इति सत्रपर्यन्तम् अष्टाध्यायात्मकं ग्रन्थं जग्रन्थ । ततः स श्रीगुरुवर्षाचार्यनिवासस्थानं समागत्य स्वनिर्मितमष्टाध्यायात्मकं व्याकरणं तेभ्यः श्रावयामास ।

अनेन च एकादशगणाष्टाध्यायी, धातुपाठः, दशदण्डात्मिका शिक्षा, जाम्बवतीपरिणयाख्यं काव्यं, चेत्यादि व्यरचि । तत्र तावद्वार्तिककारेण कात्यायनेन वररुचीरित्यपरनाम्ना साकं सप्तदिनानि यावच्छास्त्रार्थे सञ्जाते जितकल्पे पाणिनौ गगनतलाद्घोरशंकरहुङ्कारतः पाणिनिः वररुचिं जिगाय । जितः कात्यायनो विस्मृतशास्त्रो मूर्खतापन्नः पुनस्तपसा परेशं संतोष्य पाणिन्यनुक्तार्थपरिपूरकं दुरुक्तपुनरुक्ताद्यर्थनिरासकं च वार्त्तिकाख्यं ग्रन्थमकरोत् ।

तमुपश्रुत्य खिन्नः पाणिनिः कात्यायनाश्रममापन्नः सन् अर्घ्यपात्रेण सह प्रत्युद्गच्छन्तमपि वररुचिमविगणय्य "यतो महेश्वरानुभूतेन मया कृते शास्त्रेऽनुक्तदुरुक्तपुनरुक्तादिदुश्चिन्ताकुलेन त्वया वार्तिकानि कृतानि तेनापराधेन त्वमचिरात्पतिष्यसि" इति शप्तवान् । कात्यायनोऽपि तं तथैव शप्तवान् । ततस्तस्यामेवागमिन्यां त्रयोदश्यां तिथावरण्ये वरेण्यं समित्कुशाहरणाय व्यचरन्तं पाणिनिमहर्षिं सिंहो जिहिंस ।

उक्तञ्च विष्णुमित्रेण—

सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः ॥ इति ।

वार्तिककारस्यापि तस्यामेव तिथौ शरीरं व्यशीर्यत ।

तत आरभ्य सवार्तिकं पाणिनीयव्याकरणं पाणिनिशिष्येण व्याघ्रभूतिना कात्यायनशिष्येण श्वोभूतिना च पाठनद्वारा प्रकटितं छात्रपरम्परयाद्ययावत्परमाख्यातिम्प्रापत् । व्याडिरपि पाणिनीयव्याकरणेऽतिविस्तृतं सङ्ग्रहाख्यं ग्रन्थं जग्रन्थ । नाद्यत्वे उपलभ्यते सः ।

पतञ्जलिः—

ततो महता कालेन कठोरकलिकुटिले जगतितले वेदवेदाङ्गाध्ययनपराङ्मुखतापन्ने विप्रवृन्दे प्राक्तनं ख्यातिङ्गतं सुगममपि व्याकरणं दुर्गमतामवाप ।

परमकारुणिकेन तत्रभवता विष्णुना व्याकरणोद्धरणायाज्ञप्तः शेषोऽपि गोनर्ददेशान्तर्गते आश्रमे प्राज्ञपुत्रार्थं चिरात्सवितारं प्रार्थयन्तीं गोणिकानाम्नीं काञ्चित् तपस्विनीं ऋषिपत्नीं स्वमातरं परिकल्प्य तस्याः सूर्यार्घ्यदानसमये जले प्रविश्य भूमौ निपपात । भयात्तया पृष्टे 'कोऽभवान्' इति तदा स चातुर्येण सर्पोऽहमिति प्रत्युवाच । 'रेफः क्व गतः' इति तया पृष्टेन तेन 'त्वयापहृतः' इत्युक्तम् ।

अत्र नागेशः—केनचिन्मुनिना भानवे दीयमानार्घ्यसमये इदं वृत्तं समजनीति शेखरे प्राह ।

ततः पतनसमये सर्पशरीरं धृतवानपि भगवान् विष्णुप्रसादान्मानवतनूमतनोदिति प्रतीयते । श्रीमतस्तत्रभवतो विश्वंभरस्य प्रसादाद्दिव्यदृष्टिः पतञ्जलिः पाणिनीयव्याकरणस्यावनतिमसहमानः

'यद्विस्मृतमदृष्टं वा सूत्रकारेण तत्स्फुटम् ।
वाक्यकारो ब्रवीत्येव तेनादृष्टञ्च भाष्यकृत् ॥

'इत्युक्तलक्षणलक्षितं महाभाष्यं व्यरीरचत् । सहस्रशश्छात्राणां सम्प्रार्थनया 'जवनिकाभ्यन्तरस्थेन मया यूयं महाभाष्यमध्यापयितव्याः, तस्यश्च कदापि केनाप्यहं न द्रष्टव्यः' इति समयेन संयतास्ते छात्राः सहस्रफणामण्डलमण्डिताच्छेषात् द्वात्रिंशदान्हिकानि यावत् अधीतवन्तः । ततो दैवदुर्विलासात् "कृत्तद्धित" इति सूत्रस्यमहाभाष्यस्याध्ययनान्ते 'अस्य कति मुखानि सन्ति, यतोऽयं भगवान् सर्वान् पृथक् पृथक् पाठयति, इति द्रष्टुकामः कश्चन छात्रो जवनिकामपनिन्ये । दर्शनमात्रादेव च ते सर्व विशालविषज्वालया भस्मतां गताः । तदानीमेव कश्चन छात्रो जलोत्सर्जनाय गतवानासीत् । स तत्रागत्योवाच 'भगवन् क्षन्तव्यम् , नाहमपराधी, प्रसीद' इति पुनः पुनः पतञ्जलिं साञ्जलिपुटं प्रार्थयामास

पतञ्जलिरपि त्वं पाठारम्भे शान्तिपाठमकृथाः, अध्ययनान्ते तु तमकृत्वैव गतोऽतो राक्षसो भवेति तं शशाप । ततः स्तुत्या संतोषितः स 'पच्धातोः क्ते रूपं कथमिति पृष्टे यः पक्वमिति ब्रूयात्तं सर्वं भाष्यं पाठनीयम्, तेन त्वं शापाद्विमुक्तो भविष्यसि । मदनुग्रहाच्च ते सर्वं भाष्यं प्रस्फुरतु, इत्युक्त्वा व्यन्तरधात् । अग्रे च राक्षसद्वारैव सर्वं भाष्य ख्यातिमगात् ।

ततः कालान्तरेण विद्वद्वरेण भर्तृहरिणा व्याकरणमहाभाष्योपरि वाक्यपदीयं प्रणायि । ततो जैयटसुतेन कैयटेन हरिकारिकानौकामारुह्य भाष्यार्णवं समुन्मथ्य प्रदीपाख्या सुव्याख्या व्याख्याता ।

ततश्च वामनजयादित्याख्यां सरलगत्या सर्वजनसाधारणानामुपकाराय सूत्रार्थ-तदुदाहरणप्रकाशिका काशिका प्रकाशिता । पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराज-सुतसङ्गमराजमहामन्त्रिणा मायणपुत्रेण माधवसहोदरेण सायणेन छात्राणां प्रमोदभ-राय माधवीयधातुवृत्तिर्विरचिता । हरदत्तादिभिः पण्डितवर्यैः काशिकार्थप्रकाशिका-पदमञ्जर्यादयो विस्तृताष्टीका व्यरचिषत । पण्डितवरेण श्रीरामचन्द्रेण प्रकरणसौष्ठ-वाय प्रक्रियाकौमुदी निरमायि । तस्यामुपरि शेषकृष्णाचार्येण प्रक्रियाप्रकाशनाम्नी टीकाकारि ।

पश्चादहरहः करालकालिकालफूत्कृतिविकम्पितमतीनां मानुषाणां सहजसुलभ-लाभाय सूत्रवार्तिकभाष्याणां सम्यगर्थप्रदर्शनाय च भाष्याब्धिमुन्मथ्य समुल्लासिता सिद्धान्तकौमुदी शेषकृष्णशिष्येण सुधिया श्रीभट्टोजीदीक्षितेन विनिर्मिता या सर्वेषु ग्रन्थेषु अतिशेतेतरामत्र जगति ।

अस्यामुपरि तेनैव विनिर्मिता, प्रौढमनोरमानाम्नी टीका प्राचीनवैयाकरणकृत-सिद्धान्तान्प्रदूष्य भाष्यसिद्धान्तान् सम्यक् प्रदर्श्य विलक्षणधिषणानां सकलविच-क्षणानां मनोरमैव संजाता ।

### श्रीभट्टोजीदीक्षितः—

सुग्रहीतनामधेयोऽयं ऋग्वेदान्तर्गताश्वलायनसूत्रशाकलशाखाध्यायी भट्टकुला-वतंसः श्रीमल्लक्ष्मीधरपण्डितवरतनूजन्मा श्रीमच्छेषकृष्णाभिधगुरोश्चरणानुराधनसमा-सादितवैदुषीभूषितः खिस्ताब्दमानेन (१६३०) खाग्निरसेन्दुपरिमिते वत्सरे वारा-णसीनिवासी विद्यावारिधिमथनदीक्षितो भट्टोजीदीक्षितो दाक्षिणात्यो ब्राह्मण इति तद्देशस्य 'जी' इत्यन्तनामप्रणाल्या निश्चीयते । केचन सारस्वतब्राह्मण इति वदन्तीत्यन्यदेतत् ।

अनेन पण्डितवरेण शब्दकौस्तुभादयो व्याकरणग्रन्थाः, त्रिस्थलीसेत्वादयो बहवो धर्मशास्त्रग्रन्थाश्च विरचिता अविद्यन्त । तत्पुत्रो भानुदीक्षितोऽपरनाम्ना वीरेश्वरशास्त्रीति रामाश्रम्या अमरकोशव्याख्याया व्याख्याता सिद्धान्तचन्द्रिकाप्रणयिता चाभूत् । श्रीभानुदीक्षितसुतः श्रीहरिदीक्षितो लघुशब्दरत्नाभिधप्रौढमनोरमाव्याख्याव्याख्याता शेखरविरचयितुर्नागेशस्यैकगुरुर्विद्वद्वरो ऽवरीवर्तत ।

एतेषां विद्ययोनिसम्बन्धतो वर्धितवंशवृक्षश्चेत्थम्—

तथाहि—




साचेयं प्रौढमनोरमा स्वयमेव सकलप्रौढवैयाकरणमनोरमणचणापि श्रीमद्भट्टोजीदीक्षिततनयश्रीभानुदीक्षिततनूभवेन विद्वद्वराग्रसरेण श्रीहरिदीक्षितेन व्याख्यानरत्नेन शब्दरत्नेनालंकारि ।

शब्दरत्नसहितप्रौढमनोरमायाः सर्वत्र प्रचलितपरीक्षासु निर्धारितत्वेन वैयाकरणसिद्धान्तानां सरलतया प्रतिपादकत्वेन च छात्राणां विदुषाञ्च परमोपयोगित्वमुपलक्ष्य मुद्रणाय निर्धारितेयं प्रकाशकेन श्रीहरिदासगुप्तात्मजजयकृष्णदासश्रेष्ठिना परिष्करणार्थं मह्यमदायि ।

मया च सम्प्रति वाराणस्यादिषु प्रचलिताध्यापनशैल्यनुसारेण छात्राणां सम्यगर्थप्रबोधनार्थम्—आजमगढस्थसनातनधर्मसंस्कृतपाठशालाप्रधानाध्यापक'पाण्डेय'

इत्युपाव्हपण्डितजगन्नाथशास्त्रिनिर्मिता 'ज्योत्स्ना' इति नाम्नी टीका, लवपुरीयराजकीयप्राच्यपाठशालाप्रधानाध्यापकव्याकरणवेदान्ताचार्यसाहित्यमीमांसातीर्थमहामहोपाध्यायभाण्डारीत्युपनामकपण्डितमाधवशास्त्रिकृता 'प्रभा'-नाम्नी टिप्पणी चात्र सशब्दरत्नमनोरमाग्रन्थे तत्तत्स्थलेषु विनियोज्य, प्रियवरपाठकगणसौलभ्याय कौमुदीस्थप्रतीकाक्षराणां मनोरमास्थप्रतीकाक्षराणां शब्दरत्नस्थप्रतीकाक्षराणां झटिति प्रतीत्यै स्थूललघ्वक्षरतां प्रकल्प्य तत्तत्स्थलान् विभानाम्न्या टिप्पण्या विभूष्य सर्वत्र विरामचिन्हादिना परिष्कृत्य तत्तच्छंकास्थलान् राजकीयप्रधानपाठशालाध्यापकव्याकरणाचार्यपण्डितप्रकाण्डगुरुवरमोकाटे इत्युपनामकगणपतिशास्त्रीणामुक्तिजलेन प्रक्षाल्य भूमिकायां च वेदस्य व्याकरणस्य च प्रयोजनमर्थञ्च प्रदर्श्य श्रीपाणिनिमारभ्य श्रीभट्टोजीदीक्षितपर्यन्तमैतिह्यं विनिवेद्य ग्रन्थान्ते पण्डितराजजगन्नाथकृतकुचमर्दिनीं विनिवेश्य प्रश्नोत्तरीरूपं रत्नदीपकनामानं परिशिष्टं च विरचय्य संशोधिता।

काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकलब्धन्यायव्याकरणाचार्यपदवीकशुक्लोपनामकपण्डितश्रीसूर्यनारायणशास्त्रिणा पण्डितराजश्रीजगन्नाथकृतकुचमर्दिनीसंशोधने मह्यं बहुतरं साहाय्यं प्रदत्तमतस्ते मदीयधन्यवादार्हा इति तेषामुपकारान् साञ्जलिबन्धं मुक्तकण्ठेन प्रकटीकुर्मः।

यद्यपि ज्योत्स्नायां प्रभायाः सन्निवेशः प्रायेण दृश्यते, तथाप्युभयोः स्वातन्त्र्यात् भिन्नलेखकृत्वाच्च तयोर्ज्योत्स्नाप्रभयोस्तथैव सङ्ग्रहः कृतः, इति न वाचकानां पुनरुक्तदोषदानेऽवसरः।

## नम्रनिवेदनम्—

यद्यत्र परिशोधितग्रन्थे गच्छतस्स्खलनन्यायान्मतिमान्द्याल्लेखदोषान्मुद्रकदोषाद् दृष्टिदोषाद्वा मानुषनिसर्गतया दोषनिकरस्य सम्भवो भवेत्, तथापि विलक्षणधिषणानां विचक्षणानां गुणैकदृष्टिनिसर्गतया स क्षम्यो भवेदिति आशासे।

नचात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥

इत्युक्तिमनुसन्धाय कण्टकाविद्धसरोजमुकुलवत् हंसक्षीरन्यायेन मदीयदोषान् विहाय मामनुगृह्णन्तु तत्रभवन्तो विद्वांस इति साञ्जलिबन्धं सम्प्रार्थयते।

विदुषामनुचरः—
**सदाशिवशर्मा जोशी**
साहित्योपाध्यायः, व्याकरणशास्त्री च।

## अथ पञ्चसन्ध्यन्तप्रभाविभाज्योत्स्नासंवलितसशब्दरत्न-प्रौढमनोरमास्थप्रकरणानाम्–

## अनुक्रमणिका—



इति पञ्चसन्ध्यन्तप्रभाविभाज्योत्स्नासंवलितसशब्दरत्नप्रौढमनोरमास्थप्रकरणानामनुक्रमणिका।



## अथ प्रभाविभाज्योत्स्नासंवलितसशब्दरत्नप्रौढमनोरमास्थविषयाणाम्—

## अनुक्रमणिका—

इतिपञ्चसन्ध्यन्तप्रभाविभाज्योत्स्नासंवलितसशब्दरत्नप्रौढमनोरमास्थविषयाणामनुक्रमणिका ।

## अथ स्त्रीप्रत्ययान्तप्रभाविभाज्योत्स्नासंवलितसशब्दरत्न-प्रौढमनोरमास्थप्रकरणानाम्–

## अनुक्रमणिका--



इति प्रभाविभाज्योत्स्नासंवलितसशब्दरत्नप्रौढमनोरमास्थप्रकरणानामनुक्रमणिका ।

## अथ प्रभाविभाज्योत्स्नासंवलितसशब्दरत्नप्रौढमनोरमास्थविषयाणाम्—

## अनुक्रमणिका--

इति प्रभाविभाज्योत्स्नासंवलितसशब्दरत्नप्रौढमनोरमास्थविषयाणामनुक्रमणिका ।

अथ प्रभा-विभा-ज्योत्स्ना-सम्वलितसशब्दरत्न-
प्रौढमनोरमास्थप्रकरणानाम् ।

## अनुक्रमणिका ।



इति प्रभा-विभा-ज्योत्स्ना-सम्वलितसशब्दरत्नप्रौढमनोरमा-
स्थप्रकरणानामनुक्रमणिका ।

प्रभा-विभा-ज्योत्स्नासम्वलितसशब्दरत्न प्रौढमनोरमाया

## कारकाव्ययीभावस्थविषयाणां सूची ।

इति प्रभा-विभा-ज्योत्स्ना-संवलित-सशब्दरत्नमनोरमास्थ-

विषयाणां सूची समाप्ता ।



॥ श्रीः ॥

## अथ कुचमर्द्दिनीस्थप्रकरणानाम्–

# अनुक्रमणिका ।



---

इति कुचमर्द्दिनीस्थप्रकरणानामनुक्रमणिका ।

## अथ कुचमर्दिनीस्थविषयाणाम्–

# सूची ।



इति कुचमर्द्दिनीस्थविषयाणां सूची ।

# अथ प्रभा-विभा-ज्योत्स्ना-संवलितसशब्दरत्नमनोरमास्थ-प्रसंगोपात्तानां श्लोकानाम्—

## अकारादिक्रमेण सूची—

इति प्रभा-विभा-ज्योत्स्ना-संवलितसशब्दरत्नमनोरमास्थप्रसंगोपात्तानां श्लोकानाम् —

अकारादिक्रमेण सूची समाप्ता ।





श्रीगणेशाय नमः ।

# प्रौढमनोरमा ।



ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां (१)कुर्मः प्रौढमनोरमाम् ॥ १ ॥

---

## अथ शब्दरत्नप्रारम्भः ।

शेष[२]विभूषणमीडे शेषा[३]शेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ १ ॥

## अथ शब्दरत्नव्याख्या ज्योत्स्ना समारब्धा ।

वन्देऽहं सुखदातारं तन्वे साम्बं महेश्वरम् ।
जगन्नाथः शब्दरत्नज्योत्स्नां टीका सुनिर्मलाम् ॥ १ ॥

तत्र तावन्मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतेश्च कपिलोक्तिमनुस्मृत्य, बोधितः, "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि

---

विभा-(१) ननु कृञ्धातोः ञित्वात् "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यनेन-परोपकारजनितपुण्यस्य आत्मगामित्वात्परस्मैपदन्नोचितमिति चेन्न । परोपकारजनितपुण्यस्य भगवच्चरणारविन्देऽर्पणस्यविवक्षितत्वात् ।

वि० (२) अत्रार्थद्वयं—शेषः सर्पराजः विभूषणं अलंकारो यस्य तं शिवमित्येकः । शेषविरुद्धः सर्पराजविरुद्धः विः पक्षी, भूषणं वाहनतया यस्य स तं गरुडवाहनं विष्णुमित्यपरः इति ।

वि० (३) शेषस्य-अशेषो ऽर्थः शेषाशेषार्थः महाभाष्यार्थः, तस्य लाभः तस्मै । शेषश्च अशेषश्च शेषाशेषौ नञो विरुद्धार्थत्वादत्र फणिगरुडावर्थौ तयोरर्थाः महाभाष्यगरुडपुराण-सिद्धान्ताः तेषां लाभायेति केचित् ।

शब्दरत्न ।

ध्यायं ध्यायमिति । ध्यात्वा धात्वेत्यर्थः । णमुलन्तमेतत् । परं सर्वजगदुपादानम् ।

ज्योत्स्ना ।

च भवति" इत्यादि फलकत्वाच्च । निर्विघ्नसमाप्त्यर्थं समुचितेष्टदेवतानमस्कार-रूपं मङ्गलं ग्रन्थादौ निबध्नाति । शेषविभूषणमिति । शेषः एव विविधं विशिष्टं भूषणं यस्य तं शिवमित्यर्थः । अथवा शेषश्च विश्च शेषवी विशब्दस्य अल्पाच्त्वेऽपि अभ्यर्हितत्वाच्छेषशब्दस्य पूर्वनिपातः । भूषयतस्ते भूषणे यस्य तं विष्णुमित्यर्थः । शेषयुक्तः शेषविरुद्धो वा विर्गरुडो वा भूषणं यस्य पर्यङ्कतया वाहकतया च, तं शेषशायिनं गरुड़वाहनंचेति फलितोऽर्थः ।

यद्वा शेषव्योः शेषयुक्तवेर्वा भूषणमिति षष्ठीतत्पुरुषः, तयोः स्थित्या शोभा-वैशिष्ट्यादिति केचित् ।

वस्तुतस्तु—हरिहरात्मक-श्रीलक्ष्मीनृसिंहमित्यर्थः ।

अत एव नारदपञ्चरात्रे–'शेषनागफणास्फीतसहस्रच्छत्रभासुर' इति ध्याने उक्तम् । तत्रैव तन्मन्त्रे–'विशेषभोगात्मकपर्यङ्कशायिने नमः' इत्यर्थ इत्युक्तम् । मन्त्रमहोदधा-वपि श्रीलक्ष्मीनृसिंहध्याने "सर्वाधीशफणातपत्रलसित' इतिचोक्तमिति दिक् । नतेः फलमाह—शेषाशेषार्थेति । शेषस्य यो ऽशेषो ऽर्थो, हितस्य लाभस्तस्मै । आद्ये शेष-विशिष्टशिवस्तुत्या विभूषणविशिष्टशिवस्य हर्षावस्थापन्नस्य स्मरणेनाभीप्सितार्थ-सिद्धिर्भवत्येव । अन्त्ये शेषस्याशेषोऽर्थः–महाभाष्यार्थस्तस्य लाभाय ।

यद्वा शेषश्चाशेषश्चेति द्वन्द्वगर्भस्तत्पुरुषः, तेन महाभाष्यार्थगरुड़पुराणोक्तार्थस्य लाभः ।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः ॥

इत्यभियुक्तोक्तेः असुरपद इवाशेषपदे विरोधार्थको नञ् इति बोध्यम् । अन्त्ये सदसद्विवेकद्वारा ज्ञानोपयोगार्थन्तल्लाभस्येष्टत्वात् । तादर्थ्ये चतुर्थी । प्रथमकक्षायां तमध्याहार्यम्, तं कमित्याह—यत्कृपादृष्टिरिति । सर्वनाम्नामुत्सर्गतः प्रधानपराम-र्शित्वमिति नियमाद्यच्छब्दः विष्णोः शिवस्य श्रीलक्ष्मीनृसिंहस्य वा परामर्शकः । बुद्धिविषयतावच्छेदकधर्मावच्छिन्नत्वबोधकत्वायतच्छब्दस्येति भावः । कृपा युक्ता दृष्टिः, कृपैव दृष्टिरिति वा । सकलमभीष्टं फलं दातुमीष्टे । ईष्टे इत्यनेनेश्वरत्वबोधनम् । स्वा-तन्त्र्यात्समर्थो भवतीत्यर्थः । तथेश्वरस्य भूपतेः प्रसादेन भवदीयाः सर्वे मनोरथाः सिद्धाः भवन्तीति सूचितम् ।

ननु ध्यायमिति द्वितीयान्तं यदा तदा अभ्यासानुपपत्तिरतो विवृणोति—ध्यात्वा ध्यात्वेति । विवरणविव्रियमाणयोः समानार्थकत्वनियमादित्याह—णमुलन्तमेतत् । ननु

शब्दरत्न ।

कार्यब्रह्महिरण्य[१]गर्भव्यावृत्तये इदम् । ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम् । स्मरणं तु तज्जन्यमिति विशेषः । गुरो[२]रित्येकवचनेन सर्वविद्यालाभ एकस्मादेवगुरोरिति सूचितम् । प्रौढानां मनो रमयतीत्यर्थिकां मनोरमाम् । प्रौढत्वं च

ज्योत्स्ना ।

व्रजन्तत्वे उक्तार्थ लाभ इति भावः । कार्यब्रह्मेति । "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति श्रुत्या तस्य कार्यत्वं बोध्यते । न च ब्रह्मेति नपुंसकनिर्देशादेव तद्व्यावृत्तिरिति वाच्यम् । "यः सर्वज्ञः स सर्ववित् तस्य ज्ञानमयं तपः" "तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते"इति श्रुतौ तदर्थकब्रह्मपदस्य क्लीबत्वदर्शनेन तस्य तद्व्यावर्तकत्वात् । न च हिरण्यगर्भस्य चेतनरूपत्वेन तस्य च नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या नित्यत्वावगमेन कथङ्कार्यत्वमिति वाच्यम् । अपञ्चीकृतसकलभूतसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः, तदुपाधिभूततादृशशरीरस्य जन्यत्वात् । अत एव "हिरण्यगर्भः समवर्तताग्रे" इति श्रुतिरपि सङ्गच्छते इति दिक् ।

ननु ब्रह्मणि किन्नाम परत्वम् ? नचान्यत्वम् ? तत्र भेदस्यासत्वात् । नचोत्कृष्टत्वमतत्वम् ? यत्किञ्चित् प्रतियोगिकोत्कर्षस्य येन केनापि रूपेण सर्वत्र विद्यमानत्वात् । न च जगदुपादानत्वम् ? हिरण्यगर्भेऽतिप्रसक्तत्वादित्याह—सर्वजगदुपादानत्वन्तत्त्वम् ।

ननु ध्यै स्मृ धात्वोरेकार्थकत्वेन पौनरुक्त्यापत्यान्यतरोपादानं व्यर्थमिति भेदं प्रदर्शयति—ध्यानमित्यादिना । स्मृत्यनुकूलेति । स्मृतिजनकभावनाख्यसँस्काररूपव्यापाररूपमित्यर्थः । प्राचीनमते स्मृतावनुभवस्य कारणतेति या निश्चितत्वेन व्यापारस्य तत्त्वं विना बाधितत्वेन तस्यापितत्वात् । व्यापारेण व्यापारिणोऽन्यथासिद्धेश्च ।

नवीनमते तु अन्यथासिद्ध्या तस्यैव कारणत्वादिति मतद्वयेऽप्येतत् ।

अन्येतु—प्राचीननये पञ्चम्यर्थबहुव्रीहिणा स्मृतिजनकानुभवरूपमर्थमाहुः । गुरोरिति । कृष्णपण्डितनामकादेवेत्यर्थः । अस्य सर्वविद्यानिधित्वेन विष्णोरिवाद्वितीयत्वमेकवचनेन सूचितम् ।

ननु प्रौढानां मनांसि प्रौढमनांसि रमयति या सा प्रौढमनोरमा इत्यर्थश्चेत्, तदा कर्मण्यणि "टिड्ढा" इति ङीपि रूपासिद्धिरित्याह—प्रौढानामित्यादिना । अत्र केचित्

प्रभा—( १ ) "हिरण्यगर्भः समवर्तताग्रे" इति श्रुत्या तस्य कार्यत्वं बोध्यते । तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" इतिश्रुतौ तदर्थकब्रह्मशब्दस्य क्लीबतादर्शनेन न तस्य क्लीबनिर्देशेन व्यावृत्तिः ॥

प्र० ( २ ) कृष्णपण्डितनामकादित्यर्थः । अस्य सर्वविद्यानिधित्वेनेश्वरस्येवाऽद्वितीयत्वमप्येकवचनेन ध्वन्यते ।

"ह य व र ट्" (मा०सू० ५) । हकारोपदेशः, अट्अश्हश्इण्ग्रहणेषु हकारग्रहणार्थः । अर्हेण, "अड्व्यवायेऽपि" इति ण(१)त्वम् । देवा हसन्ति,

शब्दरत्न ।

[२]सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् ॥

इण्ग्रहणेष्विति । नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात् । फलं तु बहुपुम्क्ह, इत्यादौ "पुमः खय्यम्"इति रुत्वम् । गवित्ययमाहेत्यादिवत्, अपदान्तत्वात्ककारादेर्न जश्त्वमिति चेन्न । "सुट्तिथोः" इत्यादावकाराद्युच्चारणेन शास्त्रावोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात् । अत एव "उच्चैरुदात्तः" [ पा० सू० १।२।२९ ] इति सूत्रे भाष्यं "न पुनरन्तरेणाचं व्यञ्जनस्योच्चा[३]रणमपि भवति" इति । स्कोरित्यादिस्तु सौत्र[४]प्रयोगः । अत एवाटि हकारप्रयोजनकथनावसरे भाष्ये "शश्छोटि"

ज्योत्स्ना ।

गङ्गाधर इत्यत्रेव कर्मणः शेषत्वविवक्षया रमयतेः पचादित्वस्य मूलविभुजादित्वस्य वा कल्पनेन रमयतीति रमा प्रौढमनसां रमेति विग्रहः कार्य इत्याहुः ।

वस्तुतस्तु—"अकारानुपपादनात्कर्मोपपदो विप्रतिषेधेन" इति कर्मण्यणीत्यत्रत्यवार्त्तिकात्–अलमाश्रयते इत्यलाश्रयः स चासौ विधिरिति भाष्यात् स्त्रियमाचक्षाते स्त्राख्यौ इत्यत्र "मूलविभुजादित्वात्क" इति "सूत्राख्यौ" इत्यत्र भाष्याच्च विशिष्टस्यैव गणे पाठः कल्प्यते । एवं गङ्गाधरादिष्वपि बोध्यम् ।

नन्वेवं रमा इत्यसिद्धिः ? येभ्यो विशिष्टेभ्य इष्यते ते स्वादौ णिज्रहितान् केवलान् तान् पठित्वा तदनन्तरं कर्मोभयपदेभ्यश्चेति पठित्वा ततो णिच् प्रकृतिभूतान् तादृशान् सच कारान् पठित्वा "णितश्च" इनि पाठ्यमित्येतत्तात्पर्येकेण लाघवस्य रमेत्यादिसिद्धेश्च निष्प्रत्यूहत्वादित्याहुः ।

प्रकृतोपयोगि प्रौढपदार्थतावच्छेदकमाह—प्रौढत्वंचेति । दर्शनार्थज्ञानपूर्वकसकलमहाभाष्यगूढार्थज्ञानवत्वमित्यर्थः इति योजना । अनेन व्याकरणशास्त्रस्य सकलशास्त्रोपयोगित्वं व्यज्यते । तदुक्तं विष्णुपुराणे—

"ब्रह्मणो वेदितव्ये च शब्दब्रह्मपरं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

---

वि० ( १ ) णकार इत्यर्थः । घट इत्यस्य घटपदोपस्थाप्य इत्यर्थाच्छाब्दबोधे शब्दस्य विशेषणत्वात्तस्मिन्नेवार्थे भावप्रत्ययः । अत एव 'इन्द्रोमरुत्वान्मघवा'इत्यत्र सरूपत्वाभावादेकशेषो न । इन्द्रपदार्थाभिन्नो मरुत्वत्पदार्थः इति तत्र बोधः ।

प्र० ( २ ) दर्शनार्थज्ञानपूर्वकसकलमहाभाष्यगुढार्थज्ञानवत्त्वमित्यर्थः ।

प्र० ( ३ ) अक्लिष्टस्पष्टोच्चारणमित्यर्थः ।

वि० ( ४ ) सूत्रे एव साधुः न लोके इति भावः ।

"भोभगो" ( पा०सू०८।३।१७ ) इति रोर्यत्वम्। देवो हसति, "हशि च" ( पा०सू०६।१।११४ ) इत्युत्वम्। लिलिहिढ्वे, लिलिहिध्वे, "विभाषेटः" ( पा०सू०८।३।७९ ) इति वा ढः ॥

"हल्" (मा०सू० १४)॥ इदं सूत्रं वल्रल्झल्शल्षु हकारग्रहणार्थम्। रुदिहि, स्वपिहि, "रुदादिभ्यः सार्वधातुके" ( पा०सू०७।२।७६ ) इति वलादिलक्षण इट्। स्निहित्वा, स्नेहित्वा, "रलो व्युपधाद्" ( पा०सू०१।२।२६ ) इति वा कित्त्वम्। अदाग्धाम्, "झलो झलि" ( पा०सू०८।२।२६ ) इति सकारलोपः। अलिक्षत्, "शल इगुपधात्" (पा०सू०३।१।४५) इति क्सः ॥

हलन्त्यम् ( पा०सू०१।३।३ )॥ सूत्रेऽन्त्यमिति। हलि अन्त्यमिति विग्रहे सप्तमीति योगविभागात् "सुप्सुपा" (पा०सू०२।१।४) इति वा समास इति भावः।

---

शब्दरत्न।

[ पा० सू० ८।४।६३। ] इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम्। अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक् ॥

इदं सूत्रमिति। वलादिप्रत्याहाराश्च रेफेणैव सन्तु। हरन्त्यमित्यत्रान्योन्याश्रयपरिहारस्तु "रन्त्यं हर्" इति न्यासेनावृत्त्या हर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन वा सुकर इति भावः। ग्रहणार्थमिति। शषसहरित्येव तु नोक्तम्। खरि हकारग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः। सप्तमीति। अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्ति सामर्थ्यमिति भावः। अस्य योगविभागस्य भाष्येऽदर्शनादाह—सुप्सुपेतीति।

ज्योत्स्ना।

इति। अत एव "द्वे विधे वेदितव्ये इति ह स्मयत् ब्रह्मविदो वदन्ति, पराचैवापरा-च" इति मुण्डकश्रुतिरपि सङ्गच्छत इति संक्षेपः।

विसर्गापत्तेरिति। न च "प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने" इत्यत्र हे परे विसर्गादर्शनेन हकारे परे रेफस्य विसर्गो नेति वाच्यम्। प्रत्यङ्हसति सुगण्हसति इत्यादौ "ङ्णोः कुक् टुक्" इत्यस्यापत्तेः। न च "एङ ह्रस्वाद्" इत्यादिनिर्देशेनास्यापि वारणं भवतीति वाच्यम्। अनेकज्ञापकवचनकल्पनापेक्षया हस्य परत्रपाठे एव लाघवात्। ज्ञापकानां सौत्रत्वेनोपपत्तौ ज्ञापकत्वे मानाभावाच्चेति दिक्।

ननु हलि अन्त्यमिति विग्रहे सप्तमीति योगविभागात्समास इति यदुक्तं तदसंगतम्। अधिकरणकारकस्य क्रियायामेवान्वयादन्त्यपदार्थेनासामर्थ्याच्चेत्याह—अधिकरणकारकस्येत्यादि। ननु अक्षेषु शौण्डः इत्यत्र यदि अक्षपदार्थस्य शौण्डपदार्थे ऽन्वयः,

· यद्वा षष्ठीतत्पुरुषोऽयम् । स्यादेतत्(१) । हलित्येकदेशस्यैव तन्त्रावृत्त्ये-

शब्दरत्न ।

अनेनापि साधनस्या[२]गतिकगतित्वादाह—यद्वेति । हलो हलिति सूत्रस्यान्त्यमिति विग्रह इति भावः । [३]"षष्ठी स्थाने" इत्यस्य च "ऊदुपधाया गोहः" [ पा०

ज्योत्स्ना ।

तदा क्रियान्वयित्वाभावेन कारकत्वाभावात्सप्तम्यनुपपत्तिः । यदि क्रियायामेवान्वयः तदा शौण्डपदार्थेऽन्वयाभावेन सामर्थ्याभावात्समासानुपपत्तिरिति चेन्न । अत्र प्राञ्चः—शौण्डपदस्यासक्तिक्रियाविशिष्टे शौण्डे लक्षणया अक्षपदार्थस्य स्ववृत्तित्वसम्बन्धेन आसक्तिक्रियायां साक्षादन्वयेन साक्षात्क्रियान्वयित्वरूपकारकत्वस्य शौण्डपदार्थैकदेशेऽन्वयेन सामर्थ्यस्य चोपपत्तिः । लक्षणायां कारकान्वयितावच्छेदकरूपेण प्रातिपदिकात् क्रियोपस्थितौ च "सप्तमी शौण्डैः" इति सूत्रमेव मानम् । एवं हलन्त्यमित्यत्र अन्त्यशब्दस्य सत्ताविशिष्टान्त्ये लक्षणया कारकत्वस्य सामर्थ्यस्य चोपपत्तिरित्याहुः ।

नव्यास्तु अक्षपदार्थस्य वृत्तित्वसम्बन्धेन शौण्डे ऽन्वयात्सामर्थ्यस्य शौण्डपदार्थस्य क्रियायामन्वयेन तद्द्वारा क्रियान्वयित्वस्य सत्वेन कारकत्वस्य चोपपत्तिरिति "सप्तमी शौण्डैः" इत्यस्य चारितार्थेन लक्षणायां प्रातिपदिकात्कारकान्वयितावच्छेदकरूपेण क्रियोपस्थितौ च मानाभाव इति वदन्ति । तदाह—अधिकरणकारकस्येति । शब्दरत्नकृन्मते परम्परया क्रियान्वयः साक्षात्सम्बन्धः । प्राचीनमते साक्षात् क्रियान्वयः सम्बन्धः परम्परयेति निष्कर्षः ।

अन्ये तु—अक्षशौण्डस्य धनमित्यादौ स्ववृत्तिसम्बन्धिवृत्तित्वरूपपरम्परासम्बन्धेन क्रियान्वयित्वोपपादने गौरवमिति प्राचीनमतमेव साधीयः इति वदन्ति ।

मूले, स्यादित्येतदुक्तम् । तत्र ह समीपो लकार इति व्याख्यानं प्रकाशकौमुदीटीकायां प्रसादनाम्न्यां काशिकानुसारेण विठ्ठलेन कृतम् । समाससमाहारद्वन्द्वपक्षश्च कैयटेनोक्तः ।

ननु "षष्ठी स्थाने योगा" इतिपरिभाषा हलः स्थाने योऽन्त्यः स इत् इत्येवार्थः किन्न स्यात् । नचोदाहरणाभाव इति वाच्यम् ? "ङेः प्रथमयोरम्" इत्यनेन सु स्थाने जायमानस्यामः सत्वादित्याह—षष्ठीस्थाने इत्यस्येति । अत्रायं भावः—नित्यसाकाङ्क्षा-

प्र० ( १ ) स्यादेतत् । अत्र हसमीपो लकार इति व्याख्या काशिकानुसारेण प्रक्रियाकौमुदीटीकायां प्रसादनाम्न्यां विठ्ठलेन कृता । समाहारद्वन्द्वपक्षश्च कैयटेनोक्तः ।

वि० ( २ ) अगतिकप्रयोगोपादेयत्वादिति भावः ।

प्र० ( ३ ) नित्यसाकाङ्क्षार्थबोधकपदसमभिव्याहृतषष्ठ्या आकाङ्क्ष्यमाणसम्बन्धार्थकत्वनियमेन प्रकृतेऽन्त्यत्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन हल इति षष्ठ्यन्तार्थस्याऽन्त्यपदार्थेऽन्वये निश्चिते संदेहाभावान्न षष्ठीस्थान इत्यस्य प्राप्तिरित्यर्थः ।

कशेषान्यतममस्तु। ह्रस्य ल् इति च व्याख्यास्यते। सामीप्यं षष्ठ्यर्थः।

शब्दरत्न।

सू० ६।४।८९ ] इत्यादाविव [१]गुणानां[२] च परार्थत्वादिति न्यायेन वाऽप्रवृत्तिरिति बोध्यम्। तन्त्रावृत्त्येकशेषान्यतममस्त्विति। यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धं, तथापि व्यवस्थितैवान्यतमसत्ताऽनेन बोध्यत इति न दोषः। एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि [३]शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः। सामीप्यं षष्ठ्यर्थ इति। "षष्ठीस्थाने" इत्यस्य गुणानां च परार्थत्वादिति न्यायेनाप्रवृत्तिः। न च "इको गुणवृद्धी" [ पा० सू० १।१।३ ] इति सूत्रे

ज्योत्स्ना।

र्थबोधजनकपदसमभिव्याहृतायाः षष्ठ्या आकाङ्क्षमाणसम्बन्धार्थकत्वनियमेन हलन्त्यमित्यत्र अन्त्यत्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन हलः इति षष्ठ्यन्तार्थस्यान्त्यपदार्थेऽन्वये बोधिते ऽसंदेहान्न "षष्ठी स्थाने" इत्युपस्थितिरिति।

न्यायेनेति। "गुणानां च परार्थत्वादसम्बन्धः समत्वात्"इति न्यायेनेति भावः। अत्र गुणानाम्परार्थत्वादसम्बन्धः इत्यन्वयः। संज्ञापरिभाषयोर्विध्युपकारकत्वेन गुणत्वात्तयोः समत्वमस्त्यतः परस्परमनयोर्नास्त्युपकार्योपकारकभाव इति तदर्थः। नन्वेकशेषस्य शास्त्रे प्रत्याख्यानादन्यतमशब्दोपादानमनुपपन्नमित्याह—एकशेषश्च प्रत्याख्यात इति। प्रत्याख्यानप्रकारश्च सजातीयानेकशब्दानां सहविवक्षायां द्वन्द्वादर्शनेन एकेनैवानेकार्थस्य तन्त्रेण बोधसम्भवे तदर्थमेकशेषो नारब्धव्यः इति लौकिकप्रयोगानामस्य विषय इति भाष्ये उक्तम्। न च शास्त्रीयप्रयोगार्थं तस्यावश्यकत्वेन प्रत्याख्यानासङ्गतिरिति वाच्यम्। लौकिकप्रयोगसाधकत्वेन तदर्थमनावश्यक इति तदाशयात्। ननु पाणिनिप्रयत्नासङ्गतिरित्याह—असहविवक्षायामिति। तदुक्तं सर्वादिसूत्रे भाष्ये संज्ञोपसर्जनव्यावृत्तये "सर्वादीनि" इति सूत्रेण संज्ञा क्रियते पाठश्चैव विशेष्यते। कथमेकेन यत्नेनोभयं लभ्यमित्याह—एकशेषनिर्देशात्सिद्धमित्युक्तम्।

ननु सामीप्यं षष्ठ्यर्थ इत्यनुपपन्नं "षष्ठी स्थाने योगा" इत्यस्य सत्वादित्याह—षष्ठीस्थाने इत्यस्येति। ननु ह्रस्थानिको यो लकार इत्यर्थे ह स्थानिकलकाराभावात्परिभाषाप्रवृत्तिः कथम्? न चोपानल्लुनातीत्यादौ उदाहरणस्य सत्वात्परिभाषाप्रवृत्तिः सुलभेति वाच्यम्? उपदेशेऽतथात्वात्। उदाहरणाभावेन परिभाषाया अप्रवृत्तिकल्पनापेक्षया न्यायेन तदप्रवृत्तिकल्पनं युक्तमित्याशयात्। "गुणानाम्"इति न्यायस्य व्यभिचारमाशङ्क्य निराकरोति—नचेत्यादिना।

---

प्र० ( १ ) गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति न्यायः।

वि० ( २ ) षष्ठ्यास्तत्र समासघटकतया विद्यमानत्वादियं कल्पना। वस्तुतः सा तत्र नास्तीत्यस्त्वेराह—गुणानांचेति। परार्थत्वं गुणत्वे, समासत्वं सम्बन्धे हेतुरत्र बोध्यः।

प्र० ( ३ ) शास्त्रमात्रप्रक्रियोपयोगीति। द्विर्वचनेचीत्यादावाचार्थमित्यर्थ इति।

यद्वा मास्तु तन्त्रादि । अस्तु समाहारद्वन्द्वो हल् च ल् चेति । लकारस्य संयोगान्तलोप इति चेन्मैवम् ॥

आद्ये समासस्य क्लिष्टत्वात् । न हि ब्राह्मणकम्बल इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते । न वा चित्रगुशब्दाच्चित्रगवीणां समीपवर्त्ती

शब्दरत्न ।

तच्छेपशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम् । "सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धी" इति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेपव्यवहारो न तु गुणगुणिभावेन परस्परापेक्षत्वेन इति कैयटेन स्पष्टमुक्तेः । एतन्मूलकतयैव तत्पक्षासम्भवस्य तेनोक्तेश्चेति भावः ॥

क्लिष्टत्वादिति । 'ब्राह्मणस्य कम्बलः' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदन्तरसमीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वाभावात्तत्प्रयोगे त्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः । तदेतदाह—नहीत्यादिना तत्रानिष्ट इत्यन्तेन । (१)चित्रगवीणामिति । 'कुमति च' [ पा० सू० ८।४।१३ ] इति णत्वम् । दन्त्यपाठस्तु लेखक-

ज्योत्स्ना ।

चित्रगवीणामिति । "कुमति च" इति णत्वमिति । परेतु—"कुमिति च" इत्यस्यासिद्धत्वात् "एकाजुत्तरपदे" इति णत्वं सुवचम् । "गोरतद्धिते" इति टचि सत्यपि एकाजुत्तरपदकसमासत्वस्यानपायात् । नच कैयटेन उत्तरपदस्यावयवीभूय समासान्ताः प्र-

प्र० (१) वस्तुतोऽत्र "कुमति च" इत्यस्याऽसिद्धत्वेन "एकाजुत्तरपदे" इति णत्वं युक्तम् । "गोरतद्धित" इति टचि सत्यप्येकाजुत्तरपदकसमासत्वानपायात् । नचोत्तरपदावयवीभूय समासान्ताः प्रवर्तन्ते इति कैयटमते टजन्तस्यैकाच्त्वाभाव इति वाच्यम् । तथा सति बहुकुमारीक इति बहुव्रीहौ कुमारीकेत्यस्य यदागमन्यायेन स्त्रीप्रत्ययान्तत्वे "गोस्त्रियोः" इत्यनेन निर्दिश्यमानस्त्रीप्रत्ययस्य ह्रस्वापत्यादिना तन्मतस्य दुष्टत्वेन हेयत्वात् । नचैवमपि पदव्यवायेऽपीति णत्वनिषेधोऽत्र शङ्क्यः । "अतद्धित" इति वार्तिकेऽतद्धितेऽतिपर्युदासबलेन प्रत्ययान्याऽव्यवहितपरकपदव्यवाय एव तन्निषेधप्रवृत्तेः । अत एव रम्यविणेत्यादौ स निषेधो "न उत्तरपदत्वे च" इति वार्तिकप्रत्याख्यानपरभाष्यरीत्या गोशब्दस्यापि टज्निमित्तकभत्वेन पदत्वस्य तद्योग्यत्वस्य वाऽभावेन तन्निषेधाऽप्राप्तेश्च । "प्रकरणे प्रकरणसिद्धम्" इतिपक्षस्तु "उपसर्गादसमासेऽपि" इति सूत्रे कैयटेन 'भोश्छिन्धि' 'भगोच्छिन्धि' प्रातरित्वश्छिन्धि' 'हरिवश्छिन्धि' इत्यादौ "विभाषा भवत्" इति "वनउपसंख्यानम्" इति च वार्त्तिकद्वयापेक्षया "मतुवसोः" इतिसूत्रापेक्षया च परत्वात् "नश्छव्यप्रशान्" इति रुत्वेऽनुस्वारानुनासिकापत्यादिना दूषित एव । अन्योऽपि समासान्तविषयको विशेषो अव्ययीभावप्रकरणे "अव्ययीभावे शरत्" इति सूत्रस्थटिप्पणे द्रष्टव्यः ।

शब्दरत्न।

प्रमादात्। एवं स्त्रीगवीणामित्येकशेपप्रकरणान्तस्थकैयटप्रयोगेऽपि बोध्यम्। अस्तेरनन्तरे समीपे वेत्यादि भाष्यं त्वनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यभिप्रायकम्। अत एव मतुप्सूत्रे

ज्योत्स्ना।

वर्तन्ते इत्युक्तत्वाट्टजन्तस्यैकाच्त्वाभाव इति वाच्यम्? बह्व्यः कुमार्यो यस्मिन् ग्रामे स बहुकुमारीक इत्यादौ बहुव्रीहौ कुमारीक इत्यस्य यदागमन्यायेन स्त्रीप्रत्ययान्तत्वे निर्दिश्यमानस्त्रीप्रत्ययस्य सत्वेन "गोस्त्रियोः" इत्यनेन ह्रस्वापत्त्या तन्मतस्य दुष्टत्वेन त्याज्यत्वात्। नन्वेवमपि अन्तर्वर्त्तिविभक्त्या गोशब्दस्य पदत्वात् "पदव्यवायेऽपि" इति णत्वनिषेधः स्यात्। "उत्तरपदत्वेचापदादिविधौ" इतिनिषेधस्तु वक्तुमशक्यः। अपदादिविधौ इति पर्युदासबलेन पदान्तविधावेव तस्य निषेधस्य प्रवृत्त्यङ्गीकारादिति चेन्न। 'अतद्धित इति वक्तव्यम्' इति वार्त्तिकैकवाक्यतया णत्वाश्रयातिरिक्तो यस्तद्धितभिन्नस्तत्परकपदव्यवाये निषेधस्य सुवचत्वात्। तथाच चित्रगवीणामित्यादौ गोशब्दस्य णत्वाच्छ्र्यातिरिक्ततद्धितभिन्नपरत्वाभावाण्णत्वसम्भवत्येव। अत एव रम्यविणा आर्द्रगोमयेण चतुरङ्ग्योगेण इत्यत्र णत्वसिद्धिः। "उत्तरपदत्वे च"इति वार्तिकप्रत्याख्यानरीत्या गोशब्दस्यापि टजूनिमित्तकभत्वेन पदत्वस्य पदत्वयोग्यत्वस्य वाऽभावेन तन्निषेधाऽप्रवृत्तेश्च।

न च "प्रकरणे प्रकरणमसिद्धम्" इति पक्षे दोषः स्यादेवेति वाच्यम्? "उपसर्गादसमासे ऽपि" इति सूत्रे भोश्छिन्धि भगोश्छिन्धि प्रातरित्वश्छिन्धि हरिवश्छिन्धि इत्यादौ "विभाषाभवत्" ,'वन उपसंख्यम्' इति वार्तिकापेक्षया "मतुवसोरु" इति सूत्रापेक्षया च परत्वात्"नश्छव्यप्रशान्"इति रुत्वे ऽनुस्वारानुनासिकत्वापत्त्या कैयटेनोक्तपक्षस्य दूषितत्वादित्याहुः।

वस्तुतो "कुमति च" इत्यस्य प्रतिपदविधित्वेन प्रवृत्तिर्न्याय्या। किञ्चासिद्धत्वस्य कार्यार्थतया यत्र फले विशेषस्तत्रैव तत्प्रवृत्तेः। ननु प्रतिपदविधित्वं निरवकाशत्वे सत्येव बाधप्रयोजकमिति चेन्न। दक्षिणपूर्वेत्यत्र चारितार्थ्यस्यापि "सर्वनाम्नो वृत्तिमात्रे पुंम्वद्भावः"इति वचनस्य भाष्यकृता"प्रत्ययलोप"सूत्रे अपरशालः इत्यत्र प्रवृत्त्यङ्गीकारात्। यदि निरवकाशत्वे एव इति नियमस्तर्हि "स्त्रियाः पुंवत्"इत्यस्य सूत्रस्यैव प्रवृत्तिर्वक्तव्या। न तु स्वीयेष्टेरिति शीघ्रोपस्थिकत्वेन"कुमतिच"इत्यस्य प्रवृत्तिः समञ्जसैवेति मात्सर्यमुत्सार्य विचार्यमार्यैः।

ननु यद्यानन्तर्ये न षष्ठ्यर्थस्तदा "अस्तेर्भूः" इति सूत्रे षष्ठीमात्रोच्चारणे "अस्तेरनन्तरे समीपे वा" इति सन्देहप्रतिपादनपरं भाष्यमनुपपन्नमित्याह—अस्तेरनन्तरे समीपेवेति। तन्निरूमितेति [आनन्तर्यनिरूपितो यः सबन्धो निरूपकत्वाश्रयत्वान्यतररूपः तदर्थिकेत्यध्याहारेणैव भाष्ययोजनाकार्येत्याह—स्थानपदेति। न च स्थानपदं षष्ठ्यर्थ-

वृत्त्यादिः प्रतीयते । अत एवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे । किं बहुना 'ब्राह्मणस्य कम्बलः' 'चित्रा गावोऽस्य' इति व्यस्तप्रयोगोऽपि तत्रानिष्टः ।

शब्दरत्न ।

कैयटेन गावोऽस्य सन्त्यनन्तरा इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम्, नतु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम् । भाष्यकृता चासामर्थ्यात्तत्र वृत्त्यभाव उक्तः । षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्कासामर्थ्यम् । तस्माद्यत्र ।षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः । तत्रास्तिग्रहणाभावे [१]तस्यान्यफलकत्वे ।वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवच्चतथाभूतानन्तर्याद्यर्थान्तर्भावेण चित्रा गावोऽस्य सन्त्यनन्तरा इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे [२]भाष्ये स्पष्टम् । अनन्तरादेरिदमर्थत्वे "तस्येदम्" [ पा० सू० ४।३।१२० ] इति शैषिकोऽप्यनभिधानान्नेति"तस्येदम्"[४।३।७]इत्यत्र भाष्ये । तदुक्तम्—अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकर इति।तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणम्। अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव । ग्रामकूपो गङ्गातीरमित्यादौ समीपे एवावयवत्वारोपेण समासः। स्पष्टा

ज्योत्स्ना ।

एवेति तदध्याहारो नावश्यक इति वाच्यम् । स्थानेन योगो यस्याः इति व्यधिकरणबहुव्रीहिप्रदर्शकभाष्यप्रामाण्येन स्थानरूपः सम्बन्धो न षष्ठ्यर्थः। अन्यथा स्थानं योगो यस्या इति समानाधिकरणेन विगृह्णीतेत्याशयात्। तथाच—स्थाननिरूपितो यः सम्बन्धः निवर्त्यनिवर्तकभावः स एव षष्ठ्यर्थः। अत एव स्थाननिमित्तसम्बन्धः इति कैयट आह। न च दृष्टान्तत्वेनास्य योजनायां वाशब्दासङ्गतिरिति वाच्यम् । अत्र वाशब्दस्येवार्थिकत्वात् । 'वा यथा तथा साम्ये' इति अमरकोशादित्यलम् ॥

ननु "अमो मश्"इति सूत्रे भाष्ये शकाराभावे मकारस्य मकारादेशे प्रयोजनन्नास्तीति सर्वादेशो भविष्यतीति दूषणे ऽभिहिते मकारस्य मकारादेशे ऽनुस्वारबाधो भविष्यतीति परेण दूषणे दत्ते, एवं तर्हि द्विमकारको निर्देशः करिष्यते इत्युक्तम् । अत्र द्विमकारक इति प्रतीकमुपादाय एकस्य मकारस्य संयोगान्तलोपः करिष्यते इति कैयटेनोक्तम् । तथाच वाक्यभेदस्यावश्यं वाच्यतया तेन सकलेष्टसिद्धिरिति चेन्न । तथा सत्यपि तस्य यणःप्रतिषेधविषयत्वस्य "संयोगान्तस्य" इति सूत्रभाष्यादावुक्तत्वात् । अन्यथा मिथस्तयोर्विरोधापत्तेर्दुरुद्धरत्वात्। न चैवमपि बहिरंगासिद्धत्वपक्षेण निर्वाहः

प्र० (१.) अस्तीत्यव्ययान्मतुबर्थकत्व इत्यर्थः ।

वि० (२) अनन्तरादिष्वर्थेषु तद्धितोत्पत्तिप्रतिषेधो वाच्य इत्युक्त्वा 'सिद्धं त्वनभिधानाद्' इति तत्र भाष्योक्तिरिति ।

द्वितीयेऽपि संयोगान्तलोपो दुर्लभो, यणः प्रतिषेधारम्भात् । तत्प्रत्याख्यानपक्षेऽपि "झलो झलि" ( पा०सू०८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च । किं (१)च पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः । अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः, सहविवक्षाया अस-

शब्दरत्न ।

चेयं रीतिः "मपर्यन्तस्य" [ पा० सू० ७।२।९१ ] इति सूत्रे कैयटे । किं च हस्य लित्त्वार्थं "हल विलेखने" इति धातोर्लस्येत्त्वापत्तिः । न च फलाभावो ? देवदत्तहलित्यादौ ङित्त्वसामर्थ्याद्भस्यापि टेर्लोपवल्लित्त्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेऽपि लित्स्वरस्यैव फलत्वं वक्तुं शक्यमित्यपि बोध्यम् । यद्यपि "हलसीरात्" [ पा० सू० ४।३।१२४ ] इति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यम् । तथापि ज्ञापकस्वीकारापेक्षया सूत्रावृत्तिरेव [२]लघीयसीति दिक् ।

झलो लोपेति । सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु । असम्भवादिति । नच "आद्यन्तौ

ज्योत्स्ना ।

इति वाच्यम् । तदा भाष्यवार्तिकस्वारस्येनेदृशलक्ष्याणामनभिधानस्वीकारात् । अन्यथा फलभेदापत्तिः । विसर्जनीयसूत्रभाष्ये कार्यकालपक्षेऽपि तत्परिहारस्य दूषितत्वाच्चेति दिक् । तध्वनयन्नाह—सौत्रलोपाश्रयणेत्विति । मूलोक्तमेव लध्विति । सम्पूर्णसूत्रावृत्तिरूपम् । कैयटस्त्वत्र हल्पदमावर्त्य एकत्र हस्य ल इति विग्रहेण ह समीपो लकार इदिति उपदेशे ऽन्त्यं हलिदिति वाक्यार्थद्वयमाह । सामीप्यन्न षष्ठ्यर्थः सम्भवति इत्युक्तयुक्तेः, इतिसम्पूर्णसूत्रावृत्तिरेवेति दीक्षितमतम् ॥

परंतु—अयम्भावः—द्वन्द्वोपपादनमयुक्तम्। एवंरीत्या—एकहल्पदार्थस्यान्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेऽपि द्वितीयहल्पदार्थस्याधुना निष्पत्त्यभावेन अन्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतयोर्युगपदसम्भवेन साहित्याभावेन द्वन्द्वानुपपत्तेः ।

नचैकत्र हल्पदार्थे प्रकारतामाश्रित्य बोधे जाते पश्चादपरहल्पदार्थे ज्ञाते द्वितीयबोध इति वाच्यम् ? वाक्यार्थद्वयस्यान्त्यपदावृत्तिमन्तरेणासम्भवेन [illegible] लोपेन मकारप्रश्लेषात् ।

किंच 'बाहरङ्गलक्षणत्वाद्वा' इति तृतीयपक्षेण [illegible]क्यतालाभाय "इको यणचि" इति कृतस्य यणो न लोपः इति व्याख्यातुमुचितत्वात् । अन्यथा फलभेदे प्रत्याख्यानासम्भवादित्यरुचेराह—किञ्चेति।

वि० ( २ ) आदौ लस्येत्वापत्तिः, ततो निर्देशानुपपत्तिः । ततस्तदभावकल्पनेति महागौरवम् । तस्माल्लघुतरत्वात्सूत्रावृत्तिरेव ज्यायसी । नहि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्तव्यम्, न ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञास्तीति भावः ।

शब्दरत्न ।

टकितौ" [पा०सू०१।१।४६] इत्यादौ यथासङ्ख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हल्पदवाच्यश्चेद्दिति सामा[१]न्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं, ततो विशेषजिज्ञासायामादिरन्त्येन, इत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः ।

किं च,सहविवक्षा–सह वक्तुं वक्तुरिच्छा,सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानाद्क्षतैव, बोद्धृबोधस्तु क्रमणैवेतिवाच्यम्, "आद्यन्तौ" [पा० सू०१।१।४६ ] इत्यादौ यथासङ्ख्यसूत्रारम्भसामर्थ्येन तथासाधुत्वाङ्गीकारेऽप्यन्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात् । किंच [२]श्रोतॄणां सह बोधो भवत्वितीच्छया सहवक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि सहबोध एवोचितः । तादृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः । सुखनयनं पश्येत्यादौ तु न दोषः । उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात् । ते[३]न रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत् । किं च, पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः । अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या "लट् स्मे" [ पा०सू०३।२।११८] इति सूत्रस्थकैयटोक्तरीत्या लक्षणया, तन्त्रा[४]न्तरीयप्रथमादिव्यवहारेण

ज्योत्स्ना ।

प्राचीनमताद्वैलक्षण्यापत्तेः । ग्रामकूपो गङ्गातीरमित्यादौ सामीप्यार्थप्रतीतेरानुभविकत्वेन कैयटोक्तपरिरक्षणपरसुदयङ्कारोक्तमपि न युक्तम् । एकस्य हल्पदार्थस्यान्त्यपदार्थेऽनन्वयेन साहित्याभावेन द्वन्द्वैकशेषयोरप्रवृत्तेः । भाष्यप्रामाण्यात् । सौत्रत्वाद्वाऽसाहित्येऽपि द्वन्द्वैकशेषकल्पनापेक्षया सम्पूर्णसूत्रावृत्तिरेव लघियसीति वदन्ति ।

सहविवक्षाया असम्भवाभिधानमसंगतमित्याशयिकां कस्यचिच्छङ्कान्निराकर्तुमाह—नचेत्यादिना । यथासंख्यमन्वयेऽपीति । लक्ष्यसँस्कारवेलायामिति अस्य आदिशेषः । पूर्वपक्ष्युक्तसहविवक्षापदार्थमभ्युपगम्यापि दूषणमाह—किञ्च पाणिनेरिति । तदभिप्रायेण हल्पदार्थज्ञानतात्पर्येण । न प्रयोगः । नहलिति प्रयोगः । अन्यथा । तादृशतात्पर्यकल्पने । लक्षणया इति । अयम्भावः—"लट्स्मे" इति सूत्रे वार्तिककृता स्मपुराभूतमात्रे न स्म पुरानद्यतने इति वार्तिकम्पठितम् । तत्र स्मपुरा इत्याकारकसूत्राभावाद्वार्तिके स्मपुरापदाभ्यामाद्यन्ताभ्यां लट्स्मे, अपरोक्षे च, ननौपृष्टप्रतिवचने, नन्वोर्विभाषा पुरिलुङ्चास्मे, इति पञ्च सूत्रीलक्ष्यते इति कैयटेनोक्तम् । तथा इहापि हका-

वि० ( १ ) हल्पदवाच्यत्वेन न कश्चिदित्यर्थः ।

वि० ( २ ) श्रोतृसम्बन्धिसहबोधकर्तृकभवनेच्छाहेतुकवक्तृसम्बन्धिसहकथनेच्छाया इत्यर्थः ।

वि० ( ३ ) उभयज्ञत्वेनेत्यर्थः भ्रमप्रमासाधारणज्ञानत्वेन हेतुत्वं लोकसिद्धमिति भावः ।

वि० ( ४ ) शास्त्रान्तरीयेत्यर्थः । स्वौजसित्यादिप्रतितिकमिति भावः ।

शब्दरत्न ।

प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यवाभावेन तद्वा शङ्का लक्ष्येतिवक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः। न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रवैयर्थ्यम्। क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात्। "नासूया कर्त्तव्या यत्रानुगमः क्रियते" इति "पङ्क्तिविंशति" [ पा०सू०५।७।५९ ] इति सूत्रे भाष्योक्तेः। तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी ध्वनितश्चायमर्थो "नाऽऽज्झलौ" [ पा०सू०१।१।१० ] इति सूत्रेऽष्टादशानां ग्रहणाभावाय "वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा तदुत्तरकालमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्गे" इत्येवं वा-[१]क्यापरिसमाप्तिप्रतिपादकभाष्येणापि। अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्, कथं वा नाऽऽज्झलावित्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्त

ज्योत्स्ना ।

रादिलकारान्तसूत्रसमुदायघटकतत्तत्सूत्रान्त्ये लक्षणाङ्गीकरणीया। अन्त्यपदश्च तत्र तात्पर्यग्राहकं भविष्यति। यथा गभीरायां नद्यां घोषः इति वाक्ये नद्यामित्यस्य गभीरनदीतीराभिन्नाधिकरणप्रतिपादकत्वं, गभीरायामिति तात्पर्यग्राहकं तद्वल्लक्षणयेति दिक्।

शक्त्या निर्वाहे लक्षणयेति, अनुचितमित्याह—तन्त्रान्तरीयेति। यथा व्याकरणान्तरे सु औ जस् इति प्रथमा, अम् औट् शस् इति द्वितीया, इत्यादिव्यवहारः कृतः स एवात्रापि शास्त्रे क्रियते तद्वत्। अनुमानादिति। हल् पदम् हकारादिषु शक्तम्। हकारादिबोधतात्पर्येण पाणिन्युच्चरितत्वादित्यनुमादित्यर्थः।

"आदिरन्त्येन सहेता"। परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः। एवं पूर्वस्मिन् सति यस्मात्परो नास्ति सो अन्त्यः। इत्याद्यन्त्यलक्षणे नव्याः वदन्ति॥ तत्रायं भावः—यस्मात्पूर्वो नास्तीत्यस्य यत्समुदायनिरूपितमादित्वं वक्तव्यम्, तत्समुदायघटकः पूर्वो न [illegible]त्यर्थः। तेन घटपटौ इत्यादौ पकारात्पूर्वं घटशब्दाकारादौ सत्यपि न पकारादौ पटशब्दादित्वहानिः। एवं परो नास्ति इत्यस्यापि तत्समुदायघटकः परो नास्तीत्यर्थः। तेन घटशब्दोत्तराकारानन्तरं पकारादौ सत्यपि नाकारादौ घट शब्दाद्यन्तत्वहानिः।

तथा च—स्वघटकत्व स्वघटकावधिकपूर्वत्व स्वघटकावधिकोत्तरत्वाभाववत्व

वि० (१) स्वस्वाङ्गान्यतरजबोधकाले समुदिततत्परिसमाप्तिः—वाक्यापरिसमाप्तीत्यर्थः।

म्भवात् । तस्माद्यथोक्तमेव न्याय्यम् ॥

मध्यगानामिति । आद्यन्ताभ्यामवयवाभ्यामवयवीसमुदाय आक्षिप्यते; तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः । स्वस्य चेति । "स्वं रूपम्" ( पा०सू०१।१।६८ ) इत्यनुवृत्तेः । स्वं रूपं चाद्येरेव गृह्यते नान्त्यस्य । अन्त्येनेत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् ।

आद्योच्चारणमिति (१) । यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या

शब्दरत्न ।

सङ्गतं स्यादिति विभाव्यतां तदाह—तस्मादिति ॥

आद्यन्ताभ्यामिति । अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः । तस्येति । समुदायस्य । तयोः पारार्थ्येति । सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाले एव तयोः पारार्थ्यनिर्णयादित्यर्थः । परामर्शित्वादिति । वस्तुतो ज्ञापकादिनाऽस्यापि न संज्ञाकार्यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रका-

ज्योत्स्ना ।

एतत्त्रितयसम्बन्धेन तत्समुदायविशिष्टत्वं तदादित्वम् । एवं स्वघटकत्व स्वघटकोत्तरत्व स्वघटकावधिकपूर्वत्वाभाववत्व एतत्त्रितयसम्बन्धेन तत्समुदायविशिष्टत्वं तदन्त्यत्वं फलतीत्यलम् । प्राचां मतं व्याख्याय स्वमतमाह—वस्तुतस्त्वित्यादिना । अस्यापीति । संज्ञास्वरूपघटकान्त्यस्यापि । अपिना समुदायघटकेत्संज्ञकवर्णपरिग्रहः । सूत्रार्थस्तु आदिग्रहणाभावे अन्त्येन सह उच्चार्यमाणः वर्णः अन्त्यपदेनाक्षिप्यमाणस्वनिष्ठचरमावयवतानिरूपकसमुदायघटकस्य तद्घटकबोध्यस्य वा संज्ञा स्यादित्यर्थेनेगादिप्रत्याहारैः ककारनिष्ठचरमावयवतानिरूपकाकारघटितसमुदायघटकबोध्यस्याकारस्यापि ग्रहणापत्तिरित्यादिग्रहणम् ।

अन्त्यग्रहणाभावे ऽपीयमेव रीतिरनुसन्धेया । सत्युभयोर्ग्रहणे एवं सूत्रार्थो बोध्यः । सूत्रे आद्यन्त्यशब्दौ तत्सदृशे लाक्षणिकौ । तथा च—अन्त्येत्सदृशेन सहितः आदिसदृशः स्वघटकानुयोगिकसादृश्यप्रतियोगिकत्वेन विवक्षितवर्णनिष्ठान्त्यतानिरू-

प्र० ( १ ) आद्योच्चारणमिति । धर्मविशिष्टोच्चारणमुपदेशः । वै० च० स्वावच्छिन्नविषताकश्रावणप्रत्यक्षानुकूलत्वम्, स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वमिति सम्बन्धद्वयेन । तथा च "अभ्र आँ अपः" इत्यत्राङोऽनुनासिकविधौ यद्यनुनासिक इत्यानुपूर्वीधर्मो गृह्यते, तदा तदवच्छिन्ना विधेयता नास्ति । यदि आँत्वरूपो धर्मो गृह्यते तदा तदवच्छिन्ना श्रावणप्रत्यक्षविषयता नास्तीति नातिव्याप्तिः । मनिनादौ च सम्बन्धद्वयसत्त्वाल्लक्षणसमन्वयः ।

शा(१)न्नमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं, तथापि तत्प्रौढिवादमात्रम्।

शब्दरत्न ।

रान्तरेणाशक्यवारणत्वात्। स्वशब्दानुवृत्तेश्च न फलम्। भाष्येऽपि एतत्फलितार्थ-कथनमेव स्वरूपं च रूपस्येति। सञ्ज्ञास्वरूपत्वं विशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को[२] विरोधः। यथा "अच्च घेः" [ पा०सू०७।३।११९ ] इत्यादौ गुणदर्शनेन-घिशब्दस्यापि घिसञ्ज्ञाबोद्धयत्वं तद्वत्। एवमजादिसञ्ज्ञा स्वसञ्ज्ञिघटकेकारादिघ्वि-वाकारचकारयोरपि प्राप्नोत्येव। किं च, स्वशब्देन केवलान्त्यपरामर्शसम्भवेऽपि वि-शिष्टपरामर्शो न बाधकं, तत्र समुदाये फलाभावादवयवयोर्विश्रान्ति प्राप्स्यति। तस्मा-ज्ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम् [३]।

भाष्येति। तत्र हि 'उपदेश इति किम्, अभ्र आँ अपः, प्र[४]त्यक्षमाख्यानमुप-

ज्योत्स्ना ।

पकस्य स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठादितानिरूपकस्य स्वसमुदायस्य घटकानां संज्ञेति सर्वाभिप्रेतः सूत्रार्थो ज्ञेयः॥

नन्वनुवृत्तिपरकभाष्यसिद्धान्तविरोध इत्याह—भाष्येऽपि। को विरोधः इति। ननु घटो घटः दण्डवान् दण्डवान् इत्यादाविव तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानि-रूपितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदस्य कारणमिति व्यु-त्पत्त्या बोधो न स्यादित्याह—प्रत्येकं स्वबाध्यत्वं चास्त्विति। तथा च-अकारादिचान्तसं-मुदायपर्याप्तसमुदायत्वमुद्देश्यतावच्छेदकम्, अजित्यानुपूर्वी विधेयतावच्छेदकमिति, उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरेकरूपेणानुपस्थितेरिति दिक्। प्राप्नोत्येवेति। एतेन भवदुक्तरीत्या आद्यन्तयोर्वारणाभावः, स्वंरूपमित्यनुवृत्तेर्वैयर्थ्यञ्च सूचितम्।

सूले स्वंरूपमित्यनुवर्त्य स्वपदेनादेः परामर्श उक्तस्तद्वैयर्थ्यमपीत्याह—किञ्चेति। अलमिति। तदर्थस्तु माठरपरिवेषणन्यायेनाद्यन्तातिरिक्तत्वेनाद्यन्त-

---

वि० (१) तेन सूत्रे उच्चारितो योऽनुनासिकः इत्यर्थ्यात् अभ्र आँ अटितं इत्यत्राकारस्य नेत्संज्ञा।

वि० ( २ ) संज्ञा हि संज्ञिनं बोधयति न स्वं विरोधात्। उद्देश्यविधेयभावस्य भेदनिबन्धन-त्वात्। तत्र शक्तिग्रहासिद्धेः। नैवमत्रोक्तरीत्या तदवच्छेदकयोस्तयोश्च भिन्नत्वादिति भावः।

प्र० ( ३ ) इत्यलमिति। वस्तुतो माठरपरिवेषणन्यायेनाऽऽद्यन्तातिरिक्तत्वेन आद्यन्तघटित-समुदाये संकोचेन भाष्योक्तस्वशब्दानुवृत्तिप्रकार एव श्रेयानिति बोध्यम्। माठरपरिवेषणन्यायप्र-पञ्चस्तु "धात्रंशः" इत्युदाहरणीयटिप्पणे द्रष्टव्यः।

वि० ( ४ ) प्रत्यक्षमाख्यानत्वञ्च—पाणिन्युच्चरितपदविशिष्टविधेयताश्रयत्वम्। वै० स्ववृ-त्तिश्रावणप्रत्यक्षविषयताच्छेदकधर्मावच्छिन्नत्व, स्वजन्यशाब्दबोधीयत्व, एतदुभयसम्बन्धेन। यथा गां पुच्छे कर्णे वा गृहीत्वोपदिशति अयं गौरिति। तत्र शब्दबोधस्य शक्तिग्रहात्मकप्रत्यक्षजन्यत्वेन-प्रत्यक्षीयविषयतावच्छेदकगोत्वादिधर्मावच्छिन्नविधेयताकत्वेन चात्र लक्षणसमन्वयः।

करणे घञो दुर्लभत्वात्, ल्युटा बाधात् । न च घः, असंज्ञात्वात् । प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात् । न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च । अत एव घापवादो "हलश्च" ( ३।३।१२१ ) इति

शब्दरत्न ।

देशो गुणैः [१]प्रापणमुद्देश" इति "ना[२]सावुपदेश" इत्युक्त्वोपदेशोद्देशयोर्लौकव्यवहारेण सङ्कीर्णत्वमाशङ्क्य "उपदेशनेऽजनुनासिक"इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनाय "उपदेश इति करणे घञुपदिश्यतेऽनेन" इत्युक्तम् । तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यैततच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्यादेशरूपम्

प्रौढिवादमात्रमिति । वार्त्तिककृदुक्तन्यासीयार्थस्य कथञ्चित्सूत्रतोऽपि लाभसम्भवान्न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः । घञ इति । अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः । बाधादिति । वासरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः । न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम् । ईषत्पानः सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः । क्लिष्टत्वादिति । गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—नहीत्यादिना । भाष्यकृतेति । अस्यार्थस्येति शेषः । एवं चोभयप्राप्तौ कर्मणीति नियमाच्च कर्त्तरि षष्ठीति बोद्धव्यम् । अवहेलनाचेति । चो हेतौ यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः । घापवाद इति ।

ज्योत्स्ना ।

घटितसमुदाये संकोचेन भाष्योक्तानुवृत्तिरेव श्रेयसीति दिक् । तत्प्रकारस्तु वक्ष्यते ।

आद्योच्चारणमिति । तत्वं च—यत्किञ्चिद्धर्मविशिष्टत्वम्, वैशिष्ट्यं च स्वावच्छिन्नविषयताकश्रावणप्रत्यक्षानुकूलत्वम्, स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वमिति सम्बन्धद्वयेन अभ्र आँ अपः इत्यत्र आङो ऽनुनासिके विधातव्ये यद्यनुनासिक इत्यानुपूर्वी धर्मो गृह्यते तदा तदवच्छिन्नविधेयता नास्ति, यदि आँत्वरूपो धर्मो गृह्यते तदा तदवच्छिन्ना श्रावणप्रत्यक्षविषयता नास्तीति नातिव्याप्तिः । मनिनादौ सम्बन्धद्वयसत्वाल्लक्षणसमन्वयो बोध्यः ॥ अभ्र आँ अपः इति । अभ्र आँ अटित इत्यस्योपलक्षणम् । उपदेशे किमित्यस्य पूर्वसूत्रे एव उपदेशग्रहणं किमर्थमिति प्रश्नाशयः । सङ्कीर्णत्वमाशंक्येति । प्रत्यक्षाख्यानेऽप्युपदेशपददर्शनेन सङ्कीर्णत्वम् । यथा शिष्येण अनुवाकं मे भवानुपदिशतु इत्युक्ते गुरुणा अधीते च "शन्नो देवीरभीष्टय" इत्युक्ते शिष्य आह उद्दिष्टो मेऽनुवाक इति' इति भाष्येणाशङ्क्येत्यर्थः ।

वि० ( १ ) प्रत्येकं प्रसिद्धसाधारणधर्मोपादानेन यद् बोधनं स उद्देश इति भावः ।

वि० ( २ ) "आङोऽनुनासिकः च्छन्दसि" इतिसूत्रविहितानुनासिक इत्यर्थः ।

घञपीह न। बाहुलकं त्वगतिकगतिः। अत एव प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरपि परस्ता। तथा च वार्त्तिकम्—

"अ(१)जब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति"।

अतो भाव एव प्रत्ययो न्याय्य इति भावः॥

शब्दरत्न।

ल्युडपवादश्चेत्यपि बोद्धयम्। तत्रापि सञ्ज्ञायामित्यनुवृत्तेरिति भावः। अगतिकगतिरिति। न च "खनो घ च" [ पा०सू०३।३।१२७ ] इति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टं, तेनात्र घे सिद्ध्यतीति वाच्यम्। तस्याप्यगतिकगतित्वात्। भगः पदमित्यादौ यत्र घित्वफलं तत्रैव तत्प्रवृत्तेश्च। पदस्य घञर्थे केन सिद्धेर्नैतदुदाहरणं किंतु क्वाचित्कं वाक्यं तत्, किंचोच्चार्यं वर्णानाह—"उपदिष्टा इमे वर्णा" इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽप्युपपत्त्या भावघञि बाधकाभावः।

किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदायान्त्यस्य वारणसम्भवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृत ो व्यर्थः

ज्योत्स्ना।

ननु स्नानीयं चूर्णं, राजभोजनाः शालयः, इत्यादौ "कृत्यल्युटो बहुलम्" इति योगविभागात् बहुलग्रहणेन यथान्यत्र प्रत्ययः तथा उपदेशपदेऽपि करणे घञ् कल्पने बाधकाभाव इत्यरुचेराह—किञ्चोच्चार्येति। अत एव 'इत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यत' इति कैयटोक्तिः सङ्गच्छते।

नन्वेवं "लटः सद्वा" "निष्ठा" इति सूत्रविहितशत्राद्यवयवस्य "राजसूयसूर्य" इतिनिपातनानुमितक्यबाद्यवयवस्येत्वानुपपत्तिः। यद्युक्तरीत्या लोकव्यवहारेणोभयार्थकत्वयोरुपदेशपदस्य ग्रहणमिति ब्रूषे चेत्? तर्हि "आङोऽनुनासिकः छन्दसि" इति सूत्रविहितके ऽतिव्याप्तिरित्याह—किंचेति। तदर्थमित्यस्य यत्किञ्चित् समुदायवारणार्थमित्यर्थः। सामर्थ्यादित्यस्यान्त्यपदोपादाने इति आदिः शेषः। आदिपदेन व्यवसितान्त्यमिति वक्तव्यं, के पुनर्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा इत्यर्थः। पदस्य तस्य ग्रहणपरिग्रहः। न च भावघञन्तोपदेशग्रहणे मनिन्नित्यादौ इकारनकारयोरित्संज्ञा न स्यात्। इकारस्याद्योच्चारणविषयान्त्यत्वाभावात्।

किंच "हलन्त्यम्" इत्यनेन णिनिप्रत्ययावयवनकारस्य मनिनो इकारवदित्वं स्यादिति वाच्यम्। यस्योपदेशो ऋषेस्तात्पर्यं तस्य तदुपदेशप्रयुक्तेत्संज्ञेत्यर्थ आश्री-

वि० ( १ ) अत्र ल्यब्लोपे पञ्चमी अजपौ बाधित्वा स्त्र्यादयः। स्त्रीप्रत्ययं च बाधित्वा खलनौ प्रत्ययौ विप्रतिषेधेनेत्यर्थः।

यत्तु धातुसूत्रेत्यादि(१) पठन्ति । यच्च व्याचक्षते(२) करणव्युत्पत्त्यापूर्वोपात्तानामुपदेशत्वम्, कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन । एवं गणत्वादेव सिद्धे धातोरपीत्यादि ।

शब्दरत्न ।

स्यादिति बोद्धयम् । "उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच उपदेशे" [ पा०सू०६।१।४९ ] इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक् । धातुसत्रेत्यादीति ।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥ इतीत्यर्थः ।

उपदेशत्वमिति । उपदेशशब्दव्यवहार इत्यर्थः । धातोरपीति । प्रत्ययेभ्य उणादेरपीत्यपिशब्दार्थः । वाक्यशब्देन वार्तिकम्, शीङ्, लण्, चोरट्, उण्, आचारेऽवगल्भ,

ज्योत्स्ना ।

यते । णिनौ समुदायोपदेशप्रयुक्तैव, मनिनादौ त्ववयवोपदेशप्रयुक्ता सेत्याशयस्य व्याख्यातृभिरुक्तत्वात् । व्याख्यातृवचसामप्रामाण्यन्तु न वारणाय तथा कल्प्यते । भाष्योक्तरीत्या व्यवसितान्त्यस्य ग्रहणे सिद्धे भावघञन्तत्वपक्षेऽपि दोषवर्णनादिति दिक् । उक्तार्थे भाष्यान्तरमपि गमकमित्याह—उद्देशश्चेति ।

दिगिति । न च भावघञन्तस्य स्वीकारे "लटः सद्वा" इतिसूत्रविहितशत्राद्यवयवस्यासंग्रह इति वाच्यम् । 'व्यवसितान्त्यग्रहणं कर्तव्यम्' इति भाष्यैकवाक्यतया अस्मिन्नपि प्रक्षे सत्पदार्थज्ञानापत्तौ "सत्"इतिसूत्रोपस्थितेरावश्यकतया तत्र यस्तच्छब्दबोध्यस्तदन्त्यस्य ग्रहणमित्याशयात् । एवमेव "निष्ठा" इत्यादिस्थलेऽपि ऊहनीयमिति दीक्षितमतम् ।

नव्यास्तु बाहुलकात्करणे घञ् एव स्वीकर्तव्यः । अन्यथा "भवतष्ठक्छसौ" इति सूत्रविहितके इत्वानापत्तिर्दुर्वारा स्यादित्याहुः—दिगिति । यत्तु पठन्तीति । प्रक्रियाकौमुदीकारा इति शेषः । व्याचक्षते । इत्यस्य प्रसादकारा इति शेषः ।

ननु—

आमोऽमित्वमदन्तत्वाद्गुणत्वं विदेस्तथा ।
आस्कासोराम्विधानाच्च पररूपं कतन्तवत् ॥

प्र० ( १ ) यत्तु धातुसूत्रेत्यादि पठन्ति । अत्र प्रक्रियाकौमुदीकाराः ।
प्र० ( २ ) यच्च व्याचक्षते इति । प्रसादकाराः ।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम्। नाद्यः, संज्ञायाः शास्त्रकारैरनुक्तेः, असंज्ञात्वाद् घप्रत्ययो नेति भाष्योक्तेश्च। अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च, आमो(१)ऽमित्वमदन्तत्वादिति स्वपरग्रन्थविरोधाच्च, न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं येन मित्त्वं न भवेत्।

किं(२) चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्सञ्ज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत।

किञ्च(३) "न धातुलोपः" (पा० सू० १।१।४) इतिसूत्रे "धातुग्रहणं किम्? लूञ् लविता पूञ् पविता" इति भाष्यम्, उपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञेत्येवम्परः कैयटग्रन्थश्च विरुद्ध्येत।

अपि च, "घ्वसोरेद्धौ" (पा०सू०६।४।११९) इति सूत्रे लोपश्चेतिद्विश-

शब्दरत्न।

घुट्, अण्, अनङ्, इत्युदाहरणानि।

उपदेशसंज्ञेति। उपदेशपदं योगरूढमेष्विति भावः। ननु सञ्ज्ञाशब्देन व्यवहार एवाभिमतोऽत आह—आम इत्यादि। न चाकारोच्चारणं व्यर्थम्। तेनास्मत्पक्षज्ञापनस्यैवौचित्यादिति भावः। आदिना यकारादी चुञ्चुप्चणपावित्यादिसंग्रहः। उपदेशाभावादिति। आदेशस्योपदेशाभावादित्यर्थः। ततो धातुसञ्ज्ञेति। लूशब्द एव धातुसञ्ज्ञकः केवलमसौ ञित्कार्यं लभत इति भावः।

नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणम्। तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन धातुपाठ इत्यादिव्यवहारवदिति चेन्न। आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुपयोगात्। अत एव वाऽरुचेराह—अपिचेति।

ज्योत्स्ना।

इति भाष्यसम्मतमेव प्राचोक्तमित्यरुचेराह—किञ्चैवमिति।

नन्विदमपि भाष्यमेकदेश्युक्तम्, "अथवा नानुत्पन्ने सनि प्रकृत्या भवितव्यम्" इत्यादिना इत्यरुचेराह—किञ्चेति।

---

वि० (१) आमोऽमित्वमदन्तत्वादगुणत्वं विदेस्तथा। आस्कासोराम्विधानाच्च पररूपं कृतन्तवत्॥ इति तेषां ग्रन्थः। अदन्तत्वादामो मस्येत्संज्ञा नेति तदर्थः।

वि० (२) ननु अकारोच्चारणसामर्थ्यान्मकारस्येत्संज्ञा न स्यादित्यरुचेराह—किंचेति।

वि० (३) नच आक्षिप्तः सन् तादृशः इत्यरुचेराह—किञ्चेति।

कारको निर्देशः, द्वितीयः शकार इदिति अलोऽन्त्यसूत्रस्थभाष्यकैयटादिकमपि विरुद्ध्येत । न द्वितीयः । योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात् । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यं हलिदित्यर्थ इति स्वग्रन्थविरोधाच्च । पक्षद्वयेऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात् । लोपश्चेति

शब्दरत्न ।

अलोऽन्त्यसूत्रेति । उपधासञ्ज्ञासूत्रेत्यर्थः । विरुद्ध्येतेति । तत्र हि लोपशिति भिन्नं पदं शिति च । पूर्वस्य श्चुत्वेन शः । असन्देहाय झल्परसंयोगादित्वेऽपि "स्कोः" [ पा० सू० ८।२।२९ ] इत्यस्य न प्रवृत्तिः । "झलां जश्" [ पा० सू० ८।४।५३ ] इत्यादौ जश्त्वस्येव । शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेति भावः ।

किं च "नमो वरिवश्चित्रङ"[१] [ पा० सू० ३।१।१९ ] इत्यस्यासङ्ग्रहोऽत्र पक्षे इत्यपि बोध्यम् । एष्वेतस्य रूढिरित्युक्तेः परिगणनताया एव लाभात् । [२]योगस्यैवेति । न तु रूढेरित्यर्थः । परिगणनस्येति । धात्वादिगणनस्येत्यर्थः । वैषम्येति । भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसङ्ग्रहादितिभावः । उपदेशताप्रयोजकेति । योगमात्रस्वीकारे उपदेशता–उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । सञ्ज्ञात्वे तु उपदेशता—उपदेशशब्दत्वम्, उपदेशशब्दस्य

ज्योत्स्ना ।

ननूक्तपक्षस्यानेकान्ताभिप्रायकतया एकदेश्युक्तित्वेन तद्विरोधेऽपि न क्षतिरित्यरुचेराह—किञ्च नमो वरिवश्चित्रङ इति । चित्रङित्यस्य धातुसूत्राद्यन्तःपातित्वाभावेनोपदेशत्वाभावात् ङकारस्येत्त्वानापत्तिर्दोष इति भावः ।

योगस्यैवेति । अयम्भावः—उपदेशपदस्य धात्वादिषु योगरूढिस्वीकारे धात्वाद्यन्यतमत्वस्योपदेशत्वस्य च समनियतत्वेन धात्वाद्यन्यतमत्वमुपदेशपदव्यवहार्यताप्रयोजकं सम्भवति, योगमात्रस्वीकारे तु उपदेशत्वस्यान्यत्रापि सत्त्वेन धात्वाद्यन्यतमत्वस्य तन्न्यूनवृत्तित्वेन समनियतत्वाभावान्नधातुत्वादेस्तत्पदव्यवहार्यताप्रयोजकत्वं सम्भवतीति बोध्यम् ॥

---

प्र० ( १ ) चित्रङित्यस्य धातुसूत्राद्यन्तःपातित्वाभावेनोपदेशत्वाभावात् ङकारस्येत्संज्ञाऽनापत्तिरित्यर्थः ।

प्र० ( २ ) अयं भावः । उपदेशशब्दस्य धात्वादिषु योगरूढिस्वीकारे धात्वाद्यन्यतमत्वस्योपदेशत्वस्य च समनियतत्वेन धात्वाद्यन्यतमत्वमुपदेशपदव्यवहार्यताप्रयोजकं सम्भवति । योगमात्रस्वीकारे तूपदेशत्वस्यान्यत्रापि सत्त्वेन धात्वाद्यन्यतमत्वस्य तन्न्यूनवृत्तित्वेन समनैयत्याभावान्न धातुत्वादेस्तत्पदव्यवहार्यताप्रयोजकत्वं सम्भवतीति ।

एकाच
शकारस्यासंग्रहाच्च । "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) "उपदेशेऽत्वतः" ( पा० सू० ७।३।६२ ) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसम्मतत्वाच्चेति दिक् (१)॥

शब्दरत्न ।

शब्दपरत्वात् । तदवच्छिन्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः । शकारस्येति । न ह्यनेन किञ्चिदुपदिश्यत इतिभावः । ननूपदिश्यते ज्ञाप्यतेऽनेनेति तदर्थः, धात्वादिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यते, इत्यरुचेराह—आदेच इति । सर्वेति । भाष्यकारादीत्यर्थः । यत्र तु करणव्युत्पत्त्यैवार्थसङ्गतिः, तत्रागत्याऽस्तु "कृत्यल्युट" [ पा० सू० ३।३।११३ ] इति बाहुल्काल्ल्युडभावः । यथा 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ' इत्यादाविति दिक्॥

ज्योत्स्ना ।

प्रयोजकपदं रूढ्यर्थतावच्छेदके लाक्षणिकन्तदाह—रूढ्यर्थतावच्छेदकतयेति । हर्यादिनानार्थस्थले विष्ण्वादिरूपा नानाधर्मा यथाशक्यतावच्छेदका भवन्ति तद्वत् धात्वादिकं रूढ्यर्थतावच्छेदकं भवतीति भावः । न चास्मिन् पक्षे प्रयोजकपदस्य यदि लक्षणा तदा द्वितीयपक्षेऽप्यवच्छेदके लक्षणास्तु, तदा उपदेशकरणतावच्छेदकमित्यर्थोऽस्त्विति न स्वग्रन्थविरोध इति वाच्यम् । अन्यूनानतिरिक्तधर्मस्यैवावच्छेदकत्वमिति नियमेन धातुत्वादेर्न्यूनवृत्तित्वेनावच्छेदकत्वासंभवादिति दिक् ।

इति दिगिति । अत्रेदं तत्त्वं बोध्यम् । यदि अज्ञातस्वस्वरूपोच्चारणज्ञापकत्वमुपदेशपदबोध्यं, तर्हि "निष्ठा" "लटः सद्वा" इत्यादिसूत्रविहितानां शतृशानच्क्तक्तवतूनामवयवस्येत्वानापत्तिः । तथा "राजसूयसूर्य" इति "चित्याग्निचित्ये" "ऐकागारिकट्चौरे" इति निपातनानुमितक्यबादीनां पादेरित्वानापत्तिः । तथा "कालेभ्यो भववत्" "चरणभ्यो धर्मवत्" "गोत्रादङ्कवत्" इत्यतिदिष्टप्रत्ययानामित्वानापत्तिः । तथा "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति भाष्यात् चित्रङि "आचारे ऽवगल्भक्लीब-

प्र० ( १ ) इति दिगिति । अत्रेदं तत्त्वं यदि अज्ञातस्वस्वरूपोच्चारणमुपदेशस्तदा "लिटः सद्वा" "निष्ठा" इति विहितानां शतृ—शानच्—क्त—क्तवतूनामवयवस्येत्सञ्ज्ञानापत्तिः । तथा 'राजसूयसूर्य' 'चित्याग्निचित्ये' 'ऐकागारिकट्' इत्यादिनिपातनानुमितक्यबादीनां पादेरित्वानापत्तिः । तथा "कालेभ्यो भववत्" "चरणेभ्यो धर्मवत्" "गोत्रादङ्कवत्" इत्यतिदिष्टप्रत्ययानामित्वानापत्तिः । तथा "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति भाष्यात् 'चित्रङि' अवगल्भक्लीवहोड, इत्यादौ, अनुवादे "चोः कुः" इत्यादौ च तदनापत्तिः, तस्मात् बाहुल्कात् करणे घञा अत्रोपदेशपदेन धातुप्रातिपदिकप्रत्ययनिपातागमादेशा गृह्यन्ते, तेन 'अभ्र आँ अपः' इत्याङ् च व्यावर्त्यते इति।

"उपदेशेऽजनुनासिक इत्" ( पा० सू० १।३।२ ) ।। यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति यो-

शब्दरत्न ।

नासिकामनुगत इति । नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः । प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम् ॥

अत एव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो[१] यमानुस्वारयोरनुनासिकव्यवहारः

ज्योत्स्ना ।

होड०" इत्यादावनुवादे "चोः कुः" इत्यादौ च इत्वानापत्तिः । तस्माद्बाहुलकात् करणे घञा अत्रोपदेशपदेन 'धातुप्रातिपदिकप्रत्ययनिपातागमादेशा एव गृह्यन्ते । तेनाऽत्र आँ अपः इत्याङ् च व्यावर्त्यत इत्यलम् ॥

नन्वनुनासिकपदात् अनु पश्चान्नासिकाङ्गत इति नासिका, पश्चाद्व्याप्रियते यस्मिन्निति वार्थः । प्रतीतिविपर्ययो भवति । तथाचानुनासिकाकारादीनामनुनासिकत्वगुणरहितानां स्वरूपोपलम्भात्तद्विषये मतभेदेन यद्यप्युक्तार्थस्य सम्भवो भवति । तथाच तेषां संग्रहः । तथा पित्रादीनां तद्गुणरहितानामनुपलम्भाद्युगपदेवोभयावच्छेदेनोत्पन्नाभ्यां वायुसंयोगाभ्यामुत्पत्तिरिति विनिगमनाविरहेणोभयोः स्थानत्वम् । अतः कथं योगाश्रयणेन गतार्थता ।

किञ्च—

'अनुस्वारयमानां च नासिकास्थानमिष्यते' ।

इतिशिक्षोक्तेस्तेषाञ्चासंग्रहो ऽत आह—नासिकामभिहत्येत्यादि । उक्तार्थे मानम्प्रदर्शयति–प्रातिशाख्येति । न केवलं प्रातिशाख्यादावेव किन्तु प्रकृतशास्त्रेऽपि तथेत्याह—अत एवेति । मुखग्रहणप्रत्याख्यानभाष्यध्वनित इति । अनुनासिकसंज्ञासूत्रे भाष्ये—'ये प्रा-

प्र० ( १ ) प्रकृतसंज्ञासूत्रे भाष्ये "ये प्रासादवासिनः, गृह्यन्ते, ते प्रासादवासिग्रहणेन । ये भूमिवासिनः, गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च" इतिदृष्टान्तप्रदर्शनेन मुखनासिकोभयवचनानां वर्गान्त्यानां नासिकापदमात्रेण ग्रहणमभिधाय मुखग्रहणं प्रत्याख्यातम् । तत्पक्षे च यमानुस्वारयोः संज्ञाऽतिप्रसङ्गमाशङ्क्य "नैव दोषो न प्रयोजनम्" इत्यनेनेष्टापत्तिर्ध्वनिता तथा च सूत्रमतेऽपि अनुनासिकपदस्य प्रातिशाख्यादाविव व्याकरणेऽपि योगार्थपुरस्कारेण बोधकतामाश्रित्य यमानुस्वारसङ्ग्राहकत्वमावश्यकम् । सूत्रं त्ववयवव्युत्पत्त्यनुवादकम् । नन्वस्य शब्दशास्त्रीयसंज्ञात्वाभावे "अशब्दसंज्ञा" इति प्रतिषेधाप्राप्त्या "यरोऽनुनासिके" ( पा०सू०८।४।४५ ) इत्यादावनुनासिकपदेन "स्वं रूपम्" ( पा०सू० १।१।६८ ) इति शास्त्रात् स्वरूपग्रहणापत्तिरित्यत आह—यरोऽनुनासिक इति । "हरतेर्दृतिनाथयोः पशौ ( पा०सू०३।२।२५ ) 'तस्यापत्यम्' इत्यादौ पश्वपत्यादिपदेष्विव व्याख्यानतः स्वरूपाग्रहणसिद्धेरित्यर्थः ।

गाश्रयणेनैव गतार्थत्वाद् 'अनुनासिकसञ्ज्ञासूत्रं मन्द(१)प्रयोजनम्' इति ध्वनयितुं नेहोपन्यस्तम्। उपदेशे किम्? अभ्र आँ अपः। यद्यपीह "उञः" "ऊँ" (पा० सू० १।१।१७।१८) इत्यत्रैव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्; तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच् किम्? मनिनो मकारस्य मा भूत्। प्रतिज्ञायते इति प्रतिज्ञा। "आ-

शब्दरत्न।

सूत्रमते सङ्गच्छते। "यरोऽनुनासिके" [पा० सू० ८।४।४९] इत्यादौ स्वरूपग्रहणाभावस्तु "पशुः" "अपत्यम्" इत्यादिवदिति ध्येयम्। मन्दप्रयोजनमिति। मन्देषु प्रयोजनमस्येति बहुव्रीहिः। एवं विधयोगलोकप्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः। अभ्र आँ अप इति। अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः। विधानेति। इदिति वक्तव्येऽनुनासिकविधानसामर्थ्यादित्यर्थः। नेत्त्वमिति। तत्फललोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्नेत्यर्थः।

ननु 'अभ्र आँ अटितः' इत्यत्र "अनेकान्ता अनुबन्धाः" इति पक्षे "आदितश्च" [पा० सू० ७।२।१६] इतीट्प्रतिषेधः फलम्। न च लोपाभावे इदितिमहासञ्ज्ञाकरणात्संज्ञाऽपि नेति वाच्यम्। महासञ्ज्ञयैव लोपसिद्ध्या "तस्य

ज्योत्स्ना।

सादवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन, ये भूमिवासिनः गृह्यन्ते ते भूमिवासिग्रहणेन, ये तूभयवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च इति दृष्टान्तप्रदर्शनेन मुखनासिकोभयवचनानां वर्गान्त्यानां नासिकापदमात्रेण ग्रहणमभिधाय मुखग्रहणं भगवता प्रत्याख्यातम्। ततश्च तत्पक्षे यमानुस्वारयोः संज्ञातिप्रसङ्गमाशङ्क्य नैव दोषो न प्रयोजनमित्यनेनेष्टापत्तिर्ध्वनिता। तथाच सूत्रमतेऽपि प्रातिशाख्यादाविव व्याकरणेऽपि योगार्थपुरस्कारेण बोधकतामाश्रित्य यमानुस्वारसङ्ग्राहकत्वमावश्यकं, सूत्रं त्ववयवयुत्यानुवादकम्।

नन्वस्य शब्दशास्त्रीयसंज्ञात्वाभावे "अशब्दसंज्ञा" इति पर्युदासाप्राप्त्या "यरोऽनुनासिक"इत्यादावनुनासिकपदेन स्वरूपमिति शास्त्रात् स्वरूपग्रहणापत्तिरित्याह-यरोऽनुनासिक इति। "हरतेर्दृतिनाथयोः पशौ" "तस्यापत्यम्" इत्यादौ पश्वादिपदेष्विव व्याख्यानतः स्वरूपाग्रहणसिद्धेरिति भावः। आदिना देवदत्तादिशब्दपरिग्रहः।

---

वि० (१) ननु कृत्स्नो वर्णो मुखेन नासिकया च उच्चार्यत इति सिद्धान्तात् अनु पश्चात् नासिका व्याप्रियतेऽत्रेत्यर्थको योगो ऽत्र न सम्भवति। नासिकामनुगत इत्यस्य नासिकासंयुक्तवायुना व्यञ्जित इत्यर्थात् यथाकथंचिद्योगोपपादनं तु, न रुढितो वरमित्यत आह—मन्दप्रयोजनमिति॥

पश्चोपसर्गे" ( पा० सू० ३।३।१०६ ) इति कर्मण्यङ् । प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः । एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा' इति क्लिष्टं व्याख्यानं नाश्रयणीयम् । "पाणिन्युपज्ञं व्याकरणम्" इत्या(१)दिष्विव लक्षणां विनैव निर्वाहात् । यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ॥

शब्दरत्न ।

लोपः" [ पा० सू० १।३।९ ] इत्यस्य वैयर्थ्यापत्तेः । "इक" (२)इत्यादौ ककारादिश्रवणानापत्तेश्च; इति चेन्न । "अनुबन्धानामेकान्तत्वमेव"।(३)इति मुख्यपक्षे दोषाभाव इत्याशयात् । तदा त्रि/मुख्येऽवयविन्यन्यपदार्थे बहुव्रीहिः । न चायमाकारोऽद्धातोरवयव इत्यदोषात् । प्रतिज्ञेति । प्रतिज्ञानविषय इत्यर्थः । प्रतिज्ञाशब्दस्येति । भावाङन्तस्येत्यर्थः । क्लिष्टेति । शक्तिग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसम्भवे लक्षणाश्रयणं क्लेश इति भावः । लक्षणां विनैवेति । अत्र लक्षणया व्याख्यानं कुर्वताऽपि तत्र

ज्योत्स्ना ।

नन्वर्थसंज्ञया लोपस्य सिद्धावपि तस्य साधुत्वाय सूत्रमावश्यकमित्यरुचेराह—इक इति । ननु न तस्येतस्तत्रोच्चारणं किन्तु तत्सदृशस्यैव । अत एव "आदिरन्त्येन" इति सूत्रव्याख्यावसरे इता इत्सदृशेनेत्युक्तम् । अत एव वैयाकरण इत्यत्र चित्स्वरो नेत्याह—आदाविति । वस्तुतोऽत्र महासंज्ञात्वमेव वक्तुमशक्यं सार्धमात्राधिककालिकसंज्ञाया एव महासंज्ञात्वस्वीकारादिति बोध्यम् । ननु पूर्वं दोषाभाव इति लिखितं पुनरिहेत्यदोषादित्युच्यते इति पौनरुक्त्यमिति चेन्न । पूर्वं दोषस्य पदस्येट्प्रतिषेधप्रसङ्गरूपं दोषपरत्वमस्य तु दोषसामान्यपरत्वमिति तयोर्भेद इत्यदोषादिति दिक् ।

---

वि० ( १ ) अनेन पूर्वापरविरोधस्तत्र सूचित इति भावः ॥

प्र० ( २ ) नन्वन्वर्थसंज्ञया लोपस्य सिद्धावपि तस्य साधुत्वाय सूत्रमावश्यकमित्यरुचेराह—इक इति । वस्तुतोऽत्र महासंज्ञात्वं वक्तुमेवाशक्यम् । सार्धमात्राधिककालिकसंज्ञाया एव महासंज्ञात्वस्वीकारादिति बोध्यम् ।

वि० ( ३ ) न्यासकारस्तु अनुबन्धानामनेकान्तत्वेऽपि उपदेशस्य फलं—दधीयतेः क्विपि दधि ब्राह्मणकुलं इत्यत्र "अणोऽप्रगृह्यस्य" इति सूत्रेणानुनासिकत्वे "इदितो नुम्धातोः" इतिनुम्वारणरूपमाहुः । न च इत्संज्ञां प्रति त्रैपादिकस्य अनुनासिकस्यासिद्धत्वं शङ्क्यम् । रोरुकारस्येत्संज्ञार्थं इत्संज्ञाम्प्रति त्रिपाद्याः असिद्धत्वं नेति व्याख्यानात् । भाष्यमते इदमयुक्तम् । नुम्विधौ धातुग्रहणं, धातूपदेशावस्थानां नुमर्थमित्याशयात् ॥

ननु रलयोरिति न्यूनम्। टकारस्यापि मध्यगतत्वादित्यत आह—प्रत्याहारेष्विति। व्यवह्रियन्ते इति। प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ्। यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि-योगरूढिरिति भावः। प्रत्याहाराश्चैकत्वारिंशदिति प्राञ्चः। चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः। तेन सुप्तिङादीनां, रप्रत्याहारस्य, "चयो द्वितीया" इतिवार्तिकस्थचय्प्रत्याहारस्य चाधिक्येऽप्यदोषः।

यत्तु "ञमन्ताड्डः" इति, "यमिर्ञमन्तेष्वनिडेक इष्यते" इति च ञम् वार्तिककृता व्यवहृत इत्याहुः, तद्भ्रमसाभिधानम्। आद्यस्योणादिसूत्रत्वात्, द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात्; इत्यास्तां तावत्। एष च सङ्ख्यानियमो

शब्दरत्न।

लक्षणां विना मदुक्त(१)रीत्यैव व्याख्यातम्। एवं च पूर्वापरविरोधस्तस्येति भावः। न चोभयोर्विधानेऽपि लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम्। "लः कर्मणि" [ पा० सू० ३।४।६९ ] इत्यादीनामपि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः' इतिसिद्धान्तासङ्गत्यापत्तेः। व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य[२] भङ्गापत्तेश्च॥

टकारस्यापीति। अत्र यद्वक्तव्यं[३] तदन्यत्रोक्तम्। बाहुलकादिति। भावघञन्तादर्शआद्यजित्यपि बाहुलकादविशिष्टमिति भावः। एकचत्वारिंशदिति।

ज्योत्स्ना।

मदुक्तरीत्यैवेति। पाणिनिसमवेताद्यज्ञानविषयं व्याकरणमित्यर्थस्य शक्त्यैव स्वीकारादित्यर्थः। शक्तिग्राहकत्वस्येति। शक्तिग्राहकेषु परिगणनाल्लब्धस्येत्यर्थः।

अन्यत्रोक्तमिति। बृहच्छब्दरत्ने, तत्रहि—"आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इति भाष्योक्तहेतुभिरनुबन्धसामान्यस्य, प्रत्याहाराबोध्यत्वलाभात्। "हयवरट्" इत्यादौ पुनः पुनः उच्चारणार्थकाकारोपादानेनोच्चारणार्थवर्णानन्वितहलां प्रत्याहारबोध्यत्वाभावस्य ज्ञापितत्वाच्च टकारस्य न ग्रहणमिति शब्देन्दुप्रभायां विस्तरः॥

---

प्र० ( १ ) पाणिनिसमवेताद्यज्ञानविषयो व्याकरणमित्यर्थस्य शक्त्यैव स्वीकारादित्यर्थः।

प्र० ( २ ) शक्तिग्राहकेषु परिगणनाल्लब्धस्येत्यर्थः।

प्र० ( ३ ) "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इतिभाष्योक्तहेतुभिरनुबन्धसामान्यस्य प्रत्याहाराबोध्यत्वलाभात्, "हयवरट्" इत्यादौ हकाराद्युत्तरमसकृदुच्चारणार्थाकारोपादानेनोच्चारणार्थवर्णानन्वितहलां प्रत्याहारबोध्यत्वाभावस्य ज्ञापितत्वाच्च टकारस्य न ग्रहणमित्यादीत्यर्थः।

नातीवोपयुज्यत इत्युपेक्षितः ।

"ऊकालोऽच्" ( पा० सू० १।२।२७ ) ह्रस्वदीर्घप्लुत इति स(१)माहारद्वन्द्वः । सौत्रं पुंस्त्वम् । वां काल इवेति । फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । आये इति । "निपाता आद्युदात्ता" ( फि०सू०१२पा४ ) इत्याकार उदात्तः । यच्छब्दस्तु फिट्सूत्रेण । अर्वाङ् इति । अकारोऽनुदात्तः ।

शब्दरत्न ।

(२)"एकस्मान् ङञणवटा, द्वाभ्यां ष, स्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयो चयौ चतुर्भ्यों, रः पञ्चभ्यः शलौ षड्भ्यः ॥

इति तदुक्तेरिति भावः ॥

सौत्रं पुंस्त्वमिति । यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः । फलितार्थेति । ऊपदेन (३)स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तत् फलतीति भावः । वां काल इति तु नाविग्रहो व्यधिकरणत्वादत आह—विग्रहस्त्विति । काल इति जात्याख्यायामेकवचनम् । स्वोच्चारणकाल इति । स्वोच्चारणकालसदृश इत्यर्थः । सादृश्यमूलके कालयोरभेदाध्यवसाये तु यथाश्रुतमेव साधु ।

फिट्सूत्रेणेति । अन्तोदात्त इत्यर्थः । जसः सुप्त्वादनुदात्तत्वम् । "एकादेश उदात्तेन"

ज्योत्स्ना ।

एकस्मादिति । ङञणवटा अनुबन्धा एकैकस्मादादिवर्णात् परोच्चारिता एकैकं प्रत्याहारं जनयन्तीत्यादिरर्थः । एङ् यञ् अण् छव् अट्, झप् भष्, अक् इक् उक्, अण् इण् यण्; अम् ङम् यम्, अच् इच् एच् ऐच्, यय् मय् झय् खय्, यर् झर् खर् चर् शर्, अश् हश् वश् जश् वश्, झश् अल् हल् वल् रल् शल् झल् इत्युदाहरणानि ज्ञेयानि ॥

---

वि० ( १ ) समूहस्य विशेष्यत्वेऽपि समाह्रियमाणानामेव परस्परेषां पदार्थान्तरान्वयित्वम् ॥

प्र० ( २ ) ङञणवटा अनुबन्धा एकैकस्मादेवाऽऽदिवर्णात् परोच्चारिता एकैकं प्रत्याहारं जनयन्तीत्यादिरर्थः । एङ्, एञ्, अण्, छव्, अट् । झप्, भष् । अक्, इक्, उक् । अण्, इण्, यण् । अम्, यम्, ङम् । अच्, इच्, एच्, ऐच्, । यय्, मय्, झय्, खय्, । यर्, झर्, खर्, चर्, शर्, । अश्, हश्, वश्, झश्, जश्, बश् । अल्, हल्, वल्, रल्, झल्, शल् । इत्युदाहरणानि ।

वि० ( ३ ) यत्तु कुचमर्दिन्यां स्वोच्चारणकाललक्षणायामप्यनिर्वाहान्मूलं चिन्त्यमिति जगन्नाथः । परं तदेवचिन्त्यमित्याशयं प्रकटयति—स्वोच्चारणेत्यनेन ॥

तस्यादितः ( पा० सू० १।२।३२ ) । अतन्त्रमिति । "उपेयिवान्" इत्यत्रोपसर्ग इवाविवक्षितमित्यर्थः ।

ननु तत्र "ईयिवांसमतिस्रिधः" इत्यादिप्रयोगदर्शनादविवक्षाऽस्तु । इह त्वविवक्षायां प्रमाणं किम् ?, इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण ।

तथा हि—येऽरा इत्यत्रैकारः, 'तनूनपात्' 'शचीपतिम्'इत्यत्र पदपाठे ऊदीतौ चार्धोदात्तौ इति सकलबह्वृचप्रसिद्धम् । तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्" इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१५८ ) इति शेषनिघातः । पूर्वपदभूतयोस्तनूशची एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम् ।

"जात्य(१)वद्वा तथा वाऽन्तौ तनूशचीति पूर्वयोः" इति ।

शब्दरत्न ।

[ पा० सू० ८।२।१९ ] इत्येकार उदात्त इति भावः । अनुदात्त इति । फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति । अविवक्षितमित्यर्थ इति । इदं च वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां, तच्छाखास्थवैदिकोदाहरणविषयम् । तनूनपाच्छचीपतिशब्दयोरिति । अस्य यद्यपीत्यादिः । शेषनिघात इति । अस्य तथापीतिशेषः । तेनोदीतौ अनुदात्तौ प्राप्नुत इति भावः । जात्यवद्वेति । पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति ।

अतोऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे ।

इति लक्षितो जात्यः । उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जा-

ज्योत्स्ना ।

ह्रस्वग्रहणमतन्त्रमिति । ह्रस्वग्रहणं नाम ह्रस्वपदघटितग्रहणम् । अतन्त्रं नाम स्वशास्त्रसंकेतितरूपेणाबोधकं, किन्त्वर्धमात्रारूपार्थबोधकमिति भावः । एवञ्च दीर्घादिष्वप्यर्धमात्रैवोदात्ता बोध्या ।

परेतु—ह्रस्वघटितमर्धह्रस्वपदमविवक्षितमित्यर्थः । स्वशास्त्रसंकेतितरूपेणाबोधकमित्यर्थः । अर्धह्रस्वपदस्य शास्त्रे संकेताभावादित्यर्थः स्वीकर्तव्यः । रूप्यते बोध्यते इति रूपोऽर्थः । स्वशास्त्रेण सकेतितोऽर्थः एकमात्रिकात्त्वं यस्मिन् समूहे सः स्वशास्त्रसंकेतितरूपः एकमात्रिकाजर्थः । षष्ठ्यर्थे तृतीया, तस्याबोधकमित्यर्थः । अर्धह्रस्वपदेन अर्धमात्रोपलक्ष्यत इति भावः । अत एव अर्धह्रस्वशब्दो ऽर्धमात्रायां रूढ

वि० ( १ ) जात्यः स्वरितविशेषः, तदुक्तं प्रातिशाख्यभाष्ये—'ततो मृदुतरौ स्वारौ जात्यक्षैप्राबुभौ स्मृतौ' इति । स्वरितस्योत्तरार्धोऽतिमन्दप्रयत्नोच्चारितो जात्य इति तदर्थः ॥

तथा स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि—

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्धमात्रा, ऽर्द्धमेव वा ॥
अनुदात्तः परः शेषः, स उदात्तश्रुति, र्न चेत् ।
उदात्तं वोच्यते किञ्चित्स्वरितं वाऽक्षरं परम् ॥ इति ।

अस्यार्थः—पूर्वयोरुदात्तत्वानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो बोद्धव्यः । तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षयोदात्ततरा ऽर्द्धमात्राबोद्ध्येति ॥ "क्वोऽश्वाः" इत्यादि ह्रस्वाभिप्रायम् । "अर्द्धं वा" इति दीर्घाभिप्रायम् । अनेनैव ह्रस्वस्यापि सङ्ग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः । "अनुदात्त" इत्यादि परिशेषसिद्धार्थकथनम् । सः—शेषः उदात्तश्रुतिः स्यात् । किमविशेषेण ? नेत्याह—न चेदित्यादि । उदात्तस्वरितपरं विहायेत्यर्थः । शाकल्योऽप्याह—

"अप्रा(१)कृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः ।
उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितम् ॥ इति ।

शब्दरत्न ।

त्य इति तदर्थः । तेन तुल्यं तद्वत्, अस्यान्त उदात्तश्रुतिक इत्यर्थः । तथा वा असंहितवद्वा—संहितवद्वेत्यर्थः ।

पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान् ।

इत्युत्तरमस्य पाठात् । असंहितवदित्यनेन केवलमनुदात्तत्वम् । संहितवदित्यनेनार्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम् । तथेति । लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः ॥

स्वतन्त्रोदात्तापेक्षयेति । श्लोके "उदात्तात्" इति स्वतन्त्रोदात्तादित्यर्थकमिति भावः । एवकार इति । तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः । एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम् । वाशब्दस्तु पादपूरणायेति बोद्धव्यम् ।

ज्योत्स्ना ।

इति भाष्ये उक्तम् । मूलं तु—'एकाक्षरसमावेश' इति प्रातिशाख्यानुसारेण योजनीयमितिदिक् ॥

वि० (१) स्वरितो द्विधा प्राकृतो ऽप्राकृतश्च । तत्र प्रकृत्या स्वभावेनोदात्तानुदात्तयोर्यथाकथंचित्संगतिं विना जातो यः स प्राकृतः, तद्भिन्नोऽप्राकृत इति बोध्यम् ।

उदादाय—उदात्तं कृत्वा। 'अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथं चिन्नेयाः। क्वेति। किमोऽत्। तित् स्वरितम्। व इति। "अनुदात्तं सर्वमपादादौ" ( पा०सू० ८।१।१८ ) इत्यधिकारादनुदात्तम्। अश्वा इति। अशेः क्वनि नित्स्वरेणाद्युदात्तम्। संहितायां तु "एकादेश उदात्तेनोदात्तः" ( पा० सू० ८।२।२५ ) इत्योकार उदात्तः। ये अरा इति। द्वयमपि फिट्सूत्रेणान्तोदात्तम्। एकादेशस्तु पक्षे स्वरितः।

शब्दरत्न।

अप्राकृत इति। स्वरित इत्यर्थः। स्वार इति। स्वर एव (१)स्वार(२)ः। स्वार्थेऽण्। स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थं। लक्ष्यते इति। तदुक्तं भाष्ये—"अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः" इति। हरिरप्याह—

"प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते" इति।

अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थं तस्य हेलाराज आह। एवं च लोकेऽन्यशाखासु च दीर्घादिष्वप्यर्धमात्रैवोदात्तेति भावः। मतान्तरेति। प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः। कथञ्चिदिति। लक्ष्यते इत्यंश-

ज्योत्स्ना।

स्वर एव स्वार इति। स्वारशब्दो न स्वरभक्तिपर इत्याह—स्वर एवेति। न च "सौवर्यः सप्तम्यस्तदन्तसप्तम्यः" इति भाष्येण स्वरशब्दस्य द्वारादिगणे पाठेनैजागमो यथा भवति तथा स्वार्थिकेऽणि अत्रापि स्यादिति वाच्यम्। द्वारादित्वात्प्राप्तोऽप्यैजागम आर्षत्वान्नेति समाधेयम्॥

परे तु—व्युत्पन्नाव्युत्पन्नभेदेन स्वरशब्दस्य द्विविधत्वात्। उदात्तादिभिः स्वयमेव राजन्ते इति व्युत्पत्तिश्च प्रदर्शितेति। द्वारादिस्वग्रामस्वाध्यायशब्दयोः पाठो नियमार्थः। स्वशब्दादेश्चेदेतयोरेवेति। अन्यथा स्वशब्दस्य द्वारादिगणे पाठेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। एवञ्चाव्युत्पन्नस्येदं रूपं बोध्यम्। तेनार्थवत्स्वशब्दघटितनियमेनैचः प्राप्त्यभावादित्याहुः।

मूले कम्पितमिति क्रियाविशेषणं कम्पो निघातविशेषः। हरदत्तग्रन्थो भाष्यसम्मतार्थाभिधायकत्वेन युक्त एवेति मूलमसंगतमिति ध्वनयितुं तत्रार्थे भाष्यसम्मति-

प्र० ( १ ) अत्र "द्वारादीनां च" ( पा०सू०७।३।४ ) इति सूत्रेण प्राप्तोऽप्यैजागम आर्षत्वान्नेति बोध्यम्।

वि० ( २ ) स्वृधातोर्घञि स्वारः इति सिध्यति। तस्य स्वर इत्यर्थः। ये तु स्वर एव स्वारः इति अणन्तमाहुस्तन्मते "द्वारादीनां च" इत्यैजागमापत्तिः। अत एव 'सौवर्यः सप्तम्यः' इति भाष्यप्रयोगः संगच्छते॥

"स्वरितो वाऽनुदात्ते पदादौ" (पा० सू० ८।२।६) इत्युक्तेः ।

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे 'मुखनासिकम्' इति स्यादत आह—मुखसहितेति(१) ॥

(२)तुल्यास्य (पा०सू० १।१।९)। (३)आस्ये भवमास्यं, "शरीरावयवा-

शब्दरत्न ।

परमिदम् । भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः । इत्युक्तेरिति । "नोदात्तस्वरितो-दयम्" [पा० सू० ८।४।६७] इति निषेधस्तु "उदात्तादनुदात्तस्य" [पा० सू० ८।४।६६] इत्यस्यैव, "अनन्तरस्य" इति न्यायादिति भावः ॥

ज्योत्स्ना ।

माह—इत्युक्तेरिति ।

मुखंचेति । अत्र मुखशब्देन मुखावयवताल्वादिर्गृह्यते नासिकाशब्दसाहचर्यात् । मुखसहितानासिकेति । अत्र मुखद्वितीया नासिका वचनमस्य, मुखोपसहिता वा नासिका वचनमस्येति भाष्योक्तेर्द्वितीयेति उपसहितेति वा विग्रहवाक्यं बोध्यम् । तादृशस्यैव शाकपार्थिवादिगणे पाठकल्पनात् । अन्यथा उत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति मूलमसंगतं स्यात् । मुखसहितेत्यस्य तु तदर्थपरिचायकत्वमिति साम्प्रदायिकाः ॥

अन्ये तु—सूत्रे मुखपदं मुखसहिते लाक्षणिकं, शाकपार्थिवादौ पाठे न मानं नापि

प्र० (१) अत्र "मुखद्वितीया वा नासिकावचनमस्य, मुखोपसहिता वा नासिका वचन-मस्य" इति भाष्योक्तेर्द्वितीयेति उपसहितेति वा विग्रहवाक्यं बोध्यम् । तादृश्यस्यैव शाकपार्थिवा-दिगणे पाठकल्पनात् । मुखसहितेत्यस्य तु तदर्थपरिचायकत्वमात्रम् । एतेन समासपक्षे शाकप्रिया-दीनामुत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति प्रयोगस्यासाधुत्वमित्यपास्तम् ।

प्र० (२) स्वजनकयावत्स्थानप्रयत्नजन्यत्वं स्वाजनकस्थानप्रयत्नाजन्यत्वमेतदुभयसम्बन्धेन वर्णविशिष्टो वर्णः सवर्णः—सवर्णसंज्ञक इत्यर्थः । आद्यसम्बन्धदानेनैकारस्यावर्णेन सह न साव-र्ण्यम् । द्वितीयसम्बन्धदानेनाकारस्यैकारेण सह तद्व्यावृत्तिः । न चैवं कङ्योः सावर्ण्यानापत्तिः क-काराजनकनासिकास्थानजन्यत्वस्य ङकारे सत्त्वादिति वाच्यम् । प्रकृतसूत्रे भाष्ये "सिद्धं त्वास्ये तुल्यदेशप्रयत्नम्" इति वार्तिके आस्यग्रहणस्य देशप्रयत्नोभयविशेषणत्वेन नासिकायाश्चौष्ठप्रभृ-तिकाकलकपर्यन्तरूपाऽऽस्याद्बाह्यत्वेन तज्जन्यत्वस्य सावर्ण्याविघातकत्वात् । 'नासिकाऽऽस्यान्तर्ग-ता' इति मतेऽपि "मुखनासिका" (पा०सू०१।१।८) इति सूत्रे नासिकाभिन्नावयवार्थबोधकमुखश-ब्दग्रहणेन तत्साहचर्यादत्र सूत्रेऽपि तथार्थकस्यैवास्यशब्दस्य ग्रहणेनादोषात् ।

वि० (३) आस्यशब्दाद्भवार्थे "अर्श आदिभ्यो अच्" इत्यच् । सूत्रे आस्यपदोपादानरूप-व्याख्यानात् । अन्यथा सर्वेषां वर्णानां जनकस्यास्य तुल्यत्वात्तद्वैयर्थ्यमेव स्यात् ॥

यत्" । इत्यभिप्रेत्याह—ताल्वादीति । आभ्यन्तरेति । एतच्च प्रशब्दबला-

शब्दरत्न ।

आस्यशब्देन कथं तदवयवताल्वादिग्रहणमत आह—आस्ये भवमिति । प्रशब्दबला-

ज्योत्स्ना

प्रयोजनमित्याहुः ।

"तुल्यास्यप्रयत्नं सवर्णम्" इति । आस्यन्दते अन्नम्प्राप्य द्रवीभवतीत्यर्थे "अन्येष्वपि दृश्यते" इति ऽप्रत्यये आस्य शब्दस्य मुखपरत्वम् ।

यद्वा अन्नेन द्रवीक्रियते इत्यन्तर्भावितण्यर्थात् स्यन्दधातोः परिखेत्यत्र इव कर्मणि ऽप्रत्ययेन मुखवाचकत्वम् । तत्तु सर्वेषां वर्णानां तुल्यमिति आस्यपदोपादानं व्यर्थम् । अत आस्यभवताल्वादिस्थानपरत्वमत आह—ताल्वादिस्थानमिति ।

सूत्रार्थस्तु—स्वजनकस्थानप्रयत्नजन्यत्वं स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धाभ्यां वर्णविशिष्टो वर्णः सवर्णसंज्ञो भवतीत्यर्थः । तेनेकारसावर्ण्यमेकारस्य न, तस्य चेकाराजनककण्ठस्थानजन्यत्वात् ॥

नन्वेवमेकारसावर्ण्यमिकारे प्रसक्तम्, एकारजनकतालुस्थानजन्यत्वात्तदजनकमूर्धादिस्थानाजन्यत्वाच्चेति चेन्न । आद्यसम्बन्धे स्वजनकयावत्स्थानप्रयत्नजन्यत्वमिति वक्तव्यत्वात् । तथाचेकारस्य तालुस्थानजन्यत्वेऽपि यावत्स्थानाजन्यत्वेनाद्यसम्बन्धेन वर्णवैशिष्ट्याभावात् । अथवा परस्परनिवेशेनापि वारणसम्भवात् ।

तथाहि—परस्परत्वं च सम्बन्धविशिष्टसम्बन्धसम्बन्धित्वं । सम्बन्धे सम्बन्धवैशिष्ट्यञ्च—स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वं स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वं, स्ववृत्तिसम्बन्धतावच्छेदकरूपवत्वं, स्वभिन्नत्वम्, एतच्चतुष्टयसम्बन्धेन । तथाच—प्रकृते तालुस्थानजन्या च सम्बन्धप्रतियोगिता कण्ठतालुस्थानजन्यत्वसम्बन्धानुयोगितयोरिकारेऽभावान्न दोषः । देवदत्तो यज्ञदत्तं नमति, यज्ञदत्तो विष्णुमित्रमिति, अत्र परस्परमिति प्रयोगवारणायाद्यौ सम्बन्धौ । तत्रैव प्रथमो नमति प्रथमं द्वितीयस्ताडयति इत्यर्थके तद्वारणाय तृतीयः सन्बन्धः, देवदत्तः स्वन्नमतीत्यर्थके तद्वारणाय तुरीयः सम्बन्धः ।

अथवा वर्णविशिष्ट वर्णविशिष्टः सवर्णसंज्ञको भवतीत्यर्थः । उभयत्रापि वर्णवैशिष्ट्यं स्वजनकस्थानप्रयत्नजन्यत्वं स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धद्वयेन । प्रकृते चैकारवैशिष्ट्यस्येकारे सत्वेऽपि तद्वैशिष्ट्यस्यैकारेऽसत्वेन न दोष इत्यलं प्रपञ्चविपञ्चीविलासेन ।

नचवं कङयोः सावर्ण्यापत्तिः ककाराजनकनासिकास्थानजन्यत्वस्य ङकारे सत्वादिति वाच्यम् । प्रकृतसूत्रे भाष्ये "सिद्धं त्वास्ये तुल्यदेशप्रयत्नम्" इति वार्तिके आस्यग्रहणस्य देशप्रयत्नोभयविशेषणत्वेन नासिकायाश्चौष्ठप्रभृतिकाकलकपर्यन्तरूपा-

झभ्यते । तुल्यास्यं किम् । तप्तौ । अत्र पकारस्य तकारे परे "झरो झरि" (पा०सू० ८।४।६५) इति लोपो मा भूत् । प्रयत्नग्रहणं किम् । वाक् श्चोतति । शस्य लोपो न । ञमङणनानामि । 'नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणां प्रातिशाख्यम् । "यमानुस्वारनासिक्यानां नासिका, अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम् । "वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिकास्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यं च । "एदैतोः" इत्यादौ तपरत्वमसंदेहार्थं, न तु तत्कालग्रहणार्थम् । तेन प्लुतस्यापि सङ्ग्रहः ॥

शब्दरत्न ।

दिति । प्रकृष्टो यत्नः प्रयत्नः । प्रकर्षश्च वर्णोत्पत्त्यव्यवहित[१]प्राक्कालिकत्वरूप इति भावः । चकारेणेति । अत्र यथा नासिकायाः स्थानत्वं, तथाऽन्यत्र निरू[२]पितम् । न तु तत्कालेति । एषां शिक्षाद्युक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः ।

ज्योत्स्ना ।

स्याद्वाद्यत्वेन तज्जन्यत्वस्य सावर्ण्याविघातकत्वात् । नासिकास्यान्तर्गतेति मतेऽपि "मुखनासिका" इति सूत्रे नासिकाभिन्नावयवार्थबोधकमुखशब्दग्रहणेन तत्साहचर्यात्र सूत्रेऽपि तदर्थकस्यैवाऽऽस्यग्रहणेनादोषादित्यन्यत्र विस्तरः ।

यत्तु नासिका न स्थानं किन्तु करणमिति मतम् । तन्न युक्तम् । "अस्यन्त्यनेन वर्णान्" इतिभाष्यात् कण्ठादीनामपि करणत्वप्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वारोपेण । एवञ्च ञादीनां नासिक्यव्यवहारस्य प्रातिशाख्यशिक्षादौ प्रदर्शनेन ञमङणनमा नासिकायाम्भवा इति व्युत्पत्या नासिक्या इति व्याख्यातृवचनेन च नासिकापि स्थानमित्याह—अत्रेत्यादिना ।

अत्रायम्भावः—यद्यपि कण्ठाद्यवच्छिन्नवायुसंयोगादकारादेरुत्पत्त्यनन्तरं नासावच्छिन्नवायुसंयोगेनाऽनुनासिक्यगुणोत्पत्तेस्तत्र नासिकायाःगुणजनकत्वान्न स्थानत्वम् ।

वि० (१) तेन विवारादीनां न ग्रहणं ते तु वर्णोत्पत्त्यनन्तरं भवन्तीति भावः ॥

प्र० (२) यद्यपि कण्ठाद्यवच्छिन्नवायुसंयोगादकारादेरुत्पत्त्यनन्तरं नासावच्छिन्नवायुसंयोगेनाऽऽनुनासिक्यगुणोत्पत्तेर्नासिकायास्तत्र गुणजनकत्वान्न स्थानत्वं, यद्देशावच्छिन्नवायुसंयोगाद्वर्णोत्पत्तिस्तद्देशस्यैव स्थानत्वात्, तथापि ङकारादेरानुनासिक्यरहितस्वरूपानुपलम्भात्तत्तद्वर्गीयस्थान—नासिकैतदुभयावच्छिन्नवायुसंयोगोत्तरमेव स्वरूपोत्पत्तेरत्र नासिकाया अपि स्थानत्वम् । "अनुस्वारयमानां च" इति शिक्षायां चकारेण ङञणनमानां संग्रहान्न न्यूनतेति बोध्यम् ।

"पूर्वत्रासिद्धम्" (पा० सू० ८।२।१) ॥ यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि 'त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं

शब्दरत्न ।

नासिद्धं स्यादिति । ततश्च गोधुङ्मानित्यादौ घत्व(१)जश्त्वानुनासिकेषु भष्भावो

ज्योत्स्ना

स्थानत्वञ्च यद्देशावच्छिन्नवायुसंयोगेन वर्णोत्पत्तिस्तद्देशवत्त्वमिति । तथापि ङकारादेरनुनासिक्यरहितस्वरूपानुपलम्भात्तत्तद्वर्गीयस्थाननासिका एतदुभयावच्छिन्नवायुसंयोगोत्तरमेव स्वरूपोत्पत्तेरत्र नासिकायाः स्थानत्वम् । "अनुस्वारयमानाञ्च नासिकास्थानमिष्यते" इतिशिक्षायां चकारेण ङञणनमानां संग्रहान्न न्यूनतेति बोध्यम् ।

"पूर्वत्रासिद्धम्" । त्रैपादिकस्य पूर्वदृष्ट्यासिद्धत्वाभावे दोषमाह—ततश्चेति । घत्वजश्त्वानुनासिकेष्विति । गोदुह् मत् इति दशायां परत्वान्नित्यत्वाच्च प्राप्तं जश्त्वं निरवकाशत्वाद्बाधित्वा घत्वे कृतेऽपि परमपि जश्त्वं निरवकाशत्वद्बाधित्वा भष्भावेनेष्टसिद्धेरिति चेन्न । घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वं बाधित्वा प्राप्तस्यापि भष्भावस्य परेण नित्येनानुनासिकेन च बाधात् भष्भावो न स्यादित्याशयात् । सिद्धान्ते तु घत्वोत्तरं जश्त्वानुनासिकयोरसिद्धत्वात् भष्भावेनेष्टसिद्धिः ।

यद्यपि जश्त्वं बाधित्वा भष्भावः प्राप्तःततोऽपि परत्वादनुनासिकः प्राप्तः ततोऽपरनिमित्तकत्वेन अन्तरङ्गत्वाज्जश्त्वं प्राप्तं ततोऽपवादत्वात् भष्भावः प्राप्नोतीति चक्रकात् कस्यापि कार्यस्याप्राप्त्या भष्भावो न स्यादिति कथनं न्यूनम् । तथापि सिद्धान्ते जश्त्वापेक्षया अपवादत्वादनुनासिकापेक्षयान्तरङ्गत्वात् भष्भावसिद्धेः ।

न च त्रिपाद्यां विप्रतिषेधशास्त्रस्याप्रवृत्तेः सिद्धान्तितत्वात् शब्दान्तरस्य प्राप्नुवतोऽऽनित्यत्वाच्च भष्भावापेक्षया जश्त्वानुनासिकयोः प्राबल्याभावाद्यथासमावेशं प्रवृत्तेर्न्याय्यत्वात् पूर्वं भष्भावे ततो जश्त्वानुनासिकयो रूपं सिद्ध्यत्येवेति वाच्यम् । तस्मादत्रानुनासिकापेक्षया अन्तरङ्गत्वात्प्राप्तं जश्त्वं निरवकाशत्वेनापवादत्वात् बाधित्वा "झय" इति वत्वापत्तिर्दोषो बोध्यः । न च तडित्वानित्यादौ तान्ते तच्चारितार्थ्यमिति वाच्यम् । तावन्मात्रेण "झयः" इतिप्रत्याहारग्रहणाचारितार्थ्यस्य

प्र०(१) अत्र घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु भष्भावो न स्यादिति विवक्षितोऽर्थः । वस्तुतोऽत्र जश्त्वं प्रति भष्भावोऽपवादत्वाद्बाधेत । नच तं परत्वादनुनासिको बाधते, तं चाऽन्तरङ्गत्वाज्जश्त्वं, तच्चाऽपवादत्वाद्भष्भाव इति चक्रकापत्तिरिति वाच्यम्, जश्त्वापेक्षयाऽपवादत्वादनुनासिकापेक्षयाऽन्तरङ्गत्वाच्च पूर्वं भष्भावसिद्धेः । तस्मादत्रानुनासिकापेक्षयाऽन्तरङ्गत्वात्प्राप्तं जश्त्वं निरवकाशत्वेनापवादत्वाद् बाधित्वा "झयः" इति वत्वापत्तिर्दोषो बोध्यः । न च तडित्वानित्यादौ तान्ते चारितार्थ्यं वाच्यम् । तावन्मात्रेण 'झयः' इतिप्रत्याहारग्रहणाचारितार्थ्यस्य तदवस्थत्वात् ।

स्यादत आह—अधिकारोऽयमिति । यद्यत्र कार्यासिद्धत्वमिष्येत तर्हि पूर्वत्रासिद्धमिति 'मनोरथः' इत्यादावुत्वं न स्यात् । परत्वाद् "रो रि" (पा० सू० ८।३।१४ ) इत्यस्य प्रसङ्गात् ।

शब्दरत्न ।

न स्यात् । (१)न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः । सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः । मध्ये पाठस्य विप्रतिपेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमनाविरहात्त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति भावः । रो रीत्यस्य प्रसङ्गादिति । सिद्धेऽसिद्धत्वारोपात् सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि देवद(२)त्तहन्तृहतन्यायेन स्थानिभूतरोरभावाद् "हशि च" [ पा० सू० ६।१।११४ ] इत्यस्याप्राप्तिरिति भावः ।

ज्योत्स्ना ।

तादवस्थ्यादित्यलम् ।

इदं विधिसूत्रमेवास्तु तथाप्युक्तप्रयोगस्य सिद्धिर्भविष्यतीति शङ्कां निराकरोति—न चेत्यादिना । अतिदेशान्तरवदिति स्थानिवत्त्वातिदेशान्तादिवत्त्वातिदेशवत् । न चास्मिन् सूत्रे वतिनिर्देशाभावादस्य सूत्रस्यातिदेशाविधायकत्वेनातिदेशान्तरवदित्यसङ्गतमिति वाच्यम् । विनापि वतिं वत्यर्थो लभ्यते,'यथा अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे ब्रह्मदत्तवदयं भवति' इति भाष्येण वतिनिर्देशाभावेऽपि अतिदेशस्वीकारवत् प्रकृते वतिनिर्देशाभावेऽपि अतिदेशसूत्रत्वमित्याशयात् । न चैतद्दृष्ट्या त्रिपाद्या असिद्धत्वेन कथं तत्रास्य प्रवृत्तिरिति वाच्यम् । वाक्यार्थबोधकालेऽस्य सूत्रस्य बोधजनकत्वेन बोधविषयत्वासम्भवात् । स्वस्य पूर्वशब्देनाग्रहणात् स्वदृष्ट्या त्रिपाद्यसिद्धत्वबोधनादिति दिक् । अस्य परिभाषात्वं वास्तु पूर्वत्वावच्छिन्नशास्त्रत्वमस्यालिङ्गम्भविष्यति प्रष्टुरभिप्रायः । उभयथापि दोष इत्याशयेन समाधत्ते—सपादेत्यादिना । ननु मध्येपाठात् सामर्थ्यात् स्वापेक्षपूर्वत्वाश्रयशास्त्रेषु प्रवृत्तिरित्याह-मध्ये इति । एव-

प्र० ( १ ) नचातिदेशान्तरेति । "अब्रह्मदत्तं ब्रह्मदत्त इत्याह, तेन मन्यावहे ब्रह्मदत्तवदयं भवति" इति संख्यासंज्ञासूत्रस्थभाष्येण वतिनिर्देशाभावेऽप्यतिदेशत्वस्वीकारवत् प्रकृते वतिनिर्देशाभावेऽप्यतिदेशसूत्रत्वमस्त्वित्यर्थः । नचैतद्दृष्ट्या त्रिपाद्या असिद्धत्वेन कथं तत्रास्य प्रवृत्तिरिति वाच्यम् । वाक्यार्थबोधकालेऽस्य सूत्रस्य बोधजनकत्वेन बोधविषयत्वासम्भवात्स्वस्य पूर्वशब्देनाग्रहणात्स्वदृष्ट्या त्रिपाद्यसिद्धत्वबोधनासम्भवात् ॥

वि० ( २ ) नच रामौ इत्यत्र वृद्धिबाधकस्य दीर्घस्य "नादिचि" इति निषेधे पुनः वृद्धिर्न स्यादिति वाच्यम् । "प्रकल्प्य चापवादविषयं तत उत्सर्गाः प्रवर्तन्ते" इति न्यायेन अपवादविषये उत्सर्गाप्रवृत्तेः । एतेन "तौ सत्" इति निर्देशोऽनित्य इति परास्तम ॥

तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति सिद्धान्तो व्याकुप्येत । अमू, अमी, इत्यादि च न सिध्येदत आह—त्रिपादीति । परं

शब्दरत्न ।

स्पष्टं चेदं प्रकृतसूत्रे "अचः परस्मिन्" [ पा० सू० १।१।५७ ] इत्यत्र "षत्वतुकोः" [ पा० सू० ६।१।८६ ] इत्यत्र च भाष्ये ।

तथा चेति । शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे "रो रि" [ पा० सू० ८।३।१४ ] इत्यादेः प्रसङ्गे चेत्यर्थः । व्याकुप्येतेति । त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्य वाऽसिद्धता वक्तुमशक्या, किं तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वं (१)वाच्यम् । एवं च विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भावः । न च ममापि पूर्वपरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया शास्त्रे एव कार्यासिद्धत्वमिति

ज्योत्स्ना ।

श्लेष्टासिद्ध्या नास्यातिदेशशास्त्रत्वं, नापि परिभाषात्वं, नापि स्वतन्त्रविधित्वं, गोधुङ्मान् इत्यसिद्धेः । किंत्वधिकारसूत्रमेवेति भावः ।

परे तु–अस्याधिकारत्वानङ्गीकारेऽपि न क्षतिः । विप्रतिषेधसूत्रे यथा बाध्यबाधकभावापन्नयोः शास्त्रयोः पौर्वापर्यं निमितत्वेन विवक्षितं तथा इहापि कल्पनेन कार्यकालपक्षाश्रयणेन परिभाषात्वस्वीकारेणापि निर्वाहात् । अधिकारत्वे प्रतिसूत्रमावृत्तौ गौरवाच्च ।

न च परिभाषात्वे सपादसप्ताध्याय्यामपि प्रवृत्त्यापत्तिरिति वाच्यम् । मध्ये पाठस्य विप्रतिषेधसूत्रस्य चारम्भेणांशिकप्रवृत्तिकल्पनात् । नच विनिगमकाभावात् त्रिपाद्यामप्रवृत्तेः । सपादसप्ताध्याय्यां प्रवृत्तेश्चेति विपरीतकल्पना कुतो न स्यादिति वाच्यम् । "न मुने" इति सूत्रस्य "श्चुत्वं धुटि" इति वार्तिकस्य च विनिगमकत्वात् । एतेन विनिगमकाभावात् त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति शब्दरत्नोक्तं प्रत्युक्तम् । न च अधिकारत्वे "दादेः" इत्याद्यपवादशास्त्रैकवाक्यतापन्नपूर्वपदार्थे पूर्वत्वोपलक्षितधर्मावच्छिन्ने "होढ" इत्याद्युत्सर्गातिरिक्तत्वेन सङ्कोचो भवति परिभाषात्वे स न स्यादिति वाच्यम् । असिद्धपरिभाषादिवत् "दादेः"इत्यादिसूत्रोपस्थितपूर्वत्वोपलक्षितधर्मावच्छिन्ने "हो ढः" इत्याद्यतिरिक्तत्वेन सङ्कोचसम्भवादित्याहुः ॥

असिद्धत्वं वाच्यमिति । लोकेऽनाहार्यज्ञानस्यैव प्रवृत्त्युपयोगित्वेऽपि इह शास्त्रप्रामाण्यादाहार्यारोपस्यैव शास्त्रप्रवृत्तौ निवृत्तौ च नियामकत्वमिति भावः ।

प्र० ( १ ) लोकेऽनाहार्यज्ञानस्यैव प्रवृत्त्युपयोगित्वेऽपीह शास्त्रप्रामाण्यादाहार्यारोपस्यापि शास्त्रप्रवृत्तौ निवृत्तौ च नियामकत्वमिति भावः ॥

शास्त्रमिति च । एतेन त्रिपाद्यां विहितं कार्यमसिद्धमित्यादिः प्राचां ग्रन्थः परास्तः ।

---

शब्दरत्न ।

वाच्यम् । लक्षणायां मानाभावात्, फलाभा(१)वात्, गौरवाच्च ।

ननु मनोरथे दर्शनाभावरूपे लोपेऽभावारोपस्य दर्शनारोपरूपत्वेन दोषोऽभावाभावस्य प्रतियोगिरूपत्वादित्यत आह—अमू इत्यादि । अद् अ औ, अद् अ अस्, इत्यवस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि पूर्वरीत्याऽकाराभावेन(२)पररूपाद्यनापत्तिः(३) । मुत्वस्यासिद्धत्वनिषेधसामर्थ्यादेत-

ज्योत्स्ना ।

तत्त्वं च बाधसमकालिकेच्छाजन्यज्ञानमाहार्यज्ञानम् । तद्भिन्नमनाहार्यज्ञानमिति । फलाभावादिति । न च शास्त्रासिद्धत्वपक्षे यत्र द्वयोः सह प्रसङ्गस्तत्र त्रैपादिकस्य प्रवृत्त्युपपादनेऽपि यत्र हर एहीत्यादौ निष्प्रतिपक्षत्वात् "लोपः शाकल्यस्य" इत्यादित्रैपादिकशास्त्रं प्रवृत्तं तत्र वृद्धिशास्त्रदृष्ट्या लोपशास्त्रस्यासिद्धत्वेऽपि वस्तुतो लोपस्य लक्ष्ये जातत्वेन वृद्धिशास्त्रप्रवृत्तिः स्यादेव । कार्यासिद्धत्वे तु यलोपस्यासिद्धत्वेन निमित्ताभावाद्वृद्धिर्नस्यादिति वाच्यम् । शास्त्रासिद्धत्वपक्षेऽपि शास्त्रे असिद्धत्वबोधनेन तद्विहितादेशे लक्ष्ये जातत्वबुद्ध्यभावस्य तत्कृतस्थानिनिवृत्तबुद्ध्यभावस्य च बोधनेनादोषात् । पररूपाद्यनापत्तिरिति । न च मुत्वस्यासिद्धत्वे देवदत्तहन्तृहतन्यायेन तत्स्थान्यकाराभावेऽपि अदस्शब्दाद्याकारेण त्यदाद्यत्वनिष्पन्नाकारस्य पररूपं भविष्यति कथं पररूपानापत्तिरिति वाच्यम् । इष्टपररूपाद्यनापत्तिरिति तदर्थात् ।

वस्तुतस्तु मुत्वशास्त्रेण स्वघटितं साधु तदितरत्सर्वमसाधु इत्यर्थबोधनेन अ अ औ इत्यस्यासाधुत्वेन यत्किञ्चित् साधुत्ववति एव सर्वशास्त्रप्रवृत्त्या यथाश्रुतमेव

---

प्र० (१) नच शास्त्रासिद्धत्वपक्षे यत्र द्वयोः सह प्रसङ्गस्तत्र त्रैपादिकस्याप्रवृत्युपपादनेऽपि यत्र हर एहीत्यादौ निष्प्रतिपक्षत्वात् "लोपः शाकल्यस्य" (पा०सू०८।३।१९) इत्यादि त्रैपादिकशास्त्रं प्रवृत्तं तत्र वृद्धिशास्त्रदृष्ट्या लोपशास्त्रस्याऽसिद्धत्वेऽपि वस्तुतो लोपस्य लक्ष्ये जातत्वेन निमित्तसद्भावाद्वृद्धिशास्त्रस्य प्रवृत्तिः स्यादेव । कार्यासिद्धत्वेन तु यलोपस्यासिद्धत्वे निमित्ताभावाद्वृद्धेर्न प्राप्तिरिति फलसद्भाव इति वाच्यम् । शास्त्रासिद्धत्वपक्षेऽपि शास्त्रेऽसिद्धत्वबोधनेन तद्विहितादेशे लक्ष्ये जातत्वबुद्ध्यभावस्य तत्कृतस्थानिनिवृत्तिबुद्ध्यभावस्य च बोधनेनादोषात् ।

प्र० (२) इष्टपररूपाद्यनापत्तिरित्यर्थः । एतेन प्रथमाकारस्य तृतीयाकारे परतः पररूपप्राप्तिसद्भावेन तदनापत्त्युक्तिरसङ्गतेत्यपास्तम् ।

वि० (३) मुत्वशास्त्रेण स्वघटितं साधु तदितरत्सर्वमसाधु इति बोधनेन अ अ औ इत्यस्यासाधुत्वादित्याशयेनाह—पररूपाद्यनापत्तिरिति ॥

शब्दरत्न ।

द्विषये उक्तन्यायाप्रवृत्तिरिति चेत् ? तेन शास्त्रासिद्ध(१)त्वमेव ज्ञापयितुं युक्तम् । एवं शीभावात्पूर्वम् "अदसोसेः" [ पा० सू० ८।२।८० ] इति मुत्वे दात्परैकाराभावेन "एत ईत्" [ पा० सू० ८।२।८१ ] इति सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्तु । न च "तौ सत्" [ पा० ३।२।२७ ] इत्यादिनिर्देशैर्देवदत्तहन्तृ-हतन्यायोऽनित्य इति वाच्यम् । 'हते देवदत्ते तद्धन्तरि हतेऽपि नोन्मज्जनं, हत-त्वारोपे तु सुतराम् । हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येव' इति न्यायशरीरम् । 'तौ' इत्यादौ वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं, न तु हननस्था-नीया लक्ष्ये प्रवृत्तिरिति न तत्रास्य न्यायस्य विषय इति तेनास्यानित्यत्वबोधनास-म्भवात् । स्पष्टं चेदं "स्वादिष्वसर्व०" [ पा० सू० ४।१।१७ ] इति सूत्रे कैयटे । प्रकृते तु निरधिष्ठानारोपासम्भवेन हननसजातीयं प्रयोगे कार्यप्रवर्तनमावश्यकमेवेत्यन्यत्र वि-

ज्योत्स्ना ।

साधु । मुत्वस्यासिद्धत्वेऽपि तदधिकरणकालस्यासिद्धत्वे प्रमाणाभावेनार्धमात्राधिक-कालशून्यत्वरूपसंहितायां आद्याकारन्त्याकारयोरभावेन पररूपप्राप्त्यभावाच्च ।

शास्त्रासिद्धत्वमेव ज्ञापयितुं युक्तमिति । परे तु—कार्यासिद्धत्वस्य स्वीकारेऽपि पूर्वत्रा-सिद्धमित्यस्य त्रैपादिकं शास्त्रं न प्रवृत्तं तत्कृता स्थानिनिवृत्तिरपि न जाता इति सम्भावनायां यद्भवति तद्भवति यन्न भवति तन्न भवति इत्यर्थे अमू इत्यादौ मुत्वे जातेऽपि मुत्वं न कृतं तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनया उकारे एव अकारबुद्ध्या पररूपे जाते संयोगशिष्टन्यायेन मकारनिवृत्तौ वृद्धौ तद्घटकमात्रोद्देश्य-कविकाराभावेन तल्लक्ष्यत्वाभावात् पुनर्मुत्वे अमू अमी इत्यादिसिद्धिः ।

नच "पूर्वत्रासिद्धम्" इत्यस्य तादृशार्थकत्वे प्रमाणाभाव इति वाच्यम् । हर एहीत्यादौ लोपस्यासिद्धत्वेऽपि स्थानिबुद्धेरभावेन पूर्वत्रासिद्धमित्यस्य वैयर्थ्यापत्या एतादृशार्थकल्पनात् । नचामूभ्यामित्यादौ तद्घटकमात्रोद्देश्यकविकारसत्त्वेन पुनर्मुत्वं न स्यादिति कार्यासिद्धत्वपक्षोऽसङ्गत इति वाच्यम् । "नमुने" इति सूत्रारम्भेण मुत्वे लक्ष्ये लक्षणन्यायो न प्रवर्तत इति कल्पनात् । अन्यथा अद अ आ इति दशायां पर-

प्र० ( १ ) नच कार्यासिद्धत्वेऽपि त्रैपादिकं कार्यं न जातं, तत्कृता स्थानिनिवृत्तिर्न जातेति सम्भावनायां यत्कार्यं प्राप्नोति तद्भवति यच्च न प्राप्नोति तन्न भवतीत्यर्थस्वीकारेण प्रकृते मुत्वे कृतेऽपि तन्न कृतं तत्कृताकारनिवृत्तिर्न जातेति सम्भावनायामुकार एवाकारबुद्ध्या पररूपे सन्नियोग-शिष्टन्यायेन मकारनिवृत्तौ प्रत्ययोकारे परतो वृद्धौ तद्घटकमात्रोद्देश्यकविकारातिरिक्तघटितत्वेन त-ल्लक्ष्यत्वाभावात्पुनर्मुत्वे चामू अमी इत्यादिसिद्धिरिति वाच्यम् । अमू अमी इत्यादिर्यस्य तादृश-स्याऽमूभ्याममीभिरित्यादिशब्दस्वरूपस्याऽसिद्ध्यापत्तेः । नचात्रापि पुनर्मुत्वेन सिद्धिर्वाच्या । अत्र तल्लक्ष्यत्वाल्लक्ष्ये लक्षणन्यायेन पुनर्मुत्वाप्रवृत्तेः ॥

विवृण्वते कण्ठमिति । विवा(१)र एषां प्रयत्न इति भावः । वर्गय-मगा इति । वर्गगा यमगाश्चेत्यर्थः । कादय इति । लोकप्रसिद्धपाठापेक्ष-मिदम् । चतुर्दशसूत्र्यां मावसानत्वायोगात् । अर्द्धविसर्गेति । सादृश्यमु-च्चारणे लेखने च बोध्यम् । ॠलृवर्णयोरिति । ॠ च ऌ च रलौ, तौ च तौ वर्णौ चेति विग्रहः(२) । उश्च उल् च ॠलोः । तयोर्वर्णयोरिति वा । (३)प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात् । "ॠत्य-

शब्दरत्न ।

स्तरः । परास्त इति । विहितं कार्यमित्यध्याहारे गौरवाच्च । किं च, त्रिपादीशास्त्रं, तद्धि विधाने करणं न त्वधिकरणम् । त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमिति व्याख्याने त्वत्यन्तं क्लिष्टतेत्यपि बोद्ध्यम् ।

लोकप्रसिद्धेति । "त्रिभिश्च मध्यमैर्वर्गैः" इति भाष्यपर्यालोचनया क—ख—ग-घ-ङेत्यादीनामप्यनादित्वमिति भावः । उच्चारणेति । (४)पादमात्रिकाविमाविति भावः । लेखने चेति । (५)अर्द्धवृत्तद्वयात्मकलिपित्वादिति भावः । रलाविति । ॠलृ औ इति स्थिते "ॠत्यकः" ( पा०सू०६।१।१२८ ) इति प्रकृतिभावेन दीर्घाभावे गुणे यणि च रलावित्यस्य सिद्धिः । उश्च उल् च ॠलोरिति पाठः । रलोरिति पाठे आगन्तुनाऽका-रेण निर्देश इति बोद्धयम् । तयोर्वर्णयोरिति । "पूरणगुण" ( पा०सू०२।२।११ ) इति निषे-धस्तु षष्ठीसमासस्य न तु कर्मधारयस्य, बहुलग्रहणेन तदभावो भाष्योदाहृतविषय एव नान्यत्रेति भावः । प्रथमान्तेनेति । प्रथमोपस्थितत्वादिति भावः । अयं पक्षः "अनेकम-

ज्योत्स्ना ।

त्वान्सुत्वे तस्यासिद्धत्वात्पररूपे लक्ष्ये लक्षणन्यायेन सुत्वाप्राप्त्या इनादेशगुणयोः कृतयोः सुत्वे च नादेशप्रसभावेन तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

विग्रह इति । 'न पदान्ताः परेऽणः सन्ति' इति "लण्" सूत्रस्थभाष्योक्त्या लृका-रान्तानामनभिधाने तु आ च लृवर्णश्च ॠलृवर्णाविति विग्रहो बोध्य इति चिन्त्योऽयं ग्रन्थः ।

---

वि० ( १ ) विवृण्वते विकासयन्ति गलमिति विवाराः ॥

प्र० ( २ ) "न पदान्ताः परेऽणः सन्ति" इति लण्सूत्रस्थभाष्योक्त्या लृकारान्तानामनभिधाने तु आ च लृवर्णश्च ॠलृवर्णाविति विग्रहो बोध्यः ॥ वि० ( ३ ) प्रथमोपस्थितत्वादिति भावः ॥

वि० ( ४ ) विसर्गस्य व्यञ्जनत्वेन तदर्धमात्रत्वेन तदर्धत्वात् । एवं चोच्चारणं तथैव कर्तव्य-मिति भावः ॥

वि० ( ५ ) पूर्णविसर्गस्य वर्तुलद्वयात्मकत्वेन तदर्धत्वमस्य । एवं चार्धयोर्वृत्तयोर्द्वयमित्यर्थः । न तु वृत्तद्वयस्यार्धमिति । तदा एकपूर्णवृत्तलाभापत्तेरिति भावः ॥

कः" (पा० सू० ६।१।१२८) इति प्रकृतिभावः।

"नाज्झलौ (पा० सू० १।१।१०)॥ (१)आकारसहित इति। अत्र च "कालसमयवेलासु" (पा० सू० ३।३।१६७) इत्यादिनिर्देशाः (२)प्रश्लेषे लिङ्गम्। न चैवमपि यिया३सो, इत्यादौ "गुरोरनृत" (पा० सू० ८।२।८६) इति प्लुतादाकारात्परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम्। आश्च, आश्चेति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति व्याख्यानात्। यणादिकमिति। शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः।

---

शब्दरत्न।

न्यपदार्थे" (पा०सू०२।२।२४) इति सूत्रे भाष्ये। परिनिष्ठितेति। अत्र च "एकविभक्ति चापूर्वनिपाते" (पा०सू०१।२।४४) इति ज्ञापकम्। अन्यथा मालामतिक्रान्त इति विग्रहेऽतिपदस्यापि नियतविभक्त्यन्तत्वेनैकविभक्तीत्यस्य व्यावर्त्यालाभः। एकस्यानियतविभक्तित्वे हि तद्वारणाय "एकविभक्ति" इति सार्थकम्। परिनिष्ठितविभक्त्या समासे त्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकत्वं स्पष्टमेव। अत एव "तत्पुरुषे तुल्यार्थः" (पा०सू०६।२।२) इति सूत्रे भाष्ये परमे कारके परमेण कारकेणेत्यादावतिप्रसङ्गमाशङ्क्य (३)प्रतिपदोक्तपरिभाषया समाहितमिति भावः।

व्याख्यानादिति। एवं व्याख्याने मानं तु प्रयत्नभेदेन "नाज्झलौ" इत्येतत्प्रत्याख्यानपरं भाष्यम्। तद् ध्वनयन्वक्ष्यति—सूत्रं मास्त्विति भाष्ये स्थितमिति। शीतलशब्दे

ज्योत्स्ना।

आकार सहित इति। अत्र आश्च अच्चेति विग्रहे समाहारद्वन्द्वे "द्वन्द्वाच्चुषहान्तात्" इति टजापत्तिः "अज्झल्" इति समाहारद्वन्द्वेन पुनरापदेन द्वन्द्वे तु अवर्णेनाप्याकारस्य सावर्ण्यं न स्यादिति मध्यमपदलोपी समासं प्रदर्शयति।

ननु "नाज्झलौ" इत्यत्र दीर्घस्य सत्वेन प्लुतस्य सद्भावे किं मानमित्याह—व्याख्यानादिति। भाष्यमते प्रयत्नभेदे नाज्झलोः सावर्ण्याभावसाधनं। सूत्रकृन्मते कथं सावर्ण्यस्याभावः। ननु "तुल्यास्य" सूत्रे "नाज्झलौ" इति निषेधेनाज्झल्भिन्नत्वेन

---

प्र० (१) अत्र आश्च अच्चेति विग्रहे समाहारद्वन्द्वे "द्वन्द्वाच्चुदषहान्ताद्—" इति टजापत्तिः, अज्झलिति समाहारद्वन्द्वोत्तरमापदेन द्वन्द्वे तु अवर्णेनाऽप्याकारस्य सावर्ण्यं न स्यादत आह—आकारसहित इति॥

वि० (२) न च 'वेलासु' इति निर्देशेन आकारहकारस्य सावर्ण्याभावकल्पनमेवोचितमिति शङ्क्यम्। सावर्ण्याभावकल्पनापेक्षया प्रश्लेषकल्पनस्य लघुत्वात्।

वि० (३) तृतीयासप्तमीतिपदोपादानविहितसमासयोरेव तया तत्र ग्रहणमित्यर्थः। अन्यथा निर्मूलत्वेन तथा समासस्यैवाभावेन शङ्कोत्तरयोरसङ्गतिः स्पष्टैवेति भावः॥

अत्रेति । अत्रैवेत्यर्थः । यद्यपीति । ग्रहणकशास्त्रस्याव्याप्य-

शब्दरत्न ।

इति । शस्य ईकारे परे, दधीतीकारस्य शकारे परे चेत्यर्थः । न च शीङः शकारोच्चारणेन तच्छकारस्येकारे न दीर्घ इति वाच्यम् । शीतलशब्दे शीङोऽभावात् । किं तु श्याधातोः क्ते "द्रवमूर्तिस्पर्शयोः श्यः" ( पा०सू०६।१।२४ ) इत्यनेन सम्प्रसारणे "श्योऽस्पर्शे" ( पा०सू०८।२।४७ ) इत्युक्तेर्नत्वाभावे च निष्पन्नाच्छीतशब्दात्सिध्मादित्वाल्लचि शीतलशब्द इत्य(१)दोषात् । शीतशब्दो हि सिध्मादिषु गणरत्ने वृत्तौ च पठ्यते । किं(२) च तेनापूर्ववचनकल्पनापेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः ।

अत्रैवेति । ग्राहकसूत्र एवेत्यर्थः । अत्र च "उर्ऋत्"(पा०सू०७।४।७)इति सूत्रे तपरत्वं मानम् । तद्धि चुरादिण्यन्तात्कृतधातोर्लुङ्यचीकृतदित्यत्र दीर्घर्कारस्य स्थाने ह्रस्व एव यथा स्यादित्यर्थम् । पूर्वणात्राण्ग्रहणे तूद्देश्येन विधेयेन च ऋकारेणानण्त्वाद्भिन्नकालाग्रहणेन न तस्य स्थानित्वं न वा आदेशत्वं प्रसक्तमिति व्यर्थं(३)तत्स्यात् । न च तपरसूत्रेण लृकारग्रहणार्थं तत् । स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य वारणेन तद्ग्र(४)हणे फलाभावात् । न चै(५)वं ज्ञापितेऽपि भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्त-

ज्योत्स्ना ।

सङ्कोचेनाज्झलोर्न सावर्ण्यप्रसक्तिरिति वाच्यम् । एवं तर्हि अचां हलामपि परस्परं सवर्णसंज्ञा न स्यादिति चेन्न । स्वविशिष्टः सवर्णसंज्ञो भवति । वैशिष्ट्यं च स्ववृत्यच्त्वाभावहल्त्वाभावान्यतरवत्वं स्वनिष्ठजन्यतानिरूपितजनकताविशिष्टजनकतानिरूपितजन्यतावत्वम् । एतदुभयसम्बन्धेन जनकतावैशिष्ट्यं च स्वव्याप्यत्वं स्वव्यापकत्वमेतदुभयसम्बन्धेनेत्यर्थकल्पनेनादोषादिति दिक् ।

ननु शीतलशब्दे शीङोऽभावेऽपि शीङः शकारोच्चारणेन शकारस्येकारे परे न सन्धिकार्यमिति सामान्यापेक्षज्ञापनस्वीकारे प्रकृते न दोष इत्यरुचेराह—किञ्चेति ।

वि० ( १ ) शकारोच्चारणवैयर्थ्यापत्तिरूपदोषाभावादित्यर्थः । शीङादिषु तत्सामर्थ्यात्तद्वारणेऽपि अत्र शीतलशब्दे श्याधातोरुपदेशस्यान्यत्र साफल्येनासामर्थ्यात् ॥

प्र० ( २ ) ननु शीतलशब्दे शीङोऽभावेऽपि शीङश्शकारोच्चारणेन शकारस्येकारे परे न सन्धिकार्यमिति सामान्यापेक्षज्ञापनस्वीकारे प्रकृते न दोष इत्यरुचेराह––किञ्चेति ॥

वि० ( ३ ) परणकारेण ग्रहणे तु ऋकारस्याण्त्वात् सवर्णग्राहकत्वात् दीर्घादेशवारणार्थं तपरकरणं स्वांशे चरितार्थमिति भावः । नन्वत्रमानं "उपसर्गादृति धातौ" इतिसूत्रस्थं तपरकरणम्भवेदिति चेन्न । अत्र दीर्घऋकारादेर्धातोरसम्भवात् । नच "ऋत उत्" इत्यत्र तपरकरणं तत्र मानमिति वाच्यम् । तपरसूत्रेण लृकारग्रहणार्थं तपरकरणस्य चरितार्थत्वादिति बोध्यम् ॥

वि० ( ४ ) लृकारग्रहणे ॥

प्र० ( ५ ) अयं भावः—परणकारेणाऽण्ग्रहणे ज्ञापिते "उर्ऋत्" इत्यत्र तपरत्वाभावे उद्देश्य-

निष्पत्तेरिति भावः।

शब्दरत्न।

द्वैयर्थ्यम्। तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात्। कृते तु तपरत्वं भाव्यमानताऽपीत्यन्यदेतत्।

अनिष्पत्तेरिति। 'वर्णानामुपदेशस्तावत्तदुत्तरकालमित्सञ्ज्ञा तदुत्तरम् "आदिरन्त्येन" [ पा०सू०१।१।७१ ] इति प्रत्याहारस्तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालं "अणुदित्" [ पा०सू०१।१।६९ ] इति, एतेन समुदितेनान्यत्र सवर्णानां ग्रहणम्' इतिवाक्यापरिसमाप्तिन्यायादित्यर्थः।

अयं भावः—"आदिरन्त्येन" इति प्रत्याहारसिद्धौ "(१)नाज्झलौ" ( पा०सू० १।१।१० ) इत्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये "अणुदित्" इत्यनेन तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन तच्छास्त्रज(२)बोधानापत्तिः। न चैतद्वाक्यार्थबोधात् प्राक् तन्निश्चय इति।

ज्योत्स्ना।

न चैवं ज्ञापितेऽपीति। अयं भावः—परणकारेणाण्ग्रहणज्ञापिते "उर्ऋत्" इत्यत्र तपरत्वाभावे उद्देश्यविधेयाभ्यां दीर्घस्यापि ग्रहणे आन्तरतम्यात् ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घो भवतीति व्यवस्थापनादपूर्वबोध्यत्वं न सम्भवतीति। न च तदा भाव्यमानपरिभाषाप्रवृत्तिः स्यादिति वाच्यम्। तत्परिभाषाप्रवृत्तौ सत्यां विधेयांशे दीर्घनिवृत्त्यापूर्वबोध्यत्वेन भाव्यमानत्वं, तस्मिंश्च सति परिभाषाप्रवृत्तिरित्यन्योन्याश्रयात्तदप्रवृत्तेः। कृते तु तपरत्वे परिभाषाप्रवृत्तिरित्यन्यदिति दिक्॥

अणुदित्सूत्रस्यार्थस्तु। कालघटितधर्मानवच्छिन्ना व्यासज्यवृत्तिधर्मानवच्छिन्ना च या अण्मात्रवृत्तिविषयता तादृशविषयताप्रयोजकं स्वबोध्याणसवर्णान् गृह्णातीति। प्रदायेत्यादौ तुगापत्तिवारणाय कालघटितेत्यादिविशेषणं हाहा हूहू इत्यादौ अप्रत्यय इतिपर्युदासवारणाय व्यासज्यवृत्तीति। अण् बोधकं सवर्णान् गृह्णातीत्येतावन्मात्रोक्तौ

---

विधेयाभ्यां दीर्घस्याऽपि ग्रहणे आन्तरतम्याद्ध्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ इति स्वरूपव्यवस्थापनादपूर्वबोध्यत्वन्न सम्भवति। नच तदा भाव्यमानपरिभाषाप्रवृत्तिः स्यादिति वाच्यम्। तत्परिभाषाप्रवृत्तौ सत्यां विधेयांशे दीर्घनिवृत्त्याऽपूर्वबोध्यत्वेन भाव्यमानत्वम्, तस्मिँश्च सति परिभाषाप्रवृत्तिरित्यन्योन्याश्रयेण तदप्रवृत्तेः। कृते तु तपरत्वे दीर्घस्यापि स्थाने ह्रस्वविधानेनापूर्वबोध्यत्वाद्भाव्यमानत्वसत्त्वेनान्योन्याश्रयाभावात्परिभाषाया अपि उपस्थितिसम्भव इति।

वि० ( १ ) 'पूर्वमपवादाः प्रवर्तन्ते तत उत्सर्गाः' इति "भुक्तवन्तं प्रति ब्रूयान्माभुङ्क्था इति किं तेन कृतं स्यात्" इति च न्यायादित्यर्थः॥

वि० ( २ ) अप्रामाण्यसंदेहस्य प्रतिबन्धकत्वादिति भावः॥

"हो ढः" (पा० सू० ८।२।३१) इत्युपलक्षणं, रमास्वित्यत्र षत्वं, वागाशीरित्यत्र "झयो हः" (पा० सू० ८।४।६२) इत्याकारस्य घकारः, दासोष्टेत्यादौ "दादेः" (पा० सू० ८।२।३२) इति घत्वं च नेति बोध्यम् । यदि तु विवृतमूष्मणामित्यत्र ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य प्रयत्नभेदो व्याख्यायते तदा "नाज्झलौ" इति सूत्रं माऽस्त्विवति भाष्ये स्थितम् ॥

"वृद्धिरादैच्" (पा० सू० १।१।१) ॥ (१)ऐजिह द्विमात्र एव तात्परत्वात्, तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न । एवमुत्तरसूत्रेऽपि । तेन गङ्गोदकमित्यादौ त्रिमात्रो न ॥

"भूवादयो धातवः" (पा० सू० १।३।१) ॥ भूश्च वाश्चेति(२) द्व-

शब्दरत्न ।

यत्तु निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थबोध एव नेति । तन्न । पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात् । निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि विधेस्तदपेक्षत्वे मानाभावाच्च । रमास्वित्यत्र षत्वमिति । सर्वस्याप्येकया युक्त्या वारणेनापाद्यमानेऽर्थे न्यायानादरादेवमुक्तम् ॥

भाष्ये स्थितमिति । अनेनाकारप्रश्लेषे मानं दर्शितम् ।

ज्योत्स्ना ।

"इको यणचि" इत्यादौ अण्बोधकपदसवर्णाप्रसिद्ध्या सवर्णग्रहणं न स्यात् । तदर्थं अण्बोधकं स्वबोध्यसवर्णान् गृह्णातीति स्वीक्रियते चेत्तदा अशादिप्रत्याहारस्थले स्वबोध्यदादिसवर्णतादीनामपि ग्रहणापत्तेः । नचाण्मात्रबोधकं पदं स्वबोध्यसवर्णान् गृह्णातीति न दोष इति वाच्यम् । तत्रैव स्वबोध्याकारादिसवर्णदीर्घाकारादिग्रहणानापत्तेरिति चेन्न । अण्बोधकं पदं स्वबोध्याणूसवर्णान् गृह्णातीति निवेदनीयमिति सुस्थम् ।

भूश्च वाश्चेति । नचैकरूपावच्छिन्नस्यैकरूपावच्छिन्ने एकरूपसंसर्गेणान्वयबोधेच्छारूपसहविवक्षाया अभावात् द्वन्द्वाप्राप्तिः । एकपदोपस्थितयोरर्थयोः परस्परमनन्व-

वि० (१) आकारस्तु अनण्त्वादेव न सवर्णग्राहक इति भावः ॥

प्र० (२) नचात्रैकरूपावच्छिन्नस्यैकरूपावच्छिन्ने एकरूपसंसर्गेणऽन्वयबोधेच्छारूपसहविवक्षाऽभावाद् द्वन्द्वालाभः, एकपदोपस्थापितयोरर्थयोः परस्परमभेदान्वयस्याव्युत्पन्नत्वेन भूप्रभृतयो ये वासदृशाभिन्ना इत्यभेदान्वयालाभः, भूशब्दस्यैव व्यवस्थावाचिन्यन्वयः, वाशब्दस्यैव सादृश्यवाचिन्यन्वय इति विनिगमकाभावश्चाऽऽपद्येतेति वाच्यम् । भूवादय इति विशिष्टस्य तन्त्रेण निर्दिष्टत्वाद् भूवोरुभयोरपि व्यवस्थावाचिनि प्रकारवाचिनि चान्वयस्वीकारेणात्रोक्तदोषनिरासात् ।

न्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । भूवौ आदी येषामिति बहुव्रीहिः । भूप्रभृतयो वासदृशाः । सादृश्यं च क्रिया(१)वाचत्वेनेत्यभिप्रेत्याह–क्रियावाचिन इति । क्रियावाचिनः किम् ? "याः पश्यसि" इत्यादौ धातुत्वं मा भूत् । सति हि तस्मिन्, "आतो धातोः" ( पा० सू०

शब्दरत्न ।

सादृश्यं चेति । वाधातौ वासादृश्यं च प्रयोगभेदेन बोध्यम् । आतो धातोरिति । न च रुड्यर्थनिमित्तकटापो बहिरङ्गासिद्धत्वम् । "नाजानन्तर्ये" ( परि० ) इति निषेधात् । ततोऽपि बहिर्भूतसंख्यानिमित्तकविभक्तिनिमित्तकभसञ्ज्ञानिमित्तकत्वेन लोपस्य (२)बहिरङ्गत्वाच्च, (३)अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च । नाप्ययं लाक्षणिकः ।

ज्योत्स्ना ।

यस्याव्युत्पन्नत्वेन भूप्रभृतयो ये वासदृशाभिन्ना इत्यभेदान्वयालाभः । भूशब्दस्य व्यवस्थावाच्यादिशब्देऽन्वयः, वाशब्दस्यैव प्रकारवाच्यादिशब्देऽन्वय इत्यत्र विनिगमकाभावश्चापद्येतेति वाच्यम् । "भूवादय" इति विशिष्टस्य तन्त्रेणावृत्त्या वा सर्वदोषपरिहारादित्यलम् ।

क्रियावाचकत्वेनेति । तत्र भूशब्दसाहचर्याद्वाशब्दोऽनव्ययमेव गृह्यते, वाशब्दसाहचर्याद्भूशब्दोऽसत्ववाची गृह्यते, इति मिथः साहचर्यात् क्रियावाचकस्यैव वाशब्दस्य ग्रहणमित्यर्थः ।

बहिरङ्गत्वाच्चेति । पञ्चकं प्रातिपदिकार्थं इति पक्षे लिङ्गसंख्ययोः प्रातिपदिकार्थत्वाविशेषेऽपि लिङ्गस्य स्वान्वयिधर्मिमात्रज्ञानाधीनज्ञानविषयत्वात्तत्प्रयुक्तकार्यस्यान्तरङ्गत्वम् । संख्यायास्तु सजातीयधर्म्यन्तरज्ञानसापेक्षज्ञानविषयत्वात्तत्प्रयुक्तकार्यस्य बहिरङ्गत्वमिति प्रकृते तादृशत्वादपि तत्वमित्यर्थः ।

---

प्र० ( १ ) तत्र भूसाहचर्याद्वाशब्दोऽनव्ययमेव गृह्यते, वासाहचर्याच्च भूशब्दोऽसत्त्ववाची गृह्यत इति मिथःसाहचर्य्यात् क्रियावाचकस्यैव वाशब्दस्य ग्रहणादित्यर्थः ।

प्र० ( २ ) पञ्चकं प्रातिपदिकार्थं इति पक्षे लिङ्गसङ्ख्ययोः प्रातिपदिकार्थत्वाविशेषेऽपि लिङ्गस्य स्वान्वयिधर्मिमात्रज्ञानाधीनज्ञानविषयत्वा त्तत्प्रयुक्तकार्यस्याऽन्तरङ्गत्वम् । संख्यायास्तु सजातीयधर्म्यन्तरज्ञानसापेक्षज्ञानविषयत्वात्तत्प्रयुक्तकार्यस्य बहिरङ्गत्वमिति प्रकृते तादृशत्वादपि तत्त्वमित्यर्थः ।

वि० ( ३ ) शब्दशास्त्रे शब्दस्य प्राधान्येन परिभाषायामङ्गशब्देन तद्रूपनिमित्तस्यैव ग्रहणात् । अत एव "न तिसृचतसृ" इति निषेधस्य सार्थक्यम् । अन्यथा स्त्र्यर्थहेतुकतिस्रपेक्षया अन्तरङ्गत्वात्त्रयादेशे तदसङ्गतिः स्पष्टैव । अत एव त्रयादेशे 'स्रन्तस्य प्रतिषेधः' इति स्थानिवत्सूत्रस्थभाष्यादिसङ्गच्छत इति भावः ॥

६।४।१४०) इति स्यात् । भ्वादयः किम् ? हिरुक्, पृथगित्याद्यव्ययानां,

शब्दरत्न ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः ॥ १ ॥

इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परिभाषाया अप्रवृत्तेः । "आतो धातोः" ( पा०सू०६।४।१४० ) इत्यत्र प्रतिपदोक्त आकारो गृह्यत इति तु वक्तुमप्यशक्यम् । पशुष इत्यसिद्ध्यापत्तेः । पशुं सनोतीति विट्, "विड्वनोः" ( पा०सू०६।४।४१ ) इत्यात्वम् । "आतोऽनापः" इति वार्त्तिकमते तु विकल्पार्थकनिपातवाशब्दस्य धातुत्वे प्रातिपदिकत्वाभावात्सुब्भावे पदत्वानापत्तिर्दोषः । क्रियात्वं साध्यत्वेन प्रतीयमानत्वम् । साध्यत्वं चोत्पा(१)द्यमानत्वमेवेत्यन्यत्र विस्तरः । हिरुगित्यादि । एषां क्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्वमित्यभिमानः । एषामव्ययेषु पाठस्तु अप्रातिपदिकत्वेऽप्यकजर्थः स्यात् । एतेन तेषु पाठसामर्थ्याद्धा(२)तुत्वाभाव इत्यपास्तम् । नन्वेषां क्रियाकाङ्क्षादर्शनेन न क्रियावाचकत्वमत

ज्योत्स्ना ।

ननु भत्वावच्छिन्नम्प्रति विभक्तित्वेन कारणतेत्येवं रूपेण कार्यकारणभावो न वक्तव्यः । वृषणश्वः वृषण्वसुः इत्यत्र व्यभिचारात् । अत्रहि "वृषण्वस्वश्वयोः" इति भत्वम् । यदि भसंज्ञासामान्यम्प्रति विभक्तेर्निमित्तत्वाभावेऽपि लोपशास्त्रप्रवृत्तिहेतुभसंज्ञाविभक्तिनिमित्तिकैव विभाष्यते तदा याः पश्यसि इत्यादौ भसंज्ञानिमित्तविभक्तिनिमित्तकाच्परत्वनिमित्तकत्वेन टापो लोपाद्बहिरङ्गत्वमपि सम्भाव्यत इत्याह—अर्थनिमित्तकेत्यादि । अर्थनिमित्तकबहिरङ्गत्वानाश्रयणे "त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः" इति स्थानिवत्त्वनिषेधकवार्तिकं लिङ्गम् ॥

साध्यत्वमिति । मूलोक्तलक्षणस्वीकारे क्रियात्वसाध्यत्वज्ञानयोरन्योन्याश्रयात्कालान्वयितावच्छेदकरूपवत्वं साध्यत्वं बोध्यम् ॥

क्रियावाचकत्वमिति । ननु क्रियावाचकत्वं यदि क्रियानिरूपितशक्तिपर्य्याप्त्यधिकरणत्वं तदा शक्ततावच्छेदकानुपूर्वीमति बोधजनकतारूपशक्तेरवश्यंभावाद्विकल्पार्थक-

प्र० ( १ ) साध्यत्वं च कालान्वयितावच्छेदकरूपवत्त्वमिति नान्योन्याश्रयः क्रियात्वसाध्यत्वज्ञानयोः ।

प्र० ( २ ) क्रियानिरूपितशक्तिविशिष्टत्वं धातुत्वम्, वै० च स्वपर्याप्त्यधिकरणत्वं, स्वनिरूपकार्थविषयकबोधतात्पर्योच्चरितत्वं स्वाऽनिरूपकार्थविषयकबोधतात्पर्योच्चरिताऽघटितत्वमिति सम्बन्धत्रयेण । आद्यसम्बन्धदानेन शिश्ये इत्यादौ भावतिङन्ते न धातुत्वम् । द्वितीयसम्बन्धेन विकल्पार्थबोधकवाशब्दस्य न धातुत्वम् । तृतीयसम्बन्धेन च दरिं द्रातीत्यर्थकदरिद्राशब्दस्य न तत्त्वम् । अत्र घटितत्वं व्यपदेशिवद्भावेन कर्तृवाचकघटितत्वेऽपि न धातुत्वहानिः ।

शिश्ये इति भावार्थतिङन्तस्य च मा भूत्। स्तम्भ्वादीनामुदित्करणेन सौत्राणां

शब्दरत्न।

आह—शिश्ये इति। कालोऽपि(१)धात्वर्थ एवेति न क्रियावाचकत्वहानिः। तस्य च धातुत्वे "आदेच उपदेश" (पा०सू०६।१।४५) इत्यात्वं स्यात्। तद्धि अनैमित्तिकं धातुत्वं निमित्तकं चेति स्पष्टमेव। अत्र च प्रत्ययस्यैव धातुत्वापत्तिर्बोध्या, तिङन्तस्य तूपदेशाभावान्नात्वप्रसक्तिरित्याहुः। ननु षष्ठे प्रकृतसूत्रे धातुग्रहणा(२)सम्बन्ध उक्तो

ज्योत्स्ना।

वाशब्दस्यापि क्रियावाचकत्वापत्तिः, यदि तु क्रियाविषयकबोधतात्पर्येणोच्चरितत्वं क्रियावाचकत्वं, तदा दरिं द्रातीति दरिद्रेत्यादौ दरिकर्मकद्राणकर्तृतात्पर्येणोच्चरितेऽपि क्रियावाचकत्वापत्तिः, यदि च क्रियामुख्यविशेष्यकबोधजनकत्वप्रकारकतात्पर्येणोच्चरितत्त्वं क्रियावाचकत्वं, तदा लिट्धुक्इत्यादौ क्रियावाचकत्वानापत्या धातुत्वानापत्तिरिति चेदुच्यते क्रियामुख्यविशेष्यकबोधजनकशक्तिविशिष्टत्वं क्रियावाचकत्वम्। वैशिष्ट्यं च स्वपर्य्याप्त्यधिकरणत्वं स्वनिरूपकार्थबोधविषयकतात्पर्य्येणोच्चरित्वमेतदुभयसम्बन्धेन। दरिद्राशब्दे वाशब्दे च द्वितीयसम्बन्धेन शक्तिविशिष्टत्वाभावान्न क्रियावाचकत्वमित्यलम्।

कालोऽपीति। यद् यद्वाचकत्वनिमित्तकं कार्य्यं तद्तद्वाचकत्वे तदितरावाचकत्वे च सति प्रवर्तत इति नियमेन शिश्ये इत्यत्रैकारस्य।क्रियेतरकालवाचकत्वाद्धातुत्वं न स्यादत आह—कालोऽपीति।

धातुग्रहणासम्बन्ध इति। "लिटि धातोरनभ्यासस्य" (पा० सू० ६।१।८) इति सू-

---

प्र० (१) यद् यद्वाचकत्वनिमित्तकं कार्यं तद्वाचकत्वे तदितरावाचकत्वे च सति प्रवर्तते इति नियमेन शिश्ये इत्यत्रैकारस्य क्रियेतरकालवाचकत्वाद्धातुत्वं न स्यादत आह—कालोऽपि धात्वर्थ एवेति।

प्र० (२) "लिटि धातोः" (पा० सू० ६।१।८) इति सूत्रादग्रेऽनुवर्तमानस्यापि धातुपदस्य "ष्यङः सम्प्रसारणम्" (पा० सू० ६।१।१३) इति सूत्रे सम्बन्धासम्भवेन विच्छेदादत्र प्रकृतसूत्रे तदनुवृत्तिरित्यर्थः। अत एव "उदीचां माङः" (पा० सू० ३।४।१९) इति सूत्रे माङः इत्यात्वघटितप्रयोगसङ्गतिः। अन्यथा "न धातुलोपः" (पा० सू० १।१।४) इति सूत्रभाष्योक्तरीत्याऽनुबन्धविनिर्मुक्तेः प्राग् मेङित्यस्य धातुत्वाभावेनात्वाप्राप्त्या तदसङ्गतिरेव स्यात्। नचैवमजन्तप्रातिपदिकानामप्यात्वापत्तिरिति वाच्यम्। उपदेशग्रहणेनैव तद्वारणात्, "उद्देशश्च प्रातिपदिकानां नोपदेश" इति भाष्येण प्रातिपदिकानामुपदेशाभावस्योक्तत्वात्। न च "उगवादिभ्यः" (पा० सू० ५।१।२) "नौद्व्यच" (पा० सू० ४।४।७) इतिसूत्रयोर्गोनौशब्दोपदेशदर्शनात्तत्राऽऽत्वापत्तिस्तदवस्थेति वाच्यम्। येषां स्वरूपज्ञापनायाऽपूर्वमुच्चारणं तेषामेवोपदेशपदव्यवहारात्। प्रकृते ज गोनौशब्दयोः प्रत्ययविधावनूदितत्वेनाऽपूर्वोच्चारणाभावात्।

धातुत्वं ज्ञाप्यते । चुलुम्पादीनां तु "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण सङ्ग्रहः ।

शब्दरत्न ।

भाष्ये इति न तद् धातुत्वनिमित्तकम्, किं चाशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानान्नात्रात्वप्रसक्तिः, । अपि(१) च वासाऽश्यसन्यानभिहितक्रियावाचकत्वेनेति न दोषोऽत आह—चेति । सूत्रशेष भाष्योक्तेष्वाणयति, वक्ष्यतीत्यादिषु च धातुत्वे शास्त्रविषयता साधु(२)त्वापत्तिरिति तद्व्यावृत्तये तदिति भावः । उदित्करणेनेति । इदमुपलक्षणम् । तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानेन सार्वधातुके परे विकरणविधानेन च धातुत्वम् । "जुचङ्क्रम्य" ( पा०सू०३।२।१५० ) इत्यत्र पठितजोः, "जपभज" ( पा०सू०७।४।८६ ) इत्यत्र पठितपसः, ऋतिप्रभृतीनां च केषाञ्चिद्धात्वधिकारविहितकार्योद्देश्यत्वात् बोध्यम् । एतैश्च स्थितस्य तेषां पाठस्य अंशोऽनुमीयते इति भावः । (३)मैत्रेयाद्यन्यसंमतं समाधिमाह—बहुलमिति ।

ज्योत्स्ना ।

त्रादग्रेऽनुवर्तमानस्यापि धातुपदस्य "ष्यङः सम्प्रसारणम्" ( पा० सू० ६।१।१३ ) इतिसूत्रे सम्बन्धासम्भवेन विच्छिन्नत्वादत्र प्रकृतसूत्रे तदननुवृत्तिरित्यर्थः । अत एव "उदीचां माङो व्यतीहारे" (पा० सू० ३।४।१९) इति सूत्रे माङ इत्यात्वघटितप्रयोगसङ्गतिः । अन्यथा "न धातुलोप" ( पा० सू० १।१।४ ) इति सूत्रभाष्यरीत्यानुबन्धविनिर्मुक्तेः प्राक् मेङ् इत्यस्य धातुत्वाभावेनात्वाप्राप्त्या तदसंगतिरेव स्यात् । नचैवमप्यजन्तप्रातिपदिकानामपि आत्वापत्तिरिति वाच्यम् । उपदेशग्रहणेनैव तद्वारणात् । 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति भाष्येण प्रातिपदिकानामुपदेशाभावस्योक्तत्वात् । न च "उगवादिभ्यः" ( पा० सू० ५।१।२ ) "नौद्व्यचः" ( पा० सू० ४।४।७ ) इति सूत्रयोर्गोनौशब्दयोरुपदेशेन तत्रात्वापत्तिस्तदवस्थेति वाच्यम् । येषां स्वरूपबोधनायापूर्वोच्चारणं तेषामेवोपदेशत्वव्यवहारात् । प्रकृते च गोनौशब्दयोः प्रत्ययविधावनूदितत्वेनापूर्वोच्चारणाभावात् ।

नन्वेकारस्य धातुत्वे ततोऽपि प्रत्ययोत्पत्तिसम्भावनया शित्परत्वयोग्यत्वमस्त्येवेत्याह—अपिचेति । शास्त्रविषयतेति । अत्र च गणसूत्राणां 'भूसत्तायाम्' इत्यादीनां बहूनां साधुत्वविधायकत्वे गौरवाल्लाघवाद्धातुसंज्ञाविधायकस्यैवावृत्त्या साधुत्व-

प्र० ( १ ) नन्वेकारस्य धातुत्वे ततोऽपि प्रत्ययोत्पत्तिसम्भावनया शित्परत्वयोग्यत्वमस्त्येवेत्यत आह—अपि चेति ।

प्र० ( २ ) अत्र च गणसूत्राणां "भू सत्तायाम्" इत्यादीनां बहूनां साधुत्वविधायकत्वे गौरवाल्लाघवाद्धातुसंज्ञाविधायकस्यैवावृत्त्या साधुत्वविधायकत्वमित्यर्थः ।

वि० ( ३ ) तथाच न भाष्यादिसिद्धान्तः स इति भावः ॥

"चादयः" (पा० सू० १।४।५७) ॥ अद्रव्यार्थाः किम् ? पशुः। लिङ्ग-संख्यान्वितं द्रव्यम्। इह तु स्यादेव लोधं नयन्ति पशु मन्यमानाः। पशु इति सम्यगर्थे ॥

"उपसर्गाः" (पा० सू० १।४।५९) ॥ निस् दुस् इति सान्तौ ॥ "निसस्तपतौ" (८।३।१०२) इति निर्देशात्। अयोगवाहानामविशेषेणेति प्रकरणे निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य सकारस्य यो विसर्जनीयः" इति भाष्यकारोक्तेश्च। "उपसर्गस्यायतौ" (पा०सू० ८।२।१९) इति सूत्रे वामनोऽप्येवम्। "निरः कुषः" (पा० सू० ७।२।४६) "सुदुरोरधिकरणे" इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः ॥

इति संज्ञाप्रकरणम् ॥

## अथ परिभाषाप्रकरणम्।

"इको गुणवृद्धी" [पा० सू० १।१।३] ॥ गुणवृद्धिशब्दाभ्यामिति।

---

शब्दरत्न।

सम्यगर्थे इति। न च लुब्धमृषिं नयन्ति पशुं मन्यमानाः" इति निरुक्ते पशुमिति सानुस्वारपाठात् तत्र पश्विवति लुप्तविभक्तिकं सत्त्ववाचीति वाच्यम्। लोधमित्यनवगतमिति तद्भाष्योक्त्या तन्मात्रनिर्णायके निरुक्ते पशुशब्दांशेऽन्यथापाठे मानाभावात्। स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे दृशधातौ माधवग्रन्थे चेति दिक्।

वामनोऽप्येवमिति। तत्र हि दुस् सान्त इति तेनोक्तम् ॥

संज्ञाप्रकरणं समाप्तम्।

ज्योत्स्ना।

विधायकत्वमित्यर्थः। दिगिति। पशुशब्दे आद्युदात्तत्त्वदर्शनेन निपातत्वन्निश्चीयते लोमवल्लाङ्गूलवचनस्य तु 'पशूंस्तांश्चक्रे वायव्यान्' इत्यादौ अन्तोदात्तत्वमेव दृश्यत इति दिगर्थोऽवसेयः।

इति शब्दरत्नज्योत्स्नायां संज्ञाप्रकरणम् ॥

अत्यद्भुतं कर्मचकार योऽर्भकोऽवधीद्युवान्भारतदुष्टशासकान्।
गीताऽमृतं वेदरहस्यमादिशच्छ्रीरत्नज्योत्स्नां भगवान् प्रपूर्यतात् ॥ १ ॥

"इको गुणवृद्धी"। "वृद्धिरादैच्" "अदेङ् गुणः" इति सूत्राभ्यामनुवर्त्तमानयोरर्था-

एतच्च पूर्वसूत्राभ्यां गुणवृद्धीपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते । तेनेह न । "दिव औत्" (पा० सू० ७।१।८४) (१)द्यौः । "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) सः, इमम् । षष्ठ्यन्तमिति । सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति भावः ।

शब्दरत्न ।

योजनयेति । (२)यद्यपि तदनुवृत्त्यैव सिद्धे सामर्थ्याच्छब्दव्यापाराश्रयणेन लभ्यते मूलोक्तार्थस्तथाऽपि मन्दबुद्धिसाधारण्येन स्फुटत्वायैवमेवोक्तम् । स इति । अत्र नैव स्यादिति भावः । इममिति । अत्रेकारस्यैव स्यान्नत्वन्त्यस्येति भावः । सोर्लुगिति । अत

ज्योत्स्ना ।

धिकारानुरोधाच्छब्दपरयोर्गुणवृद्धिपदयोः तृतीयान्तेन विपरिणम्य विधीयत इत्यध्याहारेण गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तम्पदमुपतिष्ठत इत्यर्थ इति मनोरमाकाराशयः ।

शब्दरत्नकृतस्तु–"बहुगण" इत्यतोऽनुवर्तमानसंख्यापदस्य "ष्णान्ताषड्" इति सूत्रे संज्ञिपरत्वदर्शनेन संज्ञाकरणादन्यत्रानुवर्तमानसंज्ञावाचकं पदं संज्ञिपरमिति कल्प्यते । एवञ्चानुवर्तमानयोः गुणवृद्धिपदयोः सूत्रघटकयोश्च संज्ञिपरतया घटो घट इतिवदभेदान्वयासम्भवेन स्वस्य स्वप्रयोजकत्वासंभवेन च, मनोरमोक्तव्याख्यानमपव्याख्यानमिति विधाय, अनुवृत्त्यैव सिद्धे सूत्रघटकगुणवृद्धिपदे सामर्थ्याददेङ्निष्ठविधेयताप्रयोजकगुणपदपरम् आदैज्निष्ठविधेयताप्रयोजकवृद्धिपदपरं भवतः । ततश्च मूलो-

वि० ( १ ) इक्परिभाषोपस्थितौ तु वकारस्य न स्यादिति भावः ॥

प्र० ( २ ) अत्र प्राचीनमते संज्ञाशास्त्रादन्यत्रानुवर्त्तमानानामपि संज्ञाशब्दानां संज्ञाशास्त्र इव शब्दमात्रपरत्वम् । अत एव "सुप्तिङन्तम्" ( पा० सू० १।४।१४ ) इति सूत्रादनुवर्त्तमानस्यापि पदपदस्य "स्वादिषु" ( पा० सू० १।४।१७ ) इति सूत्रे शब्दपरत्वं भवति । "ष्णान्ता–" ( पा० सू० १।१।२४ ) इति सूत्रे त्वनुवृत्तस्याऽपि संख्यापदस्य ष्णान्तत्वासम्भवादर्थपरत्वमुचितम् । एवं च इति' 'विधीयते' इत्यध्याहारेण मूलोक्तार्थलाभः । यद्वा संज्ञाशास्त्रे सञ्ज्ञापरस्यापि अन्यत्रानुवर्तमानस्य आद्युदात्तश्चेत्यत्रानुवर्तमानप्रत्ययपदवत्संज्ञापरत्वम् । पदपदस्य तूत्तरत्रान्यथाऽन्वयासम्भवात्सञ्ज्ञापरता । तथाचैतत्सूत्रोपात्तगुणवृद्धिपदयोरनुवर्त्तमानयोश्च एकार्थत्वेन घटो घट इतिवदन्वयबोधाप्रसक्तौ अनुवर्त्तमानयोस्तयोर्गुणपदप्रयोज्यविधेयताश्रये वृद्धिपदप्रयोज्यविधेयताश्रये च लक्षणामाश्रित्यान्वयः कार्यः । तथाचादेङ्निष्ठविधेयतासमर्पकं यत्र गुणपदम्, औदज्निष्ठविधेयतासमर्पकं यत्र वृद्धिपदं तत्रेक इत्युपतिष्ठत इत्यर्थलाभः । नव्यमते तूक्तरीत्योभयोः समानार्थकत्वात्तदनुवृत्त्यैव सिद्धे सूत्रे पुनरुपादनसामर्थ्यादेतत्सूत्रोपात्तयोर्गुणपदप्रयोज्यविधेयताश्रयादेङि वृद्धिपदप्रयोज्यविधेयताश्रयादैचि च लक्षणयोक्तार्थसिद्धिरिति नानुवृत्त्यादिक्लेश इति दिक् ॥

पदमिति। तच्च सम्भवति सामानाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण स-

शब्दरत्न।

एव दीर्घो नेति भावः। तच्चेति। इक इति पदं चेत्यर्थः। अनेनात्र सूत्रे पदोपस्थितिपक्ष(१) इति सूचयति। "अचो ञ्णिति" (पा०सू०७।२।११५) "ओर्गुणः" (पा०सू० ६।४।१४६) इत्यादौ तु नास्याः प्रवृत्तिः। लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन(२) प्रथमतः

ज्योत्स्ना।

क्तार्थो लभ्यत इत्यूचुः॥

परे तु—"ष्णान्ता" इति स्त्रीलिङ्गनिर्देशेन संख्याशब्दे षान्तनान्तत्वासम्भवेन च संज्ञिपरत्वेऽपि प्रकृते तथात्वे मानाभावः। नच संज्ञाकरणादन्यत्रानुवर्तमानं संज्ञावाचकं पदं संज्ञिपरमिति नियम एव मानमिति वाच्यम्। "सुप्तिङन्तम्" इत्यनुवर्तमानपदपदस्य "स्वादिषु" इति सूत्रे संज्ञिपरत्वादर्शनेन तादृशनियमस्य व्यभिचारेण कल्पयितुमशक्यत्वादिति मनोरमोक्तप्रकार एव श्रेयानिति वदन्ति।

पदोपस्थितिपक्ष इति। अत्र भाष्ये पतञ्जलिना इक्परिभाषाऽलोऽन्त्यपरिभाषयोः तच्छेपपक्षमुक्त्वा तत्र पक्षे वृद्धिगुणावलोन्त्यस्येतिचेत्? मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यमिति दूषणमुक्तम्। ततश्चेक्परिभाषाया निरवकाशत्वेनालोऽन्त्यपरिभाषाबाधकत्वमूलकतदपवादपक्ष उक्तः। तत्पक्षेऽपि इङ्मात्रस्येति चेत्? जुसि सार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेध इति दूषणमुद्भाव्य एवन्तर्हि वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयात्तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठते इति भाष्येण पदोपस्थितिपक्षस्यैव सिद्धान्तितत्वात्।

लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेनेति। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्ब-

---

प्र० (१) अत्र भाष्ये इक्परिभाषाऽलोन्त्यपरिभाषयोः पूर्वं तच्छेपपक्षमुक्त्वा तत्र पक्षे "वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्त्तव्यम्" इति दूषणमभिहितम्, ततश्चेक्परिभाषाया निरवकाशत्वेनाऽलोन्त्यपरिभाषाबाधकत्वमूलकस्तदपवादपक्ष उक्तः। तत्पक्षेऽपि "इङ्मात्रस्येति चेज्जुसि सार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः" इति दूषणमुद्भाव्य "एवन्तर्हि वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयादिक इत्येतत्तत्रोपस्थितं द्रष्टव्यम्" इति भाष्येण पदोपस्थितिपक्षस्यैव सिद्धान्तितत्वात्॥

प्र० (२) "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" इति जैमिनीयसूत्रेण श्रौतविनियोगापेक्षया लैङ्गिकविनियोगस्य दौर्बल्यबोधनात्। तत्र हेतुः "अर्थविप्रकर्षात्" इति। तद्बीजन्तु अर्थप्रकाशनसामर्थ्यरूपस्य लिङ्गस्य स्वतो विनियोजकत्वासम्भवात्तेन विनियोयोजकश्रुतिं कल्पयित्वा क्रियमाणस्य विनियोगस्य विलम्बेनोपस्थितिः। श्रुतेस्तु स्वतो विनियोजकत्वात्तत्कृतविनियोगस्य झटिति बुद्ध्युपारोह इति। अत एवैन्द्रमन्त्रस्य "ऐन्द्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या गार्हपत्योपस्थानेऽङ्गत्वेन विनियोगो नतु लिङ्गादिन्द्रोपस्थाने॥

न्बध्यते । "मिदेर्गुणः" ( पा०सू०७।३।८२ ) "मृजेर्वृद्धिः" ( पा०सू०७।२। ११४ ) इत्यादौ तु सामानाधिकरण्यासम्भवान्मिदिमृज्योरवयवस्येक इति सम्बध्यते ।

यत्तु इक एव स्थाने स्त इति प्राचा व्याख्यातम् , यच्च तट्टीकाकृतोक्तमनियमप्रसङ्गे नियमार्थमिदमित्यादि । तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः । (१)त-

शब्दरत्न ।

श्रौताच्पदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्थानिकत्वेनोपस्थितस्यापीक्पदस्य वाक्यार्थेऽनन्वयात् । "सार्वधातुक" ( पा०सू०७।३।८४ ) इत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः । एवं च पदश्रुतिनिमित्तैषा पदैकवाक्यतयाऽन्वयवत्यन्तरङ्गा । स्थानषष्ठीत्वनिर्णये उपस्थिताऽलोन्त्यपरिभाषाया अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतयाऽन्वय इति बहिरङ्गा सा, तदाह—इगन्ताङ्गस्येत्यादि । मृज्योरवयवस्येति । एवं च स्थानषष्ठीत्वाभावनिर्णयेन "अलोन्त्यस्य" (पा०सू०१।१।५२) इत्यस्य प्रवृत्तिरेव नेति भावः ।

नियमार्थमिदमिति । तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योः "अलोऽन्त्यस्य" ( पा०सू० १।१।५२ ). इतिवदिदमपि (२)स्थानिनियमार्थमिति तदाशयः । तत्सर्वं भाष्येति । द्वयोर्नियमयोः "सार्वधातुक—"( पा०सू०७।३।८४ ) इत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः । अन्त्यस्येक इति वा । उभयथाऽपि द्वयोर्विशेष्यविशेषणभावसत्त्वात्तच्छेषपक्षे पर्यवसानम् । सः "अलोऽन्त्यस्य" (पा०सू०१।१।५२) इति नियमः शेषो विशेषणमस्येति तदर्थः । तस्य "अलोऽन्त्यस्य" (पा०सू०१।१।५२) इत्यस्य विशेषणमिति वा । एवं च "मिदेर्गुणः" ( पा०सू०७।३।८२ ) इत्यादौ परस्पर-

ज्योत्स्ना ।

ल्यसमर्थविप्रकर्षात्" इतिपूर्वमीमांसासूत्रेण श्रौतविनियोगापेक्षया लैङ्गिकविनियोगस्य दौर्बल्यबोधनात् । अर्थविप्रकर्षादिति हेतुः । तद्बीजन्तु—अर्थप्रकाशनसामर्थ्यरूपस्य लिङ्गस्य स्वतो विनियोजकत्वासम्भवेन तेन विनियोजकश्रुतिं कल्पयित्वा क्रियमाणस्य विनियोगस्य विलम्बेनोपस्थितिः । श्रुतेस्तु स्वतो विनियोजकत्वात्तत्कृतविनियोगस्य झटिति बुद्ध्युपारोह इति । अत एव ऐन्द्रमन्त्रस्य "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या गार्हपत्योपस्थानेऽङ्गत्वेन विनियोगो न तु लिङ्गादिन्द्रोपस्थाने इति । वृत्ते इति । जाते ।

वि० ( १ ) पक्षेऽपीत्यपिना अपरितोषः सूचितः ॥

वि० ( २ ) अयम्भावः—"इको गुणवृद्धी" इतिं न स्वतन्त्रो विधिः । विध्यन्तराणां वैयर्थ्यापत्तेः, किंतु "सिचि वृद्धिः" इत्यादिना अन्त्यस्येकोऽनिकश्च प्राप्तौ इक एवेति नियमार्थमिति प्राञ्चः ।

च्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः ।

---

शब्दरत्न ।

विरोधादनयोस्त्यागे सर्वादेशगुणापत्त्या तद्विरोध इति भावस्तदाह—तच्छेषपक्षमिति । दूषणोद्धारस्त्विति । "मिदेः—"इत्यत्र मिद इर्मिदिस्तस्येति व्याख्यानान्न दोषः । "पुगन्त" ( पा०सू०७।३।८६ )-इत्यत्र पुक्यन्तो लघ्वी उपधेति व्याख्येयमित्यादि(१)भाष्योक्तदूषणोद्धारस्त्वित्यर्थः । न च यापयति, क्ष्मापयतीत्यादौ दोषः । गुणे कृते वृद्ध्या रूपसिद्धेः । अत एव "समयाच्च यापनायाम्" ( पा०सू०५।४।६० ) इति निर्देशः सङ्गच्छते, तदाह—कौस्तुभे स्पष्टीकृत इति । नन्वेवं तर्हि किमर्थं प्राचां पक्ष उपेक्षित इति चेच्छृणु । लघूपधांशे इक्परिभाषानुपस्थितावनिग्लक्षणत्वाद्भिन्नमित्यादौ गुणनिषेधाना-

ज्योत्स्ना

दूषणोद्धारस्तु इति । दूषणोद्धारप्रकारमाह—मिदेरित्यत्रेति । अत्रेत्थम्विज्ञेयम्—मिदेर्गुण इत्यत्र मिदेरिति पदे, मिद इरिति व्याख्याय इकारः स्थानीनिर्दिष्ट इति न दोषः । पुगन्त इत्यत्र पुकि अन्तः, लघ्वी चासौ उपधा इति व्याख्या कार्या । एवं व्याख्यानस्य भिनत्तीत्यादौ दोषवारणायावश्यकत्वम् । "ऋच्छत्यृताम्" इत्यादौ ऋच्छत्यृॠऋताम् इति प्रश्लेषः कार्यः । ऋच्छतीत्यस्य ऋकारेण समासः ऋच्छतेरा-ऋछत्या इति । तथाच ऋच्छतेरवयवऋकारस्य गुण इत्यर्थान्न दोषः । दृशेरपि उः अङि गुणः, ततो दृशः इति योगं विभज्य दृश इत्यत्र उरित्यनुवर्त्य दृशधात्ववयवऋकारस्य गुण इत्यर्थान्न दोषः । क्षिप्रक्षुद्रयोरपि "स्थूलदूर" इत्यत्र यणादिपरमित्येको योगः, पूर्वस्य च गुणः इत्यन्यः । अत्र व्याख्यायां क्षिप्रक्षुद्रयोरेवानुवृत्तिः । स्थूलादयो निवृत्ताः । तेषाञ्च "ओर्गुणः"इति गुणेन रूपसिद्धेः । यणादीति लुप्तपञ्चमीकम्पदं, षष्ठीतत्पुरुषः, तस्य चावृत्त्या पूर्वस्य परमिति शब्दाभ्यां सम्बन्धः, तथा च क्षिप्रक्षुद्रयोर्यण आदि-

---

प्र० ( १ ) एवं व्याख्यानस्य भिनत्तीत्यादौ दोषवारणायाऽऽवश्यकत्वमेव । "ऋच्छत्यृताम्" ( पा० सू० ७।४।११ ) इत्यत्रापि ऋच्छत्यृ—ॠ—ऋतामिति प्रश्लेषः ऋच्छतीत्यस्य ऋकारेण समास ऋच्छतेरा ऋच्छत्येति । तथा च ऋच्छत्यवयवऋकारस्य गुण इति व्याख्यानेन न दोषः । दृशेरपि "उरङि गुणः" "दृशः" इति योगं विभज्य "दृशः" इत्यत्र "उः" इत्यनुवर्त्य दृशधात्ववयवऋकारस्य गुण इति व्याख्यानान्न दोषः । क्षिप्रक्षुद्रयोरपि "स्थूलदूर—" ( पा० सू० ६।४।१५६ ) इत्यत्र "यणादिपरम्" इत्यन्य एको योगविभागः, "पूर्वस्य च गुणः" इति द्वितीयः । अत्र व्याख्यानात्क्षिप्रक्षुद्रयोरेवानुवृत्तिः । स्थूलादयो निवृत्ताः, तेषाञ्च "ओर्गुणः" (पा०सू० ६।४।१४६) इति गुणेन रूपसिद्धिः । यणादीति लुप्तपञ्चम्यन्तः षष्ठीतत्पुरुषः, तस्य चावृत्त्या 'पूर्वस्य' 'परम्' इति शब्दाभ्यां सम्बन्धः । तथाच क्षिप्रक्षुद्रयोर्यण आदिभूतात्पकाराद्दकाराच्च परं लुप्यते, ततः पूर्वस्य च गुण इति व्याख्यानान्न दोषः ॥

अचां मध्य इति । यत्तु प्राचोक्तमन्त्यादचः पर इति । तन्न । "शे मुचादीनाम्" ( पा०सू०७।१।५९ ) इत्यादावन्त्यस्याचोऽसम्भवात् । तस्यैवान्तावयव इति । तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः । परादित्वे स न सिध्येत् । अभक्तत्वे तु वहंलिह इत्यत्र "वहाभ्रेलिहः" (पा०सू०३।२।३२)

शब्दरत्न ।

पत्तिभिया स उपेक्षित इति । क्नोः कित्त्वस्यानिग्लक्षणत्वेऽपि (१)गुणनिषेधप्रवृत्तिज्ञापकत्वाश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक् ॥

इत्यादावविति । आदिना झलन्तलक्षणो नुम् , इदितो नुमित्यादि च । अचोऽसम्भवादिति । नुमो मित्त्वं तु ज्ञानानीत्यादौ चरितार्थमिति मुचादावन्त्यस्यैव स्यादिति भावः । दीर्घः सिद्ध इति । तच्छब्देन यस्य विहितः स समुदायः परामृश्यते इति भावः(२) । यद्यपि तस्यान्त्याच इति व्याख्यानेऽपि भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन

ज्योत्स्ना ।

भूतात्पकाराद्दकाराच्च परं लुप्यते, ततः पूर्वस्य च गुण इति व्याख्यानान्न दोषः । एतत्सर्वं प्रकृतसूत्रे भाष्ये स्पष्टमिति दिक् ।

दिगिति । तदर्थस्तु—ज्ञापकमूलकवाक्यान्तरकल्पनापेक्षया अस्मिन् पक्षे प्रतिपत्तिलाघवादौचित्यम् । "मृजेर्वृद्धिः" इत्यत्राच इत्यपकर्षे अमार्ट् इत्यत्राकारस्य वृद्धिवारणाय "अनन्त्यविकारेऽन्त्यसदेशस्य" इति प्रवृत्तिः स्वीकार्या । "ऋदृशोऽङि गुणः" इत्यत्र योगविभागाश्रयणं कार्यमिति तच्छेषपक्षे गौरवम् । "गुणानाञ्च परार्थत्वात्" इति न्यायेन परिभाषयोः गुणगुणिभावो न युक्तः । किञ्च व्यञ्जनस्य गुणवारणाय जनेर्डविधानस्य ज्ञापकत्वमाश्रयणीयमिति तदपेक्षयाऽस्य पदोपस्थापकत्वमेव युक्तमिति । अत एवेग्लक्षणा वृद्धिरेषितव्या भाष्यकारीय उपसंहारः सङ्गच्छत इति सुस्थं सर्वम् ।

अचां मध्ये इति । अचामिति निर्द्धारणे षष्ठी । निर्द्धारणविभक्त्यर्थश्च—अन्त्यत्वेऽच्समुदायस्य स्वघटकवृत्तित्वं स्वघटकान्त्याजितरयावद्वृत्तित्वं चेति । यथा नृणां द्विजः श्रेष्ठ इत्यत्र श्रैष्ठ्ये नृसमुदायस्य स्वघटकवृत्तित्वं स्वघटकनिधार्यमाणेतरयावदवृत्तित्वं चेति, एतदुभयसम्बन्धेन वैशिष्ट्यं भवति तद्वत् । इतिभाव इति । परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वादन्त्याचोऽविधित्वेन तद्घटकपरत्वे समुदायस्य च निरूपितत्वसम्बन्धेनावयवत्वेऽन्वयस्वीकारादित्यर्थः ।

---

टि०.( १.) पौरोहित्यमित्यादावप्यप्रसङ्गः । अथ लक्षणानुरोधाल्लघूपधमात्रविषयकं ज्ञापकमिति चेत् । एतदपेक्षया पदोपस्थितिपक्षस्वीकार एव श्रेयान् ॥

प्र० ( २ ) परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वादन्त्याचोऽविधित्वेन तद्घटकपरत्वे, समुदायस्य च निरूपितत्वसम्बन्धेनावयवत्वेऽन्वयस्वीकारादित्यर्थः ॥

इति खशि "अरुर्द्विषद्-" ( पा०सू०६।३।६७ ) इति मुमोऽनुस्वारो न स्यात् । अपदान्तत्वात् ।

यत्तु अभक्तत्वे त्रपूणीति दीर्घो न स्यादिति, तत् "तदादिग्रहणं स्यादि-नुमर्थम्" इत्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् ।

स्थानेयोगेति । स्थानेन योगोऽस्या इति विग्रहः । निपातनादेत्वम् ।

अनेकविधमिति । स्थानार्थगुणप्रमाणकृतमित्यर्थः । बलीय इति । तेन चेता स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः ॥

शब्दरत्न ।

प्राप्तस्य गुणस्य "दीधीवेवीटाम्" ( पा०सू०१।१।६ ) इति निषेधारम्भेण लोकव्यवहारेण चावयवावयवस्य समुदायावयवत्वाङ्गीकारादत्र न दोषः, तथाऽपि तथा न व्याख्यातं, पञ्चारत्नीनीत्यादौ पदस्य विभज्यान्वाख्याने उत्तरपदस्यापि नान्तत्वापत्तौ "इगन्त-" ( पा०सू०६।२।२९ ) इति स्वरानापत्तेरिति स्पष्टं भाष्यादौ । त्रपूणीत्युपलक्षणं 'ता ता पिण्डानाम्' इति नलोपसिद्धेः । तानि तानित्यर्थे "शेश्छन्दसि-" ( पा०सू० ६।१।७० ) इति शेर्लोपे तदुदाहरणम् ॥

स्थानेनेति । स्थानशब्दार्थेनेत्यर्थः । तन्निरूपितसम्बन्धः षष्ठ्यर्थो न तु तद्रूपः सम्बन्धस्तदर्थ इति अनेन ध्वनयति । एत्वमिति । व्यधिकरणबहुव्रीहिरप्यत एवेति बोध्यम् ॥

गुणप्रमाणेति । प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेऽपि(१)ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः । गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रम् । तेन "अनान्तर्यमेवैतयोरान्तर्यम्" इत्यादि-स्थानेऽन्तरमसूत्रस्थभाष्येण न विरोधः । अन्तरतमाभाव(२) एव गुणविधौ ऋकाराकारयोः सादृश्यमिति तदर्थः । बाह्यानां साक्षाद्वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम् ॥

ज्योत्स्ना ।

अन्तरतमाभाव इति । तालुस्थानजन्यत्वाभावविशिष्टओष्ठस्थानजन्यत्वाभाव इत्यर्थः। ननु "झयो होऽन्यतरस्याम्"इतिसूत्रोदाहरणविषये बाह्यप्रयत्नस्य गुणपदव्यवहार्यस्य सादृश्यप्रयोजकत्वं स्वीकृतं, तच्च न सम्भवति । काकलकाधस्तात् कण्ठविवरनिष्ठविकासादिकार्यजनकत्वेन वर्णावृत्तित्वादिति । अत एव तेषां बाह्यत्वेन व्यवहार इत्याह । बाह्यानामित्यादि । अत्र साक्षादित्युक्त्या परम्परया वर्णवृत्तित्वं बोधितम् । पररीत्या समवायसम्बन्धेन साक्षाद्वर्णसम्बन्धत्वम् । स्वमते तु तादात्म्येन । आत्मधर्मत्वं

वि० ( १ ) ब्राह्मणसहितवसिष्ठस्य न्यायः इति मध्यमपदलोपिसमासगर्भः समासोऽत्र ज्ञेयः । द्वन्द्वस्तु सहविवक्षाभावान्न भवति । अत एव साहित्यमेकं महावाक्यार्थघटकत्वेन, एवं जातीयकेषु सर्वत्रैवमेव ।

प्र० ( २ ) तालुस्थानजन्यत्वाभावविशिष्ट–ओष्ठस्थानजन्यत्वाभाव इत्यर्थः ।

तस्मिन्निति सप्तम्यन्ता(१)नामनुकरणम्। निःशब्दो नैरन्तर्यपरः।

शब्दरत्न।

अनुकरणमिति। अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो न स्वरू-

ज्योत्स्ना।

परमते, स्वमते मनोधर्मत्वमित्यलम्॥

तस्मिन्निति निर्दिष्टे पूर्वस्येति। तस्मिन्नित्यनुकरणम्। न चानुकरणत्वं स्वसदृशशब्द-मात्रबोधतात्पर्यकोच्चारणविषयत्वं ततश्च यत्र तस्मिन्निति पदं वर्तते तत्रैवेयं परिभाषा प्रवर्तते। "इको यणचि" इत्यादौ तु न प्रवर्तते इति वाच्यम्? "तस्मिन्नणि च युष्माकास्माकौ" इत्यत्रैव निर्दिष्टे पूर्वस्येति वक्तव्ये सामान्यसूत्रारम्भसामर्थ्येन बहुलक्ष्यसंस्कारानुरोधेन च न तस्मिन्निति स्वरूपपरं, किन्तु सप्तम्यन्तमात्रपरम्। तत्र सप्तम्यन्तमौपश्लेषिकाधिकरणसप्तम्यन्तम्, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेनेति स्वीक्रियते। अत एव "कर्तृकर्मणोः कृति" इत्यादौ न परिभाषाप्रवृत्तिः।

तथाच—औपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटिते शास्त्रे निर्दिष्टे पूर्वस्येत्युपतिष्ठते इत्यर्थेन "इको यणचि" इत्यादावपि प्रवृत्तेः सूपपादत्वात्। नचाव्यवहितार्थकस्य निर्दिष्टे इत्यस्य सप्तम्यन्तत्वेन अव्यवहिते पूर्वस्येति सूत्रार्थो वक्तुं युक्तो, न व्यवहितस्येति वाच्यम्। फलितार्थत्वेन तथोक्तेरिति मनोरमाकृतः।

शब्दरत्नकृतस्तु—स्वतन्त्रस्य सर्वनाम्नः सप्तम्यन्तार्थकस्य तस्मिन्निति तच्छब्दस्य निर्देशो नत्वनुकरणम्। सामान्यतः सूत्रकरणात्, बहुलक्ष्यसंस्कारानुरोधाच्च। सप्तमी तु सप्तम्यन्तानामेव तच्छाब्दार्थत्वमिति बोधनाय। इतिशब्दः तच्छाब्दार्थसप्तम्यन्तपदानामर्थपरत्वसूचनाय, निर्दिष्टे इत्यनेन सामानाधिकरण्याय च। तथाच औपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थे ऽव्यवहितोच्चारिते पूर्वस्य कार्यमित्यर्थः। ततश्च विधेयभेदाभावान्न वाक्यभेदोऽपि। मनोरमाकृतां तु वाक्यभेदो दुर्वारो विधेयभेदादित्याहुः।

परे तु—निर्दिष्टे इत्यस्य सामानाधिकरण्येन तस्मिन्निति उद्देश्येन सम्बन्धे उद्देश्यकुक्षौ प्रवेशः। स च न सम्भवति 'सिद्धं हि अनूद्यते' इति न्यायेन परिभाषाप्रवृत्तिमन्तरा सिद्धत्वाभावेन अनुवाद्यत्वासम्भवात्। तस्यापि विधेयत्वोपगमे वाक्यभेदस्यानिवार्यत्वादिति मनोरमोक्तमेव सम्यगित्यलम्।

केचित्तु—सप्तम्यन्तार्थे उपश्लिष्टस्य कार्यम्, अव्यवहितोच्चारिते पूर्वस्य बोध्यम्,

प्र० (१) औपश्लेषिकाधिकरणबोधकसप्तम्यन्तानामित्यर्थः। तथाचौपश्लेषिकाधिकरणबोधक-सप्तम्यन्तपदघटिते शास्त्रे "निर्दिष्टे पूर्वस्य" इत्युपतिष्ठत इति वाक्यार्थः। औपश्लेषिकेत्युक्तया "कर्तृकर्मणोः कृति" (पा० सू० २।३।६५) इत्यत्र नास्याः प्रवृत्तिः। तत्र "उभयप्राप्तौ कर्मणि" (पा० सू० २।३।६६) इति लिङ्गात्सप्तम्या आश्रयणात्॥

(१)दिशिरुच्चारणक्रियः। अचि यणित्युक्ते व्यवहिते ऽव्यवहिते च सति प्राप्तमव्यवहित एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते। अव्यवहितस्येति तु फलितार्थकथनम्।

परस्य यदिति। "तस्मादित्युत्तरस्यादेः" इति तु न सूत्रितम्। आदेरित्यंशस्य सर्वादेश(२)बाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाध-

शब्दरत्न।

पपरम्। व्याख्यानाद्, बहुलक्ष्यसंस्कारानुरोधाच्च। सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय। तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय(३) चेति भावः। शब्दार्थकत्वेन त्वनुकरणत्वव्यवहार इति बोध्यम्। दिशिरुच्चारणेति। अत एव "जनपदे लुप् (पा० सू० ४।२।८१) इत्यादौ(४) न(५) दोषः। नञर्थं ऊचारितो नापि शब्दस्य निरन्तर इति भावः। अचि यणित्युक्ते इति। अचि उपश्लिष्टस्य यणित्युक्ते इत्यर्थः। इदं "संहितायाम्" (पा०सू० ६।१।७२) इति सूत्रे भाष्ये स्पष्टम्। फलितेति। सप्तम्यन्तार्थेऽव्यवहिते षष्ठ्यन्तार्थोऽप्यव्यवहित एवेति भावः।

न सूत्रिततिति। "स्वं रूपम्" (पा० सू० १।१।६८) इत्यतः प्रागिति शेषः। तत्र "आदेः" (पा० सू० १।१।५४।) इति पृथग्वाक्यं तत्र "उत्तरस्य" इत्यनुवर्तते स्थान-

ज्योत्स्ना।

इत्युद्देश्यविधेयभावं प्रकल्प्यदोषाभावं वदन्ति। अन्यथा सप्तम्यन्तार्थे ऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमिति वाक्यार्थबोधस्वीकारे ऽव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टमुद्दिश्य पूर्वत्वं विधीयते इति प्रत्याय्यते। तच्चानुपपन्नम्। अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टस्य केनाप्यसिद्धत्वादिति दिक्।

---

वि० (१) एवं च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते सति पूर्वस्य कार्यमिति वाच्योऽर्थः, तथा परिभाषाद्वयोपस्थितौ सप्तम्यन्तपञ्चम्यन्तपदयोरर्थोपस्थितिर्लिङ्गमिति भावः॥

वि० (२) "अस्तेर्भूः" इत्यत्र सावकाशं सर्वादेशं बाधित्वा "अतो भिस् ऐस्" इत्यत्रादेरेव स्यादित्यर्थः॥

प्र० (३) वस्तुतश्चिन्त्यमेतत्। यद्यत्र "निर्दिष्टे" इत्यंशस्य विधेयत्वं विवक्ष्यते तदा तस्मिन्नित्यंशस्य तद्विशेषणत्वेनोद्देश्यदलाप्रसिद्धिः स्यात्। यदि न विधेयत्वविवक्षा, तदौपश्लेषिकसप्तम्यन्तार्थेऽव्यवहितोच्चारितत्वस्य केनाप्यविधानात्सप्तम्यन्तार्थेऽव्यवहितोच्चारिते इत्यर्थासिद्धिः। तस्मात्प्राचीनोक्तमेव साधु॥

वि० (४) आदिना "यस्कादिभ्यो गोत्रे" इत्यस्य संग्रहः॥

वि० (५) अस्योपस्थित्या जनपदे देशार्थे, लक्षणया तद्वाचिनि वा पूर्वस्येत्यर्थेनानिष्टमव्याप्यतिव्याप्तिरूपं तन्नेत्यर्थः॥

कमित्यनुपदमेव वक्ष्यति ॥

"अनेकाल्" ( पा० सू० १ । १ । ५५ ) ॥ शित उदाहरणम् "इदम इश्" । इतः ।

यत्तु वृत्तिकृता "जश्शसोः शिः" ( पा० सू० ७ । १ । २० ) इत्युदाहृतं, तन्न । सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात् । तत्र हि डाणलोरिवा(१)नुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वमिति सिद्धान्तः । इत्यादाविति । आदिशब्देन "अतो भिस ऐस्" ( पा० सू० ७ । १ । ९ ) इति गृह्यते । परत्वादिति । अत एव "आदेः परस्य" ( पा० सू० १।१।५४ ) इति पृथक् क्रियते इत्युक्तम् । "उत्तरस्य" इत्यंशस्तु औशैसोरपि प्रवर्तत एव ।

यत्तु प्राचा "आदेः" इति सूत्रं विवृण्वता (२)पञ्चमीनिर्देशेनेत्याद्युक्तं,

---

शब्दरत्न ।

षष्ठी चेयं, पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्य स्थाने विधीयमानं चादेर्बोध्यमिति वाक्यार्थद्वयं, वाक्यभेदसामर्थ्याच्च "आदेः" इत्यंशं विनापि क्वचिदंशान्तरप्रवृत्तिः(३) । "आदेः" इत्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यावृत्त्या परत्वबोधकशब्देन यत्र विधानं तत्रैवेति "नित्यं ङितः" ( पा० सू० ३।४।९९ ) इत्यादौ न प्रवर्त्तेत(४) इति भावः । वक्ष्यतीति । न च "अनेकाल्" ( पा० सू० १।१।५५ ) इत्यतः पूर्वमेव "तस्मिन्निति निर्दिष्टे पूर्वस्य" ( पा० सू० १।१।६६ ) "तस्मादित्युत्तरस्यादेः" इति सूत्रे कुतो न पठिते इति वाच्यम् । "आदेः" इत्यंशे "षष्ठीस्थाने–" इत्यस्यासम्बन्धे "आज्जसेरसुक्" ( पा० सू० ७।१।५० ) इत्यादावपि तस्य प्रवृत्त्यापत्तेः । सम्बन्धे मध्ये "तस्मिन्निति–" "तस्मादिति–" अनयोरपि तत्सम्बन्धे तयोरप्यागमविषयेऽप्रवृत्त्यापत्तेरिति दिक् ॥

डाणलोरिवेति । आदेशानां प्रत्ययाधिकारे पाठेऽपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेनोपदेशे णकारे इत्त्वाप्रवृत्तेस्तदुत्तरं लक्ष्ये प्रवृत्तिकाले इत्त्वेऽप्यनेकाल्त्वाक्षतेरिति भावः । प्रवर्तत एवेति । उपपादितमेतत् ।

---

वि० ( १ ) सति सर्वादेशत्वे प्रत्ययत्वेनेत्संज्ञायां लोप इति सर्वादेशत्वं विना न शित्वं भवतीति भावः ।

वि० ( २ ) परत्वानुवादेन यस्य यत्कार्यं तत्तस्यादेरिति सूत्रार्थः । परत्वानुवादश्च "उत्परस्यातः" इत्यादिर्न गृह्यते । अत इति तत्र स्थानिनिर्देशात् । किंतु "तस्मात्" इति सूत्रोपस्थितपरत्वानुवाद एव । तथा च पञ्चमीनिर्देशेनेत्याद्युक्तमिति ॥

प्र० ( ३ ) आगमविधायकेष्वित्यर्थः ॥ प्र० ( ४ ) तत्र विहितपञ्चम्याश्रयणादित्यर्थः ॥

तद्(१)सम्बद्धमिति स्पष्टमेव।

परनित्येति। परान्नित्यं यथा। तुदति। रुणद्धि। परमपि लघूपधगुणं बाधित्वा शश्नमौ। तथारन्धेर्णिच् रन्धयति। परामप्युपधावृद्धिं बाधित्वा "रधिजभोः–" ( पा० सू० ७।१।६१ ) इति नुम्। न च सोऽपि शब्दान्तरप्राप्त्या ऽनित्य इति वाच्यम्। कृताकृतप्रसङ्गमात्रेणापि(२) क चिन्नित्यताभ्युपगमात्। अन्तरङ्गं यथा–उभये देवमनुष्याः। इह "प्रथमचरम" ( पा० सू० १।१।३३ ) इति परमपि विकल्पं बाधित्वा "सर्वादीनि" ( पा० सू० १।१।२७ ) इति सर्वनामसञ्ज्ञा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्। अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एव। तद्यथा—"अयजे

शब्दरत्न।

शब्दान्तरप्राप्त्येति। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः। कृताकृतेति। व्यक्तिविशेषानाश्रयणेनेत्यर्थः। "वृद्ध्यौत्त्वतृज्वद्भाव" इत्यस्य त्वत्र न प्राप्तिः। साहचर्येण विभक्तिनिमित्तानामेव वृद्ध्यादीनां तत्र ग्रहणात्। नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाश्रयणे फलाभावाच्चेति दिक्। अन्तरङ्गत्वादिति। भाष्ये त्वयच् प्रत्ययान्तरं न तु तयबादेशः, उभयीत्यत्र ङीप्तु मात्रजिति प्रत्याहाराश्रयणेन(३) साधितः। एवं चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्तम्। अन्तरङ्गस्य बलवत्त्वे ज्ञापकमन्यत्र प्रपञ्चितम्। बाध्यत एवेति। निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात्।

ज्योत्स्ना।

मात्रजिति प्रत्याहाराश्रयणेन साधित इति। "परिमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रशब्दादारभ्य "द्वित्रिभ्यां तयस्यायज् वा" इत्ययचश्चकारपर्यन्तमित्यर्थः। "किमः संख्या परिमाणे डति च" इति डतेः प्रत्याहारान्तर्भावसत्त्वेऽपि तदन्तात्कतिशब्दान्न ङीप्। "टिड्ढा" इति सूत्रे अत इत्यस्यानुवृत्तिरित्यलम्।

ननु प्राचीनोक्तायाः अकृतपरिभाषाया लक्ष्यसाधकत्वेनावश्यकतया पतञ्-

वि० ( १ ) एकवाक्यतां विना उक्तार्थासम्भवादिति भावः॥

वि० ( २ ) तुदतीत्यादावित्यर्थः। अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजमिति भावः॥

प्र० ( ३ ) "परिमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रशब्दादारभ्य द्वित्रिभ्यां तयस्यायज्वा" ( पा० सू० ५।२।४३ ) इत्ययचश्चकारपर्यन्तमित्यर्थः। "किमः संख्यापरिमाणे डति च" ( पा० सू० ५।२।४१ ) इति डतेः प्रत्याहारेऽन्तर्भावेऽपि तदन्तात्कतिशब्दान्न ङीप्, "टिड्ढा—" ( पा० सू० ४।१।१५ ) इति सूत्रेऽत इत्यनुवृत्तेः॥

इन्द्रं, ग्रामे इइ, सर्वे इत्थम्" अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते । स च यद्यपि यण्गुणयोरपवादस्तथाऽपि समानाश्रये चरितार्थः । तथा च वार्तिकम् । "इण्ङ्शीनामादूगुणः सवर्णदीर्घत्वात्" इति ॥

असिद्धमिति । तेन पचावेदमित्यादावेत ऐत्वं न ।

अकृतव्यूहा इति । यद्यपि "कृतमपि कार्यं निवर्त्तयन्ति" इति परिभाषान्तरं पठ्यते फलं च तुल्यम् , तथाऽपि "अकृत—" इत्येव लघु । "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायादिति भावः । नकुर्वन्तीति । यथा "निषेदुषीम्" इत्यादौ क्सोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ।

---

शब्दरत्न ।

तेनेति । पूर्वा तु अन्तरङ्गवहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः ।

न कुर्वन्तीत्यर्थ इति । यदि तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने ।सेद् वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे(१)वलादित्वाभावादिटः प्राप्तिरेव न, लक्ष्यानुरोधाचात्र पदावधिकमेवान्वाख्यानमिति तत्सिद्धिरित्युच्यते, तदैषा परिभाषा निष्फलेति बोद्धव्यम् । अत एव एषा भाष्ये न क्वापि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम् ॥

इति परिभाषाप्रकरणम् ॥

ज्योत्स्ना ।

लिनैषा कुतो नोक्ता इत्याशङ्कायामाह—यदि तु । सम्प्रसारण इति । नच नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति सिद्धान्तपक्षे प्रकृते "वस्वेकाचाद्धसाम्" इत्यस्य वसुशब्दमुच्चार्येडागमविधायकत्वेन इटोऽपि प्रतिपदोक्तत्वात्परत्वाच्च पूर्वमिट एव प्रवृत्तिः स्यादिति वाच्यम् । सद् वस् अस् इति स्थिते कृतद्विर्वचनैकाच्त्वाभावेनेटोऽप्राप्तौ द्वित्वसम्प्रसारणयोश्च प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे, ततो द्वित्वे वलादित्वाभावादिटः प्राप्तिरेव नेति व्याख्यानेनादोषात् । निष्फलेति बोध्यमिति । वस्तुतस्तु—वैभाजित्रम् घटसेदुषोः इत्याद्यर्थं सा परिभाषात्यन्तमावश्यकीति परिभाषेन्दुज्योत्स्नायां विस्तरेण प्रतिपादितमिति तत एवावगन्तव्यम् ।

इति परिभाषाप्रकरणम् ।

---

प्र० (१) नच नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति सिद्धान्तपक्षे प्रकृते "वस्वेकाजाद्ध-

# अथ अच्सन्धिप्रकरणम् ।

"इको यणचि" (पा० सू० ६ । १ । ७७) ॥ प्रत्याहारग्रहणेषु

शब्दरत्न ।

ननु व्यक्तिपक्षे इक्पदोपस्थाप्योका(१)रादिभिर्दीर्घादिग्रहणं न स्यात्, उच्चारित एव शब्दः प्रत्यायको नानुच्चारित इति "अणुदित्"(पा०सू०१।१।६९)सूत्रे भाष्योक्तेः । न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम् । तत्रापि पुस्तकद्रष्टुः(२)स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह-प्रत्याहारग्रहणेष्विति। एतेन दीर्घका-

ज्योत्स्ना ।

उकारादिभिरिति । नन्वत्र इकारादीति वक्तुमुचितम् । दीर्घैकारादेरपि इक्पदनिष्ठवृत्त्यानुपस्थितत्वेन तत्रापि प्रत्ययार्थानन्वयापत्तेः । न च इक्पदनिष्ठवृत्त्या चतुष्टयोपस्थितिवत्; इक्पदघटकेकारवृत्त्या दीर्घैकारादेरप्युपस्थित्या न दोष इति वाच्यम् । अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानंप्रतिबन्धकमितिनियमस्य सद्भावेन प्रकृते दीर्घैकारा-

---

साम्" ( पा० सू० ७।२।६७ ) इत्यस्य वसुशब्दमुच्चार्येडागमविधायकत्वेनेटोऽपि प्रतिपदोक्तत्वात्परत्वाच्च पूर्वमिट एव प्रवृत्तिः स्यादिति वाच्यम् । सेद्, वस् अस्, इति स्थिते कृतद्विर्वचनैकाच्त्वाभावेनेटोऽप्राप्तौ द्वित्वसम्प्रसारणयोश्च प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे ततो द्वित्वे वलादित्वाभावादिटः प्राप्तिरेव नेति व्याख्यानेनादोषात् ॥

प्र० ( १ ) नन्वत्र इकारादीति वक्तुमुचितम्, दीर्घैकारादेरपीक्पदनिष्ठवृत्त्याऽनुपस्थितत्वेन तत्रापि प्रत्ययार्थानन्वयापत्तेः। नचेक्पदनिष्ठवृत्त्या चतुष्टयोपस्थितिवद् इक्पदघटकेकारनिष्ठवृत्त्या दीर्घैकारादेरप्युपस्थित्या न दोष इति वाच्यम् । अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकतातात्पर्यज्ञानस्य प्रतिबन्धकत्वेन प्रकृते दीर्घैकारादिविषयकशाब्दबोधम्प्रति चतुष्टयार्थविषयतात्पर्यज्ञानस्य प्रतिबन्धकत्वेनोक्तार्थासिद्धेः । न च ककारस्य प्रत्यभिज्ञामात्रोपयोगित्वेनेकारस्यैव चतुष्टयबोधकत्वस्य दीर्घैकारादिबोधकत्वस्य च सत्त्वेनोक्तप्रतिबन्ध्यप्रतिबन्धकभावविषयाभावान्न दोष इति वाच्यम् । एवमप्येकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रत्यपरशक्तिनिरूपकार्थविषयकतातात्पर्यज्ञानस्य प्रतिबन्धकत्वेन प्रकृते ककारसमभिव्याहारेण चतुष्टयबोधे तात्पर्यावधारणेन दीर्घैकारादिबोधस्य प्रतिबन्धादिति चेन्न । आवृत्त्यादिना चतुष्टयस्य दीर्घैकारादेश्च ग्रहणसम्भवेऽपि दीर्घोकारादीनां सर्वथा बोधासम्भवप्रदर्शनाय तथोक्तत्वात् ।

वि० ( २ ) जपे मन्त्राणां त्रैस्वर्यनियमेन तत्तत्स्थानेषु उच्चादिदेशोपलभ्यमानत्वरूपोदात्तत्वादेर्मात्राकालिकत्वादिरूपह्रस्वत्वादेश्चोच्चारणं विनाऽनभिव्यक्त्या मानसजपस्थले इवात्रापि सूक्ष्मतरताल्वादिव्यापारेण तादृशं तदस्त्येवेति भावः ॥

## शब्दरत्न ।

रादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधेऽपि तेषामिक्पदवृत्त्याऽनुपस्थितत्वेन तदुत्तरप्रत्ययार्थानन्वयापत्तिरित्यपास्तम् । वृत्तिप्रयोज्योपस्थितिसत्त्वेनादोषाच्च । ननु अणुदित्सुत्रं व्यर्थम् । न च प्रत्याहाराणामाद्यवर्णेषु चरितार्थम् । अन्यसवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रहणसिद्धेः । न च "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादौ चारितार्थ्यम् । व्यक्तिपक्षेऽस्य प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टम् "अणुदित्"–(पा० सू० १।१।६९) सूत्रे भाष्ये इति चेन्न । लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात् । प्रत्याहारेत्युपलक्षणं तद्वाच्यवाच्येति च "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादावपि स्वसदृशवाच्येषु लक्षणावश्यकत्वात् । अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिका लक्षणा विधीयमानातिरिक्तविषये एव, "अप्रत्ययः" इत्युक्तेः । अत एव "त्यदादीनामः" (पा० सू० ७।२।१०२।) इत्यादौ न स्वसदृशवाच्येषु लक्षणा । "नाज्झलौ" (पा० सू० १।१।१०) "अणुदित्" (पा० सू० १।१।६९) इत्यत्र

## ज्योत्स्ना ।

दिविषयकशाब्दबोधं प्रति चतुष्टयार्थविषयकतात्पर्यज्ञानस्य प्रतिबन्धकत्वेनोक्तार्थस्यासिद्धेः ।

न च ककारस्य प्रत्यभिज्ञामात्रोपयोगित्वेन इकारस्यैव चतुष्टयबोधकत्वस्य दीर्घादिबोधकत्वस्य च सत्वेनोक्तप्रतिबन्ध्यप्रतिबन्धकभावविषयाभावेन च न दोष इति वाच्यम् । एवं स्वीकारेऽपि एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रति अपरशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानं प्रतिबन्धकमिति प्रतिबन्ध्यप्रतिबन्धकभावमूलकसकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायेन प्रकृते ककारसमभिव्याहारेण चतुष्टयबोधे तात्पर्यावधारणेन दीर्घैकारादिबोधस्य प्रतिबन्धकत्वादिति चेन्न । आवृत्यादिना चतुष्टयस्य दीर्घैकारादेश्च ग्रहणसम्भवे सत्वेऽपि दीर्घौकारादेः सर्वथा बोधासम्भवप्रदर्शनाय तथोक्तत्वादिति दिक् ।

अनन्वयापत्तिरिति । प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति सिद्धान्तात् । अत्र मानञ्च "सार्वधातुके यक्" इतिसूत्रे भाष्ये पच्यमान इत्यत्र "कर्तरि शानच्" "कर्मणि यक्" इति पक्षाभ्युपगमे "प्रकृतिप्रत्ययौ" इतिनियमेन कर्मार्थविशेष्यकबोधानापत्तिः, कर्तुरेव प्रथमतो जातप्रत्ययार्थत्वादित्युक्तम् ।

नन्वणुदित्सूत्रमिति । उदितः सूत्रं उदित्सूत्रम् अण्विशिष्टमुदित्सूत्रमणुदित्सूत्रमिति तदर्थः । एवञ्च उदित्सूत्रस्यावश्यकत्वेऽपि सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति नियमेन विशेषणे पर्यवसानम् । स्वर्गौ ध्वस्त इतिवदिति दिक् ।

तद्वाच्यवाच्ये (१) निरूढा (२)लक्षणा। "दीर्घाज्जसि च" (पा०सू०६।१।१०५)

शब्दरत्न।

तु न लक्षणा तद्बोधकाले लक्ष्यतावच्छेदका(३)ग्रहादिति भावः। तत्र प्रमाणमाह—दीर्घादिति। अक्पदीयाकारेण स्वसवर्णग्रहणेऽपि तत्र "ना(४) दिचि" इत्येव सिद्धमिति

ज्योत्स्ना।

निरूढालक्षणेति। ननु प्रत्ययार्थनिष्ठविषयतानिरूपितविषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति उच्चार्यमाणपदनिष्ठवृत्तिज्ञानाधीनोपस्थितेः कारणत्वेन दीर्घैकारादीनामिक्पदनिष्ठवृत्त्या अनुपस्थितत्वेन तेषामिक्पदोत्तरषष्ठ्यर्थेनान्वयाभावेन दीर्घेषु यणसिद्ध्या—"त्वादिभ्य" इत्यादिनिर्देशानुपपत्तिरित्याह—तद्वाच्यवाच्येति।

ननु "प्रथमयोः पूर्वसवर्णः" इतिसूत्रे ऽनुवृत्तं यदगिति पदं तत्राकारस्योच्चारणेन तस्याणूत्वात्तत्राणुदित्सूत्रस्य प्रवृत्त्या विश्वपा इत्यादौ प्राप्तपूर्वसवर्णव्यावृत्तये "दीर्घाज्जसि च" इति सूत्रं सार्थकमिति कथमस्य ज्ञापकत्वेनोपन्यास इति चेन्न। तत्र "नादिचि" इत्येव निषेधस्य सिद्धत्वादिति तदाह—तत्र नादिचीत्येव सिद्धमिति। ननु यावत्पर्यन्तं लक्षणा न प्रमाणसिद्धा तावदकारेणाष्टादशानां ग्रहणस्य वक्तुमशक्यत्वात्कथमनेन तत्सिद्धिरिति चेन्न। उत्तरत्र "अमि पूर्वः" इत्यत्रानुवर्तिष्यमाणाक्पदस्य अत्रा-

---

प्र० (१) ननु प्रत्ययार्थनिष्ठविषयतानिरूपितविषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रत्युच्चार्यमाणपदनिष्ठवृत्तिज्ञानाधीनोपस्थितेः कारणत्वेन दीर्घैकारादीनामिक्पदनिष्ठवृत्त्याऽनुपस्थितत्वात्तेषामिक्पदोत्तरषष्ठ्यर्थेनान्वयाभावे दीर्घेषु यणसिद्ध्या "त्वादिभ्यः" (पा० सू० ८।२।४४) इति निर्देशाद्यनुपपत्तिरत आह—तद्वाच्यवाच्येति॥

वि० (२) 'गङ्गायां घोषः' इत्यत्र घोषादिपदप्रयोगानन्तरमेव लक्ष्यार्थोपस्थितिः, इह तु पदान्तराप्रयोगेऽपि सर्वासां व्यक्तीनामुपस्थितिः। इदमेव निरूढत्वम्॥

वि० (३) तीरत्वलक्षणामूलशक्यसम्बन्धयोर्ज्ञानं विना यथा तीरे न लक्षणा तथाऽत्रापि वाक्यापरिसमाप्तिन्यायेन। वाच्यवाचकभावस्य तादात्म्यस्य वा स्वशक्यसम्बन्धस्याज्ञानवत्तस्याप्यग्रहेण सा दुर्वचैव। अत एव "आदिरन्त्येन" इति सूत्रमत्रापि सफलमिति भावः॥

प्र० (४) ननु यावत्पर्यन्तं लक्षणा न प्रमाणसिद्धा तावदकारेणाऽष्टादशानां ग्रहणस्य वक्तुमशक्यत्वात्कथमनेन सिद्धिरिति चेन्न। उत्तरत्र "अमिपूर्वः" (पा०सू० ६।१।१०७) इतिसूत्रेऽनुवर्त्तिष्यमाणाक्पदस्य अत्राऽपि सम्बन्धं कृत्वा तेनाकारविशेषणे प्रत्याहाराद्यवर्णेन ग्राहकशास्त्रबलाद्दीर्घाकारस्याऽपि बोधसम्भव इत्याशयात्। वस्तुतस्तु आदित्यस्य प्रथमान्तत्वं स्वीकृत्य "इचि परे आद्रूपः सवर्णदीर्घो न" इति व्याख्यानेनादोषः। यत्तु 'अश्च आश्च अनयोः समाहारे अम्, तस्मात् आत्' इति व्युत्पत्त्या अपदेनैव ह्रस्वाकारदीर्घाकारयोर्बोधान्न दोष इति। तन्न। लक्षणासिद्धेः प्राग् ह्रस्वाकारदीर्घाकारयोः सवर्णदीर्घस्यैवालाभादुक्तरूपासिद्धेः। प्रत्याहाराद्यवर्णेन दीर्घादीनामपि ग्रहणमित्युक्तेरसङ्गतत्वस्योक्तत्वात्।

इति ज्ञापकात् "ल्वादिभ्यः" ( पा० सू० ८।२।४४ ) इति निर्देशाच्च । तेनेक्शब्देनषट्षष्ठिर्गृह्यन्ते । यण्शब्देन सप्त । भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात् । अतो नास्ति यथासङ्ख्यम् । न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थबोधमादाय यथासंख्यमस्त्विति वाच्यम् । एवमपि तृतीयचतुर्थाभ्याम् ऋकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात् । तस्मादिह "स्थानेऽन्तरतम" ( पा० सू० १।१।५० ) सूत्रेणैवेष्टसिद्धिरि-

शब्दरत्न ।

भावः । तेन—लक्षणाङ्गीकारेण । भाव्यमानत्वेनेति । विधीयमानविषये लक्षणाऽभावस्यानुपदमुक्तत्वादिति भावः । अभेदकत्वेनेति । शास्त्रे उच्चारितगुणानां भेदकत्वाभावेऽपि (१)स्वरूपकृतभेदमादाय सप्तत्वसंख्या न विरुध्यते । यदि तु अणुदित्सूत्रेऽण्ग्रहणाद्यण् विषये गुणानां भेदकतैवोचितेति विभाव्यते, तदाऽपि चत्वारो यण इति यथासंख्यमसङ्गतमेव । तद् ध्वनयन्नाह—अतो नास्तीति । तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः । शक्यार्थबोधमादायेति । "ल्वादिभ्यः" ( पा० सू० ८।२।४४ ) इत्यादिनिर्देशोहिततात्पर्यानुपपत्तिग्रहस्य तत्सत्त्व एव सम्भवेन स बोध आवश्यकः । तत्र च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने "ल्वादिभ्य" इत्यादिनिर्देशाल्लक्षणया(२) जायमाने पुनर्वाक्यार्थबोधे लक्षितदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः । स्थाने-

ज्योत्स्ना ।

पि सम्बन्धं कृत्वा तेनाकारविशेषणे प्रत्याहाराद्यवर्णेन ग्राहकशास्त्रबलाद्दीर्घाकारस्यापि बोधसम्भव इत्याशयात् ।

वस्तुतस्तु—आदिति प्रथमान्तं स्वीकृत्य इचि परे आद्रूपः सवर्णदीर्घो न इति "नादिचि" इत्यस्य सूत्रार्थकरणेन दोषाभावः ।

यत्तु—अश्च आश्च अनयोः समाहारः अम् तस्मात् आदिति व्युत्पत्या अपदेनैव ह्रस्वाकारदीर्घाकारयोर्बोधान्न दोष इति तन्न । लक्षणासिद्धेः प्राक् ह्रस्वाकारदीर्घाकारयोः सवर्णदीर्घस्यैवालाभादुक्तरूपासिद्धेः । प्रत्याहाराद्यवर्णेन दीर्घादीनामपि ग्रहणमित्युक्तेरसङ्गतत्वस्यैवोक्तत्वादित्यलम् ।

---

वि० ( १ ) वास्तवतत्तद्धर्मवैशिष्ट्यादिना तत्तद्व्यक्तिभेदस्य प्रत्यक्षसिद्धस्य ब्रह्मणाऽपि दुर्निवारत्वादिति भावः ।

प्र० ( २ ) अयं भावः—अत्राऽन्वयानुपपत्तिरूपलक्षणाबीजाभावेऽपि "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इत्यादौ तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वावधारणात् । प्रकृते च शक्यार्थविषयकबोधे जाते तावता दीर्घपु यणसिध्या तस्मिंस्तात्पर्याभावावधारणात्तात्पर्यानुपपत्तिमूलकलक्षणास्वीकार इति ।

त्यभिप्रेत्याह—स्थानत आन्तर्यादिति ।

"अनचि च" ( पा० सू० ८ । ४ । ४७ ) द्वेवेति । "यरोऽनुनासिके" ( पा० सू० ८ । ४ । ४५ ) इति सूत्राद् वाग्रहणमनुवर्तते इति "नाज्झलौ" ( पा० सू० १ । १ । १० ) इति सूत्रे कैयटः । एवं च "सर्वत्र शाकल्यस्य" ( पा० सू० ८ । ४ । ५१ ) इति सूत्रं तत्प्रपञ्चभूतं पूर्वोत्तरसूत्रद्वयं च नारम्भणीयमिति भावः ।

यत्तु "दीर्घादाचार्याणाम्" ( पा० सू० ८ । ४ । ५२ ) इति सूत्रे

शब्दरत्न ।

ऽन्तरतमसूत्रेणैवेति । व्यक्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासम्भवाल्लक्ष्यासिद्धेश्चेति भावः ।

परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम् । न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात् । एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा । एवं च "अइउण्" ( मा० सू० १ ) इत्यादावपि जातिनिर्देश एवोचितः । (१)अर्द्धजरतीयस्यानौचित्यात् । अत एव "अणुदित्—" ( पा० सू० १।१।६९।) सूत्रे भाष्ये प्रत्याहारेषु "अस्य च्वौ" ( पा० सू० ७।४।३२ ) इत्यादौ च उक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम् । यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते । "स्यतासी लृलुटोः" (पा० सू० ३।१।३३) इत्यादौ यथा । नाप्यत्र पक्षे ऋकारादौ लृकाराद्यापत्तिः। लृत्वादिजातेर्ऋकारादावभावात् । न च जातिपक्षे अणुदित्सूत्रेऽण्ग्रहणप्रत्याख्याने "उपसर्गादृति—" ( पा० सू० ६।१।९१ ) इत्यादौ ऋकारेण लृकारग्रहणाय सावर्ण्यवचनस्थाने लृवर्णस्य ऋवदतिदेशाद् लृकारे रेफापत्तिरितिवाच्यम् । क्लृप्तशिखार्थं तस्यातिदेशस्यानित्यत्वावश्य(२)कत्वात् । तत्पक्षेऽ-

ज्योत्स्ना ।

लक्षणया जायमाने इति । अयम्भावः—लक्षणा अन्वयानुपपत्तिपूर्विकेति केचित् । तात्पर्यानुपपत्तिपूर्विकैवेति सिद्धान्तः । अत्रान्वयानुपपत्तिरूपलक्षणा बीजाभावेऽपि 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यादौ तात्पर्यानुपपत्तेरेव लक्षणाबीजस्य निश्चितत्वात् । प्रकृते च शक्यार्थविषयकबोधे जाते तावतादीर्घेषु यणसिद्ध्या तस्मिंस्तात्पर्याभावावधारणात्तात्पर्यानुपपत्तिमूलकलक्षणास्वीकार इति बोध्यम् ।

अनित्यत्वावश्यकत्वादिति । ऋकारलृकारयोः पृथगनुबन्धकरणेन ऋलृवर्णयोः सावर्ण्या-

---

वि० ( १ ) अणंशे लक्षणा हलंशे जातिपक्ष इत्येवं रूपस्येत्यर्थः ॥ संभवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वादिति भावः ॥

प्र० ( २ ) ऋकारलृकारयोः पृथगनुबन्धकरणेन ऋलृवर्णयोः सावर्ण्यानित्यत्वस्य ज्ञापनादित्यर्थः।

आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक् वाक्क् इति भाष्योदाहृते विकल्पे उपपत्तिचिन्तार्थं क्लिश्यन्ते, तन्मुधैव । पूजार्थतायाः प्रामाणिकैरनुक्तेः । "त्रिप्रभृतिषु–" ( पा० सू० ८ । ४ । ५० ) इति सूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः । न चेष्टापत्तिः । संस्कर्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात् । स्वग्रन्थविरोधाच्च । अत एव प्रातिशाख्यभाष्ये ऽपि "आ त्वा रथम्" इति मन्त्रे तकारस्य द्वित्वविकल्प उदाहृतः । माधवेन चात्ते इत्यत्र नकारस्य द्वित्वविकल्प उक्तः । एवं च धात्त्रंश इत्यत्र तकारस्य द्वित्वमसदित्युक्तिरेवासतीति दिक् ॥

शब्दरत्न ।

ण्ग्रहणप्रत्याख्यानेऽपि "अप्रत्ययः" ( पा० सू० १।१।६९ ) इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तत्परसूत्रवदिति "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) इत्यादौ न दोषः । एवं चात्र यण्पदेन जात्याश्रयणेनापि न सवर्णबोधनमिति "स्वौजस्–" ( पा० सू० ४।१।२ ) इत्यादावनुनासिकस्थानेऽपि निरनुनासिक एव । अत एव स्थानेऽन्तरतमसूत्रे भाष्येऽस्य तदुदाहरणत्वमाशङ्क्य "यथासंख्यम्" ( पा० सू० १।३।१० ) इत्यनेनापि सिद्धमित्युक्तम् । तेनात्र तयोः फलाविशेष उक्तः । "उञः" ( पा० सू० १।१।१७ ) इति सूत्रे नव्यानां प्रमाद एव । न च झलादिषु झकारादिभी रूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम् । अगादिष्वपि किञ्चित्सादृश्यमाश्रित्य दीर्घादीनामपि ग्रहणोपपत्तौ "अणुदित्" ( पा० सू० १।१।६९ ) सूत्रस्य, तद्वाच्येत्यस्य च वैयर्थ्यापत्तेः । "ल्वादिभ्यः" ( पा० सू० ८।२।४४ ) इति निर्देशानामीषत्सादृश्येनापि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात् । तदप्युक्तम् अइउण्सूत्रे भाष्ये "रूपसामान्याद्वा सिद्धम्" इति । अणुदित्सूत्रेऽण्ग्रहणं तु प्रत्याहाराद्यवर्णेषु णकारादिभिश्चिन्हैः प्रत्याहारसूत्रस्थोऽयमिति प्रत्यभिज्ञासत्त्वादुपायान्तरपरम् । 'आचार्याः कृत्वा न निवर्तन्ते" इति न्यायात् । इदमेवाभिप्रेत्य तत्रत्यमण्ग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक् ।

क्लिश्यन्त इति । "अनचि" इत्यनुवर्त्य(१) पर्युदासपरतया हलि पर एव नित्यनिषेध इति व्याख्यानेनेति भावः । विकल्प उक्त इति । एवं च "सर्वत्र शाकल्यस्य" ( पा० सू० ८।४।५१ ) इतिवदिदमपि प्रपञ्चार्थमिति भावः । असतीति । यत्तु "नादिनी–" ( पा०

ज्योत्स्ना ।

नित्यत्वस्य ज्ञापनादित्यर्थः ।

वि० ( १ ) तद्भाष्योदाहरणात्केवलप्रतिषेधार्थकत्वेऽग्रेऽननुवर्तने च लाघवाय नाचीत्येव वाच्ये गुरुभूतनयोक्त्यङ्गीकर्तृपाणिन्यभिमतत्वाच्च शब्दाधिकाराश्रयणाच्चेति भावः ॥

"स्थानिवदादेशः" ( पा० सू० १।१।५६ ) (१)धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशा इति प्राचोक्तम्। किं तत्परिगणनमुदाहरणमात्रं वा?। नाद्यः। सिच्क्सचङ्ङादीनां श्नादेशस्य शानचश्वासङ्ग्रहापत्तेः। नान्त्यः। अव्यय-

शब्दरत्न।

सू० ८।४।४८ ) इत्यादौ वृत्तौ "अनचि-" इति प्राप्तिमुद्भाव्य "त्रिप्रभृतिषु—" ( पा० सू० ८।४।५० ) "सर्वत्र-" इत्यनयोः प्राप्तिमनुद्भाव्य पुनः "दीर्घात्—" ( पा० सू० ८।४।५२ ) इत्यत्र "अनचि—" इति प्राप्तिरुद्भाविता हरदत्तेन। तस्यायमाशयः–निषेधविकल्पे प्राप्त्युद्भावनं नावश्यकम्, तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेव अप्राप्तविषयविकल्पसम्भवाद्, नित्यनिषेधे तु तदुद्भावनमावश्यकमिति। तन्न। विकल्पेऽपि निषेधप्रकरणान्नञुल्लेखस्यावश्यकत्वेन प्राप्त्युद्भावनस्यावश्यकत्वात्। मध्ये नञोऽसम्बन्धो मण्डूकानुवृत्तिरग्रे इत्यत्र मानाभावाच्च। "सर्वत्र" इति सूत्रेऽस्य द्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च। "त्रिप्रभृतिषु-" इत्येतद्विषये "नकारषकारयोर्द्विर्वचनाभावः" इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च। वृत्तिहरदत्तयोः "नादिन्या-" "शरोऽचि" ( पा० सू० ८।४।४९ ) इत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेष्वनुपलम्भाच्चेति दिक्।',

चङ्ङादीनामिति। आदिना चिण्। न केवलं च्ल्यादेशानामेवासङ्ग्रह इत्याह—श्नादेशस्येति। तदभावे ह्यवादिषा(२)तामित्यत्रेड्(३) न स्यात्। क्सादेः कादीनामित्त्वं न स्यात्। शानचः शस्य च तन्न स्यात्। मा हि(४) दर्शदित्यादौ अङि गुणो न स्यादिति भावः। ननु सिजादीनां प्रत्ययाधिकारे पाठात् श्नम्वत् प्रत्ययत्वमस्तीति न स्था-

ज्योत्स्ना।

अवादिषातामित्यत्रेति। वादशब्दादाचारक्विबन्तात्कर्मणि लुङि प्रथमपुरुषद्विवचने रूपमिदम्। न च "स्यसिच् (पा० सू० ६।४।६२) इत्यनेन चिण्वदिटि उक्तरूपासिद्धिरिति वाच्यम्। अस्योपदेशाभावेन तदप्राप्तेः। माहि दर्शदिति। अङ्गाधिकारीयकार्याणामङ्गसंज्ञानिमित्तभूतप्रत्ययनिमित्तकत्वादित्यर्थः। अग्रहीदिति। तेन "इट् ईटि"

वि० (१) धात्वादेशो धातुवत्—यथा अस्तेर्भूः। अङ्गस्य–किमः कः। अव्ययस्य–प्रकृत्य। पदस्य— ते मे वां नौ। एतेषामादेशाः स्थानिवत्सूत्रस्य प्रयोजनमिति योजना॥

प्र० (२) वादशब्दादाचारक्विबन्तात्कर्मणि लुङि प्रथमपुरुषद्विवचने रूपमिदम्। न च "स्यसिच्–" ( पा० सू० ६।४।६२ ) इत्यनेन चिण्वदिटि उक्तरूपासिद्धिरिति वाच्यम्। अस्योपदेशाभावेन तदप्राप्तेः।

वि० (३) प्रत्ययत्वाभावेन आर्धधातुकत्वाभावादित्यर्थः॥

प्र० (४) अङ्गाधिकारीयकार्याणामङ्गसंज्ञानिमित्तभूतप्रत्ययनिमित्तकत्वादित्यर्थः।

स्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यात् । प्रस्तुत्येति वृत्तिकारोक्तं तदुदाहरणमपि मन्दम् । (१)क्त्वामात्रस्यानव्ययत्वात्, क्त्वेन सिद्धत्वाच्चेत्याशयेनाह—

शब्दरत्न ।

निवर्त्त्वोपयोगः । न च तेषां प्रत्ययत्वे च्लिविधानं व्यर्थम् । "मन्त्रे घस"–( पा० सू० २।४।८० ) इति सूत्रे चङ्ङ्सिचामिति त्रयाणां ग्रहणे गौरवापत्तेः । सिचो लुकि तद्विषये "आदिः सिच—" ( पा० सू० ६।१।१८७ ) इति स्वरापत्तेश्चेति भाष्यकैयटयोः स्पष्टमित्यरुचेराह–चेति । तेना(२)ग्रहीदित्यादाविडादेशस्य ईटोऽसङ्ग्रह इत्यर्थः । इदमुपलक्षणम् । अव्ययस्य पदात्पृथग्ग्रहणवैयर्थ्यमपि दोष इति बोद्धयम् । अव्ययस्येति । अत्र त्वस्यैव दोषत्वमिति भावः । नन्वव्ययस्याङ्गत्वे फलाभावेन प्रत्ययस्य लुका लुप्तत्वेन च तदप्राप्त्या कथं तेनाव्ययसङ्ग्रहोऽत आह—पदेति । तत्वं(३) च ततः परस्य निघातार्थमावश्यकं प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः । सिद्धत्वाच्चेति । अत

ज्योत्स्ना ।

( पा० सू० ८।२।२८ ) इति सिज्लोपसिद्धिरिति भावः । लुका लुप्ते इति । अत्रायमाशयः—"न लुमताङ्गस्य" इतिसूत्रे 'न लुमता तस्मिन्' इति न्यासो वार्तिककृता लुमति प्रतिषेधे तन्निमित्तग्रहणमित्यनेन बोधितः । लुमता लुप्तो यः प्रत्ययस्तस्मिन् परे यत् पूर्वं तदुद्देश्यकं यत्कार्यं तत्र कर्तव्ये प्रत्ययलक्षणन्नेति तदर्थः । एवञ्च वार्तिकैकवाक्यतापन्नतया सूत्रकृन्मतेऽपि फलाभेदाय लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्, परंपरया चावच्छिन्ना या उद्देश्यता तादृशोद्देश्यताके कार्ये प्रत्ययलक्षणं न भवतीति "न लुमताङ्गस्य" इत्यर्थः स्वीक्रियते । तेन राजपुरुषादौ भसंज्ञा परमत्रिपुत्र इत्यादौ त्र्यादेशश्च न भवति । साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वनिवेशात् उरक्रामेत्यादौ न दोषः । न च पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलं पञ्चक्रोष्टृ इत्यस्य सिद्धये लब्धाङ्गसंज्ञकत्वनिवेशस्याप्यावश्यकत्वम् । अङ्गस्य क्रोष्टुः तृज्वत्वमिति सूत्रार्थात् । तत्र हि–तद्धितार्थेति समासे ठको लुकि लुक्तद्धितेति स्त्रीप्रत्ययस्यापि लुकि सोर्लुकि कृतेऽपि तृज्वद्भावस्य सिद्धिः । स्पष्टं चेदं "युवोरनाकौ" इत्यत्र भाष्यकैयटयोरिति वाच्यम् । तस्य ग्रन्थस्य "न लुमता" इत्यनित्यत्वाभिप्रायकत्वात् । अत एव प्रियतिसृ कुलमिति प्रयोगोपपत्तिरिति दिक् ।

वि० ( १ ) अव्ययसंज्ञा क्त्वान्तस्य, आदेशस्तु क्त्वामात्रस्येति वैषम्यमिति भावः ॥

प्र० ( २) तेन "इट ईटि" ( पा० सू० ८।२।२८ ) इति सलोपसिद्धिरिति भावः ।

वि० ( ३ ) पदत्वञ्चेत्यर्थः । अव्ययात् प्रातरस्तीत्यादौ "तिङ्ङतिङ" इति निघातफलसत्वात्तदभावो नेति भावः ॥

आदेश इति। अनल्विधाविति किम्? तेन, तस्मात्, तस्य, तस्मिंश्च विधौ मा भूत्। तत्र अला विधौ यथा—व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य "अड्व्यवाये" (पा० सू० ८।४।२) इति णत्वं प्राप्तम्। अलः परस्य। द्यौः पन्थाः। हल्ङ्यादिलोपो न। अलो विधौ। द्युका-

शब्दरत्न।

एवात्र तुक्। न च "सर्वे सर्वपदादेशा" इति न्यायेन प्रस्तुत्वा इत्यस्य स्थाने प्रस्तुत्य इत्यादेशे तस्याव्ययत्वसिद्धिरिति वृत्त्याशय इति वाच्यम्। अर्थवत्येव स्थानिवत्त्वमिति तात्पर्येण क्त्वोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावादिति दिक्। अनल्विधाविति किमिति। विधिग्रहणविशिष्टं किमर्थमिति प्रश्नः। णत्वं प्राप्तमिति। न च सकारे स्वतोऽड्भिन्नत्वसत्वादण्भिन्नव्यवाये नेति निषेधात्कथं णत्वप्राप्तिरिति वाच्यम्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्(१)। इदं चासिद्धवत्सूत्रे कैयटे(२) स्पष्टम्। द्युकाम इति। यद्यपि वत्वं हल्त्वाद्यपेक्षया विशे(३)षधर्मस्तथाप्येतद्वाक्योपप्लुते वकारवदुकार इति वाक्ये उपात्त-

ज्योत्स्ना।

अतिदिश्यमानधर्मविरुद्धेति। अत्र विरुद्धत्वञ्च तदभाववत्तानिश्चयमुद्रया ग्राह्यम्। नतु तदभावव्याप्यवत्तानिश्चयमुद्रया। अन्यथा अधुः इत्यत्र "विभाषा घ्राधेट्" इति लुगर्थमतिदिश्यमानं घेट्त्वं तदभावव्याप्यं यत्स्वाश्रयमादन्तत्वं तत्प्रयुक्तः "आतः" इति जुस् न स्यात्। प्रकृते तु तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन अड्भेदवत्ताबुद्धिं प्रति अतिदेशशास्त्रकृतस्याड्भेदाभावरूपाट्त्वप्रकारकनिश्चयस्य प्रतिबन्धकत्वाद्भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वनियमादित्याहुः।

कैयटे स्पष्टमिति। तत्र हि जहि इत्यत्र जादेशस्याभीयासिद्धत्वेन जादेशनिमित्तक "अतो हेः" (पा०सू०६।४।१०५) इति लुग् न भवति। तथा शाधीत्यत्र शादेशस्यासिद्धत्वात्स्थानिगतझलन्तत्वात्तन्निमित्तकः "हुझल्भ्यो हेर्धिः" (पा० सू० ६।४।१०१) इति ध्यादेश इत्युक्तम्। विशेषधर्म इति। 'सामान्यातिदेशे विशेषानतिदेशः' इत्यनेन

---

प्र० (१) तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेनाड्भेदवत्ताबुद्धिं प्रत्यतिदेशशास्त्रकृतस्याड्भेदाभावारूपाट्त्वप्रकारकनिश्चयस्य प्रतिबन्धकत्वात्, भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वनियमादिति ध्येयम्॥

प्र० (२) तत्र हि "जहि" इत्यत्र जादेशस्याभीयासिद्धत्वेन जादेशनिमित्तकः "अतो हेः" (पा० सू० ६।४।१०५) इति लुग् न। तथा 'शाधि' इत्यत्र शादेशस्याऽसिद्धत्वात्स्थानिगतझलन्तत्वनिमित्तकः "हुझल्भ्यः" (पा० सू० ६।४।१०१) इतिध्यादेश इत्युक्तम्।

प्र० (३) "सामान्यातिदेशे विशेषानतिदेशः" इत्यनेन सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्मस्यैवातिदेश इतिनियमात्।

मः । वलि लोपो न । अलि विधौ । यजेः क्तः । क इष्टः । "हृशि च" ( पा० सू० ६।१।११४ ) इत्युत्वं न । अल् चेह (१)स्थान्यवयव एव गृह्यते

शब्दरत्न ।

धर्मापेक्षया न तस्य तत्त्वम् । सूत्रस्थत्वस्यान्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः ॥

क इष्ट इति । यद्यपीदं रूपमुत्वे गुणेऽवादेशे च पाक्षिकलोपेन सिध्यति, तथापि पक्षे कविष्ट इति स्यात्; कयिष्ट इति चेष्यते इति भावः । स्थान्यवयव एवेति । उपलक्षणमेत-

ज्योत्स्ना ।

साहश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्मस्यैवातिदेश इति नियमात् ।

स्थान्यवयव इति । स्थान्यवयवाल्वृत्ति-अल्मात्रवृत्ति-धर्मघटितधर्मनिमित्तके विधौ स्थानिवन्न भवति । यथा प्रपठ्येत्यत्र, स्थानी त्वा तदवयवो ऽल् तकारः तद्वृत्तिर्धर्मो वल्त्वरूपः स चाल्मात्रवृत्तिः तद्घटितधर्मो वलाद्यार्धधातुकत्वरूपस्तन्निमित्तकविधिरिड्विधिस्तत्र कर्तव्ये स्थानिवन्न भवति । रामायेत्यादौ "अनल्विधौ" इति निषेधवारणाय स्थान्यवयवाल्वृत्तीति । अन्यथा "सुपि च" इति सूत्रस्य यञादिसुप्त्वरूपताहशधर्मनिमित्तकत्वेन स्थानिवत्वनिषेधः स्यात् । तन्निवेशे तु यञ्त्वस्य स्थान्यवयवाल्वृत्तित्वाभावान्न दोषः । रामायेत्यत्रैव दोषवारणाय अल्मात्रवृत्तीति । अन्यथा यञादिसुप्त्वस्य स्थान्यवयवाल्वृत्तिसुप्त्वघटितत्वेन तन्निमित्तकदीर्घे तन्निषेधः स्यात् । अल्मात्रवृत्तिनिवेशे तु न दोषः । सुप्त्वस्याल्मात्रवृत्तीतरभ्यामादावपि सत्वात् ।

न च स्थान्यवयवाल्मात्रवृत्तिनिवेशेनैव उक्तदोषवारणे स्थान्यवयवाल्वृत्ति अल्मात्रवृत्ति इत्युभयनिवेशो न युक्त इति वाच्यम् । असम्भवापत्तेः । प्रपठ्येत्यादौ निषेधोपपत्तये घटितत्वनिवेशः । नचोक्तार्थस्वीकारे बभूविथ इत्यादौ "अनल्विधौ" इति निषेधापत्तिः । स्थान्यवयवाल्वृत्ति-अल्मात्रवृत्ति-आदेशघटकाल्वृत्ति-इत्यर्थस्वीकारेण दोषाभावात् । आदेशघटकथकारे वलाद्यार्धधातुकत्वस्य सत्वेन उक्तार्थस्याप्रवृत्तौ दोषाभावः । नच बभूवतुरित्यत्र स्थानिवत्वेन वलाद्यार्धधातुकत्वमादाय इट् स्यात्, वल्त्वस्य आदेशघटकाल्तकारादिवृत्तित्वेनानल्विधावितिनिषेधाप्राप्तेरिति वाच्यम्, आदेशघटकाल्वृत्तीत्यस्य स्थाने आदेशाद्यल्वृत्तित्वनिवेशेनोक्तदोषस्य सुपरिहारत्वात् । न च भवति यत् कुलम् त-

प्र० ( १ ) तथा च स्थान्यवयवाल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं नेत्यर्थः । नन्वेवं रामायेत्यत्र दीर्घस्यापि स्थान्यल्वृत्तिसुप्त्वनिमित्तकत्वात्तत्र कर्तव्ये स्थानिवत्त्वनिषेधः स्यादिति चेन्न । स्थान्यवयवाल्वृत्तिर्योऽल्मात्रवृत्तिर्धर्मस्तन्निमित्तकेत्यादेर्विवक्षितत्वात् । सुप्त्वस्य चाल्समुदायेऽपि वृत्तित्वेनाल्मात्रवृत्तित्वाभावेनादोषात् ।

तेन (१)रामायेत्यादौ "सुपि च" (पा० सू ७।३।१०२) इति दीर्घः सिद्धः। तद्विधौ हि यञादित्वमाश्रितं यञ्चादेशावयवो न तु स्थान्यवयव इति

शब्दरत्न।

तस्या(२)निरूपोऽपीति बोद्धव्यम्। अत एव "आदेशिन्यल्याश्रीयमाणे प्रतिषेध" इति भाष्ये उक्तम्। न तु स्थान्यवयव इति। अतः प्रत्ययत्वं स्थानिवत्त्वेन भवत्येवेति भावः।

ज्योत्स्ना।

दृभु तस्य पुनःशब्देन समासे पुनर्भूशब्दात् आमि नुटि णत्वस्यासिद्धत्वाद्दीर्घं एकाजुत्तरपदत्वाभावेन "एकाजुत्तरपदे" इति णत्वन्न स्यात्। स्थानिवत्त्वेनैकाजुत्तर-पदत्वमानेतुमशक्यम्। भु इत्यस्य स्थाने भूइत्यादेश इत्यानुमानिकस्थान्यादेशभाव-स्वीकारेऽपि 'अनल्विधौ' इति निषेध इति वाच्यम्। आदेशालवृत्तीत्यत्र आदेशपदेन श्रौतस्थान्यादेशग्रहणेनादोषात्। न च कः भूरित्यादौ हलन्तत्वातिदेशात् "हल्ङ्या-भ्यः" इति सुलोपापत्तिरिति वाच्यम्। अतिदिदिक्षितो यो ऽल्मात्रवृत्तिधर्मघटित-धर्मस्तन्निमित्तके विधौ न स्थानिवदित्यर्थेनादोषात्। अतिदिदिक्षितत्वञ्च अति-देष्टव्यत्वेनेच्छाविषयत्वम्। इच्छायाश्च सिद्धिप्रतिबध्यत्वेनातिदेशसिद्धिसाहित्यमपे-क्षितम्। तच्चादेशे ऽतिदेष्टव्यासान्निध्ये भवतीत्यर्थादेतल्लब्धं भवतीति आदेशा-वृत्तित्वमिति। न चातिदिदिक्षितत्वनिवेशेऽनुबन्धकार्ये कर्तव्येऽनल्विधाविति निषेधो न प्रवर्तत इतिवचनमपि स्वीकार्यमिति गौरवम्। स्थान्यवयवाल्वृत्तित्व-वादिनो मम तु अनुबन्धस्य स्थान्यवयवत्वाभावेन तद्वचनाकरणे लाघवमिति

वि० (१) विधिग्रहणादनेकविभक्त्यन्तेन समास इति भावः।

प्र० (२) तथा च स्थानिरूपाल्वृत्तिधर्मनिमित्तककार्ये स्थानिवन्नेत्यर्थः। ननु रामायेत्यादौ दीर्घस्यापि यादेशस्थानिभूतैकाररूपाल्वृत्तिसुप्त्वनिमित्तकत्वात्तत्राप्यनेन निषेधः स्यादिति चेन्न। अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तककार्ये न स्थानिवदित्यर्थाभ्युपगमेनाऽदोषात्। स्थानषष्ठीप्रकृत्यर्थतावच्छेदकधर्मस्य स्थानितावच्छेदकत्वनियमात् "ङेर्यः" इत्यत्र ङेत्वं स्थानितावच्छेदकं तच्च नाल्त्वव्याप्यो धर्म इति तत्समानाधिकरणसुप्त्वस्य स्थानिवत्त्वेन लाभः स्यादेव। अत्र च मानं "भोभगो" (पा० सू० ८।३।१७) इति सूत्रस्थं भाष्यम्। तत्र हि "अग्र-हणं किं छन्दःसु पयःसु। किं पुनः कारणं सुपर एवोदाह्रियते, न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति। अस्त्यत्र विशेषः—विसर्जनीये कृते न भविष्यति, इहापि तर्हि विसर्जनीये कृते न भविष्यति छन्दःसु पयःसु इति। स्थानिवाद्भवात्प्राप्नोति। ननु चेहापि स्थानिवद्भावात्प्राप्नोति वृक्षस्तत्र प्लक्षस्तत्रेति। अनल्विधौ स्थानिवद्भाव इति। तत्फलं तु परश्वो यश्वः, तस्यापत्यं याश्विः। अत्राल्त्वव्याप्येत्व-रूपधर्मावच्छिन्नस्थानिताधिकरणवृत्तिपदान्तत्वस्य यकारालाभात् "नय्वाभ्याम्" (पा०सू० ७।३।३) इति वृद्धिनिषेधैजागमौ न स्त इति दिक्।

शब्दरत्न ।

अग्रहीदित्यादौ "ग्रहोऽलिटि" (पा० सू० ७।२।३७) इत्यनेनेट एव दीर्घविधानान्ना-

ज्योत्स्ना ।

वाच्यम् । को, भु बभूवतुरित्यादौ दोषवारणाय अल्मात्रवृत्तिधर्मघटितधर्मे आदेशावृत्तित्वनिवेशस्यावश्यकत्वेन स्थान्यवयवाल्वृत्तित्वस्य वैयर्थ्यप्रयुक्तोक्तवचनस्य तव गले पतितत्वात् । एवञ्च अतिदिदिक्षितत्वनिवेश एव युक्त इति प्राचीनमतम् ।

केचित्तु—अतिदिदिक्षिताल्मात्रवृत्तिधर्मघटितधर्मे इत्यादौ घटितत्वं निवेशनीयम् । अत्रैव "नल्यपि" इति सूत्रं तात्पर्यग्राहकमित्याहुः ।

यद्वा—अल्मात्रवृत्तिधर्मे इत्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकेतरत्वं निवेशनीयमिति दिक् ।

नव्यास्तु—ननूक्तार्थस्वीकारे धिन्वन्तीत्यत्रातिदिदिक्षितधर्मस्यार्धधातुकत्वस्य अल्मात्रवृत्तिधर्मघटितत्वाभावेनानल्विधाविति निषेधाप्राप्तौ स्थानिवत्वेनार्धधातुकत्वमादाय इडागमापत्तिः । किञ्च "भो भगो" इति सूत्रस्थभाष्यविरोधोऽपि । तत्र हि—अश्ग्रहणाभावे वृक्षस्तत्र प्लक्षस्तत्र इति प्रत्युदाहृत्य सिद्धत्वाद्विसर्गे कृते दोषाभावमाशङ्क्य पुनः स्थानिवत्वेन रुत्वमादाय यत्वमापाद्य अनल्विधाविति निषेधेन समाहितम् । रुत्वस्याल्मात्रवृत्तित्वाभावेन निषेधाप्राप्तेः । अतः "स्थानिन्यल्याश्रीयमाणे प्रतिषेध" इति वर्तिकारम्भात् स्थानिरूपाल्वृत्तिधर्मनिमित्तके कार्ये न स्थानिवदित्यर्थो ऽपि स्वीकार्यः । स्थानिरूपोऽल् उकारः तद्वृत्तिर्यो धर्मः आर्धधातुकत्वं तन्निमित्तके विधौ न स्थानिवदिति धिन्वन्तीत्यत्र न दोषः ।

ननु रामायेत्यादौ "सुपि च" इति दीर्घस्यापि,यादेशस्थानिभूतैकाररूपाल्वृत्तिसुप्त्वनिमित्तकत्वात्तत्राप्यनेन निषेधः स्यादिति चेन्न । स्थानिशब्दस्य सम्बन्धिशब्दत्वेनाक्षेपादादेशलाभे सिद्धे आदेशपदोपादानं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वलाभार्थमित्यदोषात् । तथाच-अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये न स्थानिवदित्यर्थः पर्यवस्यति । स्थानषष्ठीप्रकृत्यर्थतावच्छेदकधर्मस्य स्थानितावच्छेदकत्वनियमात् "ङेर्यः" इत्यत्र ङेत्वं स्थानितावच्छेदकं तच्च नाल्त्वव्याप्यो धर्म इति तत्समानाधिकरणसुप्त्वस्य स्थानिवत्वेन लाभः स्यादेवेति रामायेत्यादौ दोषाभावात् । अत्र मानम् "भोभगो" इति सूत्रस्थं भाष्यम् । तत्र हि—"अश्ग्रहणं किम् ? छन्दःसु पयस्सु, किं पुनः कारणं सुपर एवोदाहियते न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति । अस्त्यत्र विशेषः, विसर्जनीये कृते न भविष्यति, । इहापि तर्हि विसर्जनीये कृते न भविष्यति छन्दस्सु पयस्सु इति, स्थानिवद्भावात्प्राप्नोति, इहापि तर्हि स्थानिवद्भावात्प्राप्नोति वृक्षस्तत्र प्लक्षस्तत्रेति, "अनल्विधौ" स्थानिवद्भावः" इत्युक्तम् । तत्फलम् एरश्वः यश्वः तस्यापत्यं याश्विः । अल्त्वव्याप्येकत्वरूपध-

शब्दरत्न।

ल्त्वेन तस्य स्थानितेति तद्वृत्तीट्त्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम्।

ज्योत्स्ना।

र्मावच्छिन्नस्थानितासमानाधिकरणवृत्तिपदान्तत्वस्य यकारेऽलाभात् "न य्वाभ्याम्" इति वृद्धिनिषेधैजागमौ न स्त इति बोध्यम्।

नन्वेवमपि वाक्यसंस्कारपक्षे राम ए इत्यत्र अल्त्वव्याप्यं धर्मः एत्वं तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं तन्निमित्तको विधिर्यादेशविधिरिति पुनरप्यनल्विधाविति निषेध इति चेन्न। अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके विधौ न स्थानिवदित्यर्थेन एत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य यादेशे ऽभावेनादोषात्। नन्वेवमपि "हल्ङ्याब्" इति सूत्रभाष्यविरोधः। "ङ्याब्ग्रहणे ऽदीर्घः" इति वार्तिकविरोधः। हल्ङ्यादिसूत्रीयदीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधः। "कृन्मेजन्तः" इतिसूत्रस्थभाष्यविरोधः। "ग्रहो ऽलिटि" इतिसूत्रस्थभाष्यविरोधश्चेति दूषणगणपातः। तथाहि—अतिखट्वः निष्कौशाम्बिरित्यादौ "गोस्त्रियोः" इतिसूत्रे "अचः" इति परिभाषोपस्थित्या अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य आरोपो; ह्रस्वः आप्त्ववान् ङीपत्वान् इत्याकारकः तत्प्रकारीभूतङीप्त्वआप्त्वनिमित्तकत्वाद्धल्ङ्यादिलोपस्य तत्र कर्तव्ये स्थानिवत्वनिषेधस्य सिद्धत्वाद्दीर्घग्रहणस्य "ङ्याब्ग्रहणेऽदीर्घः" इतिवार्तिकस्य ङी ई आ आप् इतिप्रश्लेषस्य चोपयोगाभावात्। एवम् आधये चिकीर्षवे नगरकारेभ्य कुम्भकारेभ्य "घेर्ङिति" "बहुवचने झल्येत्" इत्यत्र "अलोऽन्त्यस्य" इत्युपस्थित्या स्वस्यापि स्वव्याप्यत्वमिति नियमात्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयगुणौकारधर्मिकारोपप्रकारीभूतकृत्वनिमित्तकत्वेन अव्ययसंज्ञाया अनल्विधाविति निषेधेन "अनिकारोकारप्रकृतिरिति वा"इतिवार्तिकस्य सन्निपातपरिभाषया।तत्प्रत्याख्यानस्य।चासङ्गत्यापत्तिः। एवमग्रहीदित्यत्र "ग्रहोऽलिटि"इत्यत्र "अचः" इत्युपस्थित्या अल्त्वव्याप्याच्त्वधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतेट्निमित्तकत्वेन "इट ईटि" इतिसलोपे कर्तव्ये स्थानिवत्वाप्रवृत्यास्थानित्वेन तत्र लोपकल्पनस्यासंगत्यापत्तेरिति चेन्मैवम्। अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारिभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके कार्ये कर्तव्ये न स्थानिवदित्यर्थेन हल्ङ्यादिलोपे आप्त्वङीप्त्वयोरव्ययसंज्ञायां कृत्वस्य सलोपे इट्त्वस्य चोद्देश्यतायाः साक्षादनवच्छेदकत्वेन तेषाञ्चाल्त्वव्याप्यत्वाभावेनादोषादिति।

न चैवमपि स्थानितायाम् अल्त्वव्याप्यधर्मावच्छिन्नत्वनिवेशे रामायेत्यादावेकारनिष्ठाल्त्वव्याप्यस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतसुत्वेन "सुपि च" इति दीर्घीयोद्देश्यतायाः साक्षादनवच्छिन्नत्वादिति वाच्यम्। रमायामित्यादौ

तदेतत्सकलमभिप्रेत्याह—न तु स्थान्यलाश्रय इति। आश्रयणं चेह (१)यथा-

शब्दरत्न ।

यथा कथं चिदिति । (२)व्याख्यानादिति भावः ॥

ज्योत्स्ना ।

याडर्थं तन्निवेशस्यावश्यकत्वात् । तथाहि—ङकाररूपाल्निष्ठस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतङिद्वचनत्वेन "याडापः" इतिशास्त्रीयोद्देश्यतायाः साक्षादवच्छिन्नत्वात्। न चैवमपि दाम्नी इत्यादौ द्विवचनत्वातिदेशो न स्यात् । "औङः आपः" इत्यादौ औङित्यौकारविभक्तेः संज्ञात्वेन अल्त्वव्याप्यो य औत्वरूपो धर्मः तद्धर्मावच्छिन्ना या औकारनिष्ठा स्थानिता तादृशस्थानितानिरूपिता या ईकारनिष्ठा आदेशता ।तादृशादेशताश्रयधर्मिको य आरोपः; ईकारो द्विवचनत्ववानित्याकारकः; तादृशारोपप्रकारीभूतो यो द्विवचनत्वरूपो धर्मः; तद्धर्मेण साक्षादवच्छिन्ना या "ईदुदेद्द्विवचनं प्रगृह्यम्"इतिशास्त्रीयोद्देश्यता तदुद्देश्यताके विधौ स्थानिवत्वस्य निषिद्धत्वादिति वाच्यम् । अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्ना या स्थानिता तादृशस्थानितानिरूपितादेशताश्रयप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ न स्थानिवदिति "अनल्विधौ" इत्यस्यार्थेन "औङ आपः" इत्यत्र "तस्मात्" इतिपरिभाषोपस्थाप्यं विशेष्यम् औङ इति विशेषणमिति स्वीकारेण अल्त्वव्याप्यौत्वधर्मेण "औङ ,आप" इतिशास्त्रीयस्थानितायाः साक्षादनवच्छिन्नत्वादिति दिक् ।

केचित्तु—अल्पर्यासस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ स्थानिवन्नेत्येवार्थः स्वीक्रियते। न चैवं रमायां ,सर्वस्यामित्यादौ याट्स्याटौ न स्याताम्। अनुबन्धविनिर्मुक्तपदार्थोपस्थितिरिति सिद्धान्तेन स्थानिताया अल्पर्यासत्वादिति वाच्यम् । बोधकावयवेष्वनुबन्धेषु बोध्यावयवत्वमारोप्यत इति 'एकान्ता अनुबन्धा' इत्यस्यार्थे तात्पर्येण प्रकृते च ङकारैकारोभयपर्यासत्वेन स्थानिताया अल्पर्यासत्वाभावात् ।

न चैवं साम्नी लोम्नीत्यादौ दोषो दुर्वारः, अल्पर्यासत्वसत्वादिति वाच्यम्। संज्ञाविधावित्यस्याः परिभाषाया अनित्यत्वेन "ईदूदेत्"इत्यस्य ईदूदेदन्तं यद्द्विवचनं तदन्तं यत् तदादि तत् प्रगृह्यमित्यर्थेन साम्नीत्यादौ स्थानिताया अल्पर्यासत्वेऽपि तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञीयोद्देश्य-

वि० (१) विधिग्रहणं हि सकलविधिसंग्रहाय; अन्यथा अनल इत्युक्तावप्यनुवादे स्थानषष्ठ्यभावात् सम्बन्धसामान्यषष्ठ्या सकलविभक्त्यर्थलाभसम्भवात् ।

वि० (२) अनलिति शब्दसंस्कारार्थं प्रथमोपादेयात्तत्तलक्ष्योपपत्त्यर्थञ्च विधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्तव्येतिरीत्येष्टसिद्धौ विधिशब्दोपादानरूपादधिकायत्नादित्यर्थः ॥

कथञ्चिन्न तु (१)प्राधान्येनैवेत्याग्रहः । तेन प्रपठ्येत्यत्र वलादिलक्षण इण् न । तन्निषेधादिति । स्थानिवत्त्वनिषेधादित्यर्थः ॥

"अचः" ( पा० सू० १।१।५७ ) । अल्विध्यर्थमिति । तेन(२)वव्रश्चे-त्यत्र वस्य सम्प्रसारणं न । उरदत्वस्य स्थानिवत्त्वेन सम्प्रसारणतया "न सम्प्रसारण—" ( पा० सू० ६।१।३७ ) इति निषेधात् । न चोरदत्वं परनि-मित्तं नेति वाच्यम् । अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात् 'प्रागभ्यासविकारे-भ्योऽङ्गाधिकारः' इति पक्षं दूषयित्वा 'आसप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात् । किं च पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते(३) नत्वादेशप्रयु-क्तं वार्यते । नायकः, पावक इत्यादौ "एचोऽयवायावः" (पा० सू० ६।१।७८)

शब्दरत्न ।

दूषयित्वेति । "अङ्गस्य" ( पा० सू० ६।४।१ ) इति सूत्रे भाष्ये इति शेषः । एत-

ज्योत्स्ना ।

तायाः साक्षादनवच्छेदकत्वात् । एवं च स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वनिवेशो विफल इत्यपि वदन्ति ।

व्याख्यानादिति । अनल् इति शब्दसंस्कारार्थे तत्तल्लक्ष्यसिद्ध्यर्थं च प्रथमगृही-ताद्विधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्तव्येतिरीत्या इष्टसिद्धौ विधिशब्दरूपाधिकप्रयत्नादित्यर्थः ।

---

प्र० ( १ ) एवं च उक्तधर्मनिमित्तके कार्ये कर्त्तव्ये न स्थानिवदित्यर्थः। नचैवं बभूविथेत्यत्रेडा-गमस्य वलादित्वनिमित्तकत्वाद्वलादित्वस्य चाल्मात्रवृत्तिधर्मघटितधर्मत्वात्तन्निमित्तकेऽडागमे कर्त्तव्ये आर्धधातुकत्वमपि स्थानिवत्त्वेन न लभ्यत इति वाच्यम् । तादृशधर्मघटितधर्मे अतिदिदिक्षितेतिवि-शेषणदानेनादोषात् । अतिदिदिक्षितत्वं च—अतिदेष्टव्यत्वेनेच्छाविषयत्वम् । इच्छायाश्च सिद्धिप्रतिब-ध्यत्वेनातिदेशसिद्धिराहित्यमपेक्षितम् । तच्चादेशेऽतिदेष्टव्याऽसान्निध्ये भवतीत्यर्थादेतल्लब्धं भवति— आदेशावृत्तित्वमिति । एवं च प्रकृते आर्धधातुकत्वस्यातिदिदिक्षितत्वेऽप्यल्मात्रवृत्तिधर्मघटितधर्मत्वं नास्ति। वलादित्वस्य च यथोक्तधर्मघटितधर्मत्वेऽप्यतिदिदिक्षितत्वं नास्तीत्यदोष इति दिक् ।

वि० ( २ ) व्रश्चधातोः "लिट्यभ्यासस्योभयेषाम्" इति रेफस्य सम्प्रसारणम् । तत्सूत्रे उभयेषां ग्रहणेन सम्प्रसारणस्य बलीयस्त्वज्ञापनात् हलादिः शेषस्य प्रथममप्रवृत्तिः । ततो वस्य सम्प्रसारणं तन्निषेधं च बाधित्वा परत्वान्नित्यत्वाच्च "उरत्" इत्यभ्यासऋकारस्याकारः, हलादिः शेष इति भावः ।

वि० ( ३ ) यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्युक्ते ब्राह्मणाश्रयं कार्यं प्राप्यते न स्वाश्रयं व्यावर्त्यते, तथेहापीतिभावः ॥

इत्यादीनामप्रवृत्तिप्रसङ्गात् । अनेन तु वार्यते । शब्दाधिकारमाश्रित्य भावा-

शब्दरत्न ।

दसिद्ध्यैव दूषयित्वेत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्यः । अनेन तु वार्यत इति । स्थानिनि सात यद्भवति तदादेशेऽपि भवति तत्र सति यन्न भवति तदादेशे ऽपि न भवती(१) त्यर्थात् । आजादेशो(२)ऽच्कार्यं लभते न लभते चेति वाच्योऽर्थः, तत्रोपपत्तिमाह— शब्देति । पूर्वसूत्रे स्थानिवत्पदस्य तद्वत्कार्यं लभत इत्येतन्मात्रार्थकस्येहोभयार्थकत्वा-

ज्योत्स्ना ।

इत्यर्थादिति । नन्वेवमर्थस्वीकारे देवयतेः क्विपि णिलोपे च कृते "च्छ्वोः शूट्" इति ऊठि कृते एकारस्यायादेशो न स्यात् । णिचि सति अभवतस्तस्यादेशेऽप्यभावातिदेशादिति चेन्न । आदेशे स्थानिवृत्तिधर्मसम्भावनायां यत् कार्यं प्राप्नोति तद्भवति यन्न प्राप्नोति तन्न भवतीत्यर्थेनादोषात् । अत्रार्थे मानम्प्रकृतसूत्रस्थभाष्यम् । तथाहि—परस्मिन्निति किम् ? युवजानिः, नैतदस्ति प्रयोजनं । न्यादेशघटकं नकारमादाय लोपो भविष्यतीति । तथा च—प्रकृते द्यूरित्यादौ णिलोपे णित्वसम्भावनायामपि क्विब्निमित्तकोठो जातत्वेन तन्निमित्तकायादेशस्य प्राप्तिसत्वेन तद्भवने

प्र० ( १ ) नन्वेवमर्थस्वीकारे देवयतेः क्विपि णिलोपे च कृते "च्छ्वोः–" (पा० सू० ६।४।१९) इत्यूठि एकारस्यायादेशो न स्यात् । णिचि सत्यभवतस्तस्य णिलोपेऽप्यभावादिदेशप्रसङ्गादिति चेन्न । "आदेशे स्थानिवृत्तिधर्मसम्भावनायां यत् कार्यं प्राप्नोति तद् भवति यन्न प्राप्नोति तन्न भवति" इत्यर्थेनादोषात् । तथाहि—णिलोपे णित्वसम्भावनायामपि क्विब्निमित्तकोठो जातत्वेन तन्निमित्तकायादेशस्य प्राप्तिसत्त्वेन तद्भवने प्रतिबन्धकाभावात् । नचैवमपि एषो गमयतीत्यत्रेण्स्थानिकगमादेशे इण्त्वसम्भावनायामपि गमादेशावयवगकारे वर्त्तमानस्य हल्त्वस्यानपायाद् गकारनिमित्तकः "एतत्तदोः" ( पा० सू० ६।१।१३२ ) इति सुलोपः स्यादेवेति चेद् न । आदेशो न जातस्तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनायां यत् कार्यं प्राप्नोति तद्भवति यन्न प्राप्नोति तन्न भवतीत्यर्थस्वीकारेणादोषात् । तथा च इण्धातोर्गमादेशो न जातस्तत्कृतेकारनिवृत्तिर्न जातेति सम्भावनायां हल्परकत्वाभावात्सुलोपप्राप्त्यभावेन गमादेशे कृतेऽपि तदभावातिदेशात् ॥

वि० ( २ ) अच एव आदेश इत्यर्थः । अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताक आदेश इत्यर्थः । अच्त्वप्रतियोगिका या पर्याप्तिस्तदीया या अनुयोगिता तदवच्छेदको यो धर्मस्स एव स्थानिताप्रतियोगिका या पर्याप्तिस्तदीयानुयोगितावच्छेदकोऽप्यपेक्षित इति यथा–निगाल्यते कथयति इत्यादौ अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्म इकारवृत्तितद्व्यक्तित्वम्, अकारवृत्तितद्व्यक्तित्वञ्च, तदेव णिलोपाल्लोपीयस्थानितापर्याप्त्यनुयोगितावच्छेदकमिति लक्षणसमन्वयः । तेन णिलोपादेरनेन स्थानिवत्वमचीकमत् याज्यते वाप्यते इत्यादौ मरुतमाचष्टे मारयति इत्यादौ च वृद्धिः सिध्यति । अत एव चङ्परणिह्रासे ण्यन्तात् णिचि च अवीवदत् इत्यादिसिध्यर्थो निषेधः सार्थक इति दिक् ॥

भावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात्। "न पदान्त" (पा० सू० १।१।५८ इति सूत्रे(१) यलोपदीर्घादिग्रहणं चेह लिङ्गम्। अत एव गणयतीत्यादौ न वृद्धिः। स्थानिनि सत्यभवन्त्यास्तस्या आदेशे ऽप्यभावातिदेशात्। उक्तं च "काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति" इति। स्यादेतत्। पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम्। सन्निहितं चेह त्रयं स्थानी, आदेशो, निमित्तं च। तत्र न तावत्स्थानी अवधिस्तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, वैयाकरण इत्यत्र ऐकारस्यायादेशापत्ते-

शब्दरत्न।

त्तदाश्रयणमिति भावः। यलोपदीर्घादीति। यलोपदीर्घावादी येषामित्यर्थः। यलोपादयो दीर्घादयश्चेति यावत्। तेन स्वरादीनामपि सङ्ग्रहः। यलोपादीत्येव सिद्धे एवमुक्तिर्वैचित्र्याय। न हि यलोपादिविषये भावातिदेशप्रसक्तिरिति भावः। न वृद्धिरिति। "अत उपधायाः" (पा० सू० ७।२।११६) इति वृद्धिर्नेत्यर्थः। "क्ङिलुगुपधात्व"—(वा०) इति निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव नान्यत्रेति(२) भाष्ये स्पष्टम्। अयादे-

ज्योत्स्ना।

प्रतिबन्धकाभावात्। नचैवमपि एषो गमयतीत्यत्र इणूस्थानिकगमादेशे इणूत्वसम्भावनायामपि गमादेशावयवगकारे विद्यमानहल्त्वानपायाद्गकारनिमित्तकः "एतत्तदोः" इति सुलोपः स्यादेवेति वाच्यम्। आदेशो न जातः तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनायां यत्कार्यं प्राप्नोति तद्भवति यन्न प्राप्नोति तन्न भवतीत्यर्थस्वीकारेणादोषात्। तथा च—इण्धातोर्गमादेशो न जातः तत्कृतेकारनिवृत्तिरपि न जाता इतिसम्भावनायां हल्परकत्वाभावात्सुलोपप्राप्त्यभावेन गमादेशे कृतेऽपि तदभावातिदेशात्।

परे तु—आदेशे स्थानिवृत्तिधर्मसम्भावनायां यद्भवति तद्भवति यन्न भवति तन्न भवतीत्येवार्थः। अत एव परस्मिन्निति किम्? युवजानिरिति भाष्यं तत्फलखण्डनपरं सङ्गच्छते। न च एषो गमयतीत्यत्र सुलोपापत्तिरिति वाच्यम्। इष्टत्वात्। अत एव एष यूनः पश्येत्यादौ 'न सम्प्रसारणे' इति कल्पे सम्प्रसारणादसम्प्रसारणे इति कल्पे च न फलभेदः। नचेयायेत्यादौ स्थानिवद्भावेन इयङ् स्यादितिशङ्काया असङ्गतिरिति वाच्यम्। युक्तिबलाद्वस्तुसिद्धौ कस्यचित् ग्रन्थकृतो विपरीतलेखनस्याबाधकत्वेनेष्टापत्तेरित्याहुः।

नान्यत्रेति। "क्ङिलुगुपधात्वचङ्परणिह्रासकुत्वेषूपसंख्यानम्" इतिस्थानिवत्वनिषे

---

वि० (१) कण्डूयतेः क्तिचि अल्लोपस्य स्थानिवत्वात् "लोपो व्योर्वलि" इति यलोपाप्राप्तौ यलोपग्रहणम्। यदि तु स्थानिनमाश्रित्य निषेधो न स्यात्तदा तद्ग्रहणं व्यर्थं स्यादिति भावः॥

प्र० (२) "क्ङिलुगुपधात्वचङ्परणिह्रासकुत्वेषूपसंख्यानम्" इतिस्थानिवत्त्वनिषेधवार्त्तिकम्।

रित्याशङ्क्याह—अचः पूर्वत्वेन दृष्टस्येति । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः । एतेन "अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" इति वार्तिकं(१) व्याख्यातम् ॥

शब्दरत्न ।

शापत्तेरिति । यणः स्थानिवत्त्वेनाच्त्वादिति भावः । पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणं स्वरे(२) निषधात् । अतो यणूनिमित्ताकारापेक्षयाऽप्यैकारस्य पूर्वत्वमस्तीति तत्पक्षेऽप्ययं दोष इति भावः । आदेशेनापहारात्कथं स्थानिनोऽवधित्वमित्यत आह—उपलक्षणमिति ॥

ज्योत्स्ना ।

धवार्तिकम् । तत्र हि-चङ्परणिह्रासस्य पृथग्ग्रहणादुपधात्वे यो निषेधः स उपधात्वनिमित्तकप्रत्ययविधावेव । तेन परिखायां भव इत्यर्थे ऽण्प्रत्यये निष्पन्नात्पारिखशब्दात् "वृद्धादकेकान्तखोपधात्" इति खोपधत्वनिमित्तके छप्रत्यये कर्तव्ये ऽण्प्रत्यये जातस्याऽऽकारलोपस्य न स्थानिवत्वम् । प्रत्ययविधिविषयस्वीकारेण च पट्यतीत्यादौ उपधावृद्धिकर्तव्यायां स्थानिवत्वनिषेधाभावान्न दोष इत्यलम् ।

वार्तिकं व्याख्यातम् । उपलक्षणीभूतपूर्वत्वे स्थानिभूताजवधिकत्वस्वीकाराद्वैयाकरणः सौवश्व इत्यादावैचः श्रवणं सिद्धमिति तदर्थः । "अचः परस्मिन्" इतिसूत्रार्थस्तु—अत्र हि स्थानिवत्सूत्रादादेशपदमनुवर्तते । आदेशत्वञ्च विधेयताविशेषाश्रयत्वम् । तद्विधेयतया आकांक्षितं स्थानिवत्वमच्पदोत्तरषष्ठ्या अर्थः । स्वसमभिव्याहृतपदार्थो यदर्थे साकांक्षस्तद्वाचकत्वं षष्ठ्या इति नियमात् ।

यत्तु—'गुणानाञ्च परार्थत्वात्' इति न्यायेन "षष्ठी स्थाने" इत्यस्याप्रवृत्तेः षष्ठ्याः स्थानार्थकत्वमनुपपन्नम् । तन्न । अत्र परिभाषां विनैव स्थानार्थकत्वलाभात् । अच्पदार्थस्य वृत्तित्वसम्बन्धेन स्थानित्वे ऽन्वयः । तस्मिन्नेव स्थानित्वे ऽच्त्वस्य धर्मिपार-

---

तत्र हि चङ्परणिह्रासस्य पृथग् ग्रहणादुपधात्वे यो निषेधः स उपधात्वनिमित्तकप्रत्ययविधावेव भवति । तेन परिखायां भव इत्यर्थेऽण्प्रत्यये निष्पन्नात् पारिखशब्दात् "वृद्धादकेकान्त–" ( पा० सू० ४।२।१४१ ) इति खोपधत्वनिमित्तके छप्रत्यये कर्तव्ये, अण्प्रत्यये परतो जातस्याकारलोपस्य न स्थानिवत्त्वम् । प्रत्ययविधिविषयकत्वस्वीकारेण च पटयतीत्यादावुपधावृद्धौ कर्तव्यायां स्थानिवत्त्वनिषेधाभावान्न वृद्धिः ॥

प्र० ( १ ) उपलक्षणीभूतपूर्वत्वे स्थानिभूताजवधिकत्वस्वीकाराद् वैयाकरणः, सौवश्व इत्यादौ ऐचोः श्रवणं सिद्धमिति तदर्थः ॥

वि० ( २ ) अन्यथा चिकीर्षकः इत्यत्र रेफषकाराभ्यां व्यवायेन तदप्राप्त्या तदुक्तिर्निषेधे व्यर्था स्यादिति भावः । पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणग्रहणेन पटयतीति सिद्धम् ॥

ज्योत्स्ना ।

तन्त्रयेण स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगित्वसम्बन्धेनादेशपदार्थेऽन्वयः । परस्मिन्निति "यस्य च भावेन" इति सतीसप्तमी । तस्याः ज्ञाप्यत्वमर्थः । ज्ञाप्यत्वञ्च ज्ञानजन्यज्ञानविषयत्वम् । तस्य च स्वरूपसम्बन्धेनादेशपदार्थेऽन्वयः । तावतैवादेशे परनिमित्तकत्वं लब्धम् । स्थानिवदित्यस्य स्थानिप्रतियोगिकसादृश्यवानित्यर्थः । स चाभेदेनादेशपदार्थान्वयी । तथा च—अज्निष्ठा या अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूता स्थानिता तन्निरूपको यः परसत्ताविषयकज्ञानजन्यज्ञानविषय आदेशः स स्वस्थानिसदृशो भवतीत्यर्थः । सादृश्यञ्च—कार्यवत्त्वतदभावान्यतररूपेण बोध्यम् । तदाह—मूले शब्दरत्नकारः—अजादेशोऽच् कार्यं लभते न लभते चेत्यर्थः । अच एव आदेश इति तदर्थः । अच्त्वप्रतियोगिका या पर्याप्तिः तदीया या अनुयोगिता तदवच्छेदको यो धर्मः स एव स्थानिताप्रतियोगिका या पर्याप्तिः तदीयानुयोगितावच्छेदको ऽप्यपेक्षित इति यावत् । यथा निगाल्यते कथयतीत्यादौ अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्म इकारवृत्तितद्व्यक्तित्वम् अकारवृत्तितद्व्यक्तित्वञ्च तदेव णिलोपीयस्थानितापर्याप्त्यनुयोगितावच्छेदकमिति लक्षणसमन्वयः । तेन अज्झलादेशो न स्थानिवत् । तत्फलं मरुतमाचष्टे मारयतीत्यत्र णिज्निमित्तको यष्टिलोपस्तदीयस्थानिताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमुच्छब्दगतं द्वित्वम्, अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमकारनिष्ठमेकत्वम् । अतो न तत्स्थानितामादाय स्थानिवत्त्वप्रवृत्त्या वृध्यभावप्रसङ्गः । अन्यथा मातृपितृजातस्य मातृजातत्वादिवदज्झलादेशस्याजादेशत्वात्स्थानिवत्त्वापत्तिरिति दिक् ।

यत्तु अच्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रय इति अच एव आदेश इत्यस्यार्थ इति तन्न । निगाल्यत इत्यादौ णिलोपस्य स्थानिवत्त्वानापत्तेः । अत एव अच इति सार्थकम् । अन्यथा यायावर इत्यादौ यलोपस्य स्थानिवत्त्वेनैव "आतो लोप इटि च" इति लोपानापत्त्या वरेग्रहणवैयर्थ्येन "धिन्विकृण्व्योरच" इति लोपेनैव सिद्धे अकारविधानेन च हलादेशो न स्थानिवदिति कल्पनेन सर्वसामञ्जस्ये तद्वैयर्थ्यं स्पष्टमेव । न च पिसधातोरिगुपधलक्षणे के तदन्तादाचारक्विपि तदन्तात्कर्तरि क्विपि तस्मादाचारक्विबन्तात् "स्थेशभासपिसकसो वरच्" इतिवरचि गुणार्थम् अतो लोपस्य स्थानिवद्भावाय वरे इति चरितार्थम् । एवं "धिन्विकृण्व्योरच" इत्यत्राकारविधानं "यथोत्तरं मुनीनां प्रामाण्यम्" इत्यर्थध्वननाय आवश्यकमिति वाच्यम् । हत इत्यादौ नलोपस्य स्थानिवत्त्वेनैव अतो लोपाप्राप्त्या तत्र लोपवारणाय कृतस्यार्धधातुके इत्यस्यावृत्त्याऽऽर्धधातुकोपदेशे यददन्तमित्यर्थस्यावैयर्थ्येन हलादेशो न स्थानिवदित्युक्त्यैव सामञ्जस्ये हलादेशो न स्थानिवदित्यर्थस्याच्ग्रहणेनैव लाभात् ।

"न पदान्त" (पा० सू०१।१।५८)। पदस्य चरमावयव इति। वृक्णं व्रेतीति वृक्णवीः। वातीति वृक्णवाः। तमाचष्टे वृक्णन्। विच्। इह "लोपो

शब्दरत्न।

अन्तःशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः (१)कर्मषष्ठ्या समासेन पदचरमावयवे कर्त्तव्ये इत्येवं व्याख्याने फलमाह—वृक्षमिति। विजिति। क्विपि(२)

ज्योत्स्ना।

न च राधातोःक्ते तस्माण्णिचि चङि अरीरतदिति लक्ष्ये वृत्रहस्यामित्यादौ च लोपवारणाय आर्धधातुकोपदेशे यदकारान्तमित्यर्थस्यावश्यकत्वम्। न च "नाग्लोपि" इतिसूत्रे प्रत्याहारग्रहणं ज्ञापकम्। अन्यथा झलादेशस्य स्थानिवत्त्वेनैव ह्रस्ववारणे तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम्। "चङ्परणिर्ह्रासे"स्थानिवत्त्वनिषिद्धत्वात्प्रत्याहारग्रहणसामर्थ्यात्।

एवं तर्हि 'चङ्परणिर्ह्रासे' स्थानिवत्त्वनिषेधस्यैव प्रकृतार्थज्ञापनसम्भवात्। नचापीपठदित्यादौ पठादिधातोर्णिचि लुङि ह्रस्वार्थत्वं तस्येदानीं सम्भवति च्ल्यादेशस्य चङः स्थानिवद्भावेऽभावातिदेशेन ह्रस्वप्रवृत्तेः कर्तुमशक्यत्वात्। न चारम्भसामर्थ्यात्तस्यापि स्थानिवद्भावस्य निषेध इति वाच्यम्। "अचः परस्मिन्" इत्यत्राच्पदाकरणलाघवानुरोधेन हलादेशो न स्थानिवदित्येतत्कल्पनस्यैवोचितत्वात्। तस्मादतिरिक्तमच्ग्रहणम् अच एवादेश इत्यर्थं ज्ञापयतीत्यलमित्यन्यत्र विस्तरः।

न पदान्तेति। अत्रायमर्थः—पदान्तद्विर्वचनयलोपस्वरसवर्णानुस्वारदीर्घजश्चरपदार्थानां द्वन्द्वनिर्दिष्टानां सर्वेषां "द्वन्द्वान्ते" इतिन्यायाद्विधिपदार्थेऽन्वयः। पदान्तश्चरमावयवः। विधानं विधिः, भावे किः, पदान्तस्य विधिः पदान्तविधिः कर्मषष्ठ्याः समासः। पदचरमावयवादिकार्यकर्मकविधाने कर्तव्ये परनिमित्तादेशो न स्थानिवदित्यर्थः। वरेइति भिन्नं वाक्यं; तस्य च वरप्रत्ययनिमित्तको लोपो न स्थानिवदित्यर्थः। तस्य च विधावन्वयाभावेनैकधर्मावच्छिन्नान्वयित्वरूपसाहित्याभावेऽपि पदान्तादीनां चरपर्यन्तानां सौत्रत्वाद् द्वन्द्वः। सप्तम्या अलुक् च। यलोपेत्यत्र लोपपदस्यावृत्त्यैकस्य लोपस्यात्र सम्बन्धः। भाष्ये लुप्तमित्यत्र भावे क्तः, एतदुदाहरणं यायावरः यातेर्यङन्ताद्वरचि द्वित्वे अल्लोपे यलोपः, तस्मिन् कर्तव्ये ऽल्लोपो न स्थानि-

वि० (१) वस्तुतस्तु कर्मसाधनत्वेऽपि कर्मधारयसमासस्वीकारेण पदचरमावयवादिरूपे विधेये कर्तव्ये इत्यर्थे न कोऽपि दोष इति ज्ञेयम्॥

वि० (२) ननु "च्छ्वोरिति" सूत्रे क्ङित्पदानुवृत्तेरपि भाष्य एवोक्ततया क्विप्यपि ऊठ् दुर्वारः। ऊठः पदान्तत्वेन णिलोपस्य "नपदान्त" इति स्थानिवत्त्वाभावादितिचेन्न। क्ङिद्ग्रहणानुवृत्तेरेव व्यवस्थापयिष्यमाणत्वादिति भावः॥

व्योः—" ( पा० सू० ६।१।६६ ) इति वलोपो न। स्थानिवत्त्वात्। न च "न पदान्त—" ( पा० सू० १।१।५८ ) इति निषेधः। इह विधेयस्य लोपस्य पदानवयवत्वात्। पदान्तस्य स्थाने विधौ नेति व्याख्याने तु नेदं(१) सिध्येत्। "सुबन्ताण्णिच्" इति हरदत्तादिमते ऽन्तर्वर्तिसुपा पदत्वात्। न च "इष्ठवत्" इत्यदिष्टेन णिचि भत्वेन पदत्वबाधो, णेर्लुप्तत्वात्। न च प्रत्ययलक्षणम्। वर्णाश्रयत्वादिति भावः। द्विर्वचनादौ चेति। यलोपादय आदिशब्दग्राह्याः। "वरे" इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्। सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च। अथोदाहरणानि, पदान्ते—कानि सन्ति, कौ स्तः। द्विर्वचने—सुद्ध्युपास्यः। वरे—

---

शब्दरत्न।

तूठ स्यादिति भावः। स्थानिवत्वादिति। णिलोपस्य(२)टिलोपस्य वा स्थानिवत्त्वादित्यर्थः। नन्वस्य पदत्वाभावात्कुतो ऽसिद्धिरतआह—सुबन्तादिति। अन्तर्वर्त्तिसुब्निमित्तकपदत्वस्यैकदेशविकृतन्यायेन वान्ते ऽपि सत्वमिति भावः। प्रत्ययलक्षणमिति। स्थानिवत्त्वेन प्रत्ययनिमित्तं कार्यमित्यर्थः। वर्णाश्रयत्वादिति। "णाविष्ठवद्—" इत्यनेन "यचि भम्" इति शास्त्रस्यैवातिदेशस्तच्च वर्णाश्रयम्, एवं च स्थानिवत्त्वस्या-

ज्योत्स्ना।

वत् यलोपविधौ निषेधात्। अल्लोपस्य स्थानिवद्भावेनाजादिङिन्निमित्तक आतो लोपस्तु न, अनेन निषेधात्। न च यकारे सत्यकारस्य प्रत्ययत्वाभावेन कथं तल्लोपस्य स्थानिवद्भावेनाजादिङिन्निमित्तप्रत्ययत्वमिति वाच्यम्। स्थानिवत्वेन सम्भावितस्यापि धर्मस्य स्थानिवद्भावेन लाभ इत्यर्थस्य वरेग्रहणेन ज्ञापितत्वात्। तत्फलं यातिः। तथाहि—यातेर्यङन्तात् क्तिचि द्वित्वेऽल्लोपे यलोपे अलोपस्य स्थानिवद्भावेनाकारवृत्तित्वेन सम्भावितप्रत्ययत्वमादाय धातोराकारस्य "आतो लोप इटि च"इति लोपे यलोपे रूपम्। यदि पूर्वं यलोपः स्यात्, तदा ऽकारस्य प्रत्ययत्वं स्यादिति सम्भावनयैव अकारस्य प्रत्ययत्वं शब्दरत्नकृतोक्तम्।

पदान्तविधावुदाह्रियते। कानि सन्ति कौ स्त इति। अत्र वाक्यसंस्कारपक्षे किम् अस् अस् अन्ति किम् औ अस् तस् इत्यवस्थायां पूर्वोपस्थितिनिमित्तकत्वरूपान्तरङ्गत्व-

---

वि० ( १ ) परं तु पदे अन्तः पदान्त इति भाष्यबलात् प्रत्यासत्या पदे परतःचरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्वनिषेध इति वेतस्वान् इत्यादौ न दोषः इति दिक्।

वि० ( २ ) न च वलोपादन्तरङ्गत्वात् "वेरपृक्तस्य" इति लोपे वल्परत्वाभावः शङ्क्यः। 'वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति न्यायबलेन वलोपनिमित्तभूतस्यापि विधेर्बलवत्वकल्पनात्॥

शब्दरत्न ।

प्रसक्तिः । कार्यातिदेशेऽपि यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वाक्षतिः । प्रत्ययलक्षणसूत्रं तु भा-

ज्योत्स्ना ।

मादाय क्रमेण जशादेः श्यादेशादिकार्ये कृते कानीत्यादावकारादेर्लोपीयस्थानिताश्रयाकाराद्यपेक्षया पूर्वत्वेन दृष्टत्वात्तेषां यणावादेशादिकार्ये कर्तव्ये प्राप्तस्याल्लोपस्थानिवद्भावस्यानेन निषेधः । यणावादेशयोः पदचरमावयवत्वात् । यदि च पदसंस्कारपक्षमाश्रित्य सन्ति स्त इति संसाध्य कानि कौ इत्यस्य सम्बन्धे इकारादेः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवद्भावाप्राप्त्या रूपासिद्धिरित्युच्यते, तदा पदान्तविधावित्यस्योदाहरणम्—एषो यन् हसतीत्यादौ । अत्र हि इण् गतावित्यस्माद्धातोर्लटः शतरि "इणो यण्" इति यणि यन् इति रूपम् । तत्रैतच्छब्दप्रकृतिकसुस्थानिकरेफस्येत्वे कर्तव्ये यणादेशस्थानिवत्त्वस्यानेन निषेधः । उत्वस्य पदचरमावयवत्वात् । पदसंस्कारपक्षाश्रयणेन तु न निर्वाहः । तथासति एतत्प्रकृतिकसोर्यणः स्थानिभूतादचःपूर्वत्वेन दृष्टत्वाभावात्तस्य "एतत्तदोः" इति लोपे कर्तव्ये यणः स्थानिवत्त्वाभावात्सुलोपापत्त्या एषो यन् हसतीति रूपासिद्धेः । विधीयत इति विधिः कर्मणि किः कार्यमित्यर्थः । पदान्तस्य विधिरिति शेषषष्ठ्या समासे पदान्तस्थानिके कार्ये कर्तव्ये इत्यर्थस्तु न युक्तः, वृक्षवीरित्यसिद्धेः ।

तथाहि—वृक्षं वेतीति वातीति वेति विग्रहे वृक्षोपपदात् वीधातोर्वाधातोर्वा क्विपि तदन्तादाचष्टे इत्यर्थे णिचि विचि णिलोपटिलोपयोः वृक्षव् करोतीत्यत्र "लोपो व्योः" इति वलोपापत्तेः । वलोपे कर्तव्ये स्थानिवत्वन्तु न । तत्करोत्याचष्टे इत्यर्थे द्वितीयान्ताण्णिजुत्पत्या प्रत्ययलक्षणेन वान्तस्य पदत्वेन पदान्तवकारस्थानिकलोपे कार्ये कर्तव्येऽनेन निषेधात् । भावसाधने तु न दोषः । लोपस्य पदान्तत्वाभावेन पदचरमावयवकर्मकविधानाभावेन निषेधाप्राप्त्या टिलोपादेस्स्थानिवत्वादितिमनोरमाकृतस्तन्न । प्रातिपदिकाण्णिजुत्पत्या वकारस्य पदान्तत्वाभावात् । वृक्षव् इतिप्रकृतिकसुपमादाय वान्तस्य पदत्वात् । वकारस्य पदान्तत्वमित्यपि न । णिलोपस्य स्थानिवत्वात् । पदान्तविधौ निषेधस्तु न स्थानिवद्भावनिषेधे पदान्तत्वं, पदान्तत्वे च निषेध इत्यन्योन्याश्रयात् । न हि पदान्ताः परेऽणः सन्ति' इति भाष्यात्तस्यानभिधानाच्च । तर्हि तस्यार्थस्य किमिति परित्याग इति चेच्छृणु एषो यन् हसतीत्यादौ सुलोपे प्राप्तस्य स्थानिवत्वस्यानेन निषेधापत्या सुलोपापत्तेः कर्मसाधनस्य परित्याग इति । इतिशब्दरत्नाशय इत्यर्थ इत्यलम् ॥

यन्निमित्तवैकल्येति । यन्निमित्ताभावप्रयोज्यप्रधानशास्त्राप्रवृत्तिरित्यर्थः । न च यड्भ्यामित्यादौ णिलोपे स्वादित्वाजादित्वोभयाभावप्रयुक्ता "यचि भम्" इत्युपदेशाप्रवृत्तिरिति तदरिक्तनिमित्तकत्वेनेष्टवद्भावे वर्णाश्रयत्वाभावाद्भसंज्ञा स्यादेवेति कथं

शब्दरत्न ।

व्यक्तता प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितं(१)न त्वप्राधान्येनालाश्रयणे विध्यर्थमिति भावः । न च "अचः परस्मिन्"

ज्योत्स्ना ।

जश्त्वमिति वाच्यम् । यन्निमित्तवैकल्येत्यत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदक-धर्मव्यापकधर्मग्रहणेनादोषात् । तथाहि-णिः इष्ठवद्भवतीत्यर्थे अतिशीयसादृश्यप्रति-योगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्यापकीभूतो धर्मः स्वादित्वरूपो धर्मो नत्वजादित्वरूपः भूयिष्ठ इत्यादौ व्यभिचारादिति न दोषः । न चैवमपि "यचि भम्" इत्यत्र यचीति द्वन्द्वनिर्देशेन भसंज्ञायां यादित्वाजादित्वैतदन्यतरवत्वेन नि-मित्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकइष्ठत्वव्यापकत्वमस्त्येवेति पुनरपि तद्दो-षतादवस्थ्यमिति वाच्यम् । यचीत्यत्र य् इति लुप्तसप्तम्यन्तं पृथक् पदमिति स्वीकार-णादोषात् । अत एव "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच् न प्रसज्यत इति दिक् ।

नियमार्थत्वेन स्थापितमिति । "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" इति वार्तिकं प्राधा-

---

प्र० ( १ ) "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" इतिवार्त्तिकस्य प्राधान्येन वर्णाश्रयविधिविषय-कत्वात्प्रत्ययलक्षणसूत्रमप्राधान्येनाऽलाश्रयणे विध्यर्थमिति वार्त्तिककृन्मतम् । तेनाऽतृणेडित्यत्र हलादिपित्प्रत्ययनिमित्तकः "तृणह इम्" ( पा० सू० ७।३।९२ ) इतीमागमः, मित्रशीरित्यत्र हला-दिकित्प्रत्ययनिमित्तकः "शास इदङ् हलोः" ( पा० सू० ६।४।३६ ) इतीत्वमित्यादि च सिध्यति । भाष्यकृता तु "तृणह इम्" इत्यत्र पितीत्येदनुवर्त्य पित्प्रत्यये परत इमागमो भवतीति व्याख्यातम्। पित्वञ्चाऽनुबन्धकार्यत्वात्स्थानिवत्त्वेन सुलभम् । तेन "अतृणेट्"इत्यस्य सिद्धिः। "तृणहानि"इत्यादौ चेमागमवारणार्थं "नाऽभ्यस्तस्याऽचि" इत्यतः "अचि, न" इति पदद्वयमनुवर्त्त्य वाक्यभेदेन व्या-ख्यातम् । एवम् "शास इत्" इत्यत्र हल्ग्रहणं माऽस्तु "शास इदङि" इत्येवाऽस्तु, तथाच "शास इत्" इत्येको योगः शास उपधाया इद्भवतीत्यर्थकः । ततः, "अङि" पूर्वयोगेनैव सिद्धे नियमार्थमि-दम् । अजादौ परतश्चेत्तर्ह्यङ्येवेति । एवं च स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं नियमार्थम् । प्रत्य-यपर्याप्तस्थानिताके लोपे सति प्रत्ययलक्षणमेव नतु स्थानिवद्भावमात्र इति । "प्रत्ययस्य लुक्श्लुलुपः" ( पा०सू०१।१।६१ ) इति सूत्रात्प्रत्ययग्रहणेऽनुवर्तमाने पुनराद्यप्रत्ययग्रहणसामर्थ्यात्प्रत्ययपर्याप्त-स्थानिताका इत्यर्थलाभः । तेनाऽऽध्नीय इत्यत्र "लिङः सलोपः" इति लोपे प्रत्ययलक्षणेन "अनु-दात्तोपदेश" ( पा०सू०६।४।३७ ) इति नलोपो न । एवं प्रत्ययलोपे तल्लक्षणमित्युक्त्यैव सिद्धे द्विती-यप्रत्ययग्रहणसामर्थ्यात्प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्यमेव प्रत्ययलक्षणेन भवतीत्यर्थः । एवञ्च सुदृषत् प्रासाद इत्यत्राऽसुप्रत्ययलोपेऽस्त्वस्य प्रत्ययत्वव्याप्यत्वाभावात्तन्निमित्तके "अत्व-सन्तस्य" ( पा०सू०६।४।१४ ) इति दीर्घे कर्तव्ये प्रत्ययलक्षणाप्रवृत्त्या न दीर्घः । एवमसुप्रत्ययप-र्याप्तस्थानिताकलोपसत्वेनोक्तनियमात्स्थानिवद्भावोऽपि न प्रवर्त्तत इति न तेनाऽपि दीर्घापत्तिरिति नियमफलम् । वार्त्तिककृन्मते तु उक्तलक्ष्ये प्रत्ययलक्षणेन दीर्घाभावेऽपि स्थानिवद्भावेन दीर्घापत्तिः स्यादेवेति दिक् ।

शब्दरत्न।

(पा० सू० १।१।५७।) इति णिलोपस्य स्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम्। णिलोपस्येव टिलोपस्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वानिवृत्तेः। "प्रकल्प्य चापवादविषयम्" इति न्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानिवत्त्वाप्रवृत्तेश्च। हरदत्तादिमते इत्यनेनारुचिर्बोधिता। तद्बीजं त्वयं पक्षो न सूत्रवार्तिकभाष्यसंमत इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाभाव इति। चरमावयवे कार्यं इति व्याख्याने फलं तु एषो यन् हसति(१) इत्यादौ यणः स्थानिवत्त्वाद् "एत-

ज्योत्स्ना।

न्येन वर्णाश्रयविधिविषयकं, प्रत्ययलक्षणसूत्रमप्राधान्येनालाश्रयणे विध्यर्थम्। तेन अतृणेडित्यत्र हलादिपित्प्रत्ययनिमित्तक'तृणह इम्' इतीमागमो मित्रशीरित्यत्र हलादिक्तिप्रत्ययनिमित्तक "शास इदङ्हलोः" इतीत्वमित्यादिसिद्ध्यति। स्थानिवद्भावस्तु न "अनल्विधौ" इतिनिषेधादिति वार्तिककृन्मतम्।

भाष्यकृतास्तु—"तृणह इम्" इत्यत्र पितीत्यत्र पित्प्रत्यये परत इमागमो भवतीति व्याख्यातं, पित्वन्त्वनुबन्धकार्यत्वात्स्थानिवत्त्वेनानेतुं शक्यम्। तेन अतृणेडित्यस्य सिद्धिः। न च तृणहानीत्यत्रापि इमागमः स्यादिति वाच्यम्। "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यतोऽचि नेत्यनुवर्त्य वाक्यभेदेन व्याख्यानेनादोषात्। एवं "शास इदङ्हलोः" इत्यत्र हल्ग्रहणं मास्तु। तथाच शासः इत् इत्येको योगः शास उपधाया इत् स्यादित्यर्थकः। ततो ऽङि पूर्वेणैव नियमार्थमिदम्। अजादौ परतश्चेत्तर्हि अङ्येवेति। तथाच "स्थानिवत्" सूत्रेणैव सिद्धे इदं नियमार्थम्। प्रत्ययपर्यासस्थानिताके लोपे सति प्रत्ययलक्षणमेव न तु स्थानिवद्भाव इति। "प्रत्ययस्य लुक्श्लुलुपः" इतिसूत्रात्प्रत्ययग्रहणे ऽनुवर्तमाने पुनः आद्यप्रत्ययग्रहणेन प्रत्ययपर्यासस्थानिताक इत्यर्थलाभ इति। "प्रत्ययस्य लुक्श्लुलुपः" इतिसूत्रात्प्रत्ययग्रहणेऽनुवर्तमाने पुनःआद्यप्रत्ययग्रहणेन प्रत्ययपर्यासस्थानिताक इत्यर्थलाभः। तेनाघ्नीय इत्यत्र "लिङः सलोप" इति सलोपे प्रत्ययलक्षणेन "अनुदात्तोपदेश" इति नलोपो न। एवम्प्रत्ययलोपे तल्लक्षणमित्युक्त्यैव सिद्धे द्वितीयप्रत्ययग्रहणसामर्थ्यात्प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्यमेव प्रत्ययलक्षणेन भवतीति तदर्थो ज्ञेयः। एवञ्च सुद्दषत्प्रासाद इत्यत्र असूलोपे अस्त्वस्य प्रत्ययव्याप्यत्वाभावात्तन्निमित्तके "अत्वसन्तस्य" इति दीर्घे कर्त्तव्ये प्रत्ययलक्षणप्रवृत्त्या न दीर्घः। एवमसुपर्यासस्थानिताकलोपसत्वेनोक्तनियमात्स्थानिवद्भावो नप्रवर्तत इति न तेनापि दीर्घापत्तिरिति नियमफलम्। वार्तिककृन्मते तु तत्रोक्तलक्ष्ये प्रत्ययलक्षणेन दीर्घाभावेऽपि स्थानिवद्भावेन दीर्घापत्तिः, स्यादेवेति दिक्।

एषो यन् हसतीति। नचात्र पदसंस्कारपक्षे रोः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभा-

प्र० (१) नचाऽत्र पदसंस्कारपक्षे रोः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाऽ-

(१)यायावरः। "यश्च यङः" इति वरच्। अतो लोपः स च "आतो लोप इटि च" (पा०सू० ६।४।६४) इत्यालोपे कर्तव्ये न स्थानिवत्। यलोपे–यातिः।

शब्दरत्न।

त्तद्रोः' (पा० सू० ६।१।१३२) इति सुलोपाभावः। इणः शतरि यन्निति रूपम्। उत्वे च न स्थानिवद्, अनेन निषेधादिति तत्त्वम्। कानि सन्तीति। वाक्यसंस्कारपक्ष एतत्(२)। तत्र पक्षे पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तेरिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम्। एतन्मूलकमेव वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार इति वदन्ति। न स्थानिवदिति। तेन आतो लोपो नेति भावः। न च पूर्वमल्लोपस्ततो वलि लोप इति क्रमसत्त्वादकारेणार्द्धधातुकत्वाद्यलाभात्कथमतिदेशेन तल्लाभः। सम्भावनामात्रेणापि तल्लाभस्य वरेग्रहणेन ज्ञापनात्। अस्ति चात्रापि यदि पूर्वं यलोपः स्यात्तदाऽऽकारेण प्रत्ययत्वं लब्धं स्यादिति सम्भावना।

ज्योत्स्ना।

वात्स्थानिवत्वाप्राप्त्योदाहरणसम्भव इति वाच्यम्। पयःशब्दोपपदकणिजन्तेऽण्धातोः कर्मण्यणि इणो गमादेशे निष्पन्नस्य पयोगमशब्दस्योत्करीत्योदाहरणसम्भवादित्यन्यत्र विस्तरः।

वाक्यसंस्कारपक्षे एतदिति। ननु जातिपक्षमुपादायाण्ग्रहणप्रत्याख्यानात्पदसंस्कारपक्षाश्रयणं कृत्वा पदान्तग्रहणं प्रत्याख्यायतामिति चेन्न। अदद्रीच इत्याद्यर्थं तत्पक्षस्यावश्यकत्वात्। पदान्तग्रहणाभावे तत्राच इत्यल्लोपस्य स्थानिवत्वाद्यण् स्यात्। न च आद्र्यादेशस्य उभयाश्रितत्वम् "अचः" इत्यल्लोपस्य तु न तदाश्रितत्वमित्यन्तरङ्गत्वमिति तस्यादौ प्रवृत्तिः ततोऽद्र्यादेशस्येति न, इकारस्यानादिष्टादचः पूर्वत्वमिति वाच्यम्। भसंज्ञानिमित्तविभक्त्युत्पत्तिपर्यन्तस्याद्यादेशस्य प्रवृत्तिप्रतिबन्धे मानाभावेनाल्लोपात्प्राक् प्रवृत्तेः। "द्युप्रागपागुदक् प्रतीचो यत्" इतिसूत्रे प्रतीच इत्यत्र यणादेशस्याकरणात् "अचः" इत्यल्लोपस्य पूर्वस्य कार्ये कर्तव्ये न स्थानिवदित्यर्थकल्प-

---

प्राप्त्योदाहरणासम्भव इति वाच्यम्। पयःशब्दोपपदकणिजन्तेण्धातोः कर्मण्यणि इणो गमादेशे जायमानस्य पयोगमशब्दस्योक्तरीत्योदाहरणत्वसम्भवात्॥

वि० (१) यातेः "नित्यं कौटिल्ये गतौ" इत्यनेन यङ्। अत्र अल्लोपस्य स्थानिवत्त्वादातो लोपः प्राप्तो निषिध्यते। ननु अतो लोपो न परनिमित्तकः, 'आर्धधातुके' इति हि विषयसप्तमी। न परसप्तमी। अत एव हलन्तात् ण्यता सिद्धे "अचो यत्" इत्यज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यात्, दित्स्यं धित्स्यमित्युक्तं भाष्ये। नह्यन्यथा प्रत्ययोत्पत्तः प्रागल्लोपः सम्भवतीति चेत्; न। अस्मादेव वरेग्रहणात्परसप्तमीपक्षोऽप्यस्तीति ज्ञापकात्। फलं तु यातेः सिद्धिरिति बोध्यम्।

प्र० (२) अत्र पदसंस्कारपक्षे प्रतीच इत्यादिकमुदाहरणं बोध्यम्।

यातेर्यङन्तात् क्तिच् अतो लोपः। यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः यलोपः। न च पुनरालोपः शङ्क्यः। चिणोलुङ्न्यायेनातो लोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। स्वरे–चिकीर्षकः सनोऽतो लोपो "लिति" (पा० सू० ६।१।१९३) इति ककारेकारस्य उदात्तत्वे कर्तव्ये न स्थानिवत्। सवर्णानुस्वारयोः—शिण्ढि(१)। दीर्घे–प्रतिदीव्ना। जशि–सग्धिश्च मे। अदनं ग्धिः। अदेः क्तिनि "बहुलं छन्दसि" (पा० सू० २।४।३९) इति

शब्दरत्न।

फलं तु यातिरित्यादिसिद्धिरिति दिक्। क्तिजिति। "क्तिच्क्तौ च संज्ञायाम्" (पा० सू० ३।३।१७४) इत्यनेन क्तिन् तु न। "अप्रत्ययात्" (पा० सू० ३।३।१०२) इत्यनेन बाधात्। न स्थानिवदिति। स्थानिवत्त्वे हि स्वराप्रवृत्तिरेव स्यात्। अकारस्य तु न, स्वविधौ(२) स्थानिवत्त्वनिषेधात्। लित्त्वं तु कारक कृत्यादौ सावकाशमिति भावः। शिण्ढीति। नन्वत्रानुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तिः। नचास्मादेव ज्ञापकात्तस्याशास्त्रीयत्वेऽपि स्थानिवत्त्वेन तत्त्वम्। फलाभावात्। तद्घटितसन्निवेशापेक्षस्य ततः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वाच्च। "भोभगो" (पा० सू० ८।३।१७) इति सूत्रस्थभाष्यरीत्या तस्य स्थानिभूताल्वृत्तिधर्मत्वेन "अनल्विधौ" इति निषेधाच्च। विशेषणतया ऽलाश्रयणाच्च। भाष्ये "पूर्वत्रासिद्धे" इत्यवष्टभ्य वरे–यलोप–स्वर–भिन्नानां द्विर्वचनादीनां ग्रहणस्यात्र प्रत्याख्यानेन तस्य च णत्वे प्रतिप्रसवेनात्र स्थानिवत्त्वेन परसवर्णाभावस्यैव लाभादिदमुदाहरणं चिन्त्यम्। णत्वग्रहणे च प्रतिप्रसववार्तिके लक्षणप्रतिपदोक्तपरिभाषा नेत्युपपादयिष्यते।

किं च "दीर्घादाचार्याणाम्" (पा०सू०८।४।५२) इत्युत्तरम् "अनुस्वारस्य ययि" (पा०सू०८।४।५८) "वा पदान्तस्य" (पा० सू० ८।४।५९)" "तोर्लि" (पा० सू० ८।४।६०) "उदस्था" (पा० सू० ८।४।६१) "झयो हो–" (पा०सू० ८।४।६२) "शश्छोऽटि" (पा०सू०८।४।६४) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" (पा० सू०

ज्योत्स्ना।

नायां ज्ञानगौरवात्पदान्तग्रहणं कर्तव्यमेवेति दिक्। स्वविधौ स्थानिवत्वप्रतिषेधादिति। स्थानिवद्भावेन यद्धर्मप्रकारकबुद्धिरुपजायते तद्धर्मावच्छिन्नोद्देश्यककार्ये कर्तव्ये न स्थानिवदिति तदर्थः।

---

वि० (१) शिषेर्लोटि रुधादिश्नमि, 'सेर्हि' "हुझल्भ्यो हेर्धिः" श्नल्लोपः। ष्टुत्वम्, जश्त्वम्, अनुस्वारः। ततो "अनुस्वारस्य ययि" इति परसवर्णे कर्तव्येऽल्लोपः स्थानिवत्प्राप्तो निषिध्यते।

प्र० (२) स्थानिवद्भावेन यद्धर्मप्रकारकबुद्धिरुपजायते तद्धर्मावच्छिन्नोद्देश्यताके कार्ये कर्तव्ये न स्थानिवदिति तदर्थः।

घस्लादेशः। "घसिभसोर्हलि-" ( पा० सू० ६। ४। १०० ) इत्युपधालोपः। "झलो झलि" ( पा० सू० ८। २। २६ ) इति सलोपः घत्वम्। घस्य जश्त्वम्। "सहस्य सः-" ( पा० सू० ६। ३। ७८ ) इति सूत्रात् स इत्यनुवर्तमाने "समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु" इति सूत्रेण सः।

शब्दरत्न।

८।४।६३ ) "अभ्यासे चर्च" ( पा० सू० ८।४।६४ ) "खरि च" ( पा० सू० ८।४।६५ ) "वा ऽवसाने" ( पा० सू० ८।४।६६ ) "अणोऽप्रगृह्यस्य" ( पा० सू० ८।४।६७ ) इति, पञ्चसूत्र्याः पाठ इति भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या "झलां जश् झशि" ( पा० सू० ८।४।५३ ) इत्यस्य "झरो झरि" ( पा० सू० ८।४।६५ ) इत्यस्य चासिद्धत्वेन यर्परत्वाभावात्तदप्राप्तेरिति चेत्, सत्यम्। पाद्यतेः क्विपि पाद्धसतीत्यादौ "झयो ह—" इति पूर्वसवर्णे पञ्चमीसमासेन प्राप्तस्थानिद्भाववारणार्थत्वात्। हरितशब्दादाचक्षाणण्यन्तात् क्विपि हरिद्धसती(१)त्यादौ उक्तरीत्या प्राप्तस्य तस्य वारणार्थत्वाच्च। अत्राल्लोपस्यापि तत्प्राप्तया क्वौ लुप्तमित्यस्य विषय एव न। हरिन्नमती(२)त्यादौ अनुनासिके तद्व्यावृत्त्यर्थत्वाच्च। "हयवरट्" सूत्रभाष्यरीत्या तत्र सवर्णग्रहणापकर्षेण तस्यापि सवर्णविधित्वादित्यन्यत्र विस्तरः। सूत्रेण स इति।

ज्योत्स्ना।

हरिद्धसतीति। ननु हरित् हसतीति स्थिते "झयो होऽन्यतरस्याम्" इत्यस्यासिद्धत्वात्। पूर्वं "झलां जशोऽन्ते" इति जश्त्वेन तकारस्य दकारे तस्यानादिष्टादचः पूर्वेण दृष्टत्वाभावात्स्थानिवत्त्वाप्राप्त्या नेदमुदाहरणं सम्भवतीति वाच्यम्। आचक्षाणणिजन्तान्निष्पन्नस्य हरिच्छब्दस्य अशब्देन समासे निष्पन्नहरिदशब्दात् णिचि क्विपि हरिद् हसतीत्यस्योक्तप्रकारेणोदाहरणत्वसम्भवात्।

ननु प्रविगणय्येत्यादिभाष्योदाहरणेन पञ्चमीसमासस्यानित्यत्वात्तत्पक्षीयोदाहरणे दृढतरफलाभावादुदाहरणान्तरमाह—हरिन्नमतीति। नन्वस्य भाष्यमतेनोदाहर-

प्र० ( १ ) ननु हरित् हसतीत्यत्र "झयो ह" इत्यस्याऽसिद्धत्वात्पूर्वं "झलां जशोऽन्ते" ( पा०सू०८।२।३९) इति जश्त्वेन तकारस्य दकारे तस्याऽनादिष्टादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाऽप्राप्त्या नेदमुदाहरणं सम्भवतीति वाच्यम्। आचक्षाणण्यन्तात्क्विपि निष्पन्नस्य तकारान्तहरिच्छब्दस्य अशब्देन समासे निष्पन्नाद्धरिदशब्दाण्णिचि क्विपि "हरिद् हसति" इत्यस्योक्तप्रकारेणोदाहरणत्वसम्भवात्।

प्र० ( २ ) पञ्चमीसमासस्याऽनित्यत्वेन तत्पक्षीयोदाहरणस्य दृढतरफलत्वाभावादाह—हरिन्नमतीति। नन्वस्य भाष्यकृन्मतेनोदाहरणत्वसम्भवेऽपि सूत्रकृन्मतेनोदाहरणत्वासम्भवस्तदवस्थ एवेति चेन्न। उक्तप्रकाराद्धरिच्छब्दाल्लुनातिशब्दे परे "तोर्लि" ( पा०सू०८।४।६३ ) इत्यनेन परसवर्णे कर्त्तव्ये प्राप्तस्य स्थानिवद्भावस्य वारणेन सूत्रकृन्मते ऽप्युदाहरणलाभात्।

चरि—जह्नतुः ॥

"संयोगान्तस्य" (पा०सू० ८ । २ । २३) तदन्तस्येति । अलोऽन्त्यपरिभाषयेति भावः । यद्यपि विशेषणेन तदन्तविधिलाभात्संयोगस्येत्येव सूत्रयितुमुचितं तथा ऽपि प्रत्येकं (१)संयोगसञ्ज्ञेति पक्षे दृषत्करोतीत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणम् । वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्सर्गिकी द्वित्वादिकं तु प्रयत्नलभ्यमिति

शब्दरत्न ।

"सग्धिः स्त्री सहभोजनम्" इत्यमरात्सहस्य सादेश इति प्रतीयते । "झलो झलि" ( पा०सू० ८।२।२६ ) इति सिच एव लोप इति पक्षे छान्दसो वर्णलोपो बोध्यः । स्पष्टं चेदं "धि च" ( पा० सू० ८ । २ । २५ ) इति सूत्रे(२) भाष्ये । लोके तु सग्धिरित्यसाध्वेवेति(३) बोध्यम् ॥

विशेषणेन । पदस्येत्यधिकारप्राप्तविशेषणेन । एकत्वसंख्येति । अभेदैकत्वसंख्येति

ज्योत्स्ना ।

णसम्भवेऽपि सूत्रकृन्मतेनोदाहरणसम्भवस्तदवस्थ एवेति चेन्न । उक्तप्रकाराद्धरिच्छब्दाल्लुनातीतिशब्दे परे "तोर्लि" इतिपरसवर्णे कर्तव्ये प्राप्तस्य स्थानिवद्भावस्य वारणेन सूत्रकृन्मतेऽप्युदाहरणलाभात् ।

"धि च" इति सूत्रे भाष्ये इति । तत्र हि—

धिसकारे सिचो लोपश्चकाद्धीतिप्रयोजनम् ।
आशाध्वं तु कथं ते स्याज्जश्त्वं सस्य भविष्यति ॥ १ ॥
सर्वत्रैवं प्रसिद्धं स्यात् श्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति ॥ २ ॥

---

वि० ( १ ) "वृद्धिरादैच्" इत्यादाविव प्रत्येकं वाक्यपरिसमाप्तिरितिन्यायादिति भावः ।

प्र० ( २ ) तत्र हि ।

"धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वन्तु कथन्ते स्याज्जश्त्वं सस्य भविष्यति ॥ १ ॥
सर्वत्रैवं प्रसिद्धं स्यात् श्रुतिश्चाऽपि न भिद्यते ।
लुङश्चाऽपि न मूर्धन्ये ग्रहणं, सेटि दुष्यति ॥ २ ॥
घसिभस्योर्न सिध्येत्तु तस्मात्सिज्ग्रहणन्न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्त्तारमध्वरे ॥ ३ ॥

निष्कर्त्तारमध्वरस्येति प्राप्ते इष्कर्त्तारमध्वरस्येत्यादिप्रयोग इव छान्दसो वर्णलोप इत्यर्थः ।

प्र० ( ३ ) "धिच" ( पा०सू०८।२।२५ ) इतिसूत्रभाष्योक्तरीत्या "षघ हिंसायाम्" इत्यस्य रूपस्वीकारे तु भाषायामप्यस्य प्रयोग इति ध्येयम् ।

भाष्ये स्थितम् ॥

शब्दरत्न ।

तदर्थः । संख्यासामान्याभाव इति यावत् । विग्रहे एकवचनं तु औत्सिकं(१) सुबन्तत्वसम्पत्तिमात्रफलकमिति समर्थसूत्रे भाष्ये स्पष्टम् । भाष्ये स्थितमिति । संयोगसञ्ज्ञासूत्रस्थे इत्यर्थः । एवं च प्रत्येकं संयोगसञ्ज्ञापक्षस्यानन्तरा इति सूत्राक्षरस्वारस्यं विरोधेन(२) फलाभावेन चासङ्गतत्वमिति तत्रैव भाष्ये ध्वनित तथा ऽत्रत्यमन्तग्रहणं व्यर्थमेव, न तु फलान्तरे ऽभिनिवेशः कार्यं इति भावः ।

यत्तु संयोगेति लुप्तषष्ठीकम्, तच्च पदस्येति चान्तविशेषणम्, संयोगान्तस्य सतः पदान्तस्येत्यर्थमन्तग्रहणमिति । तन्न । तादृशलक्ष्याभावात् । अत एव "घ्वसोः" (पा०

ज्योत्स्ना

"घसिभस्योर्न सिद्धेत्तु तस्मात्सिजग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ॥

निष्कर्तारमध्वरस्येति प्राप्ते इष्कर्तारमध्वरस्येति प्रयोग इव छान्दसो वर्णलोप इत्यर्थः । लोके तु सग्धिरित्यसाध्वेवेति । "धि च" इतिसूत्रभाष्यरीत्या सव-हिंसायामित्यस्य रूपस्वीकारे तु भाषायामप्यस्य प्रयोग इति ध्येयम् ।

अनन्तरा इति सूत्राक्षरस्वारस्य विरोधेनेति । अनन्तरा इत्यस्य अविद्यमानमन्तरं येषामिति ते ऽनन्तरा अव्यवहिता इत्यर्थः । तत्र पर्युदासन्यायेनाव्यवहिता अपि व्यवधानयोग्या एव गृह्यन्ते । स्वाव्यवहितपूर्वत्वसामानाधिकरण्यं स्वाव्यवहितपरत्वसामानाधिरण्यमित्युभयसम्बन्धेन यत्किञ्चित्पदार्थविशिष्टत्ववत्वस्य व्यवहितपदार्थत्वेनैकैकवर्णस्य व्यवधानयोग्यत्वाभावान्न तस्य संयोगसंज्ञाप्रवृत्तिरिति ध्येयम् ।

फलान्तरे इति । अन्तग्रहणस्येति शेषः । केचित्तु—"अस्ति सिच्" इति सूत्रे विद्यमानास्तिसिच इत्यर्थलाभाय सिच्छब्दात्प्राक् संयोगान्तलोपेनःसकारः प्रश्लिष्यते । तथा

---

वि० (१) समासे द्वित्वादिबोधकस्याभावात्सुबन्ततामात्रसंपत्त्यर्थमेकवचनमेव भवतीति भावः। यवक्रीतमित्यादौ तु एकयवेन क्रयासम्भवाद्बहुत्वलाभः । इमामेवाभेदैकत्वसंख्येति व्यवहरन्ति । वस्तुतस्तु 'सत्यपि समुदाये वाक्यपरिसमाप्तिः' इतिन्याये वृद्ध्यादिसंज्ञा यथा प्रत्येकं भवति । एवं सत्यपि 'प्रत्येकं' इति न्याये संयोगसंज्ञा समुदायस्य भवतीति युक्त्या स पक्षः संयोगसंज्ञासूत्रे भाष्ये प्रत्याख्यातो निष्फलश्च । किंच "हलोऽनन्तराः" इत्यस्य आनन्तर्यविशिष्टा हल इत्यर्थः । आनन्तर्यंच द्वयोरेव संभवतीति स पक्षो निर्युक्तिकोऽपीति भावः ।

प्र० (२) अनन्तरा इत्यस्याऽव्यवहिता इत्यर्थः । तत्र पर्युदासन्यायेन अव्यवहिता अपि व्यवधानयोग्या एव गृह्यन्ते । एवं च स्वाव्यवहितपूर्वत्वसामानाधिकरण्यं स्वाव्यवहितपरत्वसामाधिकरण्यमित्युभयसम्बन्धेन यत्किञ्चित्पदार्थविशिष्टद्वित्ववत्त्वस्य व्यवहितपदार्थत्वेन एकैकवर्णस्य व्यवधानयोग्यत्वाभावान्न तस्य संयोगसंज्ञाप्रसक्तिरित्यर्थः ।

"यण—"इति वाचनिकम्। यद्वा वाच्यो व्याख्येयः। व्याख्या च द्वेधा—"झलो झलि" ( पा० सू० ८ । २ । २६ ) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति । (१)अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा । न च षाष्ठी असिद्धपरिभाषा त्रिपादीस्थत्वेनासिद्धमन्तरङ्गं लोपं न पश्यतीति वाच्यम् । कार्यकालपक्षाभ्युपगमात् । न च "नाजा-

शब्दरत्न ।

सू० ६।४।११९ ) इति सूत्रे "द्विशकारको निर्देशः" इति भाष्ये उक्तम् । त्वद्रीत्या संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसंगतिः स्पष्टैव ॥

अपकृष्येति । तच्च षष्ठ्या विपरिणम्य वाक्यभेदेन सम्बध्यते । तेन पूर्ववाक्यस्य क्वचिदझल्यपि प्रवृत्तिः(२) । उत्तरवाक्येन च तस्य क्वाचित्कत्वं ज्ञाप्यते । तेन च नातिप्रसङ्गः । ध्वनितं चेदम् "असो मश्" ( पा० सू० ७।१।४० ) इत्यत्र भाष्ये । तत्र हि मद्वयात्मकमादेशं विधाय शित्त्वं प्रत्याख्यातम् । एकस्य मस्य संयोगान्तलोप

ज्योत्स्ना ।

च प्रत्येकं संयोगसंज्ञापक्षः सिद्धः इत्यन्तग्रहणं सफलमित्याहुस्तन्न । "अस्तिसिच" इत्यत्र सिच्च अस्चेति समाहारद्वन्द्वः, ततोऽस्तीत्यव्ययेन कर्मधारयः । तथा च विद्यमानास्तिसिच इत्यर्थो लभ्यत एवेति प्रश्लेषस्यानुपयोगात् ।

अझल्यपि प्रवृत्तिरिति । अत एव "व्यत्ययो बहुलम्" "लिङ्याशिष्यङ्" इतिसंहितापाठे संयोगान्तलोपेन लकारं प्रश्लिष्य "कर्मवत्कर्मणा" इत्यत्र तमनुवर्त्य लकारस्यैककर्ता कर्मवदिति व्याख्यातम्भाष्ये । तथा च—"संयोगान्तस्य लोप" इत्येकं वाक्यम् अस्यार्थः प्रसिद्धः । "झल" इति द्वितीयम्, तत्र संयोगान्तस्य लोप इत्यनुवर्तते संयोगान्तस्य झलो लोप इत्यर्थः । पूर्वेणैव सिद्धे अयं व्यर्थीभूय पूर्ववाक्यस्य क्वाचित्कत्वं ज्ञापयति । अत्र मानम्—"असो मश्" इति सूत्रस्थम्भाष्यम् । तथाहि—"असो मश्" इत्यत्र शकाराभावे मकारस्य मकारादेशे प्रयोजनं नास्तीति कृत्वा सर्वादेशो भविष्यतीति दूषणेऽभिहिते मकारस्य मकारादेशोऽनुस्वारबाधनार्थो

वि० ( १ ) नन्विदमयुक्तं त्रैपादिकेऽन्तरङ्गे उक्तपरिभाषा न प्रवर्तत इति विसर्जनीयसूत्रे भाष्ये व्यवस्थापितत्वादिति चेन्न। लक्ष्यानुरोधेन क्वचित्प्रवर्तत इत्यस्य तत्रैव कैयटे स्पष्टत्वात् । अत एव कार्तिरित्यात्रान्तरंगे "रदाभ्याम्" इति नत्वे बहिरङ्गावृद्धिरसिद्धा भवतीत्युक्तं भाष्ये । अनया परिभाषया वचनप्रत्याख्यानपरं भाष्यं चाप्यत्र मानम् ।

प्र० ( २ ) अत एव "व्यत्ययो बहुलं लिङ्याशिष्यङ्" ( पा०सू०३।१।८५ ) इति संहितापाठे संयोगान्तलोपेन लकारम्प्रश्लिष्य "कर्मवत्कर्मणा" ( पा०सू०३।१।८३ ) इति सूत्रे तमनुवर्त्य लकारवाच्य एव कर्ता कर्मवदिति व्याख्यातम्भाष्ये ।

नन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधः। तस्यानित्य(१)त्वात्। उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावाच्च। तथा च वार्तिकम्—"संयोगान्तस्य लोपे यणः प्रतिषेधः, न वा झलो लोपाद्", "बहिरङ्गलक्षणत्वाद्वा" इति। इह यथोद्देशपक्षे आद्यं वार्तिकद्वयम्, तृतीयं तु कार्यकालपक्षे इति विवेकः।

यत्त्वाहुः—वार्तिककृतो वचनं प्रत्याख्यानप्रकारद्वयं तु भाष्यकृत इति। तन्निर्मूलम्। मतभेदे प्रमाणाभावात्। यदप्याहुः—काव्यं, कलत्रं, शाल्वं चाच-

---

शब्दरत्न।

इति च कैयटेन व्याख्यातम्। अनित्यत्वादिति। तत्र च ज्ञापकं "केऽणः" (पा० सू० ७।४।१३) इति निर्देशः। क इ अण इति स्थिते लक्ष्यगतपरत्वमाश्रित्याप्राप्त इकारस्य यण् असिद्धपरिभाषया तत्र व्यावर्त्यते। "अन्तरङ्गं बलीयः" इति परिभाषान्तरं नास्त्येवेति भावः।

(२)वस्तुत "ओमाङोश्च" (पा० सू० ६।१।९५) इत्याङ्ग्रहणादनित्यमिदम्। तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वादाद्गुणे वृद्धिबाधनार्थम्। उदाहरणं तु(३) अक्षद्यूरिति। अन्यथा अन्तरङ्गे यण्यूठसिद्धः स्यात्। मतभेद इति। न वेति वाशब्दस्वारस्येन वचनारम्भवादिन एव प्रत्याख्यानप्रकारो भाष्यकृत्तु तर्हि वक्तव्यं न वक्तव्यमित्यादिशब्दैरेव प्रत्याचष्टे इति

ज्योत्स्ना।

भविष्यतीति दूषणे परेण दत्ते 'एवन्तर्हि द्विमकारको निर्देशः करिष्यत' इत्युक्तम्। द्विमकारक इति प्रतीकमुपादायैकस्य मस्य संयोगान्तलोपः करिष्यत इति कैयटेनोक्तमिति दिक्।

उदाहरणन्त्वक्षद्यूरिति। 'नाजानन्तय' इति परिभाषोदाहरणमित्यर्थः। अर्थस्तु परिभाषायाः—अज्निष्ठान्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये बहिष्ट्वप्रक्लृप्तिः। बहिष्ट्वपदेन बहिरङ्गत्वमुच्यते तत्प्रयुक्तस्यासिद्धत्वकल्पनन्नेत्यर्थः। पूर्वपूर्वस्थानिकमन्तर-

---

वि० (१) "ओमाङोश्च" इत्याङ्ग्रहणमत्र मानम्। तद्धि शिव आ इहि इति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेन अन्तरङ्गत्वाद्गुणे कृते वृद्धिबाधनार्थम्।

वि० (२) नन्वेवमपि लक्ष्यगतपरत्वस्य विप्रतिषेधसूत्रे ग्रहणमित्यस्य "अचः पर" इति सूत्रे भाष्ये ध्वनिततया तस्यानियामकत्वेन शास्त्रीयाशास्त्रीययोराद्यस्य प्राबल्येन च पाठकृतपरत्वेन गुणे निर्देशोपपत्तिरत आह—वस्तुत इति।

प्र० (३) "नाजानन्तय बहिष्ट्वप्रक्लृप्तिः" इतिपरिभाषोदाहरणमित्यर्थः। परिभाषार्थस्तु अज्निष्ठाऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये बहिष्ट्वप्रक्लृप्तिः। बहिष्ट्वपदेन बहिरङ्गत्वमुच्यते। तत्प्रयुक्तस्यासिद्धत्वस्य प्रकल्पनन्नेत्यर्थः।

त्वाणः काव् कलत् शाल्, अदभ्रयतेरधब् इति। तदपि न। पदत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात् । आद्यपदद्वयैकरूप्यार्थं पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्यल्लोपणिलोपयोरसिद्धत्वस्य सुवचत्वात् । अत एव कातन्त्रपरिशिष्टे शुक्लयतेः क्विपि शुक्ल् इत्युदाहृतम् । वान्तयोः क्विपि ऊठो दुर्वारत्वात् । न च स्थानिवत्त्वम् । क्वौ विधिं प्रति तन्निषेधात् । विचि "लोपो व्योः—" ( पा० सू० ६।१।६६ ) इति लोपस्य प्रसङ्गाच्च । गिरिवेशम-

शब्दरत्न ।

सर्वं वार्तिककृत एवेति भावः। काविल्यादि। संयोगान्तलोपादिति भावः। ननु पूर्वपूर्वस्थानिकमन्तरङ्गमित्यर्थो(१) न भाष्यसम्मतः(२)। किं तु पूर्वपूर्वनिमित्तकमित्येव(३)। किं च प्रतिपादिकाद् णिजुत्पत्तेरेव भाष्यसम्मततया बहिर्भूतसुब्निमित्तकसंयोगान्तलोपोऽपि बहिरङ्ग इत्यरुचेराह—वान्तयोरिति। काव्ये यलोपे स्थानिवत्त्वनिषेधात् "लोपो व्योः" ( पा० सू० ६।१।६६ ) इति कृते वान्तत्वमिति ऊठ् दुर्वारोऽन्त्ये स स्वत एवेति तत्र वलोपं बाधित्वोठ् दुर्वार इत्यर्थः। विचीति। काव्यशब्दे इति शेषः। यलोपे स्थानिवत्त्व निषेधात्। एवं च प्राचीनोक्तं संयोगान्तलोपोदाहरणत्वमयुक्तमिति भावः। शाल्वे

ज्योत्स्ना ।

ङ्गमित्यर्थो न भाष्यसम्मत इति। अत एव "प्रकृत्यैकाच्" इति सूत्रे प्रयोजनखण्डनावसरे स्रजीयानित्यादौ "विन्मतोः" इति लुकि कृते ऽवशिष्टभागे टिलोपमाशङ्क्य तक्रन्यायेन टिलोपापवाद—"विन्मतोः" इतिलुक्प्रवृत्त्या वारितम्भाष्ये। अत्र कैयटः—यद्यपि विषयभेदेन टिलोपो भिन्नस्तथाप्यनपेक्षितविषयभेदटिलोपशास्त्रं 'येन नाप्राप्तिन्यायेन' लुका बाध्यते। तेन स्रजीयानित्यादौ साम्प्रतिकाभावेनात्र टिलोपप्राप्तिः पतिष्ठादौ सावकाशा लुका बाध्यत इति जातिपक्षमाश्रित्य बाधकत्वमुक्तम्। तस्यो-

वि० (१) स्रजिष्ठ इत्यादौ विन्लुकष्टिलोपापवादत्वेन प्रवृत्त्या ततः प्राप्तटिलोपस्य जातिपक्षाश्रयणेन वारणप्रयासस्य "प्रकृत्यैकाच्" इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृतोरीकृतस्य वैफल्यापत्तेः॥

प्र० (२) अत एव "प्रकृत्यैकाच्" (पा सू ६।४।१६३) इति सूत्रे प्रयोजनखण्डनावसरे स्रजीयानित्यादौ "विन्मतोः" (पा० सू० ५।३।३५) इति लुकि कृतेऽवशिष्टभागे टिलोपमाशङ्क्य तक्रन्यायेन टिलोपापवादविन्लुक्प्रवृत्त्या वारितम्भाष्ये। अत्र कैयटः—यद्यपि विषयभेदेन टिलोपो भिन्नस्तथाऽप्यनपेक्षितविषयभेदं टिलोपशास्त्रं येन नाप्राप्तिन्यायेन लुका बाध्यते। तेन स्रजीयानित्यादौ साम्प्रतिकी भाविनी च टिलोपप्राप्तिः पटिष्ठादौ सावकाशा लुका बाध्यते इति जातिपक्षमाश्रित्य बाधकत्वमुक्तवान्। तस्य चोक्तरीतिस्वीकारे वैयर्थ्यं स्यादित्यर्थः।

वि० (३) एवः प्रातिपदिकादित्यग्रे योज्यः। तेन सुबन्तव्यावृत्तिः।

यतेस्तु क्विपि यणः प्रतिषेधार्थ वचनारम्भपक्षे गिरिवेडित्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति दिक्।

इति पक्ष इति। पक्षद्वयस्यापि भाष्ये स्थितत्वादिति भावः। चत्वारि

शब्दरत्न।

तु अल्लोपादेः स्थानिवत्त्वान्न तत्प्रसक्तिरिति बोध्यम्। मान्तमेवेति। अस्य प्राप्नोतीति शेषः। तस्मात्तत्पक्षे ऽपि वाक्यभेदेन व्याख्याय गिरिवेडित्येव। अन्यथा ऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादितिभावः। दिगिति। दिगर्थस्तु संयोगान्तलोपसंयोगादिलोपविषयकतया ऽऽरब्धस्य "यणः प्रतिषेध"—इतिवचनस्य संयोगान्तलोपविषयकस्य "झलो लोपात्" इति प्रत्याख्यानम्। अत एव तत्र "संयोगान्तलोपो झलो लोप"इति भाष्ये व्याख्या कृता। "बहिरङ्गलक्षणत्वाद्वा" इत्यस्य तु बहिरङ्गो यणादेशो ऽन्तरङ्गो लोप इति व्याख्यानेन वार्तिकस्वारस्येन चेदृशानां (१)लक्ष्याणामनभिधानमेव। वस्तुतस्तृतीयं वार्तिकं विसर्जनीयसूत्रभाष्ये(२)कार्यकालपक्षमुपक्रम्य "अयुक्तोऽयं परिहारो नवा बहिरङ्गलक्षणत्वाद्वा" इत्यनेन दूषितमित्यलम्।

ज्योत्स्ना।

त्करीतिस्वीकारे वैयर्थ्यमिति। ईदृशानामिति। अकृत्रिमयण्घटितलक्ष्याणामित्यर्थः। विसर्जनीयसूत्रे भाष्य इति। तत्र हि-नार्कुटो नार्पत्य इत्यादौ प्राप्तविसर्गवारणायारब्धस्य "विसर्जनीयोऽनुत्तरपदे" इतिवार्त्तिकस्य खण्डनावसरे "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यनेन गतार्थत्वमुक्तमेकदेशिना। ततोऽन्तरङ्गबहिरङ्गयोः सनिरूपकत्त्वेन परस्परं प्रति परस्परज्ञानस्यापेक्षितत्त्वेन त्रैपादिके तदसम्भवप्रदर्शनायोच्यते सिद्धान्तिना। नैषयुक्तः परिहारो 'अन्तरङ्गं बहिरङ्गम्' इति प्रतिद्वन्द्वभाविनावेतौ पक्षौ सत्यन्तरङ्गे बहिरङ्गं, सति च बहिरङ्गेऽन्तरङ्गं भवतीति। अन्ते चातोऽयुक्तोऽयम्परिहार इत्युक्तम्।

---

प्र० (१) ईदृशानामिति। अकृत्रिमयण्घटितलक्ष्याणामित्यर्थः।

प्र० (२) तत्र हि नार्कुटो नार्पत्य इत्यादौ प्राप्तविसर्गवारणायारब्धस्य "विसर्जनीयोऽनुत्तरपदे" इति वार्त्तिकस्य खण्डनावसरे "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया गतार्थत्वमुक्तमेकदेशिना। ततोऽन्तरङ्गबहिरङ्गयोः सनिरूपकत्वेन परस्परं प्रति परस्परज्ञानस्यापेक्षितत्वेन त्रैपादिके तदसम्भवप्रदर्शनायोच्यते सिद्धान्तिना—नैष युक्तः परिहारः, अन्तरङ्गम्बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गम्भवतीति। अन्ते चाऽतोऽयुक्तोऽयम्परिहार इत्याद्युपसंहृतम्।

रूपाणीति । यत्तु वदन्ति—धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे च नव रूपाणि । तथा हि—एकधं च त्रिधा । एकयं द्वियं त्रियं च । एवं द्विधं त्रिधं च त्रिधेति । न चान्तरङ्गे द्वित्वे बहिरङ्गपरिभाषा न प्रवर्त्तत इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादिति । अत्रेदं वक्तव्यम्–पुनर्द्वित्वमशुद्धम् । एकस्यां व्यक्तौ एकं लक्षणं सकृदेव

शब्दरत्न ।

उभयद्वित्वेति । द्विधं द्वियमेकम् । [१]पुनर्द्वित्वे त्रिधं त्रियम् । [२] अन्यतरंति । एकधं द्वियं त्रियं च[३] [४] एकयं द्विधं त्रिधं च [५] । [६] द्वयोरपि द्वित्वे अन्यत-

ज्योत्स्ना ।

एकस्यां व्यक्तावित्यादि । 'लक्ष्ये लक्षणं सकृदेव प्रवर्तत' इति न्यायादिति भावः । अत्र तल्लक्ष्यत्वञ्च—स्वीयप्राथमिकप्रवृत्तावुद्देश्यतावच्छेदकावच्छेदेनाश्रीयमाणो यावान् शब्दसमुदायः, तद्विशिष्टाघटितत्वे सति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम् । वैशिष्ट्यञ्च–स्वाघटकत्व स्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्व एतदुभयसम्बन्धेन । सुद्ध्युपास्य इत्यत्र "अनचि च" इति शास्त्रप्रवृत्तौ पदत्वरूपस्वीयोद्देश्यतावच्छेदकरूपेणाश्रीयमाणो यः समुदायः सुध् य् इति तद्घटकत्वं यद्यपि द्वित्वनिष्पन्ने द्वितीयधकारेऽस्ति तथापि द्वितीयसम्बन्धाभावात्तदुभयसम्बन्धेन तादृशसमुदायविशिष्ट उदासीनः तदघटितत्वम् सुध् य् इति लक्ष्यस्येति लक्षणसमन्वयः । अतस्तल्लक्ष्यत्वाभावात्पुनर्द्वित्वं भवति । यूनः इत्यत्र "श्वयुव" इति शास्त्रीयवकारनिष्ठप्राथमिकप्रवृत्तिपूर्वकालिकप्रवृत्तिर्यकारनिष्ठाः तद्विषयाघटितत्त्वाभावेन तल्लक्ष्यत्वाभावात्पुनस्सम्प्रसारणप्राप्तौ "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधश्चरितार्थः । अस्य निवेशे एतदेव सूत्रं प्रमाणम् । अत एव भूयादित्यत्र सकारद्वयस्य लोपो जायते । मात्रपदनिवेशात्काण्डे कुडये इत्यादौ तल्लक्ष्यत्त्वाभावेन पुनः प्राप्तस्य ह्रस्वस्य प्रकारान्तरेण वारणपरं भाष्यं सङ्गच्छते । षड् ध् सन्त इत्यत्र "खरि च" इत्यस्य प्रवृत्तिः प्राथमिकी धकारनिष्ठा तत्पूर्वकालिकप्राप्तिर्डकारनिष्ठा, धुट्प्रवृत्तेः पूर्वं डकारे "खरि च" इत्यस्य प्राप्तिसत्त्वात् । तादृशप्राप्तिविषयडकारघटितत्वेन तल्लक्ष्यत्वाभावाड्डकारे चर्त्वं सिद्ध्यति । नचैवमपि या सा इत्यादौ टापा सहैकादेशोत्तरं पुनस्त्यदाद्यत्वापत्तिः, काण्डे इत्यनेन समत्वादिति वाच्यम् । "न यासयोः" इति निर्देशेन टापा सहैकादेशस्थले तल्लक्ष्यत्वज्ञापनेनादोषात् । मात्रपदघटितत्त्वनिवेशेन स्वोद्देश्यकविभक्त्यनुद्देश्यकत्वस्य ग्रहणेन टाबैकादेशस्य स्वघटकमात्रोद्देश्यकविकारघटितत्वेन तदितराघटितत्वरूपतल्लक्ष्यत्वसत्वेनादोषाच्च । न च दीव्यन्तीत्यत्र श्यन्प्रवृत्त्युत्तरं दीव्येति समुदायस्य तल्लक्ष्यत्वाभावेन पुनः श्यनापत्तिः । श्यनः स्वीयप्राथमिकप्रवृत्ता-

प्रवर्त्तत(१)इति "एकः पूर्वपरयोः" ( पा० सू० ६।१।८४ ) इति सूत्रे भाष्ये सिद्धान्तितत्वात्। अन्यथा द्वित्वानामानन्त्यापत्तेः। न च "झरो झरि" ( पा० सू० ८।४।६५ ) इति "हलो यमाम्–" ( पा० सू० ८।४।६४ ) इति

शब्दरत्न।

रस्य पुनर्द्वित्वे द्विधं त्रियम्, [७] त्रिधं द्वियं च। [८] अनुभयद्वित्वे एकधमेकयम्। [९] लोपविकल्पान्यतरद्वित्वयोः समफलतासम्भवमात्रेण तु तदुक्तिः। एकः पूर्वपरयोरि-

ज्योत्स्ना

वाश्रीयमाणदिवीतिसमुदायाघटकत्वेन तत्समुदायघटकमात्रोद्देश्यकविकारेतरत्वेन च स्वविशिष्टत्वात्। न च विकारपदेन प्रत्ययस्यापि ग्रहणेनादोष इति वाच्यम्। हेतुमण्यन्तस्य तल्लक्ष्यत्वापत्त्या पुनस्ततो हेतुमण्णिचोऽनुपपत्तिप्रसङ्गादिति वाच्यम्। विशिष्टपदेन एतल्लक्षणे विकरणोत्तरस्य ग्रहणेनादोषात्। श्यनादीनां प्रत्ययत्वेन स्वप्रकृतिभूतधात्वर्थप्रत्यायकतया कर्त्रर्थत्वाभावेन पुनस्तत्प्राप्तेर्दुर्वारत्वाच्चेति दिक्।

अन्ये तु–शास्त्रविशिष्टत्वं तल्लक्ष्यत्वम्, वैशिष्ट्यं च—स्वीयप्रथमप्रवृत्तिप्रयोजकीभूतसाक्षादुद्देश्यताश्रयविशिष्टाघटितत्वम्। विशिष्टवैशिष्ट्यम्—स्वभिन्नत्व स्वोद्देश्यकविकारभिन्नत्व स्वोद्देश्यकविकारोद्देश्यकविकारभिन्नत्व एतत्त्रितयान्यतमसम्बन्धेन। वैशिष्टे प्रथमसम्बन्धनिवेशाद्वृक्षं वृक्षं प्रतीत्यत्र प्रथमवृक्षमित्यस्य न द्वित्वं; द्वितीयवैशिष्ट्यनिवेशात् द्वितीयवृक्षशब्दस्य न द्वित्वम् 'आगन्तुकानामग्रे प्रवेशः' इति न्यायात्। तृतीयवैशिष्ट्यनिवेशादुदवोढामित्यत्र ओकारस्य न पुनर्वृद्धिः। साक्षादिति निवेशात् "न सम्प्रसारणे सम्प्रसारणम्"इत्यस्य नानर्थक्यम्। साक्षादिति निवेशफलन्तु सुद्ध्युपास्य इत्यादौ धकारस्य द्वित्वे कृतेऽपि सकारादीनां द्वित्वसिद्धिरित्याहुः।

सम्भवमात्रेणेति। ननु यदि लोपस्य वैकल्पिकत्वेन तत्कृतो न विशेषस्तर्हि तस्योपन्यासो व्यर्थ इति ब्रवीति—सम्भवमात्रेणेति। तदुक्तिरिति। लोपविकल्पोक्तिरित्यर्थः।

---

प्र० ( १ ) तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्त्तत इत्यर्थः। तल्लक्ष्यत्वं च प्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटको यस्तदघटितत्वम्। तेन सुध्युपास्य इत्यादौ "अनचि च" (पा० सू० ८।४।४७) इति शास्त्रस्य प्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणः समुदाय उध् इति तदघटको य आस् इति तदघटितत्वस्य उध् इति समुदाये सत्त्वेन तस्य तल्लक्ष्यत्वेऽपि आस् इति समुदायस्य तल्लक्ष्यत्वाभावात्तत्राऽपि "अनचि च" इति द्वित्वं प्रवर्तते। एवमेव पट्व्या मृद्व्येत्यादौ "इको यणचि" (पा० सू० ६।१।७७) इत्यादेर्वारद्वयं प्रवृत्तिः। नन्वेवं पथ इत्यादौ "भस्य टेर्लोपः" ( पा० सू० ७।१।८८ ) इति शास्त्रस्य प्रथमप्रवृत्तौ पथिन्शब्दघटकस्य इन् इत्यस्योद्देश्यत्वेनाश्रयणेऽपि पथ् इति समुदायस्योद्देश्यत्वेनानाश्रयणात् तस्योक्तरीत्या तल्लक्ष्यत्वाऽभावात्तत्रापि टिलोपः स्यादिति चेन्न। उद्देश्यत्वेनेत्यस्योपयोगित्वेनेत्यर्थात्। तथाचोद्देश्यतावच्छेदकत्वेन वा ऽऽश्रयणस्य तल्लक्ष्यत्वप्रयोजकत्वेन प्रकृते प्रथमप्रवृत्तौ

शब्दरत्न ।

ति । तत्र हि यथा ऽनयोः पूलयोः कटं कुर्वित्यादौ एकवाक्यतयैव बोधादेकत्वविव-

उद्देश्यतावच्छेदकत्वेन पथिन्शब्दस्याश्रितत्वाद् द्वितीयप्रवृत्तौ च तदघटकाघटितस्यैवाश्रयणीयत्वेन तस्यापि तल्लक्ष्यत्वसिद्धेः । अत एव "पथः संख्या"–इत्यादिनिर्देशसङ्गतिः ।

नन्वेवमपि सर्वेषामित्यादौ सर्व आमित्यवस्थायामामः सुडागमे कृते यदागमन्यायेन तस्याऽऽम्त्वात् प्रथमप्रवृत्तौ य उद्देश्यत्वेनाश्रित आम् तदघटको यः सुडागमस्तद्घटितत्वेन तल्लक्ष्यत्वात्वाभावात्पुनः पुनः सुट् स्यात् । एवम् अगौप्सीदित्यादावपि अगुप् स ईत् इत्यवस्थायां "वदव्रज"–(पा० सू० ७।२।३) इति वृद्धेः प्रथमप्रवृत्तावाश्रीयमाणो य गुप् इति तदघटको य औकारस्तदघटितत्वाभावेन तल्लक्ष्यत्वाभावात्पुनरपि वृद्धिः स्यादिति चेन्न । आश्रीयमाणाऽघटके आश्रीयमाणघटकोद्देश्यकागमविकारातिरिक्तेति विशेषणदानेनाऽदोषात् । तथा च सुडागमस्य औकारस्य वाऽऽश्रीयमाणाघटकोद्देश्यकागमविकारातिरिक्तत्वाभावान्न दोषः । अत एव "हलि सर्वेषाम्" ( पा० सू० ८।३।२२ ) इति निर्देशस्य, "सिचि वृद्धिः" ( पा० सू० ७।२।१ ) इति सूत्रस्थस्योदवोढामित्यत्राऽनेन न्यायेन वृद्धिवारणपरभाष्यस्य च सङ्गतिः ॥ नन्वेवमपि गोपायन्तीत्यादौ गोपाय अ अन्तीत्यवस्थायां द्वितीयतृतीयाऽकारयोः पररूपावसरे "अतो गुणे" ( पा० सू० ६।१।९७ ) इत्यस्य प्रथमप्रवृत्तावाश्रीयमाणो यो द्वितीयाऽकारस्तदघटको यः पररूपनिष्पन्नोऽकारस्तस्याऽऽश्रीयमाणघटकोद्देश्यकविकारातिरिक्तत्वाऽभावेन तल्लक्ष्यत्वात्तत्स्थाने पुनः पररूपं न स्यादिति चेन्न । विकारांशे तद्घटकमात्रोद्देश्यकेति मात्रपदनिवेशस्य विवक्षितत्वात् । तथा च प्रकृते पररूपनिष्पन्नाकारस्योभयस्थानिकत्वेन तन्मात्रोद्देश्यकत्वाऽभावेन न दोष इति दिक् ।

नन्वेवमपि राजपुरुष इत्यादौ "सुपो धातु–"( पा०सू० २।४।७१ ) इतिशास्त्रेण राजपदोत्तरङस्प्रत्ययलोपावसरे प्रातिपदिकस्योद्देश्यतावच्छेदकत्वेनाश्रितत्वात् पुरुषपदोत्तरसुलोपावसरे च तस्यैव तथात्वेनाश्रीयमाणत्वेन तल्लक्ष्यत्वात्पुनः प्रवृत्तिर्न स्यादिति चेन्न । समानकालिकप्राप्तिविषयाघटितत्वस्य लक्षणे निवेशेनादोषात् । प्रकृते च ङस्प्रत्ययलोपकाले एव पुरुषपदोत्तरसुलोपस्यापि प्राप्त्या समानकालिकप्राप्तिविषयघटितत्वमेव, न तु तदघटितत्वमिति तल्लक्ष्यत्वाऽभावान्न दोषः । एवमेव पधिषीष्ट, भवेत्, इत्यादौ षत्वसलोपादेर्द्विवारं प्रवृत्तिः । अत एव "न सम्प्रसारणम्" इति निषेधः सङ्गच्छते, अन्यथैकस्मिन् लक्ष्ये सम्प्रसारणद्वयासंभवेन तदसङ्गतिः स्पष्टैव । नन्वेवमपि लिट्सु इत्यत्र धकारस्य चर्त्वावसरे "खरि च" इत्यत्र "पदस्य" इत्यधिकारप्राप्तस्य वैयधिकरण्येन पदावयवे खरीति सम्बन्धे पदस्योद्देश्यतावच्छेदकत्वेनाश्रितत्वाद् द्वितीयप्रवृत्तौ च तस्य तथात्वेनाऽऽश्रयणीयत्वात् समानकालिकप्राप्तिविषयाघटितत्वेन च तल्लक्ष्यत्वापत्त्या पुनः प्रवृत्तिर्न स्यादिति चेन्न । समानकालिकेत्यस्य प्रथमप्रवृत्त्यनुत्तरकालिकप्राप्तीत्याद्यर्थविवक्षणात् । प्रकृते चोत्तरकालिकप्राप्तिभिन्नपूर्वकालिकप्राप्तिविषयघटितत्वेन तल्लक्ष्यत्वाभावात् । एवं च क्वचित्समानकालिकप्राप्तिः क्वचिच्च प्रथमप्रवृत्तिपूर्वकालिकप्राप्तिस्तल्लक्ष्यत्वाभावप्रयोजिकेत्यर्थः । अस्ति हि प्रकृते धुडागमात्पूर्वं डकारस्य चर्त्वप्राप्तिरिति न दोष इत्यलम् ।

शब्दरत्न।

क्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिस्तथा आदचिपूर्वपरयोर्गुण इत्यादावपि द्वन्द्वनिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोः स्थाने एक (१)एवादेशो भविष्यतीत्येकग्रहणं प्रत्याख्याय शङ्कितम्–शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधकं, यथा ऽऽधानेनाग्नीन्संस्कुर्यादित्यर्थकं "वसन्ते ब्राह्मणोऽग्नीनादधीत" इति वाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकं सकृदेव स्वविषये प्रवर्तकं च। अत एव पुनः पुनर्नाधानादिसंस्कारः, तथा व्याकरणशास्त्रस्य "अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्यः" इत्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यात्। अतस्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः। तद्वत्पूर्वपरविषये ऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति। तत्र गुणो भवतीत्याद्यंशो लक्ष्यसंस्कारफलक एव यथाऽऽधानमग्निसंस्कारकं, शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एवेति तदाशयः। ततः सिद्धान्तितम्। यथा नित्यनैमित्तिककाम्यविधीनां(२) तदकरणजन्यप्रत्यवायपरिहाराय फलाय च वाक्यभेदेन तत्तद्विषयकशास्त्रोपप्लवात् पुनः प्रवर्तकत्वम्। तथा ममाप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः। "एकः शब्द सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठुप्रयुक्तः स्वर्गेलोके च कामधुग्भवति"

ज्योत्स्ना।

नित्यनैमित्तिककाम्यविधीनामिति। नित्यविधित्वं नित्यकर्मविधायकत्वम्। एवं नैमित्तिककाम्यविधिष्वपि बोध्यम्। तत्र नित्यकर्मत्वञ्च तदनुष्ठाने चित्तशुद्धयतिरिक्तफलविशेषाजनकत्वे सति तदननुष्ठाने प्रत्यवायसाधकत्वम्। यथा 'यावज्जीवमग्निहोत्रं जुहोति' 'अहरहः सन्ध्यामुपासीत' इत्यादौ। नैमित्तिककर्मत्वञ्च–अनुष्ठाने फलविशेषजनकत्वे

---

वि० (१) एक एव भवतीत्यर्थः। न तु "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" "उभौ साभ्यासस्य" इति वदनेकः। तत्र गमकस्य स्थानिभेदसूचकस्य सत्त्वेऽप्यत्र तदभावात्। अग्नीषोमाभ्यामित्यादौ द्वन्द्वोत्तरचतुर्थ्याविशिष्टे एकप्रदेयनिरूपितदेवतात्वबोधनवदत्र द्वन्द्वोत्तरषष्ठ्या एकविधेयनिरूपितविशिष्टनिष्ठैकस्थानित्वबोधनेनात्रादेशद्वयाप्राप्तेरितिभावः॥

प्र० (२) नित्यविधित्वं नित्यकर्मविधायकत्वम्। एवं काम्यनैमित्तिकविधिष्वपि बोध्यम्। तत्र नित्यकर्मत्वं च—तदनुष्ठाने चित्तशुद्धयतिरिक्तफलविशेषाजनकत्वे सति तदननुष्ठाने प्रत्यवायसाधकत्वम्। यथा "यावज्जीवं अग्निहोत्रं जुहोति" "अहरहः सन्ध्यामुपासीत" इत्यादौ। नैमित्तिककर्मत्वं च–तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायजनकत्वम्। यथा "यस्याहिताग्नेरग्निगृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमाष्टाकपालं निर्वपेत्" "राहूपरागे स्नायात्" इत्यादौ। काम्यकर्मत्वं च—तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायाजनकत्वम्। यथा "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः"। "उद्भिदा यजेत पशुकामः" इत्यादौ।

च लोपेन निर्वाहः । लोपस्य वैकल्पिकत्वात् । कथमन्यथा त्रिधं त्रियं चेति भवदुक्तिः सङ्गच्छेत । किं चैवं सति "सर्वस्य द्वे (पा० सू० ८।१।१) इति

शब्दरत्न ।

इत्यनेन काम्यत्वं चेति तत्तद्विषयानन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग इति । एवं प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्कारार्थत्वमेवोक्तम् । एवं च तस्याधानादिवद्देवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि एकाग्नाविवैकलक्ष्ये नावृत्तिरिति पूर्वपरयोर्नादेशद्वयप्रसक्तिरिति तत्तात्पर्यम् । एवं च स्पष्टमेव पूर्वपक्षसिद्धान्तयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित इति भावः । "संप्रसारणाच्च" (पा० सू० ६।१।१०८) इति सूत्रे भाष्ये ऽपि स्फुटोऽयम् । वकल्पिकत्वादिति । एवं च पक्षे द्वित्वानामानन्त्यापत्त्या परिनिष्ठितत्वाभावापत्तिः । न च त्वदुक्तरीत्या ऽऽनन्त्यापत्तिप्रयुक्तमपरिनिष्ठितत्वमसकृत्प्रवृत्तौ बाधकमिति लभ्यते । तच्च नात्र, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहितप्रयोगस्य परिनिष्ठितत्वसंभवात् । अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं हि परिनिष्ठितत्वमिति वाच्यम् । आनन्त्यापत्तेरित्यस्य चतुष्पञ्चादिधकारयकाराणामापत्त्या त्रिधमित्यादित्वदुक्तमर्यादाभङ्गापत्तेरित्यर्थात् । तद् ध्वनयन्वक्ष्यति—नवत्वोक्तिरसङ्गतैवेति । आनन्त्यापत्तिरेव तन्न्यायबीजमिति तु न युक्तम् । उदवोढामित्यादौ उद् अवह् स् तामित्यवस्थायां सिज्लोपादेरसिद्धत्वात्सिचि वृद्धावोकारे "लक्ष्ये लक्षणस्य" इति न्यायेन पुनर्वृद्धिर्नेति "सिचि वृद्धिः—" (पा० सू० ७।२।१) इति सूत्रस्थभाष्यविरोधात् । आनन्त्यापत्तेस्तत्राभावात् । एतद्भाष्यप्रामाण्येन विकारकृतभेदेन न लक्ष्यभेदाश्रयणम् । "समः सुटि" (पा० सू० ८।३।५) इति सूत्रं चास्यां मानम् । अन्यथा "समो वा लोपम्—" इत्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकारस्यापि सिद्धयैतद्वैयर्थ्यं स्पष्टमेव । "इरयोरे" (पा० सू० ६।४।७६) इति सूत्रे इरयोरिति द्विर्वचनं तु स्वविधेयस्य स्व-

ज्योत्स्ना ।

सति तदननुष्ठाने प्रत्यवायसाधकत्वम् । यथा यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, 'राहूपरागे स्नायात्' इत्यादौ । काम्यकर्मत्वं च—तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायाजनकत्वम् । यथा सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः । 'उद्भिदा यजेत पशुकामः' इत्यादौ ॥

उक्तार्थे भाष्यान्तरमपि साधकमित्याह—"सम्प्रसारणाच्च" इतिसूत्र इति । तत्र हि-शकद्धर्थमित्यत्र सम्प्रसारणपूर्वत्वमाशङ्क्य वाक्यस्य सम्प्रसारणपक्षमादाय पूर्वरूपनिष्पन्नस्य न सम्प्रसारणत्वमिति समाधाय समाधानान्तरं कृतं 'कृतकार्यत्वाद्वा' इति । स्वस्मिन्नुद्देश्यत्वाप्राप्त्येति । नन्वेवमशङ्खादाचारक्विबन्तात् "हेतुमणिणचि अतो लोपे पुनः प्रेषणविवक्षायां पुनर्णिच् न स्यात् । "हेतुमति च" इति शास्त्रविहितस्य णिच ए-

द्वित्वमपि पुनः पुनः प्रवर्तेत। अत एव "लिटि धातोः–" (पा० सू० ६।१।८) इति सूत्रे ऽनभ्यासग्रहणं भाष्ये प्रत्याख्यातम्। सन्नन्ताद्यङन्ताद्वा णिचि चङि द्वित्वाभावाथ तदिति तु कैयटादिभिरुक्तम्। तस्मादिह त्यज वा पञ्चमादीनि रूपाणि स्वीकुरु वा रूपानन्त्यमिति नवत्वोक्तिरसङ्गतैव। सकारद्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेति त्वन्यदेतत्। यदप्युक्तं त्रैपादिके ऽन्तरङ्गे इत्यादि। तदपि न। नार्कुटो नार्पत्य इत्यत्र विसर्गवारणाय वृद्धेर-

शब्दरत्न।

स्मिन्नुद्देश्यत्वाप्राप्त्या(१) तत्प्राप्तये इति न तदस्यां मानम्। न च तत्र "सहिवहोरोत्–" (पा० सू० ६।३।११२) इति तपरत्वसामर्थ्याद् न वृद्धिरिति वाच्यम्। अशाब्दत्वात्, अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादया लाभात्। एतेन सुद्ध्युपास्ये पूर्वधस्य द्वित्वे जश्त्वे लक्ष्यभेदात्पुनर्द्वित्वमित्यपास्तम्। पूर्वमकारस्येदानीमोकारस्येति लक्ष्यभेदस्योदवोढामित्यादावपि सत्त्वेनोक्तभाष्यविरोधात्। विकारान्यानुपूर्व्यैक्येन लक्ष्यैक्यं तु ममाप्यस्त्येवेति दिक्। इति द्वित्वमपीति। एतेनाष्टमिकवर्णद्वित्वं स्थाने द्वित्वमिति लक्ष्यभेदोऽस्तीति परास्तम्। पदद्वित्वस्याप्यावृत्त्यापत्तेः। वस्तुतस्तत्पाष्ठद्वित्ववन्न स्थाने द्विर्वचनमित्यन्यत्र निरूपितम्। प्रत्याख्यातमिति। "अनभ्यासप्रतिषेधोऽनर्थकश्छन्दसि वावचनात्, नोनूयतेर्नोनावेत्यादौ न दोष" इति भाष्यम्। "एकस्यैकाचो द्वित्वे कृते एकाज्व्यपदेशे हेतोरचो द्विरुक्तत्वाद्, अनेन न्यायेनाचः पुनः पुनर्द्वित्वाप्राप्तौ अवयवान्तरस्यैकाच्त्वाभावेन तदप्रवृत्तौ तद् व्यर्थम्" इति च तदाशयः कैयटेनोक्तः। कैयटादिभिरिति। अत्रारुचिबीजं तु भाष्यप्रामाण्येन, "तेषामनभिधानं, "स्तौतिण्योः—" (पा० सू० ८।३।६१) इति सूत्रस्थः सोषुप्यतेः सन् 'सोषुपिषत' इति भाष्यप्रयोगोऽपि छान्दस इत्याहुः। रूपानन्त्यमिति। रूपाधिक्यमित्यर्थः। तदाह—नवत्वोक्तिरसङ्गतैवेति। सकारद्वित्वे इति। अच्परयत्वावच्छिन्नं ह्यस्य लक्ष्यम्, तत्रैकस्मिन् धकारे प्रवृत्तावपि तादृशे सकारे लक्ष्यभेदात्पुनः प्रवृत्तिर्भवत्येवेति भावः। एवं संप्रसारणादिविधौ यण्त्वावच्छिन्नमुद्देश्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुनः प्रवृत्तिर्भवत्येवेति न "न संप्रसारणे" (पा० सू० ६।१।३७) इत्यादेर्वैयर्थ्यमिति बोध्यम्। तदपि नेति। यथोद्देशपक्षे इत्यनु-

ज्योत्स्ना।

व द्वितीयणिज्विधावुद्देश्यत्वादिति चेन्न। स्वीयविधेयतावच्छेदकस्य स्वीयोद्देश्यता-

---

प्र० (१) नन्वेवम् अशब्दाचारक्विबन्ताद्धेतुमण्णिचि अतो लोपे पुनः प्रेषणविवक्षायां पुनर्णिच् न स्यात् "हेतुमति च" (पा० सू० ३।१।२६) इति शास्त्रविहितस्य णिच एव द्वितीयणिज्विधावुद्देश्यत्वादिति चेन्न। स्वीयविधेयतावच्छेदकस्य स्वीयोद्देश्यतावच्छेदकत्वं न भवतीत्यर्थे तस्य तात्पर्यात्। तथा च प्रकृते इशब्दे उद्देश्यतापर्याप्तावपि तद्वृत्तिधातुत्वमेवोद्देश्यतावच्छेदकं न तु णित्त्वमिति न दोष इति दिक्।

सिद्धत्वस्य तत्रैव भाष्ये स्पष्टत्वात् । "संयोगान्तलोपे यणः प्रतिषेधः" इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात् । स्वयमपि तथैवानूदितत्वाच्च । तस्मादिह यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषाया अप्रवृत्तये । तथा च भाष्ये मयः परस्य यणो द्वित्वे दध्यत्रेत्युदाहृतम् । न चैवमपि "इकोऽसवर्णे–" ( पा० सू० ६।१।१२७ ) इति शाकलेन रूपान्तरमस्त्विति वाच्यम् । समासे तन्निषेधात् । न च नित्यसमास एव तन्निषेध इति वाच्यम् । भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात् । यथोत्तरं मुनीनां प्रामाण्यात् । नन्विह यणेव दुर्लभः । सुधीशब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्नत्वेन "सम्प्रसारणाच्च" ( पा० सू० ६।१।१०८ ) इति पूर्वरूपापत्तेरिति चेन्न । "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति वार्तिकोक्तेः । सम्प्रसारणस्थानिकस्यातथात्वाच्च । न चैवमपि "न भूसुधियोः" ( पा० सू० ६।४।८५ ) इति, यण्निषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः । (१)अनन्तरस्येति न्यायेन "एरनेकाचः–" ( पा० सू० ६।४।८२ ) इति "ओःसुपि" ( पा० सू० ६।४।८३ ) इति च सूत्रद्वयेन प्राप्तस्यैव निषेधाच्च । धात्रंश इति । अत्र रेफस्य द्वित्वं न । द्वित्व-

शब्दरत्न ।

क्त्वा सामान्येन यदुक्तं तदपि नेत्यर्थः । तस्मादिहेति । "यणो मय" इत्यत्रेत्यर्थः । विसर्जनीयसूत्रभाष्यात्तु कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते, मूलं तु कैयटानुसारेणेति परे । संप्रसारणस्थानिकस्येति । स्थाने जातस्येति शेषः । साक्षात्संप्रसारणस्थानिकपूर्वरूपादेः "हलः" ( पा०सू०६।४।२ ) इत्यारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वाङ्गीकारेऽपि पूर्वरूपोत्तरं प्रवृत्तस्य "हलः" ( पा०सू०६।४।२ ) इति दीर्घस्य स्थानिवद्भावेन संप्रसारणत्वे मानाभाव इति भावः । द्वित्वं नेति । "यणो मय" इति प्राप्तं नेत्यर्थः । द्वित्वप्रकरणे इति । तथा च भाष्यम्—"रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो

ज्योत्स्ना ।

वच्छेदकत्वं न भवतीत्यर्थे तात्पर्यात् । तथा च प्रकृते इ शब्दे उद्देश्यतापर्याप्तावपि तद्वृत्तिधातुत्वमेवोद्देश्यतावच्छेदकं न तु णित्वमिति न दोष इति दिक् ।

धात्रंश इति । धात्रंश इत्यत्र "यणो मयो द्वे वाच्ये" इत्यनेन मयः परस्य यणो द्वे भवत इति व्याख्यानपक्षे रेफस्य द्वित्वं कुतो नेति चेन्न । "अचो रहाभ्याम्" इतिसूत्रे रेफस्य द्वित्वनिमित्तता श्रुतास्ति । "अनचि च"इति शास्त्रे च यत्वन रेफे द्वित्वकार्यिताप्राप्तेतिमाठरपरिवेषणन्यायेन विशेषविहितेन द्वित्वनिमित्तत्वेन रेफे द्वित्वकार्यित्वस्य

वि० ( १ ) "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति परिभाषारूपेत्यर्थः ।

ज्योत्स्ना ।

बाधेन द्वित्वाप्राप्तेः । तदुक्तम्भाष्ये-"नेमौ रहौ कार्यिणौ किं तर्हि निमित्तमिमौ द्विर्वचनस्य" इति । अत्र हकारो दृष्टान्तार्थः । हकारवद्रेफोऽपि न कार्यीति । अन्यथा हकारे द्वित्वाप्राप्त्या तन्निषेधासङ्गतिः स्यात् । ननु यत्र यत्र रेफे "अचो रहाभ्याम्" इति शास्त्रीया द्वित्वनिमित्तता प्राप्ता तत्र सर्वत्र "अनचि च" इति शास्त्रीया द्वित्वकार्यिताऽपि प्राप्तेति तदीयकार्यितायाः बाधेऽपि "यणो मय" इति शास्त्रीयकार्यिता कथं बाध्येतेति चेन्न । भाष्ये रेफस्य "यरोपदेशे सवर्णानुस्वारद्विर्वचनप्रतिषेधो वक्तव्यः" । स्वर्नयति कुण्डं रथेन मद्रह्रद इति । न वक्तव्यो । "रेफोष्मणां सवर्णा न सन्ति" 'नेमौ रहौ कार्यिणौ किं तर्हि निमित्तमिमौ द्विर्वचनस्य' इत्युक्तमिति वार्तिकारम्भप्रत्याख्यानफलभेदाभावाय सामान्यतो द्वित्वकार्यित्वस्य बाधात् । अन्यथा वार्तिकारम्भे धात्र्यंश इत्यादौ "यणो मय" इति द्वित्वन्न भवति प्रत्याख्याने च स्यादिति फलभेदः स्यात् ।

नन्वेवं "इको यणचि" इत्यत्र विशेषविहितेन कार्यित्वेन निमित्तत्वस्य बाधादिगतिरिक्तेऽचि यणित्युक्ते सुध्युपास्य इत्यादौ यण् न स्यात् । न च व्यक्तिपक्षाश्रयणेन सुध्युपास्य इत्येतदर्थमुपप्लुतेन "इको यणचि"इत्यनेन सामर्थ्याद्यण् इतिवाच्यम् । बाधकविषये श्रीश इत्यादौ यण्शास्त्रानुपप्लुतिवदिदानीं सुध्युपास्य इत्याद्यर्थं यण्शास्त्रानुपप्लुतेरिति चेन्न । "तस्मादित्युत्तरस्य" इतिनिर्देशेन "इको यणचि" इति सूत्रे माठरपरिवेषणन्यायप्रवृत्तिकल्पनादिति मनोरमाकृतः ।

शब्दरत्नकृतस्तु माठरपरिवेषणन्यायस्तक्रन्यायादभिन्न एव । तक्रन्यायश्च निरवकाशविषय इति रेफे निरवकाशेन निमित्तत्वेन द्वित्वकार्यित्वबाधेऽपि "इको यणचि" इति शास्त्रीयकार्यितायाः निमित्तानाक्रान्ते मध्वरिरित्यादौ चारितार्थ्येन निमित्ततावाधकत्वासम्भवान्निर्देशोपादाने विकल्पमित्याहुः ।

परे तु—तक्रन्यायेन विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचः क्रियते । अन्यथा—अवर्णान्ताङ्गाव्यवहितपरत्वविशिष्टातिरिक्तत्वेन "ह्रस्वनद्याप" इति शास्त्रीयाऽऽम्पदार्थे "आमि सर्वनाम्नः" इत्यनेन सङ्कोचे रामाणामित्यादावपि नुट् न स्यात् । मम तु—सर्वनामविहितत्वविशिष्टावर्णान्ताङ्गाव्यवहितपरत्वविशिष्टातिरिक्तत्वेन सङ्कोचान्न दोषः । एवं च प्रकृते तेन न्यायेन सङ्कोचस्वीकारेऽजव्यवहितपरत्वविशिष्ट, यरव्यवहितपूर्वत्वविशिष्टरेफत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचे अर्हणेत्यत्र रेफस्य "अनचि च" इति द्वित्वं दुर्वारं स्यादिति । तक्रन्यायादन्येन माठरपरिवेषणन्यायेन बाध्यबाधकभावः कल्प्यते । तेन न्यायेन एककार्यविनियोगोद्देश्येनोच्चरितवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नप्रतिपादकपदप्रतिपाद्यतावच्छेदकावच्छि-

प्रकरणे रहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात् । सुध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिकः "तस्मादित्युत्तरस्य" ( पा० सू० १।१।६७ ) इत्यादिनिर्देशाज्ज्ञापकान्न बाध्यत इति कैयटः । तकारस्य

शब्दरत्न ।

वक्तव्यः" स्वर्नयति । कुण्डं रथेन । मद्रह्रदः । भद्रह्रदः । न वक्तव्यः । रेफोष्मणां सवर्णा(१) न सन्ति । नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्येति" । अन्यथा वचनारम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदे प्रत्याख्यानानापत्तेः । साक्षाच्छ्रुतेन-विशेषशब्दबोधितेन । यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण(२) "अनचि" ( पा०सू०८।४।४७ ) इत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन भाष्यप्रामाण्यात्सामान्यत एव द्वित्वकार्यित्वं बाध्यते इति भावः ।

न बाध्यत इति । इदं च व्यक्तिपक्षे ऽप्यावश्यकम् । अन्यथा "अकः सवर्णे—" ( पा०सू०६।१।१०१ ) इत्येतत्पर्यालोचनया श्रीश इत्यादिविषयकयणशास्त्राभावकल्पनवत्संग्राहकवाक्ये इकः स्थानित्वश्रवणात्तद्विषयकलक्षणाभावस्यैव कल्पनं स्यादिति स्पष्टम् "इको यणचि" ( पा०सू०६।१।७७ ) इत्यत्र कैयटे । कैयट इति । अत्रारुचिबीजं तु अत्र स्थानित्वस्य नानवकाशत्वं, मध्वत्रेत्यत्र निमित्तत्वाप्राप्त्या तत्र स्थानित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायोऽप्यनवकाशविषय एव इति स्पष्टं "तद्धितेष्वचाम्—" ( पा०सू०७।२।११७ ) इति सूत्रे भाष्ये । तदप्राप्तियोग्यविषयाभावरूपं चानवकाशत्वमेतद्विषये । न च तक्रकौण्डिन्यन्यायो विधेयविषय एव विशेषविहितेन सामान्यविहितं बाध्यत इत्यभियुक्तव्यवहारादिति वाच्यम् । अपूर्वबोध्यत्वेन निमित्तत्वादेरपि विधेयत्वात् । नहि निमित्तवत्तत्त्वमपि मानान्तरसिद्धमिति

ज्योत्स्ना ।

त्रे व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोच इति "इको यणचि" इत्यत्र इकोऽतिरिक्तत्वेनाचि पदार्थे सङ्कोचः स्यादिति निर्देशादित्यावश्यकमेवेति वदन्तीत्यलम् ।

रेफोष्मणां सवर्णा न सन्तीति । "यरोऽनुनासिकेऽनुनासिको वा" इति सूत्रे "अनुस्वारस्य ययि परसवर्णः" इति सूत्रात्परसवर्णग्रहणमपकृष्य चतुर्मुख इत्यादावनुनासिकवारणपक्षे तस्यापि सवर्णविधित्वेन भाष्यमते निस्तारः ।

---

प्र० ( १ ) "यरोऽनुनासिकेऽनुनासिको वा" ( पा० सू० ८।३।४५ ) इत्यत्र "अनुस्वारस्य ययि परसवर्णः" ( पा० सू० ८।४।५८ ) इति सूत्रात् सवर्णग्रहणमपकृष्य चतुर्मुख इत्यादावनुनासिकवारणपक्षे तस्यापि सवर्णविधित्वेन भाष्यकारमते निस्तारः ॥

वि० ( २ ) नच "अनचि" इत्यस्य "अचो रह" इत्येतदृष्ट्या असिद्धत्वात्कथं बाधकतेति वाच्यम् । तावतापि तदप्राप्तियोग्ये विषये अचारितार्थ्यस्यापवादत्वबीजस्यानपायादिति भावः ॥

तु भवत्येवेत्युक्तम्। तच्च वेत्यतोऽत्र रूपद्वयम्। लाकृतिरिति त्वेकमेव ॥

शब्दरत्न।

दिक्(१)। एकमेवेति। यण्तत्प्राग्वर्तियरोर्द्वित्वप्रयुक्तरूपभेदाभावादिति भावः।

ज्योत्स्ना।

दिगिति। तदर्थस्तु बाध्यबाधकयोरभिमतशास्त्रीयविषयतयोर्यत्र व्याप्यव्यापकभाव-

---

प्र० (१) वस्तुतस्तु बाध्यबाधकत्वेनाभिमतशास्त्रीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तत्रैव तक्रकौण्डिन्यन्यायः प्रवर्तते। अत एव "आदिवृद्धिरन्त्योपधावृद्धी बाधते अनुशतिकादिषु पुष्करसच्छब्दस्य पाठसामर्थ्यात्" इति भाष्ये सामर्थ्योपवर्णनं सङ्गच्छते। उद्देश्यादिदलप्रविष्टधर्मयोर्व्याप्यव्यापकभावमात्रेणैतन्न्यायप्रवृत्तिस्वीकारे तु तद्भाष्यस्याऽसङ्गतिरेव स्यात्। अस्ति हि अत्रापि ञिद्णित्तद्धितत्वञिद्णित्प्रत्ययत्वरूपधर्मयोर्व्याप्यव्यापकभाव इति न्यायेनैवेष्टसिद्धिः स्यात्। एवमनेन न्यायेन बाधोऽपि व्याप्यविषयताश्रयातिरिक्तत्वेन व्यापकविषयताश्रये सङ्कोचरूपो बोध्यः। अत एव आट, आटतुः, इत्यादौ द्वित्वसिद्धिः। अन्यथा व्याप्यविषयतावच्छेदकधर्मावच्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावच्छिन्ने सङ्कोचस्वीकारे तु "लिटि धातोरनभ्यासस्य" (पा० सू० ६।१।८) इति सूत्रीयोद्देश्यतारूपव्यापकविषयतावच्छेदकप्रथमैकाच्त्वरूपधर्मावच्छिन्ने "अजादेर्द्वितीयस्य" (पा० सू० ६।१।७) इति सूत्रीयोद्देश्यतावच्छेदकतारूपव्याप्यविषयतावच्छेदकाजादिप्रथमैकाच्त्वरूपधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचे "लिटि धातोः—" इत्यनेन द्वित्वं न स्यात्। नापि "अजादेः—" इत्यनेन, द्वितीयस्यैकाचोऽभावात्। पूर्वोक्तरीत्या द्वितीयाजवधिकपूर्वत्ववदजादिप्रथमैकाच्त्वावच्छिन्नविषयताश्रयातिरिक्तत्वेन व्यापकविषयताश्रये प्रथमैकाच्त्वावच्छिन्ने सङ्कोचे तु प्रकृते द्वितीयाजवधिकपूर्वत्ववस्वाभावात्तदतिरिक्तत्वेनाऽसङ्कोचात् "लिटिधातोः" इत्यनेन द्वित्वसिद्धिरिति न दोषः। एवं च प्रकृते यरव्यवहितपूर्वत्वविशिष्टाजव्यवहितोत्तरत्वविशिष्टरेफत्वावच्छिन्नविषयताश्रयातिरिक्तत्वेन अजव्यवहितोत्तरयर्त्वावच्छिन्नविषयताश्रये सङ्कोचे क्रियमाणे हर्यनुभव इत्यादौ रेफस्य द्वित्ववारणेऽपि अर्हेणेत्यादौ यरवधिकपूर्वत्वाभाववतो रेफस्य द्वित्वापत्तिस्तदवस्थैव। एवं मद्रह्रद इत्यत्र पूर्वरेफस्य "यणो मय" इत्यनेन द्वितीयरेफस्य "अचो रहाभ्यां द्वे" इत्यनेन द्वित्वापत्तिः स्यादेव॥ तस्मादत्र तक्रन्यायातिरिक्तेन माठरपरिवेषणन्यायेन व्यवस्थेति भाष्यकाराशयः॥ सर्वे ब्राह्मणा भोज्यन्तां, माठरकौण्डिन्यौ परिवेविष्टामिति च न्यायाकारः। एकविधेयतानिरोपितोद्देश्यदलप्रविष्टधर्मयोर्यत्र व्याप्यव्यापकभावस्तत्रायं न्यायः प्रवर्तते। अनेन च बाधो व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचरूपः क्रियते। तथा च प्रकृते द्वित्वरूपैकविधेयतानिरूपितोद्देश्यदलप्रविष्टयो रेफत्वयर्त्वरूपधर्मयोर्व्याप्यव्यापकभावसत्त्वादेतन्न्यायप्रवृत्तौ रेफत्वावच्छिन्नातिरिक्तत्वेन यर्त्वावच्छिन्ने सङ्कोचाद् हर्यनुभवः, अर्हेण इत्यादौ "अनचि च" (पा० सू० ८।४।४७) इत्यनेन न द्वित्वम्। तत्र सङ्कुचितस्यैव यर्पदस्यानुवृत्तत्वात्। एवं "यणो मय" इति तत्सूत्रस्थवार्तिकेऽपि संकुचितयर्पदस्या-

ज्योत्स्ना ।

स्तत्रैव तक्रकौण्डिन्यन्यायः प्रवर्तते । अत एव आद्विवृद्धिरन्त्योपधावृद्धि-र्बाधते । अनुशतिकादिषु पुष्करसच्छब्दपाठसामर्थ्यादिति भाष्ये सामर्थ्योपवर्णनं सङ्गच्छते । उद्देश्यादिदलप्रविष्टयोर्धर्मयोर्यत्र व्याप्यव्यापकमात्रेणैवैतन्न्यायप्रवृत्यङ्गीकारे तु तद्भाष्यासङ्गतिः स्पष्टैव । अस्ति ह्यत्रापि ञित्णित्–तद्धतत्व–ञित्णित् प्रत्ययत्वरूपधर्मयोर्व्याप्यव्यापकभाव इति न्यायेनैवेष्ट सिद्धिः स्यात् । एवमनेन न्यायेन बाधोऽपि व्याप्यविषयताश्रयातिरिक्तत्वेन व्यापकविषयताश्रये सङ्कोचरूपो बोध्यः । अत एव आट आटतुः आटुरित्यत्र द्वित्वसिद्धिः । अन्यथा व्याप्यविषयतावच्छेदक-धर्मावच्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावच्छिन्ने सङ्कोचस्वीकारे तु "लिटि धातोरनभ्यासस्य" (पा० सू० ६।१।८) इतिसूत्रीयोद्देश्यतारूपव्यापकविषयता-वच्छेदकप्रथमैकाच्त्वरूपधर्मावच्छिन्ने "अजादेर्द्वितीयस्य" इति सूत्रीयोद्देश्यतावच्छेद-कतारूपव्याप्यविषयतावच्छेदकाजादिप्रथमैकाच्त्वरूपधर्मावच्छिन्नातिरिक्तत्वेन स-ङ्कोचे "लिटि धातोः" इत्यनेन द्वित्वं न स्यात् । नापि अजादेरनेन द्वितीयस्यैकाचोऽ-भावात् । पूर्वोक्तरीत्या द्वितीयाजवधिकपूर्वत्ववदजादिप्रथमैकाच्त्वावच्छिन्नविषयता-श्रयातिरिक्तत्वेन व्यापकविषयताश्रये प्रथमैकाच्त्वावच्छिन्ने सङ्कोचे तु प्रकृते द्वितीयाजवधिकपूर्ववत्त्वाभावात्तदतिरिक्तत्वेनासङ्कोचात् "लिटि धातोः" इत्यनेन द्वित्व-सिद्धिरिति न दोषः । एवं च प्रकृते यरव्यवहितपूर्वत्वविशिष्टाजव्यवहितोत्तरत्वविशि-ष्टरेफत्वावच्छिन्नविषयताश्रयातिरिक्तत्वेन अजव्यवहितोत्तरयर्त्वावच्छिन्नविषयताश्रये सङ्कोचे क्रियमाणे हर्यनुभव इत्यादौ रेफस्य द्वित्ववारणेऽपि अर्हेणेत्यादौ यरवधिक-पूर्वत्वाभाववतो रेफस्य द्वित्वापत्तिस्तदवस्थैव । एवं मद्रह्रद इत्यत्र पूर्वरेफस्य "यणो मय" इत्यनेन द्वितीयरेफस्य "अचो रहाभ्याम्" इत्यनेन द्वित्वापत्तिः स्यात् । तस्मादत्र तक्रन्यायातिरिक्तेन माठरपरिवेषणन्यायेन व्यवस्थेति भाष्यकाराशयः । सर्वे ब्राह्मणा भोज्यन्ताम्, 'माठरकौण्डिन्यौ परिवेविष्टाम्, 'नेदानीं तौ भुञ्जाते' इति न्यायाकारः । एकविधेयतानिरूपितोद्देश्यदलप्रविष्टयोर्धर्मयोर्यत्र व्याप्यव्यापकभावस्तत्रैवायं न्यायः प्रवर्तते । अनेन च न्यायेन व्याप्यधर्मावच्छिन्ने व्यापकधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचो बोध्यः । प्रकृते च द्वित्वरूपैकविधेयतानिरूपितोद्देश्यदलप्रविष्टयो रेफत्वयर्त्वे-

---

नुवर्तनाद्रेफातिरिक्तयरन्तर्गतो यो यण् तस्य मयः परीभूतस्य द्वित्वमित्यर्थेन मद्रह्रद इत्यत्र पूर्वरेफस्य द्वित्वं न । एवं—द्वितीयरेफस्यापि "अचो रहाभ्याम्" (पा०सू०८।४।४७) इति द्वित्वं न भवतीति व्यवस्थोपपद्यते । अस्य न्यायस्य तक्रन्यायातिरिक्तत्वादेव चानेन न्यायेन "इको यणचि" (पा० सू० ६।१।७७) इत्यादावपि इक्त्वावच्छिन्नातिरिक्तत्वेनाच्त्वावच्छिन्ने सङ्कोचो मा भूदित्येतदर्थं "तस्मादित्युत्तरस्य" (पा० सू० १।१।६७) इति निर्देशेन ज्ञापकेन समाधानं कैयटोक्तमपि सङ्गच्छत इति दिक् ॥

"हलो यमाम्" (पा०सू० ८।४।६४)। लोपः स्याद्वेति। "झयो हः–" (पा० सू० ८।४।६२) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः। एतच्च लण्सूत्रे भाष्ये स्पष्टम्। माहात्म्यमिति। अत्र मलोपो नेत्यर्थः। "हलो यरां यरि सवर्णे लोपः" इति तु न सूत्रितम्। आर्ह्नोत्, मूर्ध्नः, शार्ङ्गम्, आर्ह्नीः, इत्यादौ रेफात्परस्य लोपापत्तेः।

शब्दरत्न।

वकारस्तु नात्र(१)। अन्यूनानतिरिक्तस्थानिकादेशलाभेनाधिकस्थानिकस्याप्रवृत्तेः। (२)लण्सूत्रस्थभाष्यविरोधे(३)नेदृशानामनभिधानमिति तत्त्वम्।

आर्ह्नीः इति। आङ्पूर्वादर्त्तेर्बाहुलकान्निप्रत्ययः। धनुषः कोटी उच्येते। "आर्तिः व्रीडाधनुष्कोट्योः" इत्यमरे नकाररहितः पाठो दृश्यते। अर्तिरिति पाठान्तरम्।

ज्योत्स्ना।

रूपयोर्धर्मयोर्व्याप्यव्यापकभावसत्त्वादेतन्न्यायप्रवृत्तौ रेफत्वावच्छिन्नातिरिक्तत्वेन यत्वावच्छिन्ने सङ्कोचात् 'हर्यनुभवः, अर्हण' इत्यादौ "अनचि च" इति न द्वित्वम्।

तत्र सङ्कुचितस्यैव यर्पदार्थस्यानुवृत्तत्वात्। एवं "यणो मय" इति तत्सूत्रस्थवार्तिकेऽपि सङ्कुचितयर्पदस्यानुवर्तनाद्रेफातिरिक्तयरन्तर्गतो यो यण् तस्य मयः परस्य द्वित्वमित्यर्थेन पूर्वरेफस्य मद्रह्रद इत्यत्र न द्वित्वम्। एवं द्वितीयरेफस्यापि "अचो रहाभ्याम्" इति द्वित्वं न भवतीति व्यवस्थोपपत्तेश्च। अस्य न्यायस्य तक्रन्यायातिरिक्तत्वेन अनेन न्यायेन "इको यणचि" इत्यादावपि इक्त्वावच्छिन्नातिरिक्तत्वेन अच्त्वावच्छिन्ने सङ्कोचो मा भूदिति "तस्मादित्युत्तरस्य" इति निर्देशेन ज्ञापकेन समाधानं कैयटोक्तं सङ्गच्छत इति दिक्।

वकारस्तु नात्रेति। "स्थानेऽन्तरतम" इतिसूत्रे तमब्ग्रहणेन सामर्थ्येनात्यन्त-

---

प्र० (१) "स्थानेऽन्तरतमः" (पा० सू० १।१।५०) इति सूत्रे तमब्ग्रहणसामर्थ्येन अत्यन्तसदृशस्यैवादेशत्वमिति लभ्यते। अत्यन्तसदृशत्वं च स्थानिविशिष्टधर्मवत्त्वम्। वैशिष्ट्यं च स्ववृत्तित्वं स्वस्थानिकादेशवृत्तित्वं स्वस्थानिकादेशेतरयावदादेशावृत्तित्वमिति सम्बन्धत्रयेण। तथा च प्रकृते लकारस्य स्ववृत्तिदन्तमात्रस्थानजन्यत्वरूपधर्मवत्त्वेन लकार एव सदृशतमः। वकारस्य तु दन्तौष्ठस्थानजन्यत्वेन तादृशधर्मवत्त्वाभावान्न तत्प्राप्तिरित्यर्थः।

वि० (२) तत्र हि उरण् इत्यत्र पूर्वेण परेण वा इति संदिह्य पराभावात् पूर्वेणैवेत्युक्त्वा कर्त्रर्थमित्यादौ यणो रपरत्वापत्तौ रेफद्वयश्रुति "रोरि" इति लोपेन निरस्य एवं तर्हि सामर्थ्यात् पूर्वेण न परेण यदि तथा स्यादजित्येव वदेदिति भाष्यकृतोक्तं, लाकृतिरिति सत्वे तु अत्र लद्वयश्रवणापत्या सामर्थ्यवर्णनासंगतिः॥

वि० (३) लस्थानिकलादेशयुतानामनार्षप्रयोगाणाम्। तत्र भाष्ये 'न पदान्ताः परे अणः सन्ति' इत्युक्तम्। आर्षप्रयोगमादाय "इको यणचि" इतिसूत्रे यथासंख्यनिर्वाहः॥

"वान्तो यि" ( पा०सू०६।१।६९ ) यकारादाविति । विशेषणमात्मान्तस्य सञ्ज्ञा स्यादित्येतदर्थकस्य "येन विधिः-" ( पा० सू० १।१।७२ ) इति सूत्रस्यापवादभूतेन "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्तिकेनायमर्थो लभ्यते । ओदौतोरिति । पूर्वसूत्रे तयोरेव(१) वान्तौ प्रति स्थानित्वेन निर्णीतत्वादित्यर्थः । ननु गव्यूतिरित्यत्र "हलि सर्वेषाम्" ( पा० सू० ८।३।२२ ) इति, "लोपः शाकल्यस्य" ( पा० सू० ८।३।१९ ) इति वा लोपः स्यादित्याशङ्क्याह- वान्त इति । लव्यमिति । लुनातेरचो यत् । "सार्वधातुकार्धधातुकयोः" ( पा० सू० ७।३।८४ ) इति गुणः । अवश्यलाव्यमिति । "ओरावश्यके" ( पा० सू० ३।१।१२५ ) इति ण्यत् ॥

क्षय्यमिति । "शकि लिङ् च" ( पा० सू० ३।३।१७२ ) इति चात्कृत्याः । क्षेयमिति । "अर्हे कृत्यतृचश्च" ( पा० सू० ३।३।१६९ ) इति यत् । इह एहीति । इह "ओमाङोश्च" ( पा० सू० ६।१।९५ ) इति पररूपं प्राप्तम् ॥

"उरण् रपरः" (पा०सू०१।१।५७ ॥ आन्तरतम्यादिति । रेफशिरस्तस्यार् इत्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः । पक्षे द्वित्वमिति । ऋधेर्धस्येति भावः ।

---

शब्दरत्न ।

वार्तिकेत्यनेन तस्य(२)वाचनिकत्वं सूचितम् ।

पूर्वसूत्रे इति । वान्तज्ञानाय तत्पर्यालोचनस्यावश्यकत्वादिति भावः ।

ऋधेर्धस्येति । न च द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थकेन "पूर्वत्रासिद्धमद्वित्वे" इत्यनेन धातुधकारस्य जश्त्वे दस्येति वक्तुमुचितमिति वाच्यम् । फले विशे-

ज्योत्स्ना ।

सदृशस्यैवादेशत्वमिति लभ्यते । अत्यन्तसदृशत्वञ्च-स्थानिविशिष्टधर्मवत्त्वम् । वैशि-

---

वि० ( १ ) इदं प्राचामनुरोधेन । परे तु तन्न सहन्ते । तथाहि—"ओदौतोरिति वक्तव्यम्" इति वार्तिकमूलात् ओदौतोरिति लभ्यते । पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णयादिति तु न युक्तम् । वान्तज्ञानाय सूत्रपर्यालोचनस्यावश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात् ॥

वि० ( २ ) भाष्ये वचनरूपेण पठितस्येत्यर्थः । 'यस्मिन्विधिस्तदादावल्ग्रहणे" इतिपरिभाषार्थस्तु—अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितमल्मात्रवृत्तिविषयताप्रयोजकं सप्तम्यन्तं पदं स्वबोध्यार्थनिष्ठावयवतानिरूपकसमुदायस्य संज्ञा भवतीति ॥

लोपो वेति। "झयो होऽन्यतरस्याम्" (पा० सू० ८।४।६२) इति सूत्राद्विकल्पानुवृत्तेः। एतच्च "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राञ्चतु विकल्पानुवृत्तेरनुक्तेर्न्यूनता। यदपि व्याख्यातृभिः "शरोऽचि" (पा० सू० ८।४।४९) इति ज्ञापकमुपन्यस्य तत्संवादार्थं भाष्यमुपन्यस्तम्—"अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्" इति। तन्न। तदुत्तरभाष्ये एव उक्तज्ञापकस्य दूषितत्वात्। लोपस्य हि नित्यत्वे "अचो रहाभ्याम्–" (पा० सू० ८।४।४६) इति द्वित्वं लोपापवादः स्यात्। तथा च "शरोऽचि" इत्यस्य सार्थक्यं स्पष्टमेव। तस्माद्विकल्पानुवृत्तौ ज्ञापकान्तरमनुसर्तव्यम्। भाष्यकारादिव्याख्यानमेव वा शरणम्। द्वित्वलोपयोरिति। यत्तु द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते इति। तन्न। लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात्। त्रिधमिति। "यणो मय" इति लक्षणान्तरेण पुनर्द्वित्वे तु चतुर्धमपि बोध्यम्।

---

शब्दरत्न।

षाभावेन (१)तदनादरणात्। न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति। तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात्। यत्र पूर्वत्रासिद्धप्रवृत्तौ तन्निषेधे वा फले विशेषस्तत्रैवास्याः परिभाषात्वेन प्रवृत्तेरित्यन्यत्र विस्तरः। यद्वा धस्य तत्स्थानिकस्येत्यर्थ इति दिक्॥

नाज्झलाविति सूत्रे इति। "हयवरट्" सूत्रशेषे चेत्यपि बोध्यम्। अनुक्तेरिति। "हलो यमाम्" (पा० सू० ८।४।६४) इत्यत्र "झरो झरि" (पा० सू० ८।४।६५) इत्यत्र चेति भावः। ज्ञापकमिति। उभयत्रापि विकल्पानुवृत्ताविति भावः। लोपस्य हीति। लोपमात्रस्येत्यर्थः। लोपापवाद इति। आरम्भसामर्थ्यादिति भावः। ज्ञापकान्तरमिति। "अणुदित्" (पा० सू० १।१।६९) सूत्रस्थमण्ग्रहणं हलः परस्य यरो लोपो वैकल्पिक इति सामान्यापेक्षमाश्रयणीयमिति भावः। तस्य "हलो यमाम्—" (पा० सू० ८।४।६४) इति विशेषापेक्षत्वे आह—व्याख्यानमेव वेति। यदि तु "हलो यमाम्—" इत्यत्र वि-

ज्योत्स्ना।

ष्व्यं च स्ववृत्तित्वं स्वस्थानिकादेशावृत्तित्वं स्वस्थानिकादेशेतरयावदादेशावृत्तित्वमि-

---

वि० (१) न च "पूर्वत्रासिद्धम्" इति द्वित्वस्यासिद्धत्वाज्जश्त्वे दस्यैव द्वित्वमिति मूलसङ्गतिरिति वाच्यम्। तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्तेः। नचैवमपि "विप्रतिषेधे परम्" इति परत्वाज्जश्त्वे पुनरपि मूलसङ्गतिरिति वाच्यम्। तस्यापि परिभाषात्वेन फलाभावादप्रवृत्त्या प्रथमोपस्थितद्वित्वप्रवृत्तौ बाधकाभावादिति दिक्॥

"एत्येधत्यूठ्सु" ( पा०सू० ६।१।८९) ॥ अत्र एचीत्यनुवर्त्तते तच्च एतेरेव विशेषणं नत्वेधतेः, अव्यभिचारात् । नाप्यूठः, (१)असम्भवादिति प्राञ्चः । अत्र कैयटः—एधतेरपि विशेषणम् । मा भवान्प्रेदिधदित्यत्र व्यभिचारात् । यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते तथाऽपि क्वचिद् दृश्यत एव । न च "णौ चङि—" ( पा० सू० ७।४।१ ) इति ह्रस्वे कृते नात्रैधतिरिति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । न चैवमपि "अजादेर्द्वितीयस्य" ( पा० सू० ६।१।२ ) इति धिशब्दस्थाने धि धि शब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसम्मोह इति वाच्यम् । द्विः प्रयोगो द्विर्वचनं षाष्ठमिति षाष्ठभाष्ये सिद्धान्तितत्वात् । अन्यथैव णिलोपो न स्यात् । जिघांसतीत्यादौ

शब्दरत्न ।

कल्पं सिद्धं कृत्वा द्वित्वस्य तद्विषये चारितार्थ्येन "झरो झरि" इत्यत्र तदनुवृत्तौ "शरोऽचि" ( पा० सू० ८।४।४९ ) इति ज्ञापकमुपन्यस्यते तदा सम्यगेव, परं तु प्राचां भाष्यसंमतिलेखः प्रामादिकः । तद्भाष्यस्योभयविषयतया प्रवृत्तेः ।

असम्भवादिति । न च आवतीति और्जनस्य और्जनौरित्यादाववेः क्वावूठ्यादूगुणे परादिवत्त्वेनोठ्त्वात्सम्भवोऽस्ति । न च "वृद्धिरेचि" (पा० सू० ६।१।८८) इति सिद्धिः "ओमाङोश्च" ( पा० सू० ६।१।९५ ) । इत्यनेन बाधाद् अनेन तु सामर्थ्यात्तद् बाध्यत इति वाच्यम् । तस्यानभिधानादित्याशयात् ।

किं च "ओमाङोः—" ( पा० सू० ६।१।९५ ) इत्येतद्बाधकल्पनापेक्षया सामर्थ्येन लक्ष्यानुरोधेन च "एचि" इत्यस्यासम्बन्धकल्पनैवोचिता । ह्रस्वे कृते इति । वृद्धेः पूर्वमित्यादिः । वार्णपरिभाषयेति भावः । अनन्यत्वादिति । न च "अचः परस्मिन्" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वेनैजादित्वं सुलभम्, पूर्वपरविधित्वात् । पूर्वस्यैव विधौ हि सः । मध्येऽपवादन्यायेनाद्गुणं बाधित्वा इहैव स्यात् उपैधत इत्यादौ तु परत्वात्पररूपमेव स्यादिति भावः । संमोह इति । एधतेरादेशाभावेन न स्थानिवत्त्वेन तत्त्वम् । न स्यादिति । न च "णेरनिटि" ( पा० सू० ६।४।५१ ) इत्यस्य ण्यन्तस्याङ्गस्य लोप इत्यर्थः, स चालोन्त्यपरिभाषयाऽन्त्यस्य, एवं च प्रकृते न दोषः । "सर्वे सर्व-

ज्योत्स्ना ।।

ति सम्बन्धत्रयेण । तथाच प्रकृते ऌकारस्य स्ववृत्तिदन्तमात्रस्थानजन्यत्वरूपधर्मेण ल-

वि० ( १ ) न चावयतेः क्विपि औरित्यादावेजादिरूठ् सम्भवतीति वाच्यम् । एत्येधत्योः इति योगं विभज्य एचीत्यस्य तत्रैव विशेषणपरभाष्यप्रामाण्येन एतस्य अनभिधानात् । परे तु विश्वौहः इत्यादौ वृद्ध्यर्थं भगवता भाष्यकारेण एचीत्येत्येधत्योरेव विशेषणमित्युक्ततया एतस्यानभिधाने न प्रमाणमित्याहुः ॥

सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यात्।

न चान्तरङ्गत्वात् प्रथमं "चङि" ( पा० सू० ६।१।११ ) इति द्वित्वे कृते ह्रस्वो न भवत्येवेति वाच्यम्। ओःपुयण्ज्यपरे इत्यत्र वहिरङ्गस्यापि "णौ चङि" ( पा० सू० ७।४।१ ) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात्।

अत्र माधवः—मा भवान् प्रेदिधदित्यत्र नातिप्रसङ्गः। ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात्। अत एव हि "न भाभूपूकमिगमि–" ( पा० सू० ८।४।३४ ) इत्यत्र "ण्यन्तानां च भादीनामुपसंख्यानम्" इत्युक्तम्। तत्रैव शब्दान्तरत्वादप्राप्तावुपसंख्यानमिति कैयटन्यासकारहरदत्तादिभिः सर्वैरेवोक्तम्। किं च ण्यधिकस्यापि ग्रहणे "उपसर्गात्सुनोति–" ( पा० सू० ६।१।९१ ) इत्यत्राभिषावयतीत्युदाहृत्य ण्यन्तेनाभेर्योगात्सुनोतिं प्रत्यनुपसर्गत्वात्कथं षत्वमित्याशङ्क्याभेः प्रकृत्यर्थविशेषकत्वेन समाधानं भाष्यकाराद्युक्तमसङ्गतं स्यात्। न च "हेरचङि" ( पा० सू० ७।३।५६ ) इति लिङ्गात् "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्" इति भ्रमितव्यम्। ज्ञापकस्य कुत्वमात्रविषयकत्वात्। तथा च वार्तिकम्—"हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्"। ज्ञापकं तु चङोऽन्यत्र ण्यन्ते ऽपि कुत्वभावस्येति। तस्माद्युक्तिविरोधाद्भाष्यवार्तिकवृत्तिन्यासादिग्रन्थैः पूर्वापरस्वग्रन्थेन च विरोधादुपेक्ष्योऽयं कैयट इति।

---

शब्दरत्न।

पदादेशा" इति न्यायेनेधीत्यस्येधिधिइत्यादेशसत्त्वेन स्थानिनो ण्यन्ततया आदेशे ऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादिति वाच्यम्। अलोऽन्त्यपरिभाषया निर्दिश्यमानपरिभाषया च "णेरनिटि" ( पा० सू० ६।४।५१ ) इत्यस्य ण्यन्तस्याङ्गस्यान्त्यो यो निर्दिश्यमानो णिस्तस्य लोप इत्यर्थेन दोषात्। अन्ते णेरसत्त्वात्। सूत्रं तु आद्यादित्यादौ चरितार्थमिति भावः। कुत्वं च न स्यादिति। हन्त्यवयवहकाराभावात्। सन्सम्बन्धिसकारवैशिष्ट्याभावे तु स्थानिवत्त्वेन कुत्वं स्यादपीति भावः।

अन्तरङ्गत्वादिति। चङ्परणिनिमित्तह्रस्वापेक्षया चङ्मात्रनिमित्तत्वेनाल्पपदार्थापेक्षत्वादित्यर्थः। भाष्ये तु नित्यत्वमात्रमेव द्वित्वस्योक्तम्। ज्ञापितत्वादिति। इदं च "णौ चङि–" ( पा० सू० ७।४।१ ) इति सूत्रे भाष्ये स्पष्टम्। असङ्गतं स्यादिति। सुनोतिग्रह-

ज्योत्स्ना।

कार एव सदृशतमः। वकारस्य तु दन्तौष्ठस्थानजन्यत्वेन तादृशधर्मत्वाभावान्नात्र

अत्रेदं वक्तव्यम्। अस्तु विशिष्टस्य शब्दान्तरत्वं तावताऽपि प्रकृतिभागस्यैधरूपत्वं केनापगतमित्यवधार्यताम्। न ह्युपैधत इत्यादौ तिङन्तस्यैधरूपता नास्तीति प्रकृत्यंशे सा हीयते। तथा च "उपसर्गात्सुनोति-" इति सूत्रे वार्त्तिकं "सिद्धं त्ववयवानन्यत्वात्" इति। यत्त्वभिषावयतीत्यत्रत्यभाष्यविरोधोद्भावनं तद्विपरीतम्। यतः प्रकृतेः सुनोतिरूपानपायात् कैयटमते सिद्धा यथोक्तव्यवस्था। त्वन्मते तु रूपान्तरत्वेन ण्यधिकस्याग्रहणादसङ्गतैव प्रागुक्तव्यवस्था स्यात्। को ह्येधयतिसावयत्योर्विशेषः। यदेधतेर्ण्यधिकस्याग्रहणं सुनोतेस्तु ग्रहणमिति। यदपि ण्यन्तभादीनामुपसंख्यानमुपन्यस्तं तदपि नास्माकं प्रतिकूलम्। विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनोपसंख्यानस्यावश्यकत्वात्। अत एव न तत्रत्यन्यासादिभिः स्वोक्त्या वा विरोधः। प्रत्युत तवैव विरोधः। षाष्ठे भाष्यवार्तिकयोः "एत्येधत्योः-" (पा० सू० ६।१।८९) इति योगं विभज्य "एचि" इति विशेषीतत्वात्। तस्मादिह वृत्तिग्रन्थो माधवग्रन्थश्चासङ्गत(१) एवेत्यभिप्रेत्य व्याचष्टे—एजाद्योरिति।

शब्दरत्न।

णेन सावयतेरपि ग्रहणेन शङ्काया एवाभावादिति भावः। अवयवानन्यत्वादिति। ण्यन्तावयवस्य सुनोतेः सुनोतिभिन्नत्वाभावादिति तदर्थः। सुनोतिरूपानपायादिति। सुनोतित्वानपायादित्यर्थः। असङ्गतैवेति। ण्यन्तेनाभेयोगादिति शङ्का प्रकृत्यर्थविशेषकत्वेन समाधानरूपा च व्यवस्थाऽसङ्गतैव स्यात्। त्वदुक्तरीत्या ण्यधिके षत्वाप्राप्तेरित्यर्थः। तदेवाह—को हीति॥

ज्योत्स्ना।

तत्प्राप्तिरिति भावः।

वि० (१) अत्र एवकारेण प्रकृतिभागस्य शब्दान्तरत्वे उपैधयते "प्रैदिधिषते" इत्यादौ वृद्ध्यभावः स्यादिति ध्वनितम्। वस्तुतस्तु "इर्णाकारादौ प्रतिषेधः" इति वार्तिकविरोधात् प्रेदिधत् इत्यस्यानभिधानमावश्यकमिति तदुपादानेन सर्वोऽपि विचारोऽत्र निष्फल एव। एत्येधत्योरवयवेऽचीति भाष्यकारीयव्याख्यानन्तु उपरञ्जकतया एधत्यंशेऽपि एचीत्यस्य सम्बन्ध इत्यभिप्रायेणेत्याहुरिति केचित्। परेतु—'यथोत्तरं मुनीनां प्रामाण्यम्' इति परिभाषया 'इणीकारादौ' इति वार्तिके इणीत्यधतेरप्युपलक्षणम्। आहुरित्यन्तं न युक्तम्। वार्त्तिकानुसारेणैधत्यंशे एचीत्युपरञ्जकमितिकल्पनापेक्षया भाष्यानुसारेण वार्तिके उपलक्षणतया व्याख्यानस्यैव ज्यायस्त्वात्। तथा च 'इदिधत्' इत्यस्यानभिधाने न मानमित्याहुः॥

अक्षौहिणीति । ऊहोऽस्त्यस्य ऊहिनी अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना (१)अक्षौहिणी । "पूर्वपदात्सञ्ज्ञायाम्" (पा० सू० ८।२।३) इति णत्वम् ।

यत्तु प्राचा विगृहीतमक्षाणामूहः समूहः सोऽस्त्यस्या इति । तदपि ऊहिनीशब्देन षष्ठीतत्पुरुष इत्येवम्परतयैव कथं चिन्नेयम् । ऊहशब्देन समासे तत इनौ तु वृद्धिर्न स्यात् । अन्तरङ्गेण गुणेन बाधात् । अपवादभूताया अपि वृद्धेरूहिनीशब्देन विग्रहे चरितार्थत्वात् । तथा चोक्तं प्राक्—"इण् ङिशीनामाद्गुणः सवर्णदीर्घत्वात्" इति ॥

स्वादीरेरिणोः । इरेरिण्योरिति क्वाचित्कोऽपपाठः । स्वैरीति णिन्यन्तस्यास्त्रियां वृद्ध्यभावप्रसङ्गात् । स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादाय वृद्धिर्बोध्या ।

यत्तु व्याचख्युः लिङ्गविशिष्टपरिभाषयेति तन्निष्फलम् ॥

प्रादूहोढोढ्येषैष्येषु । अत्रोहशब्दः कैश्चित्प्रक्षिप्तो भाष्यादौ तु न दृश्यत इति प्राञ्चः । इदानीन्तनपुस्तकेषु तु भाष्यवार्तिकयोरूहशब्दो दृश्यत एव । नानर्थकस्येति । उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवे त्यागायोगादिति भावः । सीरदेवस्त्वाह—"व्रश्च—" (पा० सू० ८।२।३६) इति सूत्रे

---

शब्दरत्न ।

विग्रह इति । समस्यमानपदस्वरूपबोधक इत्यर्थः । तत इनाविति । "अत इनिठनौ" (पा० सू० ५।२।११५) इति विहित इत्यर्थः । अन्तरङ्गेणेति । प्रथमप्रवृत्तिकेनेत्यर्थः । समर्थग्रहणे कृतसन्धिकार्यादेव तद्धितोत्पत्त्या तद्विषयेऽकृतव्यूहपरिभाषाया अप्रवृत्तेस्तस्या असत्त्वाच्चेति भावः । चरितार्थत्वादिति । तद्घटकोहिनीशब्दस्य कल्पितार्थेनाप्यर्थवत्त्वाभावेन तत्रैतत्सूत्राप्रवृत्तेश्चेत्यपि बोध्यम् ॥

---

वि० (१) महाभारते एतत्परिमाणमुक्तम्—

अक्षौहिण्यां रथानां स्युः सहस्राण्येकविंशतिः । शतान्युपरि चैवाष्टौ सप्ततिश्च गजा मताः ॥
ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव । नराणामपि पञ्चाशच्छतानि त्रीणि चैव हि ।
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुः संख्या तत्त्वविदो जनाः ॥

इति ॥ तथा च—रथाः (२१८७०) तावन्तो गजाः (२१८७०) नराः (१०९५३०) अश्वाः—(६५६१०) इति ॥

राजेः पृथग् भ्राजिग्रहणमिह ज्ञापकमिति।

नन्वेतदयुक्तं फणादिना राजिना साहचर्यात् तथाभूतस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्? विभ्राट् विभ्रागिति रूपद्वयं हि साध्यं तच्च व्रश्चादिसूत्रे "राजृ" इति पठित्वाऽपि सुसाधम्। एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात्—ऋभ्राज इति। "भ्राजभास—" (पा० सू० ७।४।३) इति विकल्पस्य वाचनिकतया ऋकारस्य आत्मनेपदमात्रफलकतया वक्ष्यमाणत्वेन तत्स्थाने ऽकारस्य सुपठत्वाच्च। तस्मात् सीरदेवोक्तं ज्ञापकमपि सम्यगेव। प्रैष्य इति। एवसाहचर्यादेष्योऽपि अनव्ययं गृह्यते। तेन ण्यन्तादिवेः क्तो ल्यपि पररूपमेव न तु वृद्धिः। प्रेष्य गतः॥

प्रवत्सतरेति। अत्र कालापानुसारिणो वत्सरशब्दमपि पठित्वा वत्सरे देयमृणं वत्सरार्णमित्युदाहरन्ति। अपरे तु वत्सशब्दमपि पठन्ति तत्सर्वं भाष्यादिविरुद्धम्॥

शब्दरत्न।

ज्ञापकमितीति। भ्राजौ राजेरपि सत्त्वेन राजिग्रहणेनैव सिद्धेस्तद् व्यर्थं सज्ज्ञापकमिति भावः। तथाभूतस्यैवेति। फणादेरेवेत्यर्थः। राजृ इति पठित्वेति। न चैवमनुबन्धनिर्देशाद्राराष्टीत्यादौ यङ्लुकि षत्वं न स्यादिति वाच्यम्। यङ्लुकश्छान्दसत्वात् "श्तिपा शपा" इत्यस्यानित्यत्वाच्च, भाष्ये तस्यानुक्तत्वाच्च। एतेन फणादित्वेन ग्रहणे गणेन ग्रहणाद्यङ्लुकि न स्यादित्यपास्तम्। गणेन निर्देशाभावाच्च। राट्, विभ्राट्, इत्यादौ राजृत्वं तु भूतपूर्वगत्या। राशब्दपूर्वकजृधातोः क्विपि निष्पन्नराजृशब्दे नपुंसके न षत्वं, सूत्रे राजृ इत्यननुनासिकस्य पाठात्। सुपठत्वाच्चेति। एवञ्च "भ्राजभास" इतिसूत्रे भ्राजग्रहणं न कार्यमिति बोध्यम्। सीरदेवोक्तमिति। अत्रारुचिबीजं तु व्रश्चादिसाहचर्येण धातुसञ्ज्ञकराजेर्ग्रहणं स्यादिति भ्राजिग्रहणस्यावश्यकत्वम्। किञ्च भ्राजन्तर्गतराजेर्न ऋकारानु(१)बन्धत्वं तस्य (२)समुदायानुबन्धत्वादिति। भाष्यादिविरुद्धमिति। तदनुक्तत्वादिति भावः॥

ज्योत्स्ना।

ऋकारानुबन्धकत्वमिति। यदुपदेशप्रयुक्ता यस्येत्संज्ञा तदुपकारकत्वं तस्येति नियम-

प्र० (१) यदुपदेशप्रयुक्ता यस्येत्संज्ञा तदुपकारकत्वं तस्येति नियमादित्यर्थः।

वि० (२) समुदायानुबन्धो हि न अवयवानुबन्धः। "तस्थस्थमिपाम्" इति सूत्रे चतुर्णाम्भेदेनोपादानात्। अन्यथा तस्थपामित्येव वदेत्। तेन महिङो ङकारस्य तिङादिप्रत्याहारार्थत्वेन समुदायानुबन्धतया महिप्रत्ययस्य न ङित्वमिति 'सम्पप्रच्छिमहे' इत्यत्र सम्प्रसारणभाव इति भावः॥

"अन्तादिवच्च" ( पा० सू० ६।१।८५ ) । इहैकः पूर्वपरयोरित्यनुवर्तते यथा संख्यं चेत्यभिप्रेत्याह—पूर्वस्यान्तवदिति । स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम् । न चाल्विध्यर्थमिति भ्रमितव्यम् । अस्याप्यल्विधावनिष्टत्वात् ।

शब्दरत्न ।

गतार्थमिदमिति । पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वादिति

ज्योत्स्ना ।

माद्रिति भावः ।

"अन्तादिवच्च"इति । इह "एकः पूर्वपरयोः" इति वर्तते । यथासंख्यञ्च सम्बन्धः । पूर्वपदम् एकादेशपूर्वस्थानिचरमावयवके लाक्षणिकम् । एवं परपदम् एकादेशपरस्थान्याद्यावयवके लाक्षणिकम् । तथाच—एकादेशः एकादेशपूर्वस्थानिचरमावयवकस्य समुदायस्यान्तवत्स्यात् । एवमेकादेशः परस्थान्याद्यावयवकस्य समुदायस्यादिवत्स्यादिति सूत्रार्थः । एकादेशनिष्ठचरमावयवतानिरूपकसमुदाये एकादेशपूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्ता धर्माः अतिदेष्टव्याः । एवमेकादेशनिष्ठाद्यावयवतानिरूपकसमुदाये एकादेशपरस्थानिनिष्ठाद्यावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्ताः धर्माः अतिदेष्टव्या इति फलितार्थः । तद्वच्च इत्येव सिद्धे "अन्तादिवच्च" इति सामान्यसूत्रकरणसामर्थ्यात् स्थानिवत्पर्याप्तेत्यर्थलाभः । तद्वच्चेतिन्यासे एकादेशस्थानिपर्याप्तधर्मस्यातिदेश इत्यर्थलाभः स्यात् । तथाच—खट्वाभिरित्यादौ भिसः ऐसाद्यापत्तिश्च स्यात् एतन्मूलकमेव पठ्यते—'नवाऽताद्रूप्यातिदेशात्' इति । अन्यथा वचनेन वचनप्रत्याख्यानस्यायुक्तत्वं स्यात् । वचनेन वचनस्य प्रत्याख्यानायोगादित्युक्तेरिति 'वर्णाश्रये विधौ अन्तादिवत्वप्रतिषेधो वक्तव्यः न वा अताद्रूप्यातिदेशात्'इति प्रत्याख्यानमसङ्गतं स्यात् । एतत्सर्वं मनसि निधाय प्रातिपादिकत्वसुबन्तत्वादीत्युक्तं, ज्ञापकाश्रयणमपि न कार्यमिति ।

वस्तुतस्तु स्थानिवत्सूत्रेण गतार्थत्वाङ्गीकारेऽपि ज्ञापकाश्रयणमावश्यकमेव । तथाहि—आनुमानिकस्थान्यादेशभावपक्षे अर्थवत्येव स्थानितापर्याप्तिनियमात्, प्रकृते च प्र इत्यस्य ऋच्छ इत्यस्य प्र ऋच्छ इति समुदायस्य च अर्थवत्वेन त्रिष्वेव स्थानित्वमुपपद्यते । अपि च स्थानेऽन्तरतमपरिभाषासहकारेण प्र इत्यस्य स्थाने प्रार् इत्यादेशः, ऋच्छ इत्यस्य स्थाने आर्च्छ इत्यादेशः, प्र ऋच्छस्य इत्यस्यस्थाने प्रार्च्छ इत्यादेशः, इति कल्पनावश्यकतया प्रार् इत्यस्यादेशे प्रोपसर्गवृत्तिपदत्वस्यारोपे तुल्यवित्तिवेद्यन्यायेन रेफस्य पदान्तत्वेन दोषः स्यादेव । आनुमानिकस्थान्यादेशे च "स्थानेऽन्तरतम" परिभाषासहकार आवश्यक एव । अन्यथा स्व अश्व इति समुदाये कृतस्य स्वाश्व इत्यादेशस्य तद्घटके स्वइत्यस्मिन् अर्थवति स्थानितापर्याप्तिसम्भवेन स्वशब्दस्य स्वाश्वशब्देऽतिदेशेन ततः ईरिन् शब्दे परे वृद्ध्यापत्तेः । "स्थानेऽन्तर-

अन्यथा अयजे इन्द्रमित्यत्र सवर्ण(१)दीर्घापत्तेः । तथा च वार्तिकम्—

शब्दरत्न ।

भावः । एवं च प्राच्छेतीत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न(२)कार्यं, यतस्तत्र

---

प्र० ( १ ) अयं भावः—अत्र "तद्वच्च" इति सूत्रन्यासं कृत्वा "एकः पूर्वपरयोः" (पा० सू० ६।१।८४ ) इत्यस्यानुवर्तनाच्चैकादेशे पूर्वपरस्थानिवृत्तिधर्मातिदेशे सिद्धे समुदायांशे नित्यसाकाङ्क्षान्तादिशब्दघटितस्य "अन्तादिवच्च" ( पा० सू० ६।१।८५ ) इति न्यासस्य करणसामर्थ्येन पूर्वशब्दस्य पूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदाये, एवं परशब्दस्य परस्थानिनिष्ठाद्यावयवतानिरूपकसमुदाये च लक्षणमाश्रित्य तादृशसमुदायवृत्तीनामेवार्थवत्पर्याप्तप्रातिपदिकत्वसुबन्तत्वादिधर्माणामेकादेशनिष्ठचरमावयवतानिरूपकसमुदाये, एकादेशनिष्ठाद्यवयवतानिरूपकसमुदाये च क्रमेणारोपाङ्गीकारेण वर्णमात्रवृत्तिधर्माणां तद्घटितधर्माणां चाऽजन्तत्वादीनामतिदेशाऽप्राप्त्या अयजेइन्द्रमित्यत्र सवर्णदीर्घः, खट्वाभिरित्यत्र "अतो भिस ऐस्" ( पा० सू० ७।१।९ ) इत्यैसित्यादिकं च न प्राप्नोतीति । अयमेव च "न वा अताद्रूप्यातिदेशात्" इति वार्तिकस्याशयः। अन्यथाऽस्य स्वतन्त्रवचनरूपत्वे तु "वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधः" इति वचनस्याऽनेन प्रत्याख्यानं न युज्येत । वचनस्य वचनान्तरेण प्रत्याख्यानायोगादिति बोध्यम् ।

प्र० ( २ ) वस्तुतस्तु स्थानिवत्सूत्रेणास्य गतार्थत्वाङ्गीकारेऽपि ज्ञापकाश्रयणमावश्यकमेव। तथाहि—आनुमानिकस्थान्यादेशभावपक्षे अर्थवत्येव स्थानितापर्याप्तिनियमात् प्रकृते च प्र इत्यस्य, ऋच्छ् इत्यस्य, प्र ऋच्छ् इति समुदायस्य चार्थवत्त्वेन त्रिष्वपि स्थानित्वमुपपद्यते । अपि च स्थानेऽन्तरतमपरिभाषासहकारेण प्र इत्यस्य स्थाने प्रार् इत्यादेशः ऋच्छ् इत्यस्य स्थाने आर्च्छ् इत्यादेश प्र ऋच्छ इत्यस्य स्थाने प्राच्छ इत्यादेश इति कल्पनावश्यकतया प्रारित्यादेशे प्रोपसर्गवृत्तिपदत्वस्यारोपे तुल्यवित्तिवेद्यन्यायेन रेफस्य पदान्तत्वेन दोषापत्तिः स्यादेव । आनुमानिकस्थान्यादेशभावे च अन्तरतमपरिभाषासहकार आवश्यक एव । अन्यथा स्व अश्व इति समुदाये कॢप्तस्य स्वाश्व इत्यादेशस्य तद्घटके स्व इत्यस्मिन्नर्थवति स्थानितापर्याप्तिसम्भवेन स्वशब्दत्वस्य स्वाश्वशब्देऽतिदेशेन तत ईरिन्शब्दे परे वृद्ध्यापत्तेः । अन्तरतमपरिभाषया तु स्व इत्यस्य स्थाने स्वा इत्यादेशः, अश्व इत्यस्य स्थाने आश्व इत्यादेश इति कल्पनेन स्वशब्दत्वस्य स्थानिवत्त्वेन स्वा इत्यस्मिन् लाभेऽपि स्वाश्व इति समुदाये तदलाभान्न पूर्वोक्तदोषावकाशः।

नच स्थानिवत्सूत्रेणास्य गतार्थत्वाङ्गीकारे क्षीरपेणेत्यत्र पे इति समुदाये एकाजुत्तरपदत्वस्यातिदेशो न स्यात्, तस्याऽल्मात्रवृत्तिधर्मघटितधर्मत्वेन स्थानिवत्त्वाऽप्रवृत्तेरिति वाच्यम् । तत्रैकाच्त्वस्य स्वतः सिद्धत्वेनोत्तरपदत्वमात्रस्याऽतिदेशेन सुलभत्वात् । एवमेव अमी इत्यादावपि मीत्वापूर्वं अद ई इत्यवस्थायां अद इत्यस्य स्थाने अदे इत्यादेश, ई इत्यस्य स्थाने ए इत्यादेशः। अद ई इत्यस्य स्थाने अदे इत्यादेश इति स्थान्यादेशभावत्रयसम्भवेन ईकारवृत्तिबहुवचनत्वस्य एकारे लाभेन तत्र "एत ईत्" इत्यस्य प्रवृत्तेः सुवचत्वात् ।

"न वा अताद्रूप्यातिदेशात्" इति। न विसर्ग इति। एतच्च सुखार्त इत्यादावपि

शब्दरत्न।

स्थानिवत्त्वेन रेफान्ते पदत्वं दुर्लभं, तस्य तत्स्थानिधर्मत्वाभावात्। आनुमानिकव-चनकल्पनया प्र ऋच्छीत्यस्य प्राछर्धदेशे तु समुदाये प्रशब्दधर्माणां स्थानिवत्त्वेन ला-भेऽपि प्रारित्यत्र तदलाभेन रेफे पदान्तत्वस्य दुर्लभत्वादिति बोध्यम्। न वेति। "व-र्णाश्रये विधावन्तादिवद्भावप्रतिषेधो वाच्यः" इत्यस्य प्रत्याख्यानमेतत्—न वा वक्तव्यं ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मस्यानेनातिदेशाभावादिति तदर्थः। पूर्वस्य परस्य च समु-दायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्यापि भवन्तीत्यर्थात्। अत एव तुक्यसिद्धवचनं चरितार्थ-म्। अन्यथाऽधीत्येत्यादौ ह्रस्वत्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव। अत एव

ज्योत्स्ना।

तम" इतिपरिभाषया तु स्व इत्यस्य स्थाने स्वा इत्यादेशः, अश्व इत्यस्य स्थाने आश्व इत्यादेशः, इतिकल्पनेन स्वशब्दस्य स्थानिवत्वेन स्वा इत्यत्र लाभेऽपि स्वाश्व इति समुदाये तदलाभान्न पूर्वोक्तदोषः। न च स्थानिवत्सूत्रेणास्य गतार्थत्वस्वीकारे क्षीरपेणेत्यत्र पे इति समुदाये एकाजुत्तरपदत्वस्यातिदेशो न स्यात्, तस्याल्मात्रवृत्ति-धर्मघटितधर्मत्वेन स्थानित्वाप्रवृत्तेरिति वाच्यम्। तत्रैकाच्त्वस्य स्वतः सिद्धत्वेनोत्त-रपदत्वस्यातिदेशेन सुलभत्वात्। एवमेव अमी इत्यादावपि मीत्वात्पूर्वं अद ई इति स्थिते अद इत्यस्य स्थाने अदे इत्यादेशः, ई इत्यस्य स्थाने ए इत्यादेशः, अद ई इत्य-स्य स्थाने अदे इत्यादेशः, इत्यस्य कल्पनसम्भवेन ईकारवृत्तिबहुत्वस्य एकारे लाभेन तत्र "एत ईत्" इत्यस्य प्रवृत्तेः सुलभत्वात्॥

वर्णमात्रवृत्तिधर्मस्येति। अन्तादिवर्णवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशादिति त-दर्थः। स्यादेतत्। क्षीरपेण इत्यादौ एकाजुत्तरपदत्वस्यान्तादिवृत्तिवर्णमात्रवृत्तिधर्म-घटितत्वेन कथं पे इत्यत्रातिदेशः। न चान्तादिवर्णविशिष्टाल्मात्रवृत्तिधर्मघटितधर्म-स्यातिदेशो न भवतीति ताद्रूप्यस्यानतिदेशात् इत्यस्यार्थः। अन्तादिवर्णवैशिष्ट्यं च स्ववृत्तित्व स्वस्थानिकादेशावृत्तित्व एतदुभयसम्बन्धेन। तथाच—एकाजुत्तरपदत्वघ-टकाच्त्वे स्वस्थानिकादेशवृत्तित्वस्यैव सत्वेन न दोष इति वाच्यम्। उत्तरपदाद्यच-त्वस्य ताद्रूप्यानतिदेशो अतिदेशो न भवतीति परिभाषेन्दुशेखरविरोधेन एतादृशार्थस्य वक्तुमशक्यत्वादिति चेन्मैवम्। स्ववृत्तित्व स्वाभाववत्त्व एतदुभयसम्बन्धेन स्वविशि-ष्टाल्मात्रवृत्तिधर्मघटितधर्मो नायातीत्यर्थकरणेनादोषात्। अभावश्च—स्वस्थानिकादेश-वृत्तित्वं स्वनिष्ठा या अभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकता (सम्बन्धानवच्छि-न्नप्रकारतावच्छेदकता वा) तदवच्छेदकत्वम्, एतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। अथवा अन्तादिवृत्तिवर्णमात्रवृत्तिः शाब्दबोधजनकशक्तिज्ञानीयमुख्यविशेष्य-

तुल्यम् । अत्र च कार्यकालपक्षे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम् । न च "नाजानन्तर्ये" इति निषेधः । यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यं तत्रेति हरदत्तपक्षे तत्प्राप्तावपि यत्र पश्चात्प्रवर्तमाने ऽजानन्तर्यमिति कैयटमते निषेधाप्राप्तेः । बह्वपेक्षत्वेन बहिरङ्गाया वृद्धावजानन्तर्यसत्त्वे ऽपि पश्चात्प्रवर्तमाने तदभावात् ॥

शब्दरत्न ।

खट्वाभिरित्यत्रंस् नेति दिक् । अत्र चेति । सुखार्त इत्यत्र प्राच्छंतीत्यत्र चेत्यर्थः । आद्ये विशिष्य ऋतशब्दस्य तृतीयासमाससापेक्षत्वेनान्त्ये उपसर्गत्वधातुत्वादिसापेक्षत्वेन वृद्धेर्बहिरङ्गत्वादिति भावः । अचोरानन्तर्यमिति । अचोऽजानन्तर्यनिमित्तमित्यर्थः । पश्चात्प्रवर्तमाने इति । अन्तरङ्गे इत्यर्थः । अत्र च "षत्वतुकोः—( पा० सू० ६।१।८६ ) इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् । अन्यथा ऽधीत्येत्यादौ ल्यप्प्रवृत्तये पूर्वं समासे तत्र जाते संहिताया नित्यत्वात् ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थानासम्भवेन एकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव । तत्र पश्चात्प्रवर्तमाने तुक्यचोऽन्यानन्तर्यनिमित्तककार्यत्वान्न दोषः । अजानन्तर्यमिति । अचोऽन्यानन्तर्यमित्यर्थः ॥

ज्योत्स्ना ।

तावच्छेदकश्च यो धर्मः तद्घटितो धर्मो नायातीत्यर्थेनादोषः । विस्तरस्तु परिभाषेन्दुज्योत्स्नायां द्रष्टव्यः ।

दिगिति । तदर्थस्तु "स्थानिवत्" सूत्रेणैव "अन्तादिवच्च" इति सूत्रं गतार्थम् । न च क्षीरपेणेत्यादौ एकाजुत्तरपदत्वस्याल्त्वव्याप्यधर्मघटितत्वेनानल्विधाविति निषेधात्तदतिदेशो न स्यादिति वाच्यम् ? क्षीरपेणेत्यादावुत्तरपदत्वमेव स्थानिवत्त्वेनानीयते एकाच्त्वं तु स्वतः सिद्धमित्यदोषात् । न च भियः इत्यादावियङ् न स्यात्, धातुत्वस्य स्थान्येकदेशवृत्तित्वेन तस्य स्थानिवत्सूत्रेणातिदेष्टुमशक्यत्वादिति वाच्यम् । अर्थवत्येव स्थान्यादेशविश्रान्तिरिति सिद्धान्तसत्त्वेऽपि भिय इत्यादौ इकारप्रश्लेषेण भीइत्यस्य ईइत्यस्य च भीत्यर्थवत्त्वेन भीइत्यस्य स्थाने भीइत्यादेशः, ईइत्यस्य स्थाने ई इत्यादेशः, भी ई इत्यस्य स्थाने भी इत्यादेशः, इत्यनुमानिकस्थान्यादेशानां "स्थानेऽन्तरतम" परिभाषासहकारेण कल्पनेन भीवृत्तिधातुत्वस्य स्थानिवत्त्वेन भी इत्यादेशेऽतिदेष्टुं शक्यत्वात् ।

न च स्वाश्वशब्दे निरुक्तदिशा स्वशब्दत्वातिदेशे तस्मादिरिन्शब्दे परे वृद्ध्यापत्तिरिति वाच्यम् । स्वाश्वशब्दे स्वशब्दस्य अश्वशब्दस्य समुदायस्य चार्थवत्त्वेऽपि स्थानेऽन्तरतमपरिभाषासहकारेण स्वइत्यस्य स्थाने स्वाइत्यादेशः, अश्व इत्यस्य आश्व इत्यादेशः, स्व अश्व इत्यस्य स्थाने स्वाश्व इत्यादेशः, इति कल्पनेऽपि स्वशब्दस्य स्थान्येकदेशवृत्तित्वेन स्वाश्व इत्यादेशेऽतिदेष्टुमशक्यत्वात् । नचैवममी इत्यादावीत्वं

उपसर्गेणेति । (१)यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्युक्तत्वादिति भावः । प्रार्षभीयतीति । "शरोऽचि" (पा०सू० ८।४।४९) इति द्वित्वनिषेधः । प्रेजत इति । एजृ दीप्तौ । कम्पनार्थस्तु परस्मैपदी । एजते कम्पते इति तु प्राचां व्याख्यानं प्रामादिकमेव । एङ्येङित्येव सिद्धे परग्रहणमुत्तरार्थं, रूपग्रहणं तु चिन्त्यप्रयोजनम् । एङि पर इत्येव सिद्धेः । यथा

शब्दरत्न ।

यत्क्रियेति । यदर्थक्रियायुक्ता इत्यर्थः । इत्युक्तत्वादिति । भाष्यकारादिभिरिति शेषः । उत्तरार्थमिति । तेनाद्यर्यात्, भिन्द्युः, पचन्ति, इत्यादिसिद्धिः । "अतो गुणे" इत्युत्तरार्थम्" इति क्वाचित्कोऽपपाठः । चिन्त्यप्रयोजनमिति । न च शिवायेत्यत्र "अणो ऽप्रगृह्यस्य—(पा० सू० ८।४।५७) इत्यनुनासिकत्वे तदनुकरणे ततः परमोमित्यस्य "ओमाङोश्च" (पा० सू० ६।१।९५) इति पररूपे ऽनुनासिकाभावार्थं परस्य यादृशं रूपं तादृशं यथा स्यादिति रूपग्रहणम् । स्पष्टं चेदं "ऐऔच्" इत्यत्र भाष्ये कैयटे चेति वाच्यम् । "तृज्वत्क्रोष्टुः" (पा० सू० ६।१।९५) इति सूत्रभाष्योक्तरीत्या गुणस्य शब्दत्वादिवद्रूपत्वाभावेन रूपग्रहणेनाव्यावृत्तेः । रूपशब्देन च श्रावणज्ञानविषयोऽवयवसंस्थानवान् । अत एव तृज्वत्सूत्रे न हि स्वरो रूपवानित्युक्तम् । वर्णरूपावयवसंस्थानमेव शब्दस्य रूपं तद्वत्तयैव शब्दस्य रूपमिति व्यवहारः, स्वरस्तु न तद्वानिति शब्दत्वादिवन्न स शब्दस्य रूपमिति तदर्थः । तत्र सूत्रे रूपातिदेशे स्वरातिदेशो न स्यादित्युपक्रम्येदमुक्तम् । परः किं गुणको भवतीत्याकांक्षायां स्थानिगुणक इति लभ्यते । तत्रोभयगुणकस्यासम्भवादेकस्थान्यन्तरतमत्वात्तद्गुणकस्यैवोपस्थित्या च तस्यैव सिद्धेश्च । परशब्देन प्रयोगस्थस्योपस्थितस्य ग्रहणं, प्रयोगे च गुणो भेदक एव । शास्त्रे परमुच्चारितो गुणोऽभेदको न तु प्रयोगे इति परशब्देनोपस्थितानतुनासिकस्यैवैकस्थान्यन्तरतमत्वाद्विधिः । यत्र स्थानिद्वयगुणकसम्भवस्तत्र स एव । अत एव स्वरितान्तसुब्रह्मण्याशब्दस्य निपातत्वादुदात्तेन ओंशब्देन "ओमाङोः—" (पा० सू० ६।१।९५) इत्येकादेशः सुब्रह्मण्योमिति स्वरित इति "तस्यादित—" (पा० सू० १।२।३२) इति सूत्रे भाष्यकैयट-

ज्योत्स्ना

न स्यादिति वाच्यम् । अद ई इति स्थिते अद इत्यस्य स्थाने अदे इत्यादेशः, ई इत्यस्य ए इत्यादेशः, अद ई इत्यस्य अदे इत्यादेशः, इति कल्पनेन ईकारवृत्तिबहुत्वस्य

वि०(१) यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं प्रादीनां तद्धातुनिरूपितोपसर्गत्वं तेषाम् । यथा—प्रगतः ऋद्धः प्रर्द्धः इत्यादौ गमधातुजन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वेन प्रशब्दस्य गमधातुनिरूपितमेवोपसर्गत्वं न तु ऋधधातुनिरूपितोपसर्गत्वमिति न वृद्धिरिति भावः ।

"अमि पूर्वः" ( पा० सू० ६।१।१०७ ) इति । नियोगोऽवधारणमिति । यदाहुः—

नावक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः ॥
एवस्तु विषयो वृद्धेर्नियमोऽयं यदा भवेत् ॥ १ ॥ इति

एतेन नियोजनं नियोगो व्यापार इति व्याख्यानं परास्तम्। "यदैव पूर्वे ज्वलने शरीरे" "ममैव जन्मान्तरपातकानाम्" इत्यादिप्रयोगविरोधात् । उदाहृतवृत्तिस्थश्लोकविरोधात् । "लङः शाकटायनस्यैव" ( पा० सू० ३।४। १११ ) "तपस्तपः कर्मकस्यैव" ( पा० सू० ३।१।८८ ) इत्यादिसौत्रप्रयोगविरोधाच्च । यत्तु श्लोकवार्तिकमिदमित्याहुस्तद्भ्रमसात् ।

शकन्ध्वादिष्विति । (१)शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अत एवाह—तच्च टेरिति ॥ यदि तु "आत्" इत्यधिका-

शब्दरत्न ।

योक्तम् । "ऐऔज्" इति सूत्रे एकादेशे "आद् गुणः" ( पा० सू० ६।१।८७ ) इत्यादौ दीर्घग्रहणं कर्तव्यं त्रिमात्रचतुर्मात्रा आदेशा माभूवन्निति वार्त्तिककृतोक्ते "अकः सवर्णे—" (पा०सू०६।१।१७१) इत्यत्र योगविभागेन "एकः पूर्वपरयोः" (पा०सू० ६।१।८४) इति यो निर्दिष्टः स दीर्घ इति व्याख्याने पचन्तीत्यत्र दोषमाशङ्क्यैकदेशिनोक्तं—रूपग्रहणात् परस्य यादृशं रूपमित्यादि भाष्ये, तत्तु ह्रस्वत्वस्य रूपत्वाभिमानेन। सिद्धान्ते तु स्पष्टार्थमेव रूपग्रहणमिति तत्रैव भाष्ये सूचितम् । "इको गुण—" ( पा० सू० १।१।३ ) इति सूत्रस्थकैयटस्तु चिन्त्य एव । तत्र हि—इक्परिभाषाऽभावे जनेर्गुणोऽनुनासिकः स्यादिति शङ्किते पररूपेण शुद्धो भविष्यतीति भाष्ये उक्तम् । तस्य मदुक्तरीत्या उपपत्तेः । "ऐऔज्" इतिसूत्रस्थकैयटस्तु पूर्वपक्षोपपादकत्वान्न स्वार्थसाधक इति दिक् ॥

नावक्लृप्तौ यदेति पाठे न छन्दोभङ्गः । तद्भ्रमसादिति । वृत्तौ भवमितिव्याख्याने वार्त्तिकशब्दस्य पूर्वनिपातापत्तिरित्याहुः ।

विषय इति । शकन्ध्वादिष्विति विषयसप्तमीति भावः । अत एवाहेति । ईदृशव्याख्यानतो लब्धमाहेत्यर्थः ।

ज्योत्स्ना ।

ए इत्यत्रातिदेष्टुं शक्यत्वेन ईत्वस्य सुवचत्वात् । अनल्विधाविति निषेधस्तु न प्रवर्तते ।

---

वि० ( १ ) ननु एकादेशस्य परादिवत्वेन शक् इत्यस्यापि एकदेशविकृतन्यायेन परत्वाज्जश्त्वमुचितमिति चेत्—अत्राहुः । 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' इति निर्देशेन एकादेशस्थले 'एकदेशविकृतन्यायो न प्रवर्तत' इति।

रादकारस्यैवेष्यते तर्हि मनीषा, इति न सिद्ध्येत् ।

केचित्तु मनः पतच्छब्दयोः पृषोदरादित्वादन्त्यलोपे ऽकारस्यैव पररूपमाहुः । शकानां देशविशेषाणामन्धुः–कूपः—शकन्धुः । कर्कोणां राज्ञामन्धुः । बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तः "अन्धूदृम्भू–" इत्यादिना उणादिषु वक्ष्यते । अटतीत्यटा पचाद्यच् । कुलस्य अटा कुलटा । ईष उञ्छे, ईष गत्यादिषु । आभ्यां "गुरोश्च हलः (पा० सू० ३।३।१०३) इत्यप्रत्यये ईषा । मनस ईषा मनीषा । हलस्य ईषा हलीषा लाङ्गलदण्डः । मूर्द्धन्योपधः । यस्तु

प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके ॥

इति रभसकोशात् तालव्योपधस्तस्मिन् परे "आद्गुणः" ( पा० सू० ६।१।८७ ) इत्येव भवति । हलेशा । (१)पतन्नञ्जलिर्यस्मिन् नमस्कार्यत्वादिति पतञ्जलिः । मार्तण्ड (२)इति । के चिदत्र सवर्णदीर्घमाहुः । परा मार्ताण्डमास्थत्, पुनर्मार्ताण्डमाभरत्, विश्वो मार्ताण्डोऽव्रजदित्यादिवैदिकप्रयोगास्तेषामनुकूलाः ॥

---

शब्दरत्न ।

आहुरिति । अत्रारुचिबीजं तु वचनद्वयव्यापारो व्यर्थः । पृषोदरादित्वाट्टिलोपेनैव सिद्धेरिति । देशविशेषाणामिति । देशविशेषशब्दस्य यौगिकत्वेन जातिवाचकत्वाभावात् "विशेषणानां चाजातेः" ( पा० सू० १।२।५२ ) इति न निषेध इति बोध्यम् । कुलस्याटेति । कर्मणः शेषत्वविवक्षायां षष्ठी । अन्यथा कर्मण्यणि (३)कुलाटीति स्यादिति भावः ।

ज्योत्स्ना ।

आरोपप्रकारीभूतबहुत्वस्य साक्षादुद्देश्यतानवच्छेदकत्वात् । नचान्तादिवत् सूत्राभावे "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतिः । न च स्थानिवत्वस्यैव स नि-

---

वि० ( १ ) यद्यपि पतन् अञ्जलिः नमस्कार्यत्वादिति विग्रहे शकन्ध्वादिषु पाठोऽवश्यकः, तथापि गोनर्ददेशे कस्यचिदृषेरञ्जलेः सन्ध्योपासनकरणसमये पतितः इत्यैतिह्यात् अञ्जलेः पतितः इति विग्रहे मयूरव्यंसकादित्वात्समासः । तत्रैव निपातनादितशब्दस्य लोपे सति साधुः । अथवा पृषोदरादित्वात्साधुत्वं कल्प्यम् ।

वि० ( २ ) मृताण्डादागतो मार्तण्डः । अणूविषये एव पररूपमत्र बोध्यम् । ननु मार्तशब्दान्त्याच्—तकाराकारः, स आदिर्यस्य इत्यन्यपदार्थो दुर्लभ इति चेत् ? न, एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः । अत एव "व्यपदेशिवदेकस्मिन्" इति पठ्यते इत्यलम् ।

वि० ( ३ ) कुलमटतीति मूलविभुजादित्वात्क इत्यन्ये ।

ओत्वोष्ठयोरिति। अकारस्य ओत्वोष्ठयोश्चैकत्र समासे (१)स्थितौ सत्यामिदं प्रवर्तते। तेनेह न, वृषलसुतौष्ठत्रणस्ते इति॥

अव्यक्तशब्दं व्याचष्टे—ध्वनेरिति। अनुकरणस्येति। परिस्फुटाकारादिवर्णस्येति भावः। तस्य चानुकरणत्वं किञ्चित्साम्येन बोध्यम्।

यत्तु प्राचोक्तम् अतः किम्? दकारान्ते मा भूदिति। यच्च व्याख्यातं दकारान्त इति रूपान्तरोपलक्षणं वटक्, मरुत्, इत्यादेरपीति। तन्निःसारम्। प्रश्नस्य दान्त इत्युत्तरस्य च निरालम्बनत्वात्।

यत्तु व्याचख्युः। "अतो गुणे" (पा० सू० ६।१।९७) इत्यतोऽत इत्यनुवर्त्य शब्दाधिकाराश्रयणात्सिद्धमिति प्रश्नः। यदा जश्त्ववशाद्दान्तत्वं तदाऽ(२)पि स्यात्पुनरद्ग्रहणे तु श्रौततान्तत्वस्य विवक्षणान्नेत्युत्तरमिति तच्चिन्त्यम्। जश्त्वशास्त्रस्यासिद्धत्वेन पररूपस्यैव प्रवृत्तेः। "नाम्रेडितस्य—" (पा० सू० ६।१।९९) इति निषेधे पटत्पटदित्युदाहरणस्यासम्बद्धत्वापत्तेश्च। तत्र हि भवदुक्तरीत्या प्राप्तिरेव नास्ति। दान्तत्वात्। एतेनानुकार्यानुकरण-

---

शब्दरत्न।

किंचित्साम्येनेति। तदभावे हि भग्नदन्ताद्युच्चारिताव्यक्तशब्दे एव स्यादव्यक्तत्वं चार्थबोधाजनकत्वेनापि वक्तुं शक्यमित्याहुः।

निरालम्बनत्वादिति। अद्ग्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेनातः किमिति प्रश्नस्य दान्ते मा भूत्, वटक्, मरुदित्यत्र च मा भूदिति उत्तरस्य च निरालम्बनत्वमित्यर्थः। शब्दाधिकारेति। तदाश्रयणाच्चाच्छब्दस्येत्यर्थो भविष्यतीति भावः। तदाऽपि स्यादिति। एकदेशविकृतन्यायेनाच्छब्दत्वादिति भावः। जश्त्वशास्त्रस्येति। अनुकार्यानुकरणयोर्भेदे पदान्ततया जश्त्वे ऽपीत्यादिः। तदसिद्धत्वेनात एव सत्त्वादिति भावः। ननु पुनरत्ग्रहणाज्जश्त्वासिद्धत्वमपि बाध्यतामत आह—नाम्रेडितेति। उदाहरणस्य—वृत्त्यादिस्थस्य। अनुकार्यानुकरणयो-

ज्योत्स्ना।

भेध इति वाच्यम्। प्लायते इत्यादौ लत्वानापत्तेरिति वाच्यम्। "उभयत आश्रयणे न

---

वि० (१) अत्र "समर्थः पदविधिः" इतिपरिभाषा नोपतिष्ठते "समासाङ्गुलेः सङ्गः" इत्यादौ समासग्रहणेन पदविधिरितिसूत्रस्वरसेन भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैवेतत्परिभाषाप्रवृत्तिस्वीकारात्।

वि० (२) 'एकदेशविकृतमनन्यवद्' इति न्यायादिति भावः।

योरभेदविवक्षया विभक्त्यभावेन गवित्ययमाहेतिवदपदत्वात् पटत् इतीत्यत्र जश्त्वं नेति ग्रन्थोऽपि प्रत्युक्तः। उत्तरग्रन्थविरोधात्। जश्त्वस्यासिद्धतया पररूपेणैव बाधाच्च।

ननु तदपि नित्यं तथा च कथं पररूपविरहेण प्रयोग इतिचेन्न। अलौकिकं प्रक्रियावाक्यमिदमिति स्वयमेव व्याख्यातत्वात्। संहिताया अविवक्षायां तत्सम्भवाच्चेति दिक्॥

"अकः सवर्णे" (पा०सू० ६।१।१०१)॥ अचि पर इति। यदा तूष्मणामीषद्विवृतत्वमाश्रित्य "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रं प्रत्याख्यायते तदा इहाचीति नानुवर्तनीयम्। अकोऽकि दीर्घ इति सुवचम्(१)। वर्णद्वयं द्विमात्रमिति। यत्तु प्राचा व्याख्यातं दीर्घे प्राप्ते ह्रस्व ऋकार लृकारश्च विधीयत इति तद्भाष्यकैयटादिविरोधादुपेक्ष्यम्॥

---

शब्दरत्न।

रिति। सर्वत्र जश्त्वप्राप्त्योदाहरणासम्भवाशङ्कायां ह्येतदुक्तं तैरिति बोध्यम्। उत्तरग्रन्थेति। नाम्रेडितस्येत्यस्य पटत्पटदितीत्युदाहरणपरग्रन्थेत्यर्थः। ननु स ग्रन्थो जश्त्वासिद्धत्वेन योज्य इति चेत्तत्राह—जश्त्वेति। तस्यासिद्धतया पररूपेणैव भवितव्यमिति जश्त्वस्याप्रवृत्तिलक्षणो बाधः। एवं च यदा जश्त्ववशाद्दान्तत्वमिति ग्रन्थासंगतिरिति सेयमुभयतःस्पाशारज्जुरिति भावः।

दिगिति। दिगर्थस्तु अपदान्तादित्यनुवृत्त्यैव जश्त्वविषये व्यावृत्तिसिद्धेः पुनरद्ग्रहणं व्यर्थमेव। एतेन पुनरद्ग्रहणं श्रौततान्तत्वविवक्षाद्वारा जश्त्वाविषयेऽभेदविवक्षायामेव यथा स्यान्न तु भेदविवक्षायां जश्त्वविषय इत्यर्थकमित्यपास्तम्। ममादग्रहणं तु शब्दाधिकारानित्यत्वज्ञापनार्थमिति दिक्॥

सुवचमिति। जातिपक्षाश्रयणे यथासङ्ख्येनेष्टसिद्धेरिति भावः। एवं रीत्या यथासंख्यं "इको यणचि" (पा० सू० ६।१।७७) इत्यत्रापि बोध्यमिति सूचितम्। तद्भाष्येति।

ज्योत्स्ना।

स्थानिवत्" इति स्थानिवत्सूत्रस्यैव निषेध इति स्वीकारेणादोषादिति दिक्।

---

वि० (१) अत्र वदन्ति—व्यक्तिपक्षे व्यक्तीनामानन्त्याद्यथासंख्यानापत्तौ दध्यत्रेत्यादौ सवर्णदीर्घापत्तिः। जातिपक्षेण समसंख्यत्वोपपादने तु "इको यणचि" इत्यादावपि तथात्वापत्तौ "स्थानेऽन्तरतमः" इत्यनेनेष्टसिद्धिरिति पूर्वग्रन्थविरोध इति। वस्तुतस्तु ऋकारस्य स्थाने लकारो माभूद इति तत्रान्तरतमपरिभाषाश्रयणम्। इह तु यथासंख्याश्रयणेऽपि न क्षतिरिति तात्पर्यम्।

"एङः पदान्तात्" (पा०सू० ६।१।१०९)॥ "ङसिङसोश्च" (पा० सू० ६।१।११० ) इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टार्थमिहैव कृतम् ॥

"सर्वत्र विभाषा गोः" ( पा० सू० ६।१।१२२ ) यद्यपि छन्दसीति न प्रकृते तथाऽपि "यजुष्युर" ( पा० सू० ६।१।११७ ) इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येत अतः सर्वत्रेत्युक्तम् । तद्व्याचष्टे—लोके वेदे चेति । इह "एङ" इत्यनुवर्त्यैङन्तस्य गोरिति व्याख्येयम् । तेनेह न । चित्रग्वग्रमिति । प्रतिपदोक्तस्य एङो ग्रहणान्नेह । हे चित्रगोऽग्रम् । प्रकृतिभाव इति । "प्रकृ-

शब्दरत्न ।

"तुल्यास्य" ( पा० सू० १।१।९ ) सूत्रस्थभाष्येत्यर्थः । तत्र(१) हि "अकः सवर्णे—" ( पा० सू० ६।१।१०१ ) इति सूत्रेणैतद्वार्तिकान्यथासिद्धिरुद्भाविता ।

आरम्भादिति । अपदान्ताच्चेन् ङसिङसोरेवेति नियमादिति भावः । उत्तरार्थमिति । "इकोऽसवर्णे" ( पा०सू०६।१।१२७ ) इत्याद्यर्थम् । स्पष्टार्थमिति । विभक्तौ चेन्ङसिङसोरेवेति नि(२)यमशङ्कावारणार्थमिति भावः ।

इत्यनुवर्त्येति । षष्ठ्या विपरिणमय्येत्यपि बोध्यम् । प्रतिपदोक्तस्येति । एङ्ग्रहणाप्रवृ-

ज्योत्स्ना ।

तत्र हि इति । "तुल्यास्य"सूत्रे भाष्ये रेफद्वयलकारद्वयघटितस्यास्य वर्णद्वयस्य होतृ ऌकार इत्यादौ प्लुतसिद्ध्यर्थं प्रतिज्ञाताचूत्ववत् दीर्घत्वमपि प्रतिज्ञाय "अकः सवर्णे" इति सूत्रेणैव कदाचित्रेफद्वयवत्तारूपान्तरतमसाम्यात् ॠकारद्वयस्थाने रेफद्वयघटितस्य लकारवत्तारूपान्तरतम्याच्च ऋकारऌकारयोः स्थाने लकारद्वयघटितस्य एवमुभयत्रापि कदाचित् विवृतत्वसाम्येन विवृतकारस्य सिद्धिमाश्रित्येदं वार्तिकं प्रत्याख्यातम् ।

नियमशङ्कावारणार्थमिति । नियमस्य सजातीयापेक्षत्वेन विभक्त्यंशे एव नियमः स्यात् । तथा च—भवतीत्यादौ भो अतीत्यवस्थायाम् एङः इति पूर्वरूपं दुर्वारं स्यादिति भावः ।

---

प्र० ( १ ) "तुल्यास्य–" सूत्रे भाष्ये रेफद्वयलकारद्वयघटितस्यास्य वर्णद्वयस्य होतृऌकार इत्यादौ प्लुतसिध्यर्थं प्रतिज्ञाताच्त्ववत् दीर्घत्वमपि प्रतिज्ञाय "अकः सवर्णे–" इति सूत्रेणैव कदाचिद्रेफद्वयवत्तारूपान्तरतम्यादृकारद्वयस्थाने रेफद्वयघटितस्य, लकारवत्तारूपान्तरतम्याच्च ऋकारऌकारयोः स्थाने लकारद्वयघटितस्य; एवमुभयत्रापि कदाचित् विवृतत्वसाम्येन विवृतकारस्य सिद्धिमाश्रित्येदं वार्त्तिकं प्रत्याख्यातम्॥

प्र० ( २ ) नियमस्य सजातीयविषयत्वेन विभक्त्यंशे एव नियमः स्यात् । तथाच भवतीत्यादौ भो अतीत्यवस्थायां "एङः–" इति पूर्वरूपं दुर्वारं स्यादिति भावः॥

त्याऽन्तःपादम्" ( पा० सू० ६।१।११५ ) इति सूत्रात्प्रकृत्येत्यनुवृत्तेः। यद्यपि भाष्ये "इको गुणवृद्धी" ( पा० सू० १।१।३ ) इति सूत्रे "नान्तःपादम्" इति पाठः स्थितः। षाष्ठभाष्येऽप्येवम्। तथापि शाकलसूत्रे "ह्रस्वश्च" इति चकारेण "प्रकृत्या इत्युनुकृष्यते" इति भाष्यदर्शनात् "प्रकृत्यान्तः पादम्"

शब्दरत्न।

स्येति भावः। पतिपदोक्तपरिभाषया वा। वर्णग्रहणे तदप्रवृत्तिज्ञा(१)पकस्य तदनित्यतामात्रज्ञापकत्वम्। ध्वनितं चेदम् "ओत्" ( पा० सू० १।१।१५ ) सूत्रे (२)भाष्ये। "एङः पदान्तात्" ( पा० सू० ६।१।१९ ) इत्यत्र तु "हलो ऽनन्तराः" ( पा० सू० १।

ज्योत्स्ना।

वर्णग्रहणे तदप्रवृत्तिज्ञापकस्येति। "आदेच उपदेशेऽशिति" ( पा० सू० ३।१।४५ ) इति सूत्रस्थोपदेशपदस्य तज्ज्ञापकत्वम्। तथाहि—"लिटि धातोः" इति सूत्राद्धातोरित्यनुवर्त्यैजन्तस्य धातोरित्यर्थेन गोभ्यां नौभ्याम्। इत्यादेर्व्यावृत्तौ सिद्धायां पुनरुपदेशग्रहणम् 'अचैषीत्, अस्तौषीत्'इत्यादेरर्थं भविष्यति। तत्र च लक्षणप्रतिपदोक्तपरिभाषयैव वारणसम्भवेन पुनरपि तद्व्यर्थं सदुक्तार्थं ज्ञापयतीत्यर्थः। अथ तत्सूत्रोक्तशेखररीत्या धातुग्रहणानुवृत्त्या अनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव "न धातुलोप" इति सूत्रे धातुत्वोक्त्या "उदिचामाङः" इत्यादौ ङकारसत्वे आत्वाप्राप्त्या दोषावहत्वेन एश् इरेच् इत्यादौ च धातुपदाननुवृत्तावपि अशितीति प्रसज्यप्रतिषेधेन शित्परत्वयोग्यस्यैवात्वविधानेन दोषाभावाच्चात्र सूत्रे धातुग्रहणासम्बन्धेन उपदेशग्रहणस्यात्र सूत्रे

प्र० ( १ ) "आदेच उपदेशेऽशिति" ( पा० सू० ६।१।४५ ) इति सूत्रस्थोपदेशग्रहणस्य तज्ज्ञापकत्वम्। तथा हि अत्र "लिटि धातोः—" ( पा० सू० ६।१।८ ) इति सूत्राद्धातोरित्यनुवर्त्यैजन्तस्य धातोरित्यर्थेन गोभ्यां नौभ्यामित्यादेर्व्यावृत्तौ सिद्धायां पुनरुपदेशग्रहणम् अचैषीत्; अस्तौषीदित्यदावात्ववारणार्थं भवति। तत्र च लक्षणप्रतिपदोक्तपरिभाषयैव वारणसम्भवेन पुनरपि तद् व्यर्थं सदुक्तार्थं ज्ञापयतीत्यर्थः। अथ तत्सूत्रस्थशेखरोक्तरीत्या धातुग्रहणानुवृत्तेरनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव "न धातुलोप—" ( पा० सू० १।१।४ ) सूत्रे धातुत्वोक्त्या "उदीचां माङः" इत्यादौ ङकारसत्त्वे धातुत्वाऽभावादात्वानापत्त्या दोषावहत्वेन; एशिरेजित्यादौ च धातुपदाननुवृत्तावपि अशितीति प्रसज्यप्रतिषेधेन शित्परत्वयोग्यस्यैवात्वविधानेन दोषाभावाच्चात्र सूत्रे धातुग्रहणासम्बन्धेनोपदेशग्रहणस्य गोभ्यामित्याद्यर्थमावश्यकत्वेनोक्तज्ञापकत्वासम्भवे तु "ह्वावामश्च" ( पा० सू० ३।२।२ ) इति सूत्रं तत्र ज्ञापकं बोध्यम्॥

प्र० ( २ ) तत्र हि अदोऽभवदित्यादौ "ओत्" ( पा० सू० १।१।१५ ) इत्यनेन प्राप्तं प्रगृह्यत्वं प्रतिपदोक्तपरिभाषया परिहृतम्। तत्परिभाषाया वर्णग्रहणेऽप्रवृत्तौ तु तदसङ्गतिरेव स्यादिति भावः।

इति पाठोऽपि साधुरेव । "न" इति पाठे तु "सर्वत्र" इति सूत्रेण पूर्वरूपमेव विकल्प्येतेत्यवधेयम् ।

"अवङ् स्फोटायनस्य" (पा॰सू॰ ६।१।१२३।।अत्राप्येङन्तस्य गोरिति व्याख्येयम् । अगिति सूत्रयितुमुचितम् । विभाषानुवृत्तेः स्फोटायनग्रहणं

शब्दरत्न ।

१।७ ) इत्यादिनिर्देशान्न प्रतिपदोक्तग्रहणम् । अत्र च स्थानिवत्सूत्रस्थं भाष्यं मानमित्यन्यत्र विस्तरः । पूर्वरूपमेवेति । पूर्वरूपमपीत्यर्थः । गोशब्दस्य यद्यत्प्राप्तं तन्नेति व्याख्यानेन "नान्तःपादम्" इत्यनेनैव पूर्वत्वादिकं विकल्पेन निषिध्येतेत्यर्थः । तेनावादेशोऽपि न ।

एङन्तस्य गोरिति । प्रतिपदोक्तस्यैङ इत्यपि बोध्यम् । "गोरग्रवचनं स्वरसिद्ध्यर्थमन्यथावङ् कदा(१) चिदन्तोदात्तोऽपि स्याद्" इत्येतत्सूत्रस्थभाष्यप्रामाण्याच्चित्रगवाग्रमित्यत्रावङभावोऽस्तु तत्रागवङो रूपे विशेषस्य स्पष्टत्वात् । चित्रगोऽग्रमित्यत्रावङभावकल्पने किं मानमिति चेन्न । उपदेशे आद्युदात्तत्वनिपातनेनावङ्न्यासस्थापनपरभाष्यस्य मानत्वात् । चित्रगोशब्द आसंलिताद्व्युदात्तत्वेनान्त्रानुदात्तस्तत्राकि तस्यागमानुदात्तत्वे उभयोरनुदात्तयोरेव श्रवणं स्यात् । आद्युदात्तत्वनिपातने तु गकाराकारस्योदात्तस्येति विशेषः स्पष्टः । न च गवाक्ष इत्यादाववङ आद्युदात्तस्य श्रवणं मा भूदिति तस्योपदेशिवद्भावो वाच्य इति समासान्तोदात्तादिवामन्त्रिताद्युदात्तादपि प्रागवङ्स्वरप्रवृत्तौ पश्चादामन्त्रितस्वरे स्वरभेदाभाव इति वाच्यम् । गवाक्ष इत्यादौ समानकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्रागप्रवृत्तौ उपदेशिवद्भाववचनचारितार्थ्येनाङ्गसञ्ज्ञासापेक्षवहिरङ्गगुणापेक्षया ऽन्तरङ्गत्वात्पूर्वमेवामन्त्रितस्वरप्राप्त्या तदप्रवृत्तिसंपादनेऽस्य सामर्थ्याभावात् । तद् ध्वनयन्नाह—अगितीत्यादि ।

ज्योत्स्ना ।

'गोभ्याम् नौभ्याम्' इत्याद्यर्थमावश्यकत्वेन उक्तज्ञापकत्वासम्भवे तु "द्वावामश्च" (पा॰ सू॰ ३।२।२ ) इति सूत्रं ज्ञापकं बोध्यम् । ध्वनितं चेदम् "ओत्" सूत्रे भाष्ये इति । तत्र हि—अनदः अदः समभवत् अदोऽभवदित्यादौ प्रकृतिभाववारणाय "ओतश्च्विप्रतिषेधः" इत्यारब्धस्य वार्तिकस्यान्यथासिद्धिरनया परिभाषया कृता । वर्णग्रहणे अस्या अप्रवृत्तौ तु "ओत्" सूत्रविषयेऽस्या अप्रवृत्त्या भाष्यासङ्गतिरिति भावः ।

कदाचिदिति । व्युत्पत्तिपक्षे गमेर्डोप्रत्यये तस्य "आद्युदात्तश्च" इत्यनेन आद्युदात्तत्वात् तत्स्थानिकावङः आद्युदात्तत्वे पूर्वाकारस्योदात्तत्वम् । अव्युत्पत्तिपक्षे तु—

प्र॰ ( १ ) कदाचिदिति—व्युत्पत्तिपक्षे गमेर्डोप्रत्यये तस्य "आद्युदात्तश्च" (पा॰ सू॰ ३।१।३) इत्यनेन आद्युदात्तत्वात्तत्स्थानिकावङ आद्युदात्तत्वे पूर्वाकारस्योदात्तत्वम् । अव्युत्पत्तिपक्षे तु "फिष" इत्यनेनौकारस्यान्तोदात्तत्वात्तत्स्थानिकावङोऽप्यन्तोदात्तत्वे वकारस्योदात्तत्वमित्यर्थः ।

पूजार्थम् । गवीति । यत्तु प्राचा गवे इति प्रत्युदाहृतम् । तन्न । सत्यप्यवङि "अतो गुणे" ( पा० सू० ६।१।७७ ) इति पररूपेण रूपसिद्धेः । न च सत्यवङि ङेर्यादेशः स्यात्, स्त्रियां तु टाप् स्यादिति वाच्यम् । (१)सन्निपातपरिभाषया यादेशटापोः सुसमाधानत्वात् । न च सा ऽनित्येति वाच्यम् । तावताप्यौ(२)त्सर्गिकतत्प्रवृत्त्येष्टसिद्धेः । गवाक्ष इति । गवामक्षीवेति विग्रहः । "अक्ष्णोऽदर्शनात्" इत्यच् समासान्तः । वातायने रूढोऽयम् । पुंस्त्वं लोकात् ॥

"इन्द्रे च" ( पा० सू० ६।१।१२४ ) । आरम्भसामर्थ्यान्नित्यमिदम् ।

---

शब्दरत्न ।

यथान्यासे त्वाद्युदात्तनिपातनोपदेशिवद्भावयोः करणे गौरवादस्यौचित्यमिति भावः । स्थानिवत्सूत्रे भाष्येऽप्युक्तं "गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः । चित्रग्वग्रं "सर्वत्र विभाषा गोः" ( पा०सू०६।१।१२२ ) इति पूर्वत्वं प्राप्नोति । नैष दोषः, "एङ" इति वर्त्तते, तत्र "अनल्विधौ" इति प्रतिषेधो भविष्यति । एवन्तर्हि चित्रगोऽग्रमित्यत्र प्राप्नोति इति । अत्र पूर्वत्वशब्देन तदपवादप्रकृतिभावावङौ विनिगमनाविरहात् । "सर्वत्र—"(पा०सू०६।१।१२२) इति "अवङ्–" ( पा०सू०६।१।१२३ ) इत्यस्याप्युपलक्षणम् । अत एव प्रकृतिभावे इति त्यक्त्वा पूर्वत्वे इत्युक्तं वार्तिके भाष्ये च । चित्रगोशब्दस्य लाक्षणिकत्वे ऽपि स्थानिवत्त्वात्प्राप्तौ तत्प्रतिषेधः कृतः । एङः प्रतिपदोक्तत्वाश्रयणे तु तन्न कार्यमिति लाघवमिति दिक् । टाप्स्यादिति । ङीष उपलक्षणमिदम् । इष्टसिद्धेरिति । गवीत्यस्य स्थाने गवे इति स्यादितिं तद्ग्रन्थव्याख्यानमपि न समञ्जसम्(३) ।

ज्योत्स्ना ।

"फिष" इत्यनेनौकारस्यान्तोदात्तत्वात् तत्स्थानिकावङोऽप्यन्तोदात्तत्वे वकाराकारस्योदात्तत्वमित्यर्थः ।

न समञ्जसमिति । असाधुशब्दोल्लेखस्य ग्रन्थकारशैलीविरुद्धत्वादित्यर्थः ।

---

वि० ( १ ) यद्यपि "न यासयोः" इति ज्ञापकादपि सन्निपातपरिभाषा न प्रवर्तते, तथापि गवीति प्रत्युदाहरणे प्रतिपत्तिलाघवम् ।

वि० ( २ ) उत्सृज्यते अपवादेन बाध्यत इत्युत्सर्गः सामान्यं तदधीनप्रवृत्त्येत्यर्थः । अनित्यत्वादप्रवृत्तौ हि परिभाषाणामुच्छेद एव स्यादिति भावः ।

प्र० ( ३ ) असाधु शब्दोल्लेखस्य ग्रन्थकारशैलीविरुद्धत्वादित्यर्थः ।

"इन्द्रे च नित्यम्" इति पाठस्तु भाष्यासम्मतत्वादुपेक्षितः ॥

एहि कृष्णेति । "दूराद्धूते च" ( पा०सू० ८।२।८४ ) इति प्लुतः। यत्तु कृष्ण ३ एहीति प्राचोक्तं तन्न। "दूराद्धूते च" ( पा० सू० ८।२।८४ ) इत्यादौ "वाक्यस्य टेः–" ( पा०सू०८।२।८२ ) इत्यधिकारात् । चक्रश्वत्रेति। इह "स्कोः–" ( पा० सू० ८।२।२९ ) इति कलोपो न। यणः (१)कार्यकालपक्षे बहिरङ्गपरिभाषयाऽसिद्धत्वात् । स्थानिवद्भावाच्च । "पूर्वत्रासिद्धीयेन" इति तु नास्ति । "तस्य दोषः संयोगादिलोप–" इत्याद्युक्तेः ॥

"दूराद्धूते च" (पा०सू० ८।२।८४) हूतमाह्वानं तच्च सम्बोधनमात्रोपलक्ष(२)णमित्यभिप्रेत्याह–दूरात्सम्बोधन इति । उपलक्षणतया व्याख्यानस्य फलमुदाहरति–सक्तून् पिबेत्यादि ॥

"गुरोरनृतः" । (पा०सू० ८।२।८६) अपिशब्दो गुरोरगुरोश्च टेःप्लुतार्थः । देवदत्तेति । अस्यैहीत्यादिः । एवमग्रेऽपि । सर्वः प्लुतः इति । तथा च "अग्नीत्प्रेषणे परस्य च" इति सूत्रे भाष्यम्—"सर्वः प्लुतः साहसमनिच्छता ऽपि विभाषा कर्तव्या" इति । साहसं शास्त्रत्यागः, तदनिच्छताऽपि–शास्त्रमनुरुन्धानेनापीत्यर्थ इति हरदत्तः । वैकल्पिकेष्वनुष्ठानक्लेशं धर्माधिक्यफलकमप्यशक्तत्वादनिच्छतेत्यर्थ इत्यन्ये । एतेन "द्वैपायनो विरहकातर

शब्दरत्न ।

भाष्यासंमतत्वादिति । "इन्द्रे इति सामर्थ्यान्नित्यम्" इति तदुक्तेरिति भावः ।

प्लुत इति । प्रकृतिभाववचनसामर्थ्यादेव प्लुतस्य तत्र नासिद्धत्वमिति भावः । उपलक्षणेति । एवं चासत्यप्याह्वाने भवतीति भावः ।

एहीत्यादिरिति । "वाक्यस्य टेः" ( पा०सू०८।२।८२ ) इत्युक्तेरिति भावः । हरदत्त इति । कैयटोऽप्येवम् । अत्र पक्षे "विभाषा पृष्ट—"इत्यत्र विभाषाग्रहणमवयुत्यानुवादः (३)"अविद्वांसः प्रत्यभिवादे—"इत्यादि पस्पशास्थं भाष्यमपि वैकल्पिकेषु भा-

वि० ( १ ) यथोद्देशे तु त्रिपाद्यां षाष्ठी परिभाषा न प्रवर्तते । कार्यमेव कालः; उत्पत्तिस्थानं यस्याः सा कार्यकाला । कार्येण काल्यते स्वसमीपं प्राप्यते इत्यर्थ इति परे ।

वि० ( २ ) तेनाह्वानाभावेऽपि भवत्येव । "हैहे प्रयोगे हैहयोः" इत्यादि किमर्थं "दूराद्धूते" इत्यनेन सिद्धिः" इत्येतदर्थकभाष्यं चात्र मानम् ।

वि० ( ३ ) "अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रेषु स्त्रीष्विवायमहं वदेत्" ॥ इति ।

आजुहाव पुत्र" इति भागवतं व्याख्यातम्। प्लुतस्य वैकल्पिकत्वात्। किं चेह पुत्रशब्दस्य वाक्यान्तत्वं नास्तीत्यपि सुवचम्। आख्यातप्राग्वर्तिनोऽप्यनुकरणसम्भवात्। अपि च अस्तु प्लुतः, प्रकृतिभावस्तु वैकल्पिकत्वान्मास्तु। तथा च "ई चाक्रवर्मणस्य" इति सूत्रभाष्यम्–"ईग्रहणेन नार्थः। वशा इयं वशेयमिति"। प्लुतप्रकृतिभावः सर्वोऽपि चाक्रवर्मणमते नास्तीति भावः। अपि च इह प्रकृतिभावोऽपि दुर्लभ एव। "अप्लुतवदुपस्थिते" इति सूत्रात्। उपस्थितं नामावैदिक इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवत्स्यादिति हि तस्यार्थः। एवं चतुर्धापि निर्वाहे स्पष्टे आर्षप्रयोग इति श्रीधरोक्तिर्नादर्तव्या(१)॥

द्विवचनमिति। "सुप्तिङन्तम्" (पा० सू० १।४।१४) इति अन्तग्रहणेन "सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति ज्ञापितत्वादिति भावः। तेनेह न। कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति। स्पष्टं चेदं भाष्यादौ। द्विवचनान्तं प्रगृह्यं स्यादिति तु प्राचः प्रमाद एव। हरी एतावि-

शब्दरत्न।

वानुष्ठानौचित्येन शास्त्राज्ञाननिन्दापरं बोध्यम्। आख्यातप्रागिति। पुत्र एहीति वाक्यस्थस्येत्यर्थः। अनुकरणे दूरात्संबोधनत्वाभावाच्चेत्यपि बोध्यम्। वैकल्पिकत्वादिति। अस्य अप्लुतवद्भावस्य वैकल्पिकत्वेन तत्त्वमित्यर्थः। प्लुतप्रकृतिभाव इति। तस्य मते अप्लुतवद्भावोक्तेरिति भावः। एतेन चाक्रवर्मणस्याचार्यस्याप्लुतवदित्येव भाष्योक्तेरिदं सर्वं चिन्त्यमित्यपास्तम्। प्रकारान्तरेणाप्यप्लुतवद्भावोऽत्रेत्याह—अपि चेति। अवैदिक इति। अस्य पुराणस्थत्वेनावैदिकत्वं स्पष्टमेव॥

कुमार्योरिति। अत्र हि प्रत्ययलक्षणेन द्विवचनान्तत्वं श्रुत्या चेदन्तत्वमस्तीति भावः। इदं च द्विवचनान्तमीदन्तमित्यर्थे। ईदन्तं यद्(२) द्विवचनं तदन्तमित्यर्थे तद-

ज्योत्स्ना

श्रीधरोक्तिर्नादर्तव्येति। वस्तुतस्तु–आदरार्थे बहुवचनान्तस्य पुत्रा इत्यस्य इतिशब्देन सन्धिरार्ष इति श्रीधरस्वामिनामाशय इति तदुक्तिरादर्तव्यैव।

प्र० (१) वस्तुतस्तु आदरार्थे बहुवचनान्तस्य पुत्रा इत्यस्येतिशब्देन सह सन्धिरार्ष इति श्रीधरस्वामिनामभिप्रायात्तदुक्तिरादर्तव्यैव॥

वि० (२) संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं यत् प्रत्ययवृत्तिविषयताप्रयोजकं पदं तत् तदादिविशेष्यकतदन्तविधिप्रयोजकं नेति 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इत्यस्यार्थस्वीकारेण प्रकृते प्रत्ययपदं द्विवचनमिति तत् प्रगृह्यसंज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकमिति लक्षणसमन्वयः।

ति। इह शाकल्यं न। प्लुतप्रगृह्या–" ( पा० सू० ६।१।१२५ ) इत्यत्र नित्यग्रहणादित्युक्तम्। अत्र वृत्तिकारः। "मणीवादीनां प्रतिषेधो वक्तव्यः" इति पठित्वा मणीव, रोदसीव, दम्पतीव, जम्पतीवेत्युदाजहार। तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटहरदत्तादयः। एवं स्थिते—

"मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सरतौ मम"॥

इति भारतप्रयोगं समर्थयते—इवार्थ इति वशब्द इति।

"वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्" इति मेदिनी॥

"व वा तथैवैवं साम्ये" इत्यमरग्रन्थव्याख्यावसरे "शात्रवं वपपुर्यशः" इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात्। "कादम्बखण्डितदलानि व पङ्कजानि" इत्यादिदर्शनाच्चेति भावः। यत्तु पाठान्तरं "वद्वा यथा तथा" इत्यादि तदयुक्तम्। नामलिङ्गानुशासनप्रक्रमे तद्धितवतेरननुगुणत्वात्। अपत्यसमूहादिपर्यायमध्ये ऽण् फिञ्वुञादीनामनुक्तेश्च॥

"अदसो मात्" ( पा० सू० १।१।१२॥ इह एकारो नानुवर्तते असम्भवात्। इत्यभिप्रेत्याह—ईदूताविति। ननु ऊकारानुवृत्तिर्व्यर्था। स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः। मुत्वस्यासिद्धत्वे ऽप्येकारान्तत्वादत आह—रामकृष्णाविति। पुंसि पूर्वेण न सिध्यति औकारान्तत्वादिति भावः। "अदसो मात्" ( पा० सू० १।१।१२ ) इति सूत्रं प्रति तु मूत्वमीत्वे नासिद्धे आरम्भसामर्थ्यात्। एकारोऽपीति। तथा च एकाराननुवृत्तितात्पर्य-

शब्दरत्न।

न्तविध्यसम्भव एव दोषो बोध्यः। इत्युक्तमिति। मूले इति शेषः। शात्रवं वेति। शात्रवं यश इवेत्यर्थः। ववेत्यादिकोशप्रदर्शनेन वेशब्द इवपर्यायः स्वतन्त्र एव; न तु सत्या भामादिवत् एकदेशे इति सूचयति। "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः" इति वचनेन तादृशस्थले तथाकल्पने ऽप्यखण्डे पदे तथात्वे मानाभावात्।

आरम्भसामर्थ्यादिति। ननु कार्यकालपक्षे ऽनुनासिकप्रतिषेधेन चारितार्थ्यं, तत्पक्षे हि

ज्योत्स्ना।

कार्यकालपक्ष इति। अत्रेदं तत्त्वम्—कार्यकालपक्षे "वृद्धिरादैच्" इत्यादौ वाक्यस्यार्थबोधे सति तस्मिन्नैफल्यग्रहेणोपेक्षाबुद्ध्या तदभ्यासाभावेन दृढतरसंस्काराभावात् "मृजेर्वृद्धिः" इत्यादौ वाक्यार्थबोधकाले उद्बोधकान्तरसत्वेऽपि सँस्कारलोपात् तदुद्बोधाभावेन "मृजेर्वृद्धिः" इतिदेशे "वृद्धिरादैच्" इत्यस्य पुनर्वाक्यार्थबोधात् तेन सह वाक्यैकवाक्यता। अत्र पक्षे विधिदेशे एव संज्ञाशास्त्रस्य सफलवाक्यार्थबोधाद्वि-

ग्रहणफलकं माद्ग्रहणमिति भावः। अत्रेदं चिन्त्यम्। ईदूत्सप्तम्यर्थे प्रगृह्यम्, अदसः, एच्च द्विवचनमित्येत्र कुतो न सूत्रितम्। एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे माद्ग्रहणं च मास्तु। एकदेशानुवृत्तिक्लेशोऽपि नेति॥

शब्दरत्न।

संज्ञाशास्त्रस्य न पृथग् बोधकत्वं, "पूर्वत्रासिद्धम्" (पा०सू०८।२।१) इति चातिदेशः कार्यार्थः कार्यज्ञानं वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य। किं च अधिकारः सः। एवं च मुत्वदृष्ट्या अनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नसञ्ज्ञाया अपि तद्दृष्ट्या ऽसिद्धतया मुत्वशास्त्रे ऽनुवृत्तपूर्वत्रासिद्धमित्यत्रत्यपूर्वश-

ज्योत्स्ना।

धिदेशीयत्वमेव। अत एव 'अयादिभ्यः परैव प्रगृह्यसंज्ञा'' इति भाष्यं सङ्गच्छते। अमी इत्यत्र "अणोऽप्रगृह्यस्य" इत्येतदेकवाक्यतापन्न "अदसो मात्" इत्येतद्दृष्ट्या मित्वस्य सिद्धत्वेन प्रगृह्यसंज्ञायां नानुनासिकः। यथोद्देशे तु—"वृद्धिरादैच्" इत्यस्य वाक्यार्थबोधे शक्तिग्रहे वृत्ते भविष्यति किञ्चिदनेन प्रयोजनमिति आचार्यवाक्यविश्वासवता छात्रेण भाविफलानुसंधानादपेक्षाबुद्ध्या तदभ्यासेन दृढतरसँस्कारेण "मृजेर्वृद्धिः" इत्येतद्वाक्यार्थबोधकाले एकसम्बन्धिज्ञानविधया संस्कारोद्बोधे सत्यादैचामुपस्थितौ "वृद्धिरादैज्" इति वाक्यार्थबोधस्य पुनर्नापेक्षा। सकलवाक्यार्थबोधाधिकरणदेशस्यैव मुख्यदेशत्वव्यवहारात्। अत्र पक्षे सञ्ज्ञाशास्त्रस्य स्वदेशे एव सफलवाक्यार्थबोधात् पाठदेशीयत्वमेव। अत एवागच्छतमग्नि ३ इत्यत्र "ईदूदेत्" इत्येतद्दृष्ट्या प्लुतस्यासिद्धत्वेन द्विमात्रत्वात्प्रगृह्यसंज्ञायाम् "अणोऽप्रगृह्यस्य" इति नानुनासिकः। अत्र विषये कार्यकालपक्षस्वीकारे तु "ईदूदेत्" इत्यस्य "अणोऽप्रगृह्यस्य" एतद्देशीयत्वापत्त्या तद्दृष्ट्या प्लुतस्य सिद्धत्वेन द्विमात्रत्वाभावात्प्रगृह्यसंज्ञाभावेनानुनासिकापत्तिः। एवं परिभाषाविषयेऽपि पक्षद्वयमिति प्राचीनमतम्।

नव्यास्तु—तस्मिन्नित्यादिपरिभाषाशास्त्राणां वाक्यार्थबोधे सति सप्तमीनिर्देशादि क्व इति पर्यालोचनायां कतिपयविध्युपस्थितौ तेन सहैकवाक्यतायामन्वयबोधे साफल्यग्रहे वृत्ते दृढतराभ्यासवशादनुपस्थितविधिविषयेऽपि पूर्ववत्तत्तद्विधेयोपस्थितौ न पुनर्वाक्यार्थबोधापेक्षा। परिभाषाविषये एव ईदृशजिज्ञासासत्त्वे प्रमाणं निरुक्तभाष्यकैयटादिकमेव। एवं शिष्यजिज्ञासया ये विधय उपस्थिताः तद्विषये एव यथोद्देश्यत्वम्। अनुपस्थितविधिविषये कार्यकालत्वम्। "पूर्वत्रासिद्धम्" इत्यनेन त्रिपाद्या असिद्धत्वात्। पूर्वोक्तशिष्यजिज्ञासायां सत्यामपि आचार्येण त्रैपादिकस्य नोपस्थितिः कृता। अत्रापि भाष्यादिव्यवहार एव शरणमित्याहुः।

अधिकारः स इति। तत्वं च—स्वदेशे लक्ष्यसँस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधोपकारकवाक्यार्थाननुभावकत्वे सति विधिशास्त्रीयलक्ष्यसँस्कारोपयोगिवाक्यार्थ-

"शे" (पा० सू० १।१।१३) ॥ छान्दसमपीदं सन्दर्भशुद्ध्यर्थमुक्तम् । वस्तुतस्त्वनुकरणार्थतया लोकार्थमपि सम्भवत्येव । त्वे रायो मे राय इत्यादौ त्वे इति, मे इति इत्यनुकरणे प्रयोजनलाभात् । अस्मे इति–अस्मभ्यमित्यर्थः । भ्यसः "सुपां सुलुक्" ( पा०सू० ७।१।३९ ) इति शे आदेशः । "शेषे लोपः" ( पा०सू० ७।२।९० ) ॥

"निपात" ( पा०सू० १।१।१४ ) अनाङिति (१)पर्युदासादेवाज्रूपनिपाते लब्धे निपातग्रह(२)णमुत्तरार्थं स्पष्टार्थमिहैव कृतम् । आ एवमिति ।

शब्दरत्न ।

ब्देन यदेकवाक्यतापन्नस्य "अदसो मात्" ( पा०सू०१।१।१२ ) इत्यस्य ग्रहीतुमशक्यत्वम् । एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वस्यानपगमेन सञ्ज्ञां प्रत्यसिद्धत्वं दुर्वारमित्यपास्तमिति चेन्न । 'अप्रगृह्यादस' इति न्यासेनैव सिद्धौ सामान्यसञ्ज्ञासूत्रकरणसामर्थ्येन "प्लुतप्रगृह्या" ( पा०सू०६।१।१२९ ) इत्यत्राप्युपस्थित्या तत्सामर्थ्येनासिद्धत्वबाधात् । हे ऽसुका ऽसुक इत्यादौ व्यवस्थितविभाषाश्रयणात्तयोरनभिधानाद्वा सूत्रमतेऽपि नानुनासिक इत्याशयात् । स्पष्टं चेदं भाष्ये ॥

छान्दसमिति । शे आदेशस्य च्छान्दत्वादिति भावः । मे इतीत्यनुकरणे इति । प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वात्पदान्तत्वप्रयुक्तः प्रकृतिभावस्तत्र, तेनातिदेशेन प्रगृह्यत्वं तु न । त्वे राय इत्यादावनुकार्ये फलाभावेन प्रगृह्यत्वाप्रवृत्त्या तदनुकरणेऽतिदेशेनासिद्ध्योपदेशप्रवृत्तिरेव वाच्येति भावः ॥

ज्योत्स्ना ।

बोधप्रयोजकत्वम् । संज्ञावारणाय सत्यन्तम्, शेषे इत्यादौ व्यभिचारवारणाय सत्यन्ते विशेषणम् ॥

नन्विदमप्रगृह्यादस इति कथनं यथान्यासपक्षे यथाफलसिद्धिस्तथैव चेद्युक्तं तथा अधुना न सिद्ध्यति हे असुका ३ तयोरपि प्रतिषेधः प्राप्नोतीत्याह—हे असुकेति । अत्र पक्षे वाक्यभेदेनाप्रगृह्यादसः अनुनासिको नेति सूत्रार्थादत्राप्रसक्तिरिति भावः ॥ भाष्ये इति । प्रकृतसूत्रे इति शेषः । तत्र हि–तत्रैवायं ब्रूयात् "अणोऽप्रगृह्यस्यानुनासिकः" अदसो नेत्युक्तम् ।

निपातग्रहणमुत्तरार्थमिति । निपातस्यैवैकाज्रूपस्यार्थवत्वात् प्रत्ययस्य च केवलस्य

---

त्रि० ( १ ) प्रसज्यप्रतिषेधे हि असमर्थसमासकल्पना वाक्यभेदः क्रियाध्याहारश्च कर्तव्यो भवतीति गौरवम् ।

प्र० ( २ ) निपातस्यैवैकाज्रूपस्याऽर्थवत्त्वात्प्रत्ययस्य च केवलस्य प्रयोगाभावादानर्थक्यात्कल्पितरूपत्वात्कल्पनायाश्च नियमाभावादिति भवतां मतेऽनाङिति पर्युदासेन निपातत्वेन सादृश्य-

पूर्वं प्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः। पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः। आ एवं किलेति। (१)स्मरणद्योतकोऽयमाकारः। वाक्येत्यादि। तथा च भाष्यम्।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।

एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥ १॥ इति।

अत्र अङिल्लक्षण एव तात्पर्यं लाघवात्। अन्यस्य ङित्त्वं त्वर्थसिद्धम्। ईषदर्थेत्यादिस्तु अवयुत्यानुवादः। एवं च अभ्र आँ अप इत्यत्र सप्तम्यर्थं वृत्तेरप्याकारस्य ङित्त्वात् "आङोऽनुनासिकश्छन्दसि" (पा० सू० ६।१।१२६) इति प्रवर्तत इति भावः॥

"ओत्"। (पा०सू० १।१।१५) निपातः किम्? देवोऽसि। वायवायाहि।

"संबुद्धौ"॥ (पा०सू० १।१।१६)ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—अवैदिक इति। सम्बुद्धौ किम्? अहो इति। अत्र परत्वा-

---

शब्दरत्न।

अन्यथात्वेति। अनभिमतत्वेत्यर्थः। तदाह—नामंस्था इति। स्मरणेति। विस्मृतस्य स्मरणविषयताद्योतक इत्यर्थः। मर्यादाभिविधावित्यत्र मध्यमपदलोपी समासः। तत्सहिते ऽभिविधावित्यर्थः। सप्तम्यर्थेति। तद्वृत्तित्वं च तस्य निरुक्ते स्पष्टम्। अव्ययीभावाभावश्च श्रुतौ छान्दसत्वाद् बोध्यः।

अत्र परत्वादिति। न चैतदभावे नित्यविधिर्दुर्वारः। (२)इतिशब्दातिरिक्ते "ओत्"

ज्योत्स्ना।

प्रयोगाभावात्। आनर्थक्यात्कल्पिरूपत्वात्; कल्पनाश्च नियमाभावादिति भवतां मते 'अनाङ्' इति पर्युदासेन निपातत्वेन सादृश्यमादाय सिद्धावपि अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवार्थवत्त्वमिति मतेऽर्थवत्त्वेन सादृश्यग्रहणे द्योतकत्वपक्षे निपातस्य केवलस्याप्रयुज्यमानत्वेन द्योतकत्वात्साम्यमेव प्रत्ययनिपातयोरिति मते च द्योतकत्वेन सादृश्यग्रहणे चकारात्रेत्यादौ दोषवारणाय निपातग्रहणमिति भावः।

---

मादाय सिद्धावपि अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवार्थवत्त्वमिति मतेऽर्थवत्त्वेन सादृश्यग्रहणे, द्योतकत्वपक्षेऽपि निपातस्य केवलस्याऽप्रयुज्यमानत्वेन द्योतकत्वात्साम्यमेव प्रत्ययनिपातयोरिति मते च द्योतकत्वेन सादृश्यग्रहणे चकारात्रेत्यादौ दोषवारणाय निपातग्रहणमिति भावः।

वि० (१) विस्मृतस्य स्मरणविषयताद्योतक इत्यर्थः।

वि० (२) अहो अयमित्यत्र "ओत्" इत्यस्य विष्णो इति इत्यादौ च "सम्बुद्धौ शाकल्यस्य" इत्यनयोरवकाश इति भावः।

द्विकल्पो मा भूत् । यत्तु "ओत्" इत्यत्र निपातानुवृत्तेरिह च सम्बुद्धिग्रहणस्य प्रत्युदाहरणं वृत्त्यादावुक्तं गवित्ययमाहेति तन्न । तत्र प्रगृह्यसञ्ज्ञासत्त्वेऽपि प्रकृतिभावाप्रसक्तेः । "इकोऽसवर्णे" ( पा०सू०६।१।१२७ ) इत्यत्र हि पदान्तग्रहणमनुवर्त्तत इत्याकरे स्पष्टम् । एवं च "प्लुतप्रगृह्या" ( पा० सू० ६।१।

---

शब्दरत्न ।

( पा०सू०१।१।१९ )इत्यस्य निपातातिरिक्ते "सम्बुद्धौ—" ( पा०सू०१।१।१६ ) इत्यस्य चारितार्थ्येन सामर्थ्याभावादेव च फले ऽविशेष इति वाच्यम् । परत्वेन विकल्पप्रवृत्तावभावपर्यन्त(१)मप्यस्य व्यापारेण सकृद्गतिन्यायेन "ओत्" ( पा०सू०१।१।१९ ) इत्यस्य तदभाव ऽप्रवृत्तेः । अत एव "न यदि" (पा०सू०३।२।११३) "विभाषा साकाङ्क्षे" ( पा०सू०३।२।११४ ) इति सूत्रे निषेधीयोभयत्र विभाषेति सङ्गच्छते । अन्यथा परत्वादेतत्प्रवृत्तावप्यनेन निषेधाभावे पूर्वसूत्रस्य दुर्वारत्वेन सा दुर्लभा(२) स्यात् । न च "आकडार" ( पा०सू०१।४।१ ) सूत्रेणान्यत्र सञ्ज्ञानां बाध्यबाधकभावाभावस्य ज्ञापितत्वात्परत्वाद्विकल्प इत्यसंगतमिति वाच्यम् । सञ्ज्ञाया एकत्वात्, ज्ञापकस्य च

ज्योत्स्ना ।

अभावपर्यन्तमस्य व्यापारेणेति । प्राप्तविभाषास्थले भावसमानाधिकरणेनाभावमात्रस्य विधाने विधिव्यापार इत्यर्थः । अप्राप्तविभाषासु त्वाभावस्य सिद्धत्वात् तत्सामानाधिकरण्येन भावमात्रविधाने विधिव्यापारः । अभावांशे तु न विधिव्यापारः । तस्य सिद्धत्वात् । अन्यथा "मुचोऽकर्मकस्य गुणो वा" इत्यस्याभावपक्षे मुमुक्षते वत्सः स्वयमेवेति अत्राभावांशे विधिव्यापारात् "अत्र लोपोऽभ्यासस्य" इत्यनेनाभ्यासलोपापत्तिः । एवं नॄन् पाहि इत्यादौ "नॄन्पे" इत्यस्याभावपक्षे पूर्वोक्तरीत्या "अत्रानुनासिकः" इति "अनुनासिकात्परोऽनुस्वारः" इति चानुनासिकानुस्वारौ आपद्येयातामिति ज्ञेयम् ।

---

प्र० ( १ ) प्राप्तविभाषास्थले भावसमानाधिकरण्येनाभावमात्रस्य विधाने विधिव्यापार इत्यर्थः । अप्राप्तविभाषासु तु अभावस्य सिद्धत्वात्तत्समानाधिकरण्येन भावमात्रविधाने विधिव्यापारः । अभावांशे तु न विधिव्यापारः । तस्य सिद्धत्वात् । अन्यथा "मुचोऽकर्मकस्य गुणो वा" ( पा० सू० ७।४।५७ ) इत्यस्याभावपक्षे मुमुक्षते वत्सः स्वयमेवेत्यत्राऽभावांशे विधिव्यापारात् "अत्र लोपोऽभ्यासस्य" ( पा० सू० ७।४।५८ ) इत्यनेनाभ्यासलोपापत्तिः । एवं नॄन् पाहीत्यादौ "नॄन्पे" ( पा० सू० ८।३।१० ) इत्यस्याभावपक्षे पूर्वोक्तरीत्या "अत्रानुनासिकः—" ( पा० सू० ८।३।२ ) इति "अनुनासिकात्पर" (पा०सू०८।३।४) इति चानुस्वारागमानुनासिकावापद्येयातामिति बोध्यम् ॥

वि० ( २ ) अप्राप्तविभाषात्वस्यैव बलवत्वादिति भावः ।

१२५ ) इति सूत्रे तत्सम्बन्ध (१)आवश्यकः । गविति च न पदम् । अनुका-कार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावेन विभक्तेरनुत्पादात् ॥

शब्दरत्न ।

विशेषापेक्षत्वेन सञ्ज्ञाभेदविषयत्वादिति भाव इति केचि(२)त् ।

परे तु "ओत्" (पा०सू०१।१।१५) इत्यस्येतिशब्दनिरपेक्षत्वेनान्तरङ्गत्वमिति परत्वं न युक्तं "सम्बुद्धौ" (पा०सू०१।१।१६) इति तु निपातपदानुवृत्तये । अन्यथौदन्तनिपातस्यैवेतौ विकल्पापत्तिः । नित्यविकल्पविध्योर्युगपत्प्रवृत्तावपि विरोधाभावेन परत्वादित्यस्यासङ्गतेः । एवं च परत्वादित्यस्योत्कृष्टत्वादपवादत्वादित्यर्थः । ओद्ग्रहणानुवृत्त्यैव सिद्धे पुनरोद्ग्रहणेनापि तन्निवृत्तिसिद्धौ वै(३)चित्र्यार्थमेव सम्बुद्धिग्रहणमित्याहुः। आवश्यकइति । अन्यथा "इकोऽसवर्णे" (पा०सू०६।१।१२७)इत्यत्र मण्डूकानुवृत्त्यापत्तिः । सा च सम्बन्धतदभावोभयकल्पनापत्त्या ऽन्याय्येति भावः । अनुत्पादादिति । अत एव

ज्योत्स्ना ।

केचिदिति । मूलकारानुयायिनः । अनेनारुचिर्बोधिता । सा चेत्थम् , तथाहि–तज्ज्ञापकं संज्ञाया भेदविषयकत्वे एव ब्रूषे चेत् तदा "साक्षात्प्रभृतीनि च" इति सूत्रभाष्यविरोधः । तत्रहि—"च्व्यन्तस्य प्रतिषेधो वाच्यः" लवणीकृत्य न वा पूर्वेण कृतत्वात् अस्त्वनेन विकल्पः पूर्वेण नित्यः प्राप्नोति" इत्युक्तम् । अत्र कैयटः—अत्र परत्वादनेन भाषा प्राप्नोति नित्या च गतिसंज्ञा इष्यते इति । सा च पुनःप्रसङ्गविज्ञाना कल्प्या । एकसंज्ञाविषये यदि अभावपर्यन्तं व्यापारेण विकल्पाभावे नित्यस्याप्राप्तिरिति यदि स्वीक्रियते तदा तत्रत्यवार्तिकस्यावश्यकतया तत्प्रत्याख्यानपरभाष्यविरोधःस्पष्ट एवेति सिद्धान्तमतमाह—परेत्वित्यादिना ।

वैचित्र्यार्थमेवेति । वस्तुतस्तु—सम्बुद्धिग्रहणाभावे पुनरोद्ग्रहणेन निपातपदाननुवृत्तावपि निपातसंज्ञारहितस्य स्वरादिगणपठितस्य मिथो इत्यव्ययस्य एवं स्वरादेराकृतिगणत्वात्संगृहीतस्य अहो इत्यस्य चेति शब्दे परे विकल्पापत्या तद्वारणाय सम्बुद्धिग्रहणमावश्यकमेवेति बोध्यम् ॥

---

वि० ( १ ) मण्डूकप्लुतिवारणायेति भावः ।

वि० ( २ ) मूलानुयायिनो मान्याः इत्यर्थः । अत्रारुचिबीजं तु "साक्षात्प्रभृति" इति सूत्रस्थभाष्यविरोधः । तथाहि—"च्व्यन्तस्य प्रतिषेधो वाच्यः । लवणीकृत्य न वा पूर्वेण कृतत्वादस्त्वनेन विभाषा पूर्वेण नित्यो भविष्यति" इति भाष्यम् । लवणीकृत्येति—अत्र हि परत्वादनेन विभाषा प्राप्नोति नित्या च गतिसंज्ञेष्यते । पूर्वेणेति–'पुनः प्रसङ्गविज्ञानात्"इति भावः इति कैयटश्च ।

प्र० ( ३ ) वस्तुतस्तु सम्बुद्धिग्रहणाभावे पुनरोद्ग्रहणेन निपातग्रहणाननुवृत्तावपि निपातसंज्ञारहितस्य स्वरादिगणपठितस्य मिथो इत्यव्ययस्य, एवं स्वरादेराकृतिगणत्वात्संगृहीतस्य अहो इत्यस्य चेतिशब्दे परतो विकल्पापत्त्या तद्वारणाय सम्बुद्धावित्यस्यावश्यकत्वमेवेति ध्येयम् ॥

"उञः" ( पा० सू० १।१।१७ ) "निपात एकाज्–" ( पा० सू० १।१।१४ ) इति प्राप्ते विभाषेयम् ॥

"ऊँ" (पा० सू० १।१।१८) ॥ अनुनासिक इति । तेनास्मिन्परे "यरोऽनुनासिके—" ( पा० सू० ८।४।४५ ) इति विकल्पः । यदेतनूँ इति पठसि, यदेतदूँ इति वा तद्दीर्घमित्यादि । एतदर्थमेव तत्रानुनासिकग्रहणम् । अन्यथा यरो ञमि ञम्वेत्येवावक्ष्यत् ॥

"मय उञो वो वा" ॥ ( पा० सू० ८।३।३३ ) मयः परस्येति । परा-

शब्दरत्न ।

तस्याः श्रवणं न । अभेदविवक्षापदार्थश्चार्थवत्सूत्रे निरूपयिष्यते । न च लिङ्गसर्वनामनपुंसकताभ्युपगमेनोत्पन्नाया विभक्तेर्लुक् । ह्रस्वापत्तेः । न च सुप्सुपेति समासेन निर्वाहः । इतिशब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वेन(१)तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात् । न च गोभ्यां गोक्षीरमित्याद्येकदेशगोशब्दानुकरणे "ऋलृक्" सूत्रभाष्योक्तेन "प्रकृतिवदनुकरणम्" इत्यतिदेशेन पदत्वं सुलभमिति वाच्यम् । "क्षियो दीर्घात्" ( पा०सू०८।२।४६ ) इति सूत्रभाष्योक्तेन तदतिदेशानित्यत्वेन(२)तदप्रवृत्तिमाश्रित्यापि सुसाधत्वेनासाधारणप्रयोजनत्वाभावादिति भावः ॥

एतदर्थमेवेति । एतदर्थमपीत्यर्थः । अनितेः क्विपि सम्बुद्धावान् चिनोषीत्यत्र "नश्छवि" ( पा०सू०८।३।७ ) इति रुत्वे "अत्रानुनासिकः" ( पा०सू०८।३।२ ) इति पूर्वस्यानुनासिके यदेतनांश्चिनोषि कमलूँ आँश्चिनोषीत्यत्रापि फलसत्त्वात् । अवक्ष्यदिति । न चैवं न्यासे यथासंख्यापत्तिः । तस्या(३)सार्वत्रिकत्वात् । "आन्महतः—" ( पा०

ज्योत्स्ना ।

क्षियो दीर्घादिति सूत्रभाष्योक्तेनेति । अत्र "क्षिय"इति इयङ्करणेन 'प्रकृतिवदनुकरणम्' इति ज्ञाप्यते । तथा तत्रैव प्रातिपदिकनिबन्धनविभक्तिकरणात् तदतिदेशानित्यत्वमिति ज्ञाप्यते । अन्यथा अनुकार्यवृत्तिधातुत्त्वातिदेशेन अधातोरिति पर्युदासेन प्रातिपदिकत्वाभावाद्विभक्तिर्दुर्लभा स्यादित्यर्थः ।

---

वि० ( १ ) तेन—इतिशब्देनेत्यर्थः । यत्र हि लौकिकविग्रहे व्यपेक्षालक्षणं सामर्थ्यमस्ति तत्र कल्पिते अलौकिकविग्रहे एकार्थीभावारोपात्समासो भवति । प्रकृते इतिशब्दस्य स्वातन्त्र्येणार्थबोधनाय प्रयोगाभावेन नैकार्थीभाव इति बोध्यम् ।

प्र० ( २ ) अत्र क्षिय इतीयङ्करणेन "प्रकृतिवदनुकरणं भवति" इति ज्ञाप्यते । तथा तत्रैव प्रातिपदिकत्वनिमित्तकविभक्तिदर्शनेन च तदतिदेशानित्यत्वं ज्ञाप्यते । अन्यथाऽनुकार्यवृत्तिधातुत्वातिदेशे तत्र "अधातुः" इति पर्युदासेन प्रातिपदिकत्वाभावाद्विभक्तिर्दुर्लभा स्यादित्यर्थः ॥

प्र० ( ३ ) स्वरितत्वविशिष्टे एव तत्प्रवृत्तेरिति भावः ।

दिति तु प्राचः प्रमादः "षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्ते" इति भाष्यात् आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च। असिद्धत्वादिति। अत एवेदं वत्वं त्रिपाद्यां विधीयते। प्रकृतिभावमात्रबाधनार्थत्वे हि "इको यण्—" (पा० सू० ६।१।७७) इत्यनन्तरं मय उञो वेत्येवावक्ष्यत्। यणं चान्ववर्त्तयिष्यत्। इह मय उञ इतौ परे अष्टाविंशतिरूपा(१)णि। तथा हि—"उञः" इति प्रगृह्यत्वे किमु इति वत्वपक्षे किम्विति। ऊँआदेशे किमूँ इति। आदेशस्य स्थानिवत्त्वेन "मय उञ—" (पा० सू० ८।३।३३) इति प्रकृति-

---

शब्दरत्न।

सू०६।३।४६) इत्यादिनिर्देशाच्चेति भावः। पूर्वोक्ते कमलाँश्चिनोषीत्यत्र लस्य नकारापत्तिवारणाय विधेयकोट्यनुनासिक इति। विधेयकोटौ(२) यकारमारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाभावेन पूर्वोक्ते निरनुनासिकलस्यैवापत्तिरिति यथान्यासमेव साधु।

इत्येवावक्ष्यदिति। न चात्रापि न्यासे सन्निपातपरिभाषयाऽनुस्वाराप्राप्तिरिति वाच्यम्। त्रिपाद्यान्तथा पाठेन सन्निपातपरिभाषाऽनि(३)त्यत्वस्यापि ज्ञापनादिति भावः॥

ज्योत्स्ना।

अष्टाविंशतिरूपाणीति। समस्तमेव पदं सर्वत्रोपलभ्यते। एतादृशस्थलेषु च "दिक्संख्ये सञ्ज्ञायाम्" (पा० सू० २।१।५०) इति नियमस्तु न प्रवर्तते, तत्र संख्यापदेनैतादृशाभियुक्तोक्तप्रयोगबलात्। संख्यात्वव्याप्यधर्मप्रकारकसंख्याविशेष्यकबोधजनका एकादिदशान्तसंख्येयबोधका एव गृह्यन्ते इति कल्पनादिति विभाव्यम्॥

यकारमारभ्येति। तथाच दध्याँश्चिनोषि मध्वाँश्चिनोषि इत्यादौ यकारवकारयोरानु-

---

प्र० (१ अष्टाविंशतिरूपाणीति। समस्तमेव पदं सर्वत्रोपलभ्यते। एतादृशस्थलेषु च—"दिक्संख्ये संज्ञायाम्" (पा० सू० २।१।५०) इति नियमस्तु न प्रवर्तते तत्र सङ्ख्यापदेनैतादृशाभियुक्तप्रयोगबलात् सङ्ख्यात्वव्याप्यधर्मप्रकारकसङ्ख्याविशेष्यकबोधाजनका एकादिदशान्तसङ्ख्यावाचका एव गृह्यन्ते इति कल्पनादिति विभावनीयम्।

प्र० (२) यकारमारभ्येति—तथाच दध्याँश्चिनोषि, मध्वाँश्चिनोषीत्यादौ यकारवकारयोरानुनासिक्यसिद्धिः। एतेन लकारमारभ्य प्रत्याहाराश्रयणेन कमलाँश्चिनोषीत्यादिसिद्धौ यकारमारभ्य प्रत्याहारोक्तिर्व्यर्थेत्यपास्तम्।

वि० (३) वस्तुतस्तु सन्निपातपरिभाषयैवात्रानुस्वारस्य न प्राप्तिः। त्रिपादीपाठफलं तु कुर्वन् उ आस्त इत्यत्र वत्वस्यासिद्धया "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति ङमुट्प्रवृत्तिः सुलभेति भावः। एतेन त्रिपादीपाठसामर्थ्यात्सन्निपातपरिभाषायाः अनित्यत्वमपि ज्ञाप्यत इत्यपास्तमिति सुधियो विभावयन्तु।

भावापवादभूते आन्तरतम्याद(१)नुनासिके वकारे किम्विति । अनुनासिकाननुनासिकयोर्वकारयो "मयो यण" इति द्वित्वस्य मकारस्य "अनचि च" ( पा० सू० ८।४।८७ ) इति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाष्टकम् । तदभावे द्वयमिति दशकम् । प्रगृह्यसञ्ज्ञाविरहपक्षे "मय उञ–" ( पा० सू० ८। ३।३३ ) इति वत्वस्यासिद्धत्वात् "इको यण–" ( पा० सू० ६।१।७७ ) इति यणेव तस्य सिद्धत्वान्मोऽनुस्वारे "वा पदान्तस्य" (पा०सू०८।४।५९) इतिपरसवर्णपक्षे अनुनासिकाननुनासिकवकारद्वयोपेतमेकादशं रूपम् । अनुनासिकस्य द्वित्वे "हलो यमाम्" ( पा०सू० ८।४।६४ ) इति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम् । परसवर्णाभावपक्षे अनुस्वारस्य यत्वोत्पादिके द्वित्वे द्वे । संकलनया चतुर्दश । इतिशब्देकारस्य "अणोऽप्रगृह्यस्य–" (पा० सू० ८४५७ ) इत्यनुनासिकविकल्पादष्टाविंशतिरिति ॥

॥ इत्यच्सन्धिः ॥

---

शब्दरत्न ।

अनुनासिके वकारे इति । इदं कैयटानुरोधेन । "मय उञः—" ( पा०सू०८।३।३३ ) इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाभावेनानेन सानुनासिकविधानाभावेन कथमत्र सः । अन्यथेदमो मस्यानुनासिको ऽकारः स्यात् । अत एवेदृशे विषये गुणानामभेदकत्वपक्षानाश्रयणमिति चिन्त्यम् ।

इत्यच्सन्धिः ।

ज्योत्स्ना ।

नासिक्यसिद्धिः । एतेन लकारमारभ्य प्रत्याहाराश्रयणेन कमलॢँ आँ श्रिनोषि इत्यादिसिद्धौ यकारमारभ्य इति प्रत्याहारोक्तिर्व्यर्थत्यपास्तम् ॥

॥ इत्यच्संन्धिप्रकरणम् ॥

---

वि० ( १ ) इदं च कैयटे स्पष्टम् । यद्यपि "त्यदादीनामः" इति विहितस्यानुनासिकत्ववारणाय "गुणा भेदकाः" इति पक्षः कौस्तुभे गृहीतः । एवं च "मय उञः" इति विहितस्याप्यनुनासिकत्वं दुर्लभमिति केचित्प्रत्यवतिष्ठन्ते, तथापि "त्यदादीनामः" इत्यत्राकारप्रश्लेषेण निर्वाहसम्भवाद्गुणाभेदकत्वपक्षेऽपि न दोष इति बोध्यम् ।

# अथ हल्सन्धिप्रकरणम् ।

"स्तोः श्चुना" (पा० सू० ८।४।४०) ।। स्तोरिति (१)समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । श्चुनेति । "सह युक्ते-" इति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यते । योग इत्येतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यं, निमित्तकार्यिणोस्तु न । "शात्" ( पा० सू० ८।४।४४ ) इति (२)ज्ञापकात् ।

शब्दरत्न ।

विनापि तद्योगमिति । साहित्यं च योगक्रियायाम् । एतदिति । (३)संयोग इति तदर्थः । सत्या भामेतिवन्निर्देशः । संयोगश्चाव्यवहितयोरेवेति चितं कटु (४)तैलमित्यादौ न दोषः । यथासंख्यमिति । तथदधनेत्यादेरप्यनादितया तमादाय "परस्मैपदानां णल्"

ज्योत्स्ना ।

स्तोरिति समाहारद्वन्द्व इति । अत्र च प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षोपपादनीया । यद्वा स् इति श् इति च लुप्तविभक्तिके भिन्ने पदे इति बोध्यम् ।

कटुतैलमिति । चितं कटुतैलमिति क्वाचित्कं वाक्यमेतत् । तथदधनेत्यादेरपीति । किमत्र प्रमाणमिति चेत् ?

---

प्र० ( १ ) अत्र च प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयाभिप्रायेण सहविवक्षोपपादनीया । यद्वा स् इति श् इति च लुप्तविभक्तिके भिन्ने पदे इति बोध्यम् ।

प्र० ( २ ) ज्ञापकेन च स्वरितत्वोपलक्षिते एव यथासंख्यसूत्रप्रवृत्तिरिति ज्ञाप्यते, तथाच प्रकृते "श्चुना" इति तृतीयान्ते स्वरितत्वाभावान्न यथासंख्यप्रवृत्तिः । अत एव "ङसिङसोश्च" ( पा० सू० ६।१।११० ) इत्यत्रैङो द्वित्वेऽपि न तत्प्रवृत्तिरिति बोध्यम् ॥

ननु विश्नशब्दाण्णिजन्तात्क्विपि विश्न् चकारेत्यादौ नकारस्य चकारयोगेन प्राप्तस्य श्चुत्वस्य निषेधार्थं "शात्" ( पा० सू० ८।४।४४ ) इति चरितार्थम् । नचात्र यथासंख्यसूत्राप्रवृत्तिज्ञापनात्पूर्वं यथासंख्यप्रसक्त्या चकारादियोगे नकारस्य श्चुत्वप्राप्तिरेव नेति उदाहरणासम्भव इति वाच्यम्, क्नुङ् शब्दे इत्यस्य लिटि ञुक्नुवे इति रूपम् । तस्मिन् परत उदाहरणसम्भवादिति चेन्न । ज्ञापकपरभाष्यप्रामाण्येन विश्न् इत्यादीनामनभिधानमित्याशयात् ॥

वि० ( ३ ) श्चुना इत्यत्र सह इत्यस्यायोगेऽपि विनापि तद्योगे तृतीया कल्प्यते । तत्र "वृद्धो यूना" इति निर्देशः प्रमाणम् । योग इत्यध्याहारलभ्यमिति मूले स्पष्टम् । अत्र योग इत्यस्य संयोग इत्यर्थः स्वीकुर्वन्ति शब्दरत्नकाराः । तेन चितं कटुतैलमित्यत्र न दोष इति शब्दरत्ने स्पष्टम् । अत्र केचित् "तयोर्य्वावचि संहितायाम्" इति संहितापदमष्टमाध्यायपरिसमाप्त्यधिक्रियत इति सिद्धान्ताद्व्यवधाने श्चुत्वाप्राप्तेरित्याहुः ।

प्र० ( ४ ) चितं कटु तैलमित्यादि क्वाचित्कं वाक्यमेतत् ।

"अल्पाच्तरम्" ( पा० सू० २।२।३४ ) इत्यादौ तु (१)सौत्रत्वात् श्चुत्वं न । तज्ज्ञानमित्यादौ तु भवत्येव । स्तोः श्चौ श्चुरिति सुवचम् ।न च "तस्मिन्निति निर्दिष्टे–" ( पा० सू० १।१।६६ ) इति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिध्येत् । "शात्" ( पा० सू० ८।४।४४ ) इति लिङ्गेन तस्या इहा(२)नुपस्थानात् ॥

शब्दरत्न ।

( पा०सू०३।४।८४ ) इत्यादौ सूत्रान्तरस्थक्रमेणैव यथासंख्यमिति भावः । च्वादिशब्दैश्चानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम् । ननु तज्ज्ञानमित्यादौ श्चुयोगाभावान्न स्यादत आह—तज्ज्ञानमिति । जञयोगे तथोच्चारणमात्रं न त्विदं वर्णान्तरमिति भावः । अनुपस्थानेति । पूर्वत्वां(३)शानुपस्थानेत्यर्थः । तेन चितमित्यादौ न दोषः ॥

ज्योत्स्ना ।

अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि । तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्ववर्णयोः । इति नारदीयशिक्षैव ॥

शादिति ज्ञापकादिति । ज्ञापकेन च स्वरितत्वोपलक्षिते एव यथासंख्यसूत्रप्रवृत्तिरिति ज्ञाप्यते । तथाच प्रकृते श्चुना इति तृतीयान्ते स्वरितत्वाभावान्न यथासंख्यसूत्रप्रवृत्तिः। अत एव "ङसिङसोश्च" इति सूत्रे एङो द्वित्वेऽपि न तत्प्रवृत्तिरिति बोध्यम् ।

ननु विश्नशब्दादाचारक्विबन्तात् क्विपि विश्न् चकार इत्यादौ नकारस्य चकारयोगे प्राप्तस्य श्चुत्वनिषेधार्थं तस्यावश्यकत्वेनेति "शात्" इति चरितार्थम् । नचात्र "यथासंख्य" सूत्राप्रवृत्तिज्ञापनात्पूर्वं यथासंख्यप्रसक्त्या चकारादियोगे श्चुत्वप्राप्तिरेव नेति उदाहरणासङ्गतिरिति वाच्यम् । डुङ् शब्दे इ इत्यस्य लिटि शुङुवे इति रूपम् । तस्मिन् परतः उदाहरणसम्भवादिति चेन्न । ज्ञापकपरभाष्यप्रामाण्यात् विश्न् इत्यादीनामनभिधानमित्याशयात् ।

पूर्वत्वांशानुपस्थानेति । तस्मिन्निति परिभाषया हि अव्यवहितत्वांशः पूर्वत्वांशः विधेयान्वयिषष्ठ्यर्थश्चेति अंशत्रयमुपस्थाप्यते । तन्मध्ये प्रकृते ज्ञापकबलात् पूर्वत्वांशानुपस्थानेऽपि तदन्यदंशद्वयमुपतिष्ठत एवेत्यर्थः । तत्राव्यवहितत्वांशोपस्थित्या चितमित्यादौ नातिव्याप्तिरिति दिक् ।

वि० ( १ ) तादृशसूत्रनिर्देशेनास्मदादिप्रयोगेऽपि श्चुत्वाभावो ज्ञाप्यत इत्यर्थः ।

वि० ( २ ) "शात्" इति लिङ्गेनात्र यथोद्देशपक्षस्यैवाश्रयणादिति भावः ।

प्र० ( ३ ) तस्मिन्निति परिभाषया हि अव्यवहितत्वांशः, पूर्वत्वांशः, विधेयान्वयिषष्ठ्यर्थश्चेत्यंशत्रयमुपस्थाप्यते । तन्मध्ये प्रकृते ज्ञापकबलात्पूर्वत्वांशानुपस्थानेऽपि तदन्यदंशद्वयमुपतिष्ठत एवेत्यर्थः । तत्राव्यवहितत्वांशोपस्थित्या चितमित्यादौ नातिव्याप्तिः ।

"ष्टुना" ( पा० सू० ८।४।४१ )॥ इहापि कार्यिनिमित्तयोर्यथासंख्यं न। "तोर्षि" (पा० सू० ८।४।४३) इति ज्ञापकात्। ष्टौ ष्टरिति सुवचम्। ईट्टे, इष्टे; इत्यादौ "न पदान्तात्–" ( पा० सू० ८।४।४२ ) इति ज्ञापकान्न दोषः। सर्पिष्टममिति। "ह्रस्वात्तादौ–" (पा० सू० ८।३।१०१) इति (१)षत्वम्।

'प्रत्यये भाषायाम्' इति। यत्तु प्राचा मयटि नित्यमिति पठितम्। यच्च हलन्तप्रकरणे षण्णां, षड्णामित्युदाहृतम्। यच्च "यरोऽनुनासिके–" ( पा० सू० ८।४।४५ ) इति वा ऽनुनासिक इति तत्र व्याख्यातं तत्सर्वं भाष्यविरोधादुपेक्ष्यम्। यवादिगण इति। "यचि भं तसौ मत्वर्थे" इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्॥

शब्दरत्न।

षत्वमिति। न च षस्य पदान्ते जश्त्वं भविष्यतीति तद्व्यर्थमिति वाच्यम्। षत्वस्यासिद्धत्वेनास्य (२)जश्त्वाभावात्।

भाष्येति। प्रत्यय इत्येव तत्र पाठादिति भावः। दकारमिति। चर्त्वेनेति भावः। मृच्छब्दस्य यवादिगणे पाठे न मानमिति तत्र "झयः" ( पा०सू०८।२।१० ) इति वत्वे मृद्वानित्येवेति तात्पर्यमिति केचित्, तन्न। मृन्मानित्यस्यासिद्ध्यापत्तेः। मृद्वानिति क्वाचित्कोऽसांप्रदायिकः पाठः।

ननु सवर्णपदमधिकं "परसवर्णः" इत्यत्रैकार्थीभावापन्नस्यान्यत्र सम्बन्धो वक्तुमशक्यः। न च पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनापेक्षया पूर्वत्रोपस्थितार्थवाचकपदाध्याहारौचित्यात्तल्लाभः। "चुटू" ( पा०सू०१।३।७ ) इत्यादावादेरप्येवमेव सम्बन्धोपपत्तौ तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः। न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः। "तोर्लि" ( पा०सू०८।४।६० ) इत्यत्र समुदा-

ज्योत्स्ना।

जश्त्वाभावादिति। अत्र हि "ह्रस्वात्तादौ तद्धिते" इत्यनेन षत्वम्। तच्च जश्त्वदृष्ट्याऽसिद्धमिति भावः।

वि० ( १ ) अत्र "ह्रस्वात्तादौ तद्धिते" इत्यनेन विहितस्य षत्वस्यासिद्धत्वेन जश्त्वाप्रवृत्तौ पदान्तषकारादपि ष्टुत्वनिषेधापत्तेरावश्यकमेव सूत्रे टोर्ग्रहणमिति तदाशयः। यदा' 'क्वचिदेकदेशोऽप्यनुवर्तते" इति परिभाषया ष्टुनेत्येकदेशस्य टोरित्यस्यैवानुवृत्या, किञ्च ष्टुनेत्यसमस्तमेव तस्मादपि टोरेवानुवृत्या पदान्ताट्टवर्गादित्यर्थस्यैव लाभात्सर्पिष्टममित्यादौ न दोष इत्युच्यते; तदा मास्तु टोर्ग्रहणमिति भावः।

प्र० ( २ ) अत्र हि 'ह्रस्वात्तादौ तद्धिते" इत्यनेन षत्वम्। तच्च जश्त्वदृष्ट्याऽसिद्धमिति भावः

"उदः स्था–" ( पा० सू० ८।४।६१ ) ॥ "अनुस्वारस्य ययि–" ( पा० सू० ८।४।५८ ) इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते । एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाह—पूर्वसवर्णः स्यादिति । अघोषस्येत्यादि । एतेन सस्य तकार इति प्राचां ग्रन्थाः (१)प्रत्युक्ताः । यदपीह "चयो द्वितीयाः शरि" इत्यस्योपन्यसनं तदतिरभसात् ॥

तच्छिव इति । यत्तु प्राचा तत् शिव इत्यत्र जश्त्वे कृते "खरि च" ( पा० सू० ८।४।५५ ) इत्युक्तम् । तन्न । तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात् । यत्तु तत्पौत्रेणोक्तं तदो "वाऽवसाने" ( पा० सू० ८।४।५६ ) इति चर्त्वे कृते पश्चाच्छिव इत्यनेन सम्बन्धे "झलां जशोऽन्ते" ( पा० सू० ८।२।३९ ) इति जश्त्वे "खरि च" ( पा० सू० ८।४।५५ ) इति चर्त्वमिति

शब्दरत्न ।

यानुवृत्त्या तस्याश्चारितार्थ्यादित्यत आह—अनुस्वारस्येत्यादि । एकदेशे इति च । पकारमात्रे स्वरितत्वप्रतिज्ञयैव "तोर्लि" ( पा०सू०८।४।६० ) इत्यादावनुवृत्तिसिद्धौ पुनः सकारांशे तत्प्रतिज्ञया तावतोऽप्यंशस्य उत्तरत्रानुवृत्तिरिति भावः । तदतिरभसादिति । चयोऽभावात् । "दीर्घादाचार्याणाम्" ( पा०सू०८।४।५२ ) इत्युत्तरं "अनुस्वारस्य ययि" ( पा०सू०८।४।५८ ) "वा पदान्तस्य" ( पा०सू० ८।४।५९ ) "तोर्लि" (पा०सू० ८।४।६० ) "उदः स्था" ( पा०सू० ८।४।६१ ) "झयो हो" ( पा०सू०८।४।६२ ) "शश्छोऽटि" ( पा०सू० ८।४।६३ ) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" ( पा०सू० ८।४।५३ ) "अभ्यासे चर्च" ( पा०सू०८।४।५४ ) "खरि च" ( पा०सू०८।४।५५ ) "वाऽवसाने" ( पा०सू० ८।४।५६ ) "अणोऽप्रगृह्यस्य" (पा०सू०८।४।५७) इति पञ्चसूत्र्याः पाठे भाष्यसम्मते थस्य चर्त्वेऽपि तस्यासिद्धत्वाच्छर्परत्वाभावाच्चेति भावः ॥

चर्त्वमिति । ततः श्चुत्वे "शश्छोऽटि" ( पा०सू०८।४।६३ ) इति प्रक्रियेति भावः ।

ज्योत्स्ना ।

भाष्यसम्मत इति । 'उत्कन्दो रोग' इति भाष्योदाहरणाद्भाष्यसम्मत इत्यर्थः । न च एतद्भाष्यबलेन महाप्राणत्वघटितान्तरतम्यम्पूर्वसवर्णप्रवृत्तौ न नियामकमित्येव कल्प्यताम् । तावतापि तकारस्य लाभेन चयो लाभ एवेति वाच्यम् । महाप्राणत्वन्ननियामकमिति यदि ब्रूषे ! तर्हि भाष्यकाराज्ञानकल्पनं, तदपेक्षया अष्टाध्याय्याः पाठव्यत्यासस्य कल्पनमेवोचितमित्याशयात् ।

वि० ( १ ) यद्यपि "उत्पूर्वास्स्कन्देरुपसंख्यानम्" इति प्रकृतसूत्रस्थवार्तिकस्य उत्कन्द इत्युदाहरणभाष्ये तकारदर्शनात्प्राचीनोक्तं युक्तमेव । तथापि भाष्यं तदुदाहरणमात्रविषयम्बोध्यम् ।

तदतिस्थवीयः । जश्त्वं प्रति अवसाने चर्त्वस्यापवादत्वात् । जश्त्वे शिवशब्दानपेक्षणाच । भाविन्यवसानभङ्गे "वाऽवसाने" ( पा० सू० ८।४।५६ ) इत्यस्य पूर्वमप्रवृत्तेश्च । प्रवृत्तस्य वा निवृत्तिसम्भवात् । उक्तं च "अकृतव्यूहाः पाणिनीयाः" इति "कृतमपि शास्त्रं निवर्तयन्ति" इति च । अन्यथा हरिरयमित्यत्रापि त्वदुक्तरीत्या प्रवृत्तो विसर्गः केन वार्यताम् । अथ तनोतीति तदिति क्विबन्तं ब्रूषे एवमपि जश्त्वेन दकारोऽस्तु । चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम् । श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात् ।

यत्तु "न मु ने" ( पा० ८।३।३ ) इत्यत्र "न" इति योगं विभज्यासिद्धत्वमिह नेत्याहुः । तदपि न । असिद्धत्वेऽपि रूपसिद्धौ निर्बाधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात् ॥

आक्रंस्यत इति । "आङ उद्गमने" ( पा० सू० १।३।४० ) इति तङ् । "स्नुक्रमोः–" ( पा० सू० ७।२।३६ ) इति नेट् ॥

---

शब्दरत्न ।

चर्त्वस्यापवादत्वादिति । एवं च तत्र कृते जश्त्वाप्रवृत्तिरिति भावः । न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन तस्यासिद्धत्वादपवादत्वे न मानमिति वाच्यम् । तत्कालेऽवश्यं प्राप्तत्वेन येन नाप्राप्तिन्यायेनापवादत्वस्य सुलभतयोक्तरीतेरसम्भवात् । एतदेवाभिप्रेत्य "मिदचोऽन्त्यात्" ( पा०सू०१।१।४७ ) सूत्रे भाष्ये उक्तम्—सत्यपि सम्भवे बाधनं भवतीति । अन्यथा कौण्डिन्याय तक्रमित्यनेन ब्राह्मणेभ्यो दधीति प्रासदधिदानस्यापि बाधो न स्यात् । तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यात् । अत एव "अजादेर्द्वितीयस्य" (पा०सू०६।१।२) इति सूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्यानेन बाधो न स्यादित्याशङ्क्य सत्यपि सम्भवे इति न्यायेन बाधकत्वमुक्तं भाष्ये । एवं च "दयतेर्दिगि—" ( पा०सू०७।४।९ ) इति सूत्रस्थकैयटादिग्रन्था 'असम्भवे एव बाधकता' इति वार्तिकानुसारेण प्रवृत्ता अयुक्ता एवेति बोध्यमिति भावः । केन वार्यतामिति । एवं चेदृशविषये वाक्यसंस्कारपक्षेणैव साधुत्वान्वाख्यानमिति स्वीकृत्याकृतव्यूहपरिभाषा त्याज्येति चेदिष्टापत्तिरिति बोध्यम् ।

अन्ये तु पदसंस्कारे हरिः अस्तीति सविसर्गमपि साध्वेव सत्यभिधाने, परिभाषाया भाष्येऽदर्शनादित्याहुः । प्रमाणाभावादिति । योगविभागस्य भाष्येऽदर्शनेनाप्रामाणिकत्वाच्चेत्यपि बोध्यम् ॥

समसम्बन्धी विधिरिति । समकर्मकं (१)विधानमिति तु नोक्तम् । अनुवाद्ययोरपि यथासंख्यस्येष्टत्वात्(२) । "समूलाकृतजीवेषु हन्कृञ्ग्रहः" ( पा० सू० ३।४।४६ ) इत्यत्र यथा ॥

शब्दरत्न ।

यथासंख्यस्येति । ख्यान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम् ॥

ज्योत्स्ना ।

समसम्बन्धी विधिरिति । समसंख्याकानामनुदेशः पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धो यथासंख्यं भवति । संख्याकर्मकातिक्रमणकर्तृत्वावच्छिन्नाभाववान् भवति । विजातीयक्रमविशिष्टप्रतियोग्यनुयोगिको न भवति । सजातीयक्रमविशिष्टप्रतियोग्यनुयोगिको भवतीति यावत् । साजात्यं च प्रथमत्व द्वितीयत्व तृतीयत्वादिना । यथा "एचोऽयवायावः" इत्यनेन प्रथमत्वतः एकारस्य प्रथमत्ववानयं, द्वितीयत्वतः ओकारस्य द्वितीयत्ववानयम् इत्यादि । नन्वेकारस्य प्रथमत्वे ओकारस्य द्वितीयत्वे किं विनिगमकं ? वैपरीत्यमेव किन्न स्यादिति चेन्न । द्वितीयतृतीय इत्यादिपूरणप्रत्ययमाहात्म्येनैव तल्लाभात् । पूरणप्रत्ययार्थश्च—अपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितमुख्यविशेष्यताश्रयत्वम् । अपेक्षाबुद्धिश्च अयमेकः एतदेकत्वविशिष्टः अयमेकः इतीमौ द्वौ इतिद्वित्वोत्पादिकेयमपेक्षाबुद्धिः । इमौ द्वौ इति द्वित्वविशिष्टोऽयमेकः इति इमे त्रयः इतीयं त्रित्वोत्पादिकेयमपेक्षाबुद्धिः । पूरणप्रत्ययार्थविशेष्यतायां मुख्यत्वनिवेशेन प्रथमे पूरणप्रत्ययो नेति । अन्यथा एकत्वावच्छिन्नविशेष्यतायाः सत्वेन तस्यापि पूरणप्रत्ययार्थत्वं स्यात् । तथाच समसंख्यानां पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धप्रतियोगित्वविशिष्टानुयोगिको भवति । वैशिष्ट्यं च—स्ववृत्तिसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासजातीयविशेष्यताश्रयत्वसम्बन्धेन । साजात्यं च—मुख्यत्वामुख्यत्वान्यतरसम्बन्धरूपेण । यथा प्रतियोगिनौ एकारोकारौ तद्वृत्तिद्वित्वसंख्योत्पादिका अपेक्षा बुद्धिः अयमेकार एकः एतदेकत्वविशिष्टोऽयमोकार एक इतीमौ द्वौ इत्याकारिका तदीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतोभयोरेकारौकारयोः, तयोर्मध्ये प्रथमे प्रकारतासमानाधिकरणत्वादमुख्या तत्सजातीया या अय्निष्ठैकत्वनिष्ठप्रकारतानिरूपिताऽमुख्याविशेष्यता तदाश्रयो अय् तदनुयोगिकः पूर्वोक्तः सम्बन्धः एकारौकारवृत्तिद्वित्वं तत्सम्बन्धिसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितमुख्यविशेष्यतौकारे तत्सजातीयमुख्यविशेष्यताश्रयः अव् तदनुयोगिकः सम्बन्धो भवति ।

वि० ( १ ) अनुदेश इति कृद्योगे कर्मणि षष्ठ्या एवौचित्यादिति भावः ।

वि० ( २ ) एवं च स्वरितत्वेन यथासंख्यमिति भाष्ये व्याख्यानात् तदनुरोधेनैव व्यवस्था । यथासंख्यार्थस्तु ज्योत्स्नायां द्रष्टव्यः । स्पष्टतरन्तु शब्देन्दुशेखरटिप्पणे ।

"ङ्णोः" ( पा० सू० ८।३।२८ ) ॥ कुक्टुकोः पूर्वान्तत्वात्प्राङ्क्साये इत्यत्र "सात्पदाद्योः" इति षत्वं न। सुगण्ट्साये इत्यत्र "न पदान्तात्" ( पा० सू० ८।४।४२ ) इति ष्टुत्वं न ।

पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् तस्यापत्यं पौष्करसादिराचार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः ॥

"डः सि धुट्" ( पा० सू० ८।३।२९ )॥ "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्, (१)परत्वात्" इत्यभिप्रेत्याह—सस्येति । सीति सप्तमीनिर्देश-

शब्दरत्न ।

परत्वादिति । "तस्मिन् ( पा०सू०१।१।६६ ) इति सूत्रापेक्षया "तस्मात्—" ( पा० सू०१।१।६७ ) इत्यस्य परत्वादित्यर्थः । डकारात्सकारे धुडित्यर्थे "तस्मिन्—" ( पा० सू०१।१।६६ ) इत्यस्य प्रवृत्तावुपस्थितडकारस्यागमित्वं, "तस्मात्—" इत्यस्य प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय

ज्योत्स्ना

अत्रेदं विचार्य्यम् । एतादृशार्थस्वीकारेऽपि एकारौकाररूपप्रतियोगिवृत्तिद्वित्वसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता या ओकारनिष्ठामुख्यविशेष्यता तत्सजातीया त्रित्वसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता या आय्निष्ठमुख्यविशेष्यता तदाश्रयः आय् इत्यादेशोऽपि स्यात् । तस्मात् यत्संख्याकानामनुदेशः प्रतियोगिविशिष्टविशेष्यताश्रयानुयोगिको भवतीत्यर्थः। वै० च० स्ववृत्तिसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासजातीयत्व स्ववृत्तिसंख्यावृत्तिसंख्यात्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवदपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितत्वैतदुभयसम्बन्धेन । साजात्यञ्च मुख्यत्वामुख्यत्वान्यतरसम्बन्धेन रूपेण ।

अथवा एकत्वावच्छिन्नत्व एकत्वानवच्छिन्नत्व एतदन्यतरसम्बन्धेन । द्वितीयसम्बन्धस्थानेऽपि स्ववृत्तिसंख्योत्पादिकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितत्वेति वा सम्बन्धो ज्ञेयः। फलं तुल्यमेव । एवञ्चौकारस्य नायादेशः अय् अव् आय् वृत्तित्रित्वोत्पादिकापेक्षाबुद्धिः तन्निष्ठजनकावच्छेदको धर्मः न द्वित्वोत्पादकापेक्षाबुद्धित्वरूप इति नोक्तदोष इत्यलम् ॥

वि० ( १ ) धुगिति न्यासोऽस्त्विति भावः। अस्मिन्न्यासे द्वेऽपि विभक्ती सार्थके। न च धकारोच्चारणसामर्थ्यात् ष्टुत्वाभावः शंक्यः। "नश्च" इत्युत्तरार्थत्वेन तस्य चारितार्थ्यात्।

स्तु लाघवार्थः । षट्त्सन्त इति । धुटश्चर्त्वेन तकारः ।

यत्त्वाहुः—"चयो द्वितीया" इति पक्षे तस्य थ इति तन्न । चर्त्वस्यासिद्धत्वात् । अत एव धुडभावे षट् सन्त इत्यत्र टस्य ठो न । टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश । "खयः शर" इति सकारद्वित्वे द्वात्रिंशत् । न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम् । "पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः । न च "शरोऽचि" ( पा० सू० ८।४।४९ ) इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात् । अत एव "शरः खयः" इतिवार्तिकस्य वत्सः, अप्सराः, इत्युदाहरणं भाष्ये स्थितम् । धुटः परादित्वं "न पदान्तात्–" ( पा० सू० ८।४।४२ ) इति ष्टुत्वनिषेधार्थम् । अत एव वक्ष्यमाणस्तुगिहैव न कृतः ।

यत्त्वाहुः—एवमपि प्रक्रियालाघवार्थं तुडेव कर्तुमुचित इति तन्न । "चयो द्वितीया–" इति पक्षे थकारापत्तेः ।। "श्चुत्वं धुटि सिद्धं वाच्यम्" अटतीत्यट् श्चोतति । इह धुड् न ।

---

शब्दरत्न ।

इति भावः । स्पष्टं चेदं "तस्मिन्" ( पा०सू०१।१।६६ ) इति सूत्रे भाष्ये । लाघवार्थ इति । षष्ठ्याः प्रयोग एव कर्त्तव्ये इत्यर्थः ।

चर्त्वस्यासिद्धत्वादिति । अत एव तुडिति नोक्तम् । अत एव—चर्त्वस्यासिद्धत्वादेव ।

ननु 'धुक् डः सि' इत्यस्तु सप्तमी च यथाश्रुतैव, ड इति च षष्ठ्यन्तं, परमा(१)र्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्ततावच्छेदकभेदोऽत आह—धुटः परादित्वमिति । श्चोततिरुपदेशे सादिः । श्चुत्वस्य धुटि सिद्धत्वे ऽपि तुक्यसिद्धत्वात्सन् श्चोततीत्यत्र तुग्नेति बोध्यम् ।

ज्योत्स्ना ।

ख्यान्तैकदेशेनेति । "यथासङ्ख्यम्" इति सूत्रे यत्प्रथमान्तं यथासंख्यमिति पदं तदनुकरणं मान्तमेव भविष्यतीति यथासंख्यस्येत्यसङ्गतमित्याह । एवञ्च यथासंख्येत्येकदेशयुक्तसूत्रप्रवृत्तेरिष्टत्वादितिमूलार्थः ।

परमार्थत इति । ननु धुटः परादित्वे त्सन्त इत्यानुपूर्व्याः शक्ततावच्छेदकत्वम्, पूर्वान्तत्वे तु सन्त इत्यानुपूर्व्यास्तवच्छेदकम् इति फलभेदः स्यात्कल्पद्वये इत्यत आह—परमार्थत इति ।

---

प्र० ( १ ) ननु धुटः परादित्वे त्सन्त इत्यानुपूर्व्याः शक्ततावच्छेदकत्वं, पूर्वान्तत्वे तु सन्त इत्यानुपूर्व्यास्तत्त्वमिति भेदः स्यात्कल्पद्वये इत्यत आह—परमार्थत इति ।

"शि तुक्" ( पा० सू० ८।३।३१ ॥ शीति सप्तमी पूर्वत्र कृतार्थाया: "न:" इति पञ्चम्या: षष्ठीं कल्पयतीत्याह—नस्येति । ननु प्रकृतो धुडेवास्तु किं तुका । मैवम् । "शश्छोऽटि" ( पा० सू० ८।४।६३ ) इत्यस्य हि पदान्ताज्झय: परस्य शस्य छ इत्यर्थ आकरे स्थित: । एवं च धुट: परादित्वात् सञ्छम्भुरित्यत्र च्छो न स्यात् । विपूर्वाद्रपेरौणादिके शप्रत्यये "मध्वश्चोतन्त्यभितो विरप्शम्" इत्यादौ यथा । अत: पूर्वान्तस्तुक् कृत: ।

नन्वेवं कुर्वञ्छेते इत्यत्र "पदान्तस्य" (पा०सू० ८।४।३७) इति णत्वनिषेधो न स्यादिति चेन्न । कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात् । यथोद्देशपक्षे "स्तो:श्चुना" इति योगो विभज्यते 'न' इति वर्तते 'ण:' इति च । स्तो: श्चुना योगे णत्वं न स्यात् । नकारार्थमिदम् । सकारग्रहणं वर्गग्रहणं चोत्तरार्थम् । तत: "श्चु:" इति पूर्वमनुवर्तते । एवं "नश्च" (पा०सू० ८।३।३०) इति सूत्रे कुर्वन्त्सीदतीत्यत्र "पदान्तस्य" ( पा० सू० ८।४।३७ ) इति णत्वप्रतिषेधो धुट: परादित्वे प्रयोजनमिति प्राचां ग्रन्थोऽपि यथोद्देशपक्षे बोध्य: ।

यत्तु वदन्ति—इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात्प्रत्युक्तमिति । तत्पाक्षिकम् । त्रिपादीस्थेऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तते इति सुद्ध्युपास्य इत्युदाहरणे स्वोक्त्या (१)सह विरुद्धं चेत्यास्तां तावत् । स-

---

शब्दरत्न ।

षष्ठीं कल्पयतीति । न च "शि" इति सप्तमीनिर्देशो लाघवार्थ: । द्वयोरचरितार्थत्वे लाघवेनान्यविभक्त्युच्चारणं युक्तं न त्वन्यथेत्याशयात् । धुडेवास्त्विति। शीति च षष्ठ्यर्थे इति भाव: । विरप्शमिति । छान्द(२)सार्थमपि बहुश: सूत्रकृतो यत्नदर्शनादिति भाव: । णत्वं न स्यादिति । एतद्दृष्ट्या श्चुत्वस्यासिद्धत्वं तु न, वचनसामर्थ्यादिति भाव: । त्रिपाद्यां सर्वथा परिभाषाऽप्रवृत्तौ पक्षद्वयेऽपीदमेव समाधानम् । यथोद्देशपक्षे इति । कार्यकाले तु असिद्धत्वान्न दोष: पूर्वान्तत्वेऽपीति भाव: ।

ज्योत्स्ना ।

छान्दसार्थमपीति । वस्तुतस्तु—लोकेऽपि चक्षिङो लिटि चक्शौ चक्शे इत्यादिषु छत्वाभावाय पदान्तसम्बन्ध आवश्यक इति न केवलं छान्दसार्थं तदिति भाव: ।

---

वि० ( १ ) त्रिपाद्यां तत्परिभाषाया अप्रवृत्ते: सामान्यतस्तत्रोक्तत्वादिह तत्प्रवर्तने पूर्वापरविरोध इति भाव: ।

प्र० ( २ ) वस्तुतस्तु लोकेऽपि चक्षिङो लिटि चक्शौ, चक्शे इत्यादिषु च्छत्वाभावाय पदान्तसम्बन्ध आवश्यक इति न केवलं छन्दसार्थं तदिति भाव: ।

ञ्च्छम्भुरिति । इह श्चुत्वतुकोरसिद्धतामाश्रित्य "नश्छवि" ( पा० सू० ८।३।७ ) इति रुत्वं न शङ्क्यम् । छत्वस्यासिद्धत्वात् ।

"ङमो ह्रस्वात्" ( पा० सू० ८।३।३२ ) ॥ ङम् प्रत्याहारः । सञ्ज्ञायां च कृतं टित्त्वं सामर्थ्यात् (१)संज्ञिभिः सम्बद्ध्यते । तेन यथासंख्यं ङुट्-णुट्-नुटः प्रवर्तन्ते । नित्यग्रहणं विस्पष्टार्थम् । "हे मपरे–" (पा० सू० ८।३।२६ इति "मय उञो वो वा" ( पा० सू० ८।३।३३ ) इति च विकल्पद्वयस्य मद्ध्ये पाठादेव नित्यत्वलाभात् । सुगण्णीश इति । ण्यल्लोपौ न स्थानिवत्पूर्वत्रासिद्धे (२)तन्निषेधात् । ङमुटः परादित्वं कुर्वन्नास्ते इत्यत्र णत्वप्रतिषे-

## शब्दरत्न ।

सञ्ज्ञायाम्—ङमिति प्रत्याहाररूपायाम् । विकल्पद्वयस्य मद्ध्ये इति । 'विभाषामध्ये च ये विधयस्ते नित्या' इति "पूङः क्त्वा च" ( पा०सू०१।२।२२ ) इति सूत्रे भाष्योक्तेरिति भावः । न च तन्मध्ये पाठेन नित्यत्वकल्पने तन्मध्यपतितानां "नपरे नः" ( पा०सू०८।३।२७ ) इत्यादीनामपि नित्यत्वापत्तिः । स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात् । तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः । तन्निषेधादिति । "तस्य दोष" इत्यस्य तु न प्राप्तिः । लत्वसाहचर्येणादेशणत्वस्यैव ग्रहणात् । पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोध्यम् । परादित्वमिति । ततः परस्याच

## ज्योत्स्ना ।

"ङमो ह्रस्वादचि" इति । ङमो ह्रस्वादचीत्यत्र पदस्येत्यनुवृत्तं विभक्तिविपरिणामेन ङमा विशेष्यते । ततस्तदन्तविधौ ङमन्तपरं, ह्रस्वादिति स्वाव्यवहितोत्तरत्वसम्बन्धेन ङमा सम्बध्यते । ङमन्तमिति सामानाधिकरण्येन पदेन सह अचीति सप्तमी "मय उञो वो वा"इत्यत्र चरितार्थेन निरवकाशतया पञ्चम्या उपस्थितोत्तरस्येत्यनेन सामानाधिकरण्याय तस्याः षष्ठीप्रकल्पनम् । ततश्च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्यर्थः । न च 'पदार्थः पदार्थेनान्वेति' इति न्यायेन ङमन्तपदार्थैकदेशे ङमि ह्रस्वादिति पदस्यान्वयो न भवितुमर्हतीति वाच्यम् । गभीरायां नद्यां घोष इत्यत्रेव ङमूपदस्यैव ह्रस्वात्परङमन्ते लक्षणा, ह्रस्वादिति तात्पर्यग्राहकमित्यर्थेनादोषात् । "श्रुतानुमितयोः श्रुतसम्बन्धो ज्यायान्" इति न्यायेन श्रुतसम्बन्धस्यैव बलीयस्त्वाच्चेति । न च ङमेव ह्रस्वविशेषणमस्तु ङमः परो यो ह्रस्वः ततःपरस्याचो ङमुडि-

---

वि० ( १ ) प्रत्याहारे टित्वस्य फलाभावान्ङकारादौ तद्बोध्यमित्यर्थः ।

वि० ( २ ) अनादिष्टादचः पूर्वत्वस्य दुरुपपादत्वाच्चेत्यपि बोध्यम् ।

घार्थम् । अत एव ङमो ह्रस्वादचि द्वे इति नासूत्रि । परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति (१)प्राञ्चः ।

यत्त्वाहुः—बहिरङ्गपरिभाषया गतार्थत्वादुभयमप्यसङ्गतमिति । तदपि पाक्षिकम् । राज्ञ इत्यत्रेव यथोद्देशे त्रैपादिके ऽन्तरङ्गपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात् । कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक् ।

शब्दरत्न ।

इति व्याख्यानेनेत्यर्थः । ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम् । "पदस्य" ( पा०सू० ८।१।१६ ) इति च "मादुपधायाः" ( पा०सू०८।२।९ )इत्यादाविवावयवषष्ठी । अजादौ पदे इत्युक्तेर्म्ना अभ्यासे इत्यतः शतरि मननित्यादावनन्त्यस्य नेति भावः । बहिरङ्गपरिभाषयेति । ङुटो बहिरङ्गतया ऽसिद्धत्वादित्यर्थः । उभयम्—ङमुटः परादित्वं, द्वे इति सूत्राकरणं च । पाक्षिकम्—कार्यकाल(२)सम्बन्धि । दिगिति । दिगर्थस्तु तत्परिभाषा-

ज्योत्स्ना ।

त्यर्थश्चेत् । मन्यतेः पचाद्यचि हे मन आत्मा इत्यत्रैव ङमुट् स्यात्, न तु प्रत्यङ्ङात्मेत्यादाविति वाच्यम् । तस्मिन्निति निर्देशोपपत्तये ङमो विशेष्यत्वस्यैव न्याय्यत्वात् । न च ङम इति षष्ठ्यन्तमेवास्तु । तथा च ह्रस्वात्परस्य पदावयवस्य ङमो ङमुडित्यर्थोऽस्त्विति वाच्यम् । अनिति इत्यादौ ङमुडुत्पत्तेः । न च तदर्थम् "उञि च पदे"इत्यतः पदे इत्यनुवर्त्य अजादौ पदे इत्यर्थान्न दोष इति वाच्यम् । तत्र निर्विवादेऽपि कुर्वन्नास्ते इत्यत्र णत्वापत्तेः । ङम उत्तरस्याचो ङमुडिति भाष्यविरोधापत्तेः । तस्मान् ङम इति पञ्चम्यन्तं न तु षष्ठ्यन्तम् । ननु तथापि ह्रस्वात्परो यो ङम् ततः परस्य पदावयवस्याचो ङमुड् इत्येवार्थः स्यादिति चेन्न । अनितीत्यादावुक्तदोषतादवस्थ्यात् । न च परमदण्डिनावित्यादावन्तर्वर्तिविभक्त्या पदत्वेन ङमुट् स्यादिति पदे इत्यनुवर्त्य अचीत्यस्य विशेषणत्वेन तदादिविधौ अजादेः परस्येति वैयधिकरण्येन ङमा सम्बध्यते । ह्रस्वात्परो यः पदावयवो ङम् ततः परस्याजादेः पदस्य ङमुड् इत्यर्थेन अनितीत्यादौ न दोष इति वाच्यम् । नलोपवारणायोत्तरपदत्व इत्यस्यावश्याश्रयणीयतया तयैव ङमुड्वारणसम्भवे पदे इत्यनुवृत्तेर्निष्फलत्वादिति मनोरमाकाराः ।

शब्दरत्नकारास्तु–माषकुम्भवापेनेत्यर्थे कार्यित्वनिवेशस्यावश्यकतया परिभाषया

---

वि० ( १ ) अत्रास्वरसबीजन्तु ह्रस्वात्परो यः पदान्तो ङम् तस्य ङमुट् स्यादित्यर्थेन पूर्वावयवत्वेऽपि न णत्वप्राप्तिः । 'यदागम' न्यायेन पदान्तावयवस्यापि पदान्तत्वलाभादिति स्पष्टं भाष्ये ।

वि० ( २ ) पररीत्यैवेदम् । एतस्य पाक्षिकमित्यस्य वैकल्पिकमित्यर्थं इति भ्रमस्तु न कार्यो विकल्पस्याप्रकृतत्वात् ।

ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न । "उत्तरपदत्वे चापदादिविधौ" इति प्रत्ययलक्षणप्रतिषेधात् । अत एव

ज्योत्स्ना

ङमुड्वारणं न सम्भवतीति पदे इत्यनुवृत्तिरावश्यिक्येवेति पदावयवो यो ह्रस्वात्परीभूतो ङम् ततः परस्याजादेः पदस्य इति व्याख्यानेऽपि न क्षतिरित्याहुः ॥

उत्तरपदत्व इति । ननु ह्रस्वात्परो यो ङम् तदन्तं यत् पदं तस्मात् परस्याचो ङमुडित्यर्थस्वीकारे परमदण्डिनावित्यादौ प्रत्ययलक्षणेनान्तर्वर्तिविभक्त्या पदत्वे ङमुडापत्तिरिति चेन्न । परमदण्डिनावित्यादौ नलोपवारणायावश्याश्रयणीयतया "उत्तरपदत्वेचापदादिविधौ" इति परिभाषया प्रत्ययलक्षणनिषेधे दण्डिन्नित्यस्य पदत्वाभावेन ङमुटोऽप्राप्तेरिति मनोरमाकृत आहुः । तन्मते उत्तरपदत्वे कोऽर्थः पदसंज्ञायां प्रत्ययलक्षणं न भवति पदादिविधौ तु भवतीति परिभाषार्थः ।

शब्दरत्नकारास्तु—उत्तरपदत्वे चेत्यस्य पूर्वोक्तार्थस्वीकारे माषकुम्भवापेनेत्यादौ कुम्भशब्दस्य पदत्वे प्रत्ययलक्षणनिषेधेन पदत्वाभावे "पदव्यवायेऽपि" इति निषेधाप्रवृत्या णत्वाप्राप्तिरिति कार्यित्वनिवेश आवश्यकः। तथाच उत्तरपदत्वे इत्यस्य कोऽर्थः? पदसंज्ञाप्रयुक्ते कार्ये प्रत्ययलक्षणन्नेत्येवार्थः। ततश्च नलोपस्य तया वारयितुं शक्यत्वेऽपि ङमुड्वारयितुं न शक्यत इति "ञि च पदे" इत्यतः पदे इत्यनुवर्त्य ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याजादेः पदस्य ङमुडित्यर्थेन परमदण्डिनावित्यादौ ङमुटं वारयन्ति । न च "पदव्यवायेऽपि" सूत्रारम्भादेव "उत्तरपदत्वे च" इति निषेधो माषकुम्भावापेनेत्यादौ न प्रवर्तत इति कार्यित्वनिवेशो विफलः । एवञ्च परिभाषयैव परमदण्डिनावित्यादौ ङमुड्वारणं भविष्यति,पदे इत्यनुवृत्तिर्व्यर्थेति वाच्यम् । अङ्गानां योगाः अङ्गयोगाः, चत्वारोऽङ्गयोगा यस्मिन् तेन चतुरङ्गयोगेनेत्यादौ अङ्गशब्दस्योत्तरपदत्वाभावेन वार्तिकाप्रवृत्या "पदव्यवायेऽपि" इत्यस्य चारितार्थ्यात् । न च पूर्वो दण्डी प्रियो यस्येति त्रिपदे बहुव्रीहौ दण्डिन्नित्यस्य नलोपार्थं पदत्वायोत्तरपदत्वं मध्यमत्वानाक्रान्तत्वं विवक्षणीयम् । मध्यमत्वञ्च वृत्तिविशिष्टत्वम् । वै० च० स्वघटकार्थवदव्यवहितपूर्वत्व स्वघटकार्थवदव्यवहितोत्तरत्व उभयसम्बन्धेन । एवं माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य मध्यमत्वेन निषेधाप्रवृत्या कार्यित्वनिवेशो विफल इति वाच्यम् । परमलोम्निचरः, परलोम्निशयः, इत्यत्र लोम्नो मध्यमत्वापत्या। निषेधाभावेन ।नलोपापत्तिरतः यद्वृत्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमत्वम् । वैशिष्ट्यं च स्वघटकार्थवदव्यवहितपूर्वत्व स्वघटकार्थवदव्यवहितोत्तरत्वोभयसम्बन्धेन । एवं च माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य मध्यमत्वाभावेन।वार्त्तिकाप्रवृत्तये कार्यित्वनिवेशस्यावश्यकत्वात् ।

वस्तुतस्तु—पूर्वदण्डिप्रिय इत्यत्र दण्डिन्नित्यस्य पदत्वार्थमुत्तरपदत्वं मध्यमत्वाना-

शब्दरत्न।

यास्त्रिपाद्यामभाव एव। किं च यदि(१) 'यदागमा' इति न्यायेनागमानामागमिधर्मत्वे-

ज्योत्स्ना।

क्रान्तं न विवक्षितं, किन्तु समासघटकत्वे सति समासघटकाव्यवहितपूर्वत्वाभावरूपमुत्तरपदत्वं गृह्यते। एवं माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य समासघटकवापशब्दाव्यवहितपूर्वत्वस्यैव सत्वेनोत्तरपदत्वाभावाद्वार्तिकाप्रवृत्तौ कार्यित्वनिवेशो विफलः। परमदण्डिनावित्यादौ ङमुड्वारणं परिभाषयैव भविष्यतीति पदे इत्यनुवृत्तिर्व्यर्था। नन्वेवमुत्तरपदत्वस्वीकारे अत्रेरपत्यानि अत्रयः इत्यत्रीत्यस्योत्तरपदत्वाभावेन वार्तिकाप्रवृत्त्या अन्तर्वर्तिविभक्त्या पदत्वेन "एङः पदान्तादति" इति पूर्वरूपापत्तिः। नचैङः पदेऽतीति न्यासान्न दोष इति वाच्यम्। पचति भवति सततमभिधीयते यस्यां क्रियायां सा पचतिभवतिः तस्मादाचारक्विपि पचतिभवतेऽति अत्र पूर्वरूपानापत्तेः। तथा न्यासेन पूर्वरूपवारणेऽपि अत्रयः इत्यत्र यलोपापत्तेश्चेति चेन्न। वृत्तिविशिष्टत्वम् उत्तरपदत्वमिति स्वीकारेणादोषात्। वैशिष्ट्यंच स्वघटकत्व स्वघटकाव्यवहितपूर्वत्वाभाववत्व एतदुभयसम्बन्धेन। नचैवमपि परमलोम्निचरः परमलोम्निशयः वृत्तिघटकेकाराव्यवहितपूर्वत्वस्यैव लोमन्शब्दे सत्वेनोत्तरपदत्वाभावात् वार्तिकाप्रवृत्त्यापदत्वान्नलोपापत्तिरिति वाच्यम्। स्वघटकस्य प्रत्ययेतरस्य विवक्षणेनादोषात्। नचैवमपि पूर्वो दण्डी इः प्रियो यस्येति विग्रहे इकारस्य प्रत्ययत्वेन तदितरोदासीनाव्यवहितपूर्वत्वाभावस्य दण्डिशब्दे सत्वेन उत्तरपदत्वापत्या नलोपानापत्तिरिति तदर्थं सुबितरनिवेशे च पञ्चगवधन इत्यत्र गो इत्यस्य पदत्वापत्तिरिति वाच्यम्। वृत्तिविशिष्टत्वम् उत्तरपदत्वमितिस्वीकारेणादोषात्। वैशिष्ट्यं च स्वघटकत्व स्वघटकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयप्रत्ययेतराव्यवहितपूर्वत्वाभाववत्व एतदुभयसम्बन्धेन। नच राजीयतीत्यत्र वृत्तिघटकराजनिष्ठोद्देश्यतानिरूपितविधेयताश्रयक्यजितरोदासीनाव्यवहितपूर्वत्वाभाववत्वस्य राजशब्दे सत्वेनोत्तरपदत्वाप्राप्त्या "नः क्ये" इत्यस्य नियमार्थत्ववर्णनं भाष्यकृतोऽसङ्गतं स्यादिति वाच्यम्। उद्देश्यतायां सुबन्तत्वानवच्छिन्नत्वरूपविशेषणदानेनादोषात्। बहुचोऽपि सुबन्ततावच्छिन्नैवोद्देश्यतेति पूर्वदण्डिबहुवाचक इत्यत्रापि न दोष इत्यलम्।

किं च यदीति। यदीत्यस्य न बोध्यते इत्यनेनान्वयः, किन्तु उच्यते इत्यनेन। तथाच

---

प्र० (१) यदीत्यस्य न बोध्यते इत्यनेनान्वयः, किन्तु उच्यते इत्यनेन। तथाच नायमर्थः सिद्धान्तिसंमत इति ध्वन्यते। अन्यथाऽनयैव भाष्यप्रदर्शितरीत्या सर्वेषामित्यादावाम्प्रत्ययवृत्तिपदान्तत्वस्य सुडागम आरोपेण षत्वानापत्तिर्बोध्या। नचान्तत्वस्य चरमवर्णे एव सम्भवेन समुदिते आमि पदान्तत्वस्य दुर्वचत्वेन कथं तदागमे सुडादौ पदान्तत्वारोप इति वाच्यम्। "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इति सूत्रेऽल्पदोपादानसामर्थ्येनाऽल्समुदायेऽपि तत्सम्भवादिति दिक्।

परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न ।

यत्तु प्राचा "ञ्नि च पदे" ( पा० सू० ८।३।२१ ) इत्यतः "पदे" इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद् ङमुड् नेत्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात् ॥

शब्दरत्न ।

शिष्ट्यमपि बोद्ध्यते इति तेन नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते;(१) तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथासति स्यान्न प्रागुक्तः, स्याच्चातिमह(२)दनिष्टमिति । स्पष्टं चेदं सर्वं भाष्ये ।

प्रत्ययलक्षणप्रतिषेधादिति । इदं च प्रकृतसूत्रे भाष्ये स्पष्टम् । अनुसर्त्तव्यत्वादिति ।

ज्योत्स्ना ।

नायमर्थः सिद्धान्तसम्मत इति ध्वन्यते। अन्यथा अनयैव भाष्यप्रदर्शितरीत्या सर्वेषामित्यादौ आम्वृत्तिपदान्तत्वस्य सुडागमे आरोपेण षत्वानापत्तिर्बोध्या। न चान्तत्वस्य चरमे वर्णे एव सम्भवेन समुदिते आमि पदान्तत्वस्य दुर्वचत्वेन कथं तदागमे सुडादौ पदान्तत्वारोप इति वाच्यम् । "अलोऽन्त्यस्य" इति सूत्रेऽलपदोपादानेन तत्सामर्थ्यात् अल्समुदायेऽपि तत्सम्भवादिति दिक् ॥

तर्हिह्रस्वात्परस्येति । अयम्भावः दीक्षितैः अचि इत्यस्य षष्ठ्यन्तत्वमाश्रित्य कुर्वन्नास्ति इत्यादौ पूर्वनकारस्य णत्ववारणायाश्रितस्य परादित्वस्योक्तरीत्यानावश्यकत्वाङ्गीकारे पूर्वोक्तस्य च ङम ।इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे परे इत्यर्थस्य ङमुडावृत्तिपदे इत्येतदनुवृत्तिक्लेशाभ्यां गौरवपराहतत्वोद्भावनेन च अनुवृत्तस्य पदस्य विशेष्यत्वाश्रयणेन प्राधान्यात् तथैव ह्रस्वादित्यस्यावधित्वेन ङम इत्यस्य विशेषणत्वेनान्वयाश्रयणात् ह्रस्वात्परस्य

प्र० ( १ ) अयं भावः, दीक्षितैः 'अचि' इत्यस्य षष्ठ्यन्तत्वमाश्रित्य कुर्वन्नास्ते इत्यादौ पूर्वनकारस्य णत्ववारणायाऽऽश्रितस्य परादित्वस्योक्तरीत्याऽनावश्यकत्वाङ्गीकारे, पूर्वोक्तस्य च "ङम" इत्यस्य षष्ठ्यन्तत्वमाश्रित्य "ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे" इत्यर्थस्य ङमपदाऽऽवृत्ति "पदे" इत्येतदनुवृत्तिक्लेशाभ्यां गौरवपराहतत्वोद्भावनेन च, अनुवृत्तस्य "पदस्य" इत्यस्य विशेष्यत्वाश्रयणेन प्राधान्यात् तत्रैव ह्रस्वादित्यस्याऽवधित्वेन, ङम इत्यस्य च विशेषणत्वेनाऽन्वयात् ह्रस्वात्परस्य ङमन्तपदस्याऽचि परे ङमुडित्येवार्थः प्रतिपन्नो भवति । तथा चाऽयं ङमुड् ङमन्तपदस्याऽऽद्यवयवीभूय अस्ति पराङ् आत्मा, अस्ति सुगण् ईश इत्यादावेव प्रवर्तेत, न तु केवलं प्रत्यङ् आत्मेत्यादौ, ङमं उत्तरं चेति महदनिष्टमिति ॥

वि० ( २ ) अस्ति "पराङात्मा' 'देवदत्त रामानिति वद' इत्यादौ अतिव्याप्तिः, कुर्वन्नास्ते सन्नच्युतः इत्यादावव्याप्तिः स्यादित्यर्थः । एवं च लक्ष्यानुरोधान्मूलोक्त एवार्थः कार्य इति भावः ।

"ङमः ङुटि" (पा० सू० ८।३।५)।। यद्यपि मोऽनुस्वारेण सिद्धं; तथा-

शब्दरत्न ।

यदि तु स निषेधो "अपग्रादिविधौ" इति पर्युदासेन पदान्तत्वनिमि(१)त्तके विधावे-वेति "न लुमता—" ( पा०सू०१।१।६३ ) इति सूत्रे भाष्ये स्पष्टम् । किं चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव मापकुम्भवापेनेत्यादौ "पदव्यवायेऽपि" ( पा०सू० ८।४।३८ ) इति निषेधसिद्धि(२)रित्युच्यते; तदा प्राचीनोक्तमजादेः पदस्येति व्याख्या-

ज्योत्स्ना ।

ङमन्तपदस्याचि परं ङमुडित्येवार्थः प्रतिपन्नो भवति । तथाचायं ङमुड् ङमन्तपदस्या-द्यावयवीभूय भवति । अस्ति पराङ् आत्मा, अस्ति सुगण् ईशः इत्यादावेव प्रवर्तते, न तु केवलं प्रत्यङ् आत्मेत्यादौ । ङम उत्तरं चेतिमहदनिष्टमिति ।

पदान्तत्वनिमित्तक इति । न तु पदान्तस्थानिके इत्यर्थः । अन्यथा परमबुधौ इत्यादौ भष्भावापत्तिः । एवं च नहि भष्भावविधाविव ङमुड्विधौ पदान्तत्वनिमित्तकत्व-मस्तीत्यभिप्रायः ।

निषेधसिद्धिरित्युच्यत इति । अन्ये तु—न च पूर्वदण्डिप्रिय इत्यादौ दण्डिनित्यादेर्न-

प्र० ( १ ) न तु पदान्तस्थानिके इत्यर्थः । अन्यथा परमबुधावित्यादौ भष्भावापत्तिः । एवं च न हि भष्भावविधाविव ङमुड्विधौ पदान्तत्वनिमित्तकत्वमस्तीत्यभिप्रायः।

प्र० ( २ ) न च पूर्वदण्डिप्रिय इत्यादौ दण्डिन् इत्यादेर्नलोपसिद्धये मध्यमत्वानाक्रान्तस्यै-वोत्तरपदस्य "उत्तरपदत्वे" इत्यनेन पदत्वप्रतिषेधात् माषकुम्भवापेनेत्यत्र च मध्यमत्वानाक्रान्तत्व-स्य कुम्भरूपोत्तरपदेऽभावेन उक्तनिषेधाप्रवृत्त्या तदर्थं कार्यित्वनिवेशो व्यर्थ इति वाच्यम् । परम-लोम्निशय इत्यादौ लोमन्शब्दस्य मध्यमत्वव्यावृत्तये यद्वृत्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टस्य मध्यमपदेन विवक्षितत्वात् । वै० च स्वघटकार्थवदव्यवहितपूर्वत्वं, स्वघटकार्थवदव्यवहितोत्तरत्वं स्वघटकत्वमिति सम्बन्धत्रयेण, तच्च वैशिष्ट्यं पूर्वदण्डिप्रिय इत्या-दावेकवृत्तिसत्त्वेन दण्ड्यादिशब्दे घटते । माषकुम्भवापेनेत्यादौ तु वृत्तिद्वयं वर्तते । तथा च माष आम् कुम्भ सु इत्येतद्वृत्तिग्रहणे कुम्भपदस्य तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वं नास्ति । माषकुम्भ ङस् वाप इत्येतद्वृत्तिग्रहणे तु तस्य तद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा न चिकीर्षितेति न तत्र परिष्कृतं मध्यमत्वमस्तीति तत्र वार्तिकेन निषेधप्राप्तिसत्त्वात्कार्यित्वनिवेश आवश्यकः।

नचैवमपि "अतद्धिते" इति वार्तिकप्रत्याख्यानाय "पदव्यवायेऽपि" इत्यत्र पदे व्यवाय इति सप्तमीसमास उक्तो भाष्ये । तथा च माषकुम्भवापेन, क्षीरपकुम्भेनेत्यादौ तृतीयासमाससप्तमीस-मासयोः फलैक्याय पदपदं पदत्वयोग्यप्रातिपदिकपरं वक्तव्यम् । अन्यथोभयत्र सुबुत्पत्तेः प्राक्स-मासे प्रथमोदाहरणे पदे परतो व्यवाथाभावात् , द्वितीये पदेन व्यवायाभावात्पक्षद्वये फलैक्याभा-वप्रसङ्गात् । एवं च माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य पदत्वयोग्यतासत्त्वाद्वार्तिकेन प्रत्ययलक्षणनि-षेधेऽपि क्षत्यभावेन तदर्थं कार्यित्वनिवेशो व्यर्थ इति वाच्यम् । अटधातोः कर्तरि क्विपि तेन सह

प्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम् ॥

"अत्रानुनासिकः" (पा० सू० ८।३।२) ॥ अयमधिकारो विधिर्वेति द्वैतम् । आद्ये ऽत्रग्रहणमनर्थकम् । अधिकारादेव रुप्रकरणलाभात् । तुशब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः, परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक इति । विधिपक्षे व्यर्थः । वाग्रहणं स्पष्टार्थम् । "अनुनासिकात्पर–" ( पा० सू० ८।३।४ ) इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विना ऽनुनासिकाभावपक्ष इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ ॥

---

शब्दरत्न ।

नमेव शरणम् । स्पष्टं चैवं व्याख्यानं प्रकृतसूत्रे "उञि च पदे" ( पा०सू०८।३।२१ ) इत्यत्र च भाष्ये । तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत् ।

त्रिसकारत्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम् । लक्ष्ये लक्षणस्येति न्यायात् । अत्र चेदमेव ज्ञापकं बोध्यम् ॥

अनर्थकमिति । इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोद्धव्यम् । स्पष्टार्थमिति। अनेन तु ग्रहणमधिकारपक्षेऽपि परस्य रुस्ततः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम् । विधिपक्षे ऽत्रग्रहणं तु एतद्रुप्रकरणे इत्यर्थलाभार्थम् । वस्तुतोऽत्राधिकारत्वमेवोचितम् । "मतुवसो रुः—" (पा०सू०८।३।१) इति सूत्रे कृतयोः "वन उपसंख्यानं" "विभाषा भवत्—" इत्यनयोरुदाहरणे भाष्ये ऽनुनासिकाद्यनुच्चारणात् । विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव । अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः । स्पष्टं चेदं वृत्ताविति तत्त्वम् ॥

ज्योत्स्ना ।

लोपसिद्धये मध्यमत्वानाक्रान्तत्वस्यैवोत्तरपदत्वस्य उत्तरपदत्वे इत्यनेन पदत्वप्रतिषेधात् माषकुम्भवापेनेत्यत्र च मध्यमत्वानाक्रान्तत्वस्य कुम्भरूपोत्तरपदेऽभावेन उक्तनिषेधाप्रवृत्त्या तदर्थं कार्यित्वनिवेशो व्यर्थ इति वाच्यम् । परमलोम्निशय इत्यादौ लोमन् शब्दस्य मध्यमत्वव्यावृत्तये यद्वृत्त्यारम्भकसुब्निमित्तिकापदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमत्वमित्यस्य विवक्षितत्वात् । वैशिष्ट्यं च स्वघटकार्थवदव्यवहितपूर्वत्वं स्वघटकार्थवदव्यवहितोत्तरत्वं स्वघटकत्वम् , एतत्त्रितयसम्बन्धेन । तच्च वैशिष्ट्यं पूर्वदण्डिप्रिय इत्यादौ एकवृत्तिसत्त्वेन दण्डयादिशब्दे घटते । माषकुम्भवापे-

---

परमशब्दस्य समासे सिद्धात्परमाट्शब्दादाचारक्विबन्तात् "क्तिच्क्तौ च संज्ञायाम्" इति क्तिचि परमाट्तिरित्यादौ ष्टुत्वाद्यप्रवृत्तये कार्यित्वनिवेशस्येष्यमाणत्वादिति दिक् ।

"अनुनासिकात्" (पा० सू० ८।३।४) ॥ ल्यब्लोपे पञ्चमीत्याह—अनुनासिकं विहायेति । एवं च संसर्गवद् विप्रयोगस्यापि विशेषावग(१)तिहेतुत्वादवत्साऽऽनीयतामित्यत्रेव सम्भावितानुनासिक्यगुणक एव उपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति ।

शब्दरत्न ।

ल्यब्लोपे इति । दिग्योगलक्षणा तु न, अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेति न्यासेन सिद्धौ "अनुनासिकात्पर—" (पा०सू०८।३।४) इत्यस्य वैयर्थ्यापत्तेरिति

ज्योत्स्ना ।

नेत्यादौ वृत्तिद्वयं वर्तते । तथाच माष आम् कुम्भ सु इत्येतद्वृत्तिग्रहणे तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वं नास्ति । माषकुम्भ-अस्-वाप सु-इत्येतद्वृत्तिग्रहणे तु तस्य तद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा न चिकीर्षितेति न परिष्कृतं मध्यमत्वमस्तीति तत्र वार्तिकेऽत्र निषेधप्राप्तिसत्वात् कार्यित्वनिवेश आवश्यकः ।

नचैवमपि "अतद्धित इति वाच्यम्" इति वार्तिकप्रत्याख्यानाय "पदव्यवायेऽपि" इत्यत्र पदे व्यवाय इतिसप्तमीसमास उक्तो भाष्ये । तथाच माषकुम्भवापेन क्षीरपकुम्भेनेत्यादौ तृतीयासमाससप्तमीसमासयोः फलैक्याय पदपदं पदत्वयोग्यप्रातिपदिकपरं वक्तव्यम् । अन्यथोभयत्र सुबुत्पत्तेः प्राक् समासे प्रथमोदाहरणे पदे परतो व्यवायाभावात्, द्वितीये पदेन व्यवायाभावात्, पक्षद्वये फलैक्याभावप्रसङ्गात् । एवं च माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य पदत्वयोग्यतासत्वात् वार्तिकेन प्रत्ययलक्षणनिषेधेऽपि क्षत्यभावेन तदर्थं कार्यित्वनिवेशस्यानावश्यकत्वादिति वाच्यम् । अटधातोः क्विपि तेन परमशब्दस्य समासे सिद्धात् परमाटशब्दात् आचारक्विबन्तात् "क्तिच्क्तौ च संज्ञायाम्" इति क्तिचि परमाट्तिरित्यादौ ष्टुत्वाद्यप्रवृत्तये कार्यित्वनिवेशस्यावश्यकत्वादित्याहुः ।

विशेषावगतिरिति । अर्थविशेषावगतिहेतवश्चैवं पठ्यन्ते—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ १ ॥
सामर्थ्यमौचितीदेशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ २ ॥

प्र० (१) अर्थविशेषावगतिहेतवश्चैवं पठ्यन्ते—
संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥२॥
अत्राऽनवच्छेदे इत्यस्य सन्देहे सतीत्यर्थः ।

भोभगोअघोऽपूर्वस्यासम्भवात्। अपूर्वस्तु यद्यपि सम्भवति वृक्षव् करोतिती। तथापि तत्र लोपाप्रसङ्गः।अशीत्यनुवर्त्यांशा हलो विशेषणात्। वृक्षव् हसतीत्यादि तु अनभिधानादसाध्वित्याहुः। गव्यमित्यत्र तु पदान्तत्वं नास्ति। गव्यूतिरित्यत्र तु वकारप्रश्लेषान्न वलोप इत्युक्तम्। ननु देवा नम्या इत्यादौ "लोपो व्योः–" (पा० सू० ६।१।७६) इत्येव सिद्धम्। मैवम्। तं प्रति यत्वस्यासिद्धत्वात्। देवा यान्तीत्यत्र वल्परत्वाभावाच्च। अहो रात्र इति। "रात्राह्नाहाः-" (पा० सू० २।४।२९) इति पुंस्त्वम्। अहरादीनामिति। उभयत्राप्यादिशब्दः प्रकारे। तेन "स्वर्चक्षो रथिनः सत्यशुष्मः"। "विप्रः कविः काव्येन स्वर्चनो" इत्यादि ग्राह्यम्।

तृढो वृढ इति। उदित्त्वेन वेट्कत्वात् "यस्य विभाषा" (पा० सू० ७।१।१५) इति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः।

यत्तु प्राचा प्रत्युदाहृतं दृढ इति तन्न। तत्र ढलोपस्यैवाभावात्। तथा हि—"दृढः स्थूलबलयोः" (पा०सू०७।२।२०) इति सूत्रेण दृंहेर्नकारहकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते। न त्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः "दादेर्धातोः–" (पा० सू० ८।२।३२) इति घत्वेन बाधात्। न च इडभावो ढत्वं च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्। तथा सति परिदृढय्येत्यत्र "ल्यपि लघुपूर्वात्" (पा० सू० ६।४।५६) इति णेरयादेशो न स्यात्। पारिदृढीकन्येत्यत्र "अणिञोः–" (पा० सू० ४।१।७८) इति ष्यङ् च स्यात्। ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादिति भाष्ये स्थितम्।

---

शब्दरत्न।

हलो विशेषणादिति। स्पष्टं भाष्ये। इत्याहुरिति। हरदत्तादयः। वकारलोपे ततस्तदर्थानवगतेरित्यर्थः। एवं च करोत्यादिपरेऽपि तत एव लोपे न भविष्यतीत्यशा हलो विशेषणं व्यर्थमिति सूचितम्। (१)भाष्यमपि तदेकदेश्युक्तिरेव। "न पदान्ताः परे ऽणः सन्ति" इति "लण्" सूत्रस्थभाष्यविरोधाच्च।

इडभावो ढत्वं चेति। चेन नलोपसङ्ग्रहः। ढलोप इति। "ढो ढे लोपः" (पा० सू० ८।३।१३) इत्येतद्दृष्ट्या ष्टुत्वं तु नासिद्धं सामर्थ्यादिति भावः। भाष्ये स्थितमिति। "दृढः स्थूल—" (पा०सू० ७।२।२०) इति सूत्रे शेषः।

---

वि० (१) वृक्षव् करोतीत्यत्र प्राप्तिप्रदर्शकभाष्यमपीत्यर्थः॥

यत्तु प्राचा व्याख्यातं दृंहेरेवेदं निपातनं, दृह वृद्धाविति तु प्रकृत्यन्तरम् । तस्य निष्ठायामागमशास्त्रस्यानित्यत्वादिडभावे "वा द्रुह–" ( पा० सू० ८।२।३३ ) इत्यत्र "वा" इति योगविभागात् पक्षे घत्वाभावे ढलोपे च प्रत्युदाहरणमिदं द्रष्टव्यमिति । तन्न । उभयोरपि निपातनाभ्युपगमात् । तदाह वामनः—'अथ दृहिः प्रकृत्यन्तरमस्ति तस्याप्येतन्निपातनं नलोपवर्जमिति । युक्तं चैतत् । अन्यथा हि अस्माद् णेरय् न स्यात्, ष्यङ् च स्यात्' ।

उत्वमेवेति । सिद्धासिद्धयोरतुल्यबलत्वेन "विप्रतिषेधे परम्–" ( पा० सू० १।४।२ ) इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तम्–" पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति । एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इत्यादि व्याख्यातम् ।

सूत्रे सु इति पृथक्पदं लुप्तषष्ठीकमित्याह–एतत्तदोर्यः सुरिति । एतत्तद-(१)र्थगतसंख्याभिधायी यः सुस्तस्येत्यर्थः । एतत्तदोर्विहित इति व्याख्याने तु

शब्दरत्न ।

द्रष्टव्यमितीति । ष्यङि णेरयाभावे चेष्टापत्तिरिति भावः । उभयोरपीति । त्वदवलम्बभूतेन वृत्तिकृतेति शेषः । तदाह—वामन इति । अत्रारुचिबीजं तु दृहेर्नकारहकारलोपार्थमिति भाष्यविरोधः । अनिदितो दृहेस्तु दृहितमित्येवेष्यत इति कैयटविरोधश्चेति । किं च प्रसादोक्तरीत्या दृहेरपि इडभावढत्वयोः सिद्धाविण्निषेधप्रकरणे दृढ इति

ज्योत्स्ना ।

एतत्तदर्थगतसंख्याभिधायीति । अत्र हि "एतत्तदोः" इति षष्ठीप्रकृत्यर्थस्य

प्र० ( १ ) अत्र हि एतत्तदोरिति षष्ठीप्रकृत्यर्थस्य सुपदार्थेन सह सम्बन्धो वाच्यः । स च नानन्तरत्वरूपः सम्भवति तस्य षष्ठ्यर्थत्वाभावात् । नाप्यनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धः षष्ठ्यर्थ इति वाच्यम् । तथा सति ब्राह्मणः स इति ब्राह्मणपदोत्तरसुप्रत्ययस्यापि तच्छब्दानन्तरितत्वाल्लोपापत्तेः । नापि परशब्दमध्याहृत्य तन्निरूपितसम्बन्धः षष्ठ्यर्थ इति वाच्यम् । परशब्दयोगे पञ्चम्या एव न्याय्यत्वेन पञ्चम्यर्थे षष्ठ्या लक्षणाप्रसङ्गात् । विभक्तौ लक्षणाश्रयणस्य निषिद्धत्वात् । न च पञ्चम्यर्थे षष्ठीविधानं 'छन्दसि दृष्टानुविधिः'इति न्यायात् सूत्राणां छन्दोरूपत्वादिति वाच्यम् । एवमपि स ब्राह्मणः इत्यत्र ब्राह्मणपदोत्तरस्यापि सोर्लोपप्रसङ्गात् । तस्यापि तच्छब्दापेक्षया परत्वात् । नच परशब्देनाव्यवहितपरत्वस्य ग्रहणान्नोक्तदोष इति वाच्यम् । एवमपि वासुदेववाचके अशब्दे परतः सः अः इत्यवस्थायां रुत्वे उत्वे, पूर्वरूपे च सोऽः इति जायते, तत्रापि पूर्वान्तवद्भावेन तच्छब्दत्वात्तदव्यवहितोत्तरत्वस्य सुप्रत्यये सत्त्वेन चापत्तितादवस्थ्यात् । एतेनानन्तरपदाध्याहारपक्षेऽपि एतच्छब्दसाहचर्येण तच्छब्दादपि परानन्तरस्यैव सोर्लोपेन ब्राह्मणः स इत्यादावदोषात्स पक्षो युक्त इत्यपास्तम् । एतत्सर्वं मनसि कृत्याह—एतत्तदर्थगतसंख्याभिधायीति । नन्वेवमपि

परमस्तु ददाति परमैष ददातीत्यादौ न स्यात्। अर्थद्वारकसम्बन्धाश्रयणे लिङ्गं

शब्दरत्न ।

निपातनस्य व्यर्थत्वमित्य(१)लम् ।

अभावादुत्तरस्येति । आहार्याभावारोपादित्यर्थः ।

लिङ्गमिति । विहितविशेषणे तद्वैयर्थ्यं स्पष्टमेवेति भावः ।

ज्योत्स्ना ।

सुपदार्थेन सह सम्बन्धो वाच्यः । स च नानन्तरत्वरूपः सम्भवति, तस्य षष्ठ्यर्थत्वाभावात् । नाप्यनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धः षष्ठ्यर्थ इति वाच्यम् । तथा सति ब्राह्मणः स इति ब्राह्मणपदोत्तरसुप्रत्ययस्यापि तच्छब्दानन्तरितत्वात्सुलोपापत्तेः । नापि परशब्दमध्याहृत्य तन्निरूपितसम्बन्धः षष्ठ्यर्थ इति वाच्यम् । परशब्दयोगे पञ्चम्या एव न्याय्यत्वेन पञ्चम्यर्थे षष्ठ्या लक्षणाप्रसङ्गात् । विभक्तौ लक्षणाश्रयणस्य निषिद्धत्वात् । न च पञ्चम्यर्थे षष्ठीविधानं "छन्दसि दृष्टानुविधिः" इति न्यायात् सूत्राणां छन्दोरूपत्वादिति वाच्यम् । एवमपि स ब्राह्मण इत्यादौ ब्राह्मणपदोत्तरस्यापि सोर्लोपप्रसङ्गात् । तस्यापि तच्छब्दापेक्षया परत्वात् । न च तच्छब्देनाव्यवहितपरत्वस्य ग्रहणान्नोक्तदोष इति वाच्यम् । एवमपि वासुदेववाचके अशब्दे परतः सः अः इत्यवस्थायाम् एत्वे उत्वे पूर्वरूपे च सोः इति जायते तस्यापि पूर्वान्तवद्भावेन तच्छब्दत्वात् । तदव्यवहितोत्तरत्वस्य सुप्रत्यये सत्त्वेन चापत्तितादवस्थ्यात् । एतेनानन्तरपदाध्याहारपक्षेऽपि एतच्छब्दसाहचर्येण तच्छब्दादपि परान्तरस्यैव सोर्लोपेन ब्राह्मणः स इत्यादौ अदोषात्सपक्षो युक्त इत्यपास्तम् । एतत्सर्वंमनसि कृत्याह—एतत्तदर्थगतसंख्याभिधायीति ।

---

सः अः इत्युक्तलक्ष्ये अपदार्थतत्पदार्थयोरभेदेनैवान्वयात् अपदोत्तरसुप्रत्ययस्यापि तत्पदार्थगतसंख्याभिधायित्वेन लोपापत्तिरिति वाच्यम् । एतत्तदर्थगतेत्यादिना एतत्तदर्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजको यः सुरित्यर्थस्य विवक्षितत्वात् । प्रकृते च अपदार्थतावच्छेदकं वासुदेवत्वं, तदवच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेव अपदोत्तरसोः, नतु तत्पदार्थतावच्छेदकबुद्धिविशेषविषयत्वावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमस्तीति न दोषः । न चैवमपि तत्पदात् "ईषदसमाप्तौ—" ( पा० सू० ५।३।६७ ) इत्यनेन कल्पप्प्रत्यये तत्कल्पमित्यादौ लोपापत्तिरिति वाच्यम् । एतत्तच्छब्दविशिष्टस्य सुप्रत्ययस्य लोप इत्यर्थविवक्षणात् । वैशिष्ट्यं च स्वार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं स्वाव्यवहितोत्तरत्वमित्युभयसम्बन्धेनेत्युक्त्याऽदोषात् ।

वि० ( १ ) योगविभागस्यागमशास्त्रानित्यत्वस्य चाप्रमाणत्वम् । सर्वालम्बनभूतदृढस्थूलेतिभाष्यविरोधश्चेत्यस्यार्थः ॥

तु "अनङ्समासे" इति बोद्धव्यम् । अकोः किमिति । साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः। एषक इति । "अकोः" इति प्रतिषेध एव "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति परिभाषां ज्ञापयतीति भावः ।

बहुलग्रहणेति । अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति । सास्मा अरम् । सः अस्मै इति च्छेदः ॥

इति स्वादिसन्धिः ॥

इति पञ्चसन्धिप्रकरणम् ॥

---

शब्दरत्न ।

सास्मा अरमिति । सोस्मा अरमिति सन्धावपि पादपूर्तेः । न च "प्रकृत्यान्तः पादम्—" ( पा० सू० ६।१।११५ ) इति पूर्वरूपस्याभावेन न पादपूर्त्तिः । "सोऽयमागात्" इत्यादाविवात्रापि प्रातिशाख्येन सिद्धेः । एवञ्चावधारणपरतया न व्याख्येयम् । "सोऽहमाजन्म—" इत्यादौ बहुलग्रहणेन क्वचिदप्रवृत्त्याऽपि सिद्धेरिति तात्पर्यम् ॥

इति भट्टोजिदीक्षितपौत्रहरिदीक्षितकृते मनोरमाव्याख्याने लघुशब्दरत्ने पञ्चसन्धिप्रकरणम् ॥

---

ज्योत्स्ना ।

नचैवमपि सः अः इत्युक्तलक्ष्ये अपदार्थतत्पदार्थयोरभेदेनैवान्वयात्, अपदोत्तरसुप्रत्ययस्यापि तत्पदार्थगतसंख्याभिधायित्वेन लोपापत्तिरिति वाच्यम् । एतत्तदर्थगतेत्यादिना एतत्तदर्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजको यः सुः इत्यर्थस्य विवक्षितत्वात् प्रकृते च अपदार्थतावच्छेदकं वासुदेवत्वं तदवच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेव अपदोत्तरसोः न तु तत्पदार्थतावच्छेदकबुद्धिविशेषविषयत्वावच्छिन्नधर्मितानिरूपितसंख्यानिष्टप्रकारताप्रयोजकत्वमस्तीति न दोषः । नचैवमपि तत्पदात् "ईषदसमाप्तौ" इति कल्पबप्रत्यये तत्कल्पमित्यादौ लोपापत्तिरिति वाच्यम् । एतच्छब्दविशिष्टस्य सुप्रत्ययस्य लोप इत्यस्य विवक्षणात् । वैशिष्ट्यं च स्वार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं स्वाव्यवहितोत्तरत्वमित्युभयसंबन्धेनेत्यदोषात् ॥

इति स्वादिसन्धिप्रकरणम् ।

# ॥ अथाजन्तपुँल्लिङ्गप्रकरणम् ॥

"अर्थवदधातुः" ॥ प्रत्ययं प्रत्ययान्तं चेति । सूत्रे(१) तन्त्रादिना उभयं

ज्योत्स्ना ।

"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" । अस्यार्थः—नञर्थो भेदः सम्भवात्, भेदस्य च भेदाश्रये लक्षणा । एवञ्च अर्थवता पदेन सह सामानाधिकरण्यस्याधातु इति पदस्य स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन भेदेऽन्वयः । एवमप्रत्यय इत्यादेरपि बोध्यम् । भेदस्यापि स्वरूपसम्बन्धेनाश्रयेऽन्वयः, आश्रयस्य चाभेदसम्बन्धेनार्थवत्यन्वयः । अर्थवतश्चाभेदसम्बन्धेन शब्दस्वरूपेऽन्वयः। शब्दरूपस्य च स्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्वसम्बन्धेन प्रातिपदिकेऽन्वयः । प्रातिपदिकस्य चाभेदसम्बन्धेन तिबर्थकर्तरि अन्वयः । तिबर्थकर्तुश्च निरूपितत्वसम्बन्धेन सत्तायामन्वयः । एवञ्च स्वनिष्ठप्रतियोगिताकत्वसम्बन्धावच्छिन्नधातुत्वावच्छिन्न तथा स्वनिष्ठप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रत्ययप्रत्ययान्तत्वावच्छिन्नप्रकारतानिरूपिताभेदत्वावच्छिन्ना विशेष्यता तत्समानाधिकरणस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिताश्रयत्वावच्छिन्नविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितार्थवत्वाच्छिन्नविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितशब्दस्वरूपत्वावच्छिन्ना विशेष्यतासमानाधिकरणस्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रातिपदिकत्वावच्छिन्नविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नतिबर्थकर्तृत्वावच्छिन्नाविशेष्यतासमानाधिकरणनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसत्तात्वावच्छिन्नविशेष्यताको बोधः ।

ननु—तावदर्थवत्सूत्रस्य शाब्दबोध एव न भवितुमर्हति। प्रतियोग्यवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वनियम इति व्युत्पत्तेः । अत एव घटो न द्रव्यमिति प्रयोगस्य न साधुत्वम् । अन्यथानुयोगितावच्छेदकस्य द्रव्यत्वस्य प्रतियोगिनि घटे सत्वेऽपि तादृशप्रयोगस्य वारयितुमशक्यत्वात् । एवं प्रकृतेऽपि अनुयोगितावच्छेदकस्यार्थवत्वस्य प्रतियोगिनि धात्वादौ सत्वेन प्रतियोग्यवृत्तित्वाभावस्य वक्तुमशक्यत्वेन व्युत्पत्तिविरोधाच्छाब्दबोधो न स्यात् । न चास्यां व्युत्पत्तौ किं मानमिति वाच्यम् । भेदीयानुयोगितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रतियोगिवृत्तित्वाभावप्रकारकनिश्चयत्वेन करणतेति कार्यकारणभावस्य सर्वत्र घटो न पट इत्यादौ अनुभवसिद्धत्वेन प्रमाणत्वस्य सुस्पष्टत्वादिति चेन्न। 'अघटं द्रव्यमानय' 'असैथिलं ब्राह्मणं भोजय' इत्यादिलक्ष्यसाधुत्वार्थमसति प्रतिबन्धके उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते' इति व्युत्पत्तेरवश्याङ्गीकृतत्वेनानयैव घटो न द्रव्यमित्यस्यापि वारणसम्भवे उक्तकार्यका-

वि० (१) यत्र सकृदुच्चरितः शब्दोऽनेकार्थपरस्तत्र तन्त्रेति व्यवहारः ।

ज्योत्स्ना ।

रणभावस्य तन्मूलिकायाः व्युत्पत्तेश्च निष्फलत्वात् । त्वन्मते भेदीयानुयोगितावच्छेदकस्य द्रव्यत्वस्य ब्राह्मणत्वस्य च प्रतियोगिनि घटे मैथिलेऽपि च विद्यमानत्वेन तद्वृत्तित्वाभावस्य च तत्र वक्तुमशक्यत्वेन तादृशलक्ष्याणामप्रसिद्धेः । मम तु घटभेदसामानाधिकरणद्रव्यत्वस्य मैथिलभेदसमानाधिकरणब्राह्मणत्वस्य च उद्देश्यतावच्छेदकत्वेन तद्व्यापकत्वम् । "अर्थवद्धातुरप्रत्ययः प्रातिपदिकम्" इति सूत्रे धातुपदार्थस्य प्रतियोगित्वसम्बन्धेन भेदपदार्थेऽन्वयः । भेदस्य च स्वरूपसम्बन्धेन आश्रयेऽन्वयः । आश्रयस्य चाभेदसम्बन्धेनार्थवत्पदार्थेऽन्वयः । एवं प्रत्ययपदार्थस्य प्रतियोगित्वसम्बन्धेन भेदपदार्थेऽन्वयः । तस्य च स्वरूपसम्बन्धेनाश्रये, आश्रयस्याभेदसम्बन्धेन अर्थवति । एवं प्रत्ययान्तपदार्थस्यापि कल्प्यम् । अर्थवत्पदार्थस्याध्याहृतशब्दस्वरूपपदार्थेऽभेदसम्बन्धेनान्वयः । तस्य चाभेदसम्बन्धेन प्रातिपदिकपदार्थेऽन्वयः । प्रातिपदिकपदार्थस्याभेदेन तिवर्थआश्रयेऽन्वयः । आश्रयस्याचाधेयत्वसम्बन्धेन सत्तायामन्वयः । एवञ्च धातुत्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता याभेदत्वाववच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता या आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्न अभेद सम्बन्धावच्छिन्नप्रकारतानिरूपिता याऽर्थवत्त्वावच्छिन्नाविशेष्यता तादृशविशेष्यत्वावच्छिन्नअभेदसंसर्गावच्छिन्नप्रकारतानिरूपिता या शब्दस्वरूपत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नअभेदसंसर्गावच्छिन्नप्रकारता निरूपिता प्रातिपदिकत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपिता या तिवर्थआश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नआधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या सत्तात्वावच्छिन्ना विशेष्यतातादृशविशेष्यताश्रया सत्तेति बोधः । एवम्प्रत्ययप्रत्ययान्तयोर्विषयेऽप्यूह्यम् ।

अधातुरित्यत्र नञर्थो भेदस्तस्य चार्थवत्पदेन सामानाधिकरण्यस्य वाधितत्वात् भेदवति लक्षणा । ततश्च धातुपदार्थस्य स्ववृत्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदवद्घटके भेदेऽन्वयः । भेदस्य स्वरूपसम्बन्धेनाश्रयेऽन्वयः । आश्रयस्याभेदेनार्थवति अन्वयः । ततश्च धातुत्वावच्छिन्नप्रतियोगिताकभेदभिन्नं यदर्थवत् तत्प्रातिपदिकसंज्ञं भवतीत्यर्थः । ततश्च धातुनेत्याकारकभेदस्य धातावभावेऽपि धातुघट इत्युभयं नेत्याकारकभेदस्य धातावपि सत्वेन तादृशभेदस्यापि प्रतियोगिताकत्वेन ग्राह्यतया धातावतिव्याप्तिः। न च धातुत्वेतरधर्मानवच्छिन्नप्रतियोगिताकभेदस्य विवक्षया उभयभेदीयप्रतियोगिताया धातुत्वेतरघटत्वावच्छिन्नत्वेन धातुत्वेतरधर्मानवच्छिन्नत्वाभावात् । उभयभेदमादाय दोषवारणेऽपि धातुत्वेतरधर्मानवच्छिन्नप्रतियोगितेत्यस्य धातुत्वेतरधर्मानवच्छिन्नत्वाभाववती या प्रतियोगिता इत्यर्थेन उभयभेदेऽपि प्रतियोगितायां

ज्योत्स्ना ।

धातुत्वेतरघटत्वरूपधर्मावच्छिन्नत्वसत्त्वेऽपि धातुत्वेतरधर्मावच्छिन्नघट एतदुभयाभावस्य सत्त्वेन तादृशप्रतियोगितायां धातुत्वेतरधर्मावच्छिन्नत्वाभाववत्त्वस्य सत्त्वेनोभयभेदमादाय धातावतिव्याप्तिस्तदवस्थैव ।

किञ्च—धातुत्वेतरधर्मावच्छिन्नप्रतियोगिताकभेदस्यैवाप्रसिद्धिः । न च नेत्याकारकभेदस्यैव प्रसिद्धिः, धातुत्वेतरधर्मेत्यस्य धातुत्वावच्छिन्नप्रतियोगिताकभेदवदभिन्नधर्मेत्यर्थेन धातुत्वन्नधातुत्वमित्याकारकभेदस्य धातुत्वे सत्त्वेऽपि धातुत्वघट एतदुभयन्नेत्याकारकभेदस्य धातुत्वेऽपि सत्त्वेन तस्यापि धातुत्ववच्छिन्नप्रतियोगितया ग्राह्यत्वेन धातुत्वेतरधर्मौ धातुत्वरूप एवेति धातुर्नेत्याकारकभेदस्यापि धातुत्वेतरधर्मावच्छिन्नत्वादिति चेदत्रोच्यते । धातुपर्याप्तावच्छेदकतानिरूपकप्रतियोगितानिरूपको भेदो विवक्षितः । ततश्च धातुघटोभयन्नेत्याकारकभेदेऽपि प्रतियोगितावच्छेदकताया धातुत्वघटत्वद्वित्वएतत्त्रितयपर्याप्तत्वेन धातुत्वपर्याप्तत्वाभावात् । तादृशोभयभेदस्य ग्रहीतुमशक्यतया उभयभेदमादाय न दोषः । न च प्रत्येकमपर्याप्तस्य समुदाये पर्याप्तत्वनियमात्त्रितयपर्याप्ताया अप्यवच्छेदकतायाः प्रत्येकं पर्याप्तिसत्त्वेन पुनरप्युभयभेदमादाय दोषस्तदवस्थ एवेति वाच्यम् । धातुत्वविशिष्टा या प्रतियोगिता तादृशप्रतियोगितानिरूपकभेदस्य विवक्षितत्वेन पूर्वोक्तदोषाभावात् । वैशिष्ट्यं च स्वव्याप्यत्व स्वावच्छिन्नत्व एतदुभयसम्बन्धेन । ततश्च उभयभेदीयप्रतियोगितायां धातुत्वावच्छिन्नसत्त्वेऽपि प्रतियोगितायाः धातुघट एतदुभयवृत्तित्वेन धातुत्वाभाववत् घटवृत्तित्वेन स्वाभाववद्वृत्तित्वाभावरूपव्याप्यत्वस्याभावेन स्वव्याप्यत्वरूपसम्बन्धेन वैशिष्ट्याभावान्न दोषः । न च स्वव्याप्यत्वस्य स्वाभाववन्निरूपितवृत्तित्वाभावरूपत्वेन स्वाभाववद्वृत्तित्वघट एतदुभयाभावस्य उभयभेदीयप्रतियोगितायां सत्त्वेन तादृशप्रतियोगितायां स्वव्याप्यत्वसत्त्वादिति वाच्यम् । घटत्वेन धातुर्नेत्याकारकभेदस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य धातावबाधितत्वेन तादृशभेदमादाय अतिव्याप्तिवारणाय स्वावच्छिन्नत्वरूपसम्बन्धनिवेशः, तादृशसम्बन्धनिवेशे तु घटत्वेन धातुर्नेत्याकारकभेदस्य प्रतियोगितायां स्वव्याप्यत्वसत्त्वेऽपि स्वावच्छिन्नत्वरूपसम्बन्धविरहान्न दोषः । न च स्वव्याप्यत्वस्य स्वाभाववद्वृत्तित्वाभावरूपत्वेन उभयभेदीयप्रतियोगितायां स्वाभाववद्वृत्तित्वसत्त्वेऽपि स्वाभाववद्वृत्तित्वघट एतदुभयाभावस्य सत्त्वेन तादृशप्रतियोगितायां स्वव्याप्यत्वरूपसम्बन्धस्यापि सत्त्वेन पुनरपि धातावतिव्याप्तिरिति वाच्यम् । धातुत्ववत्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपकप्रतियोगितानिरूपकभेदवतोऽधातुपदेन विवक्षितत्वात् । प्रतियोगितानिरूपकत्वेन तादृशभेदस्याग्राह्यतया धातुर्नेत्याकारकभेदीयप्रतियोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतायाः धातुत्ववृत्तित्वावच्छिन्नत्वेन एकत्वावच्छिन्ना या अनु-

ज्योत्स्ना

योगिता तादृशानुयोगितानिरूपिता उभयभेदीयप्रतियोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकता या धातुत्वघटत्वद्वित्ववृत्तिद्वित्वावच्छिन्नत्वेन द्वित्वावच्छिन्ना या अनुयोगिता तादृशानुयोगितानिरूपिका या पर्य्याप्तिः तादृशपर्याप्तिप्रतियोगिभूता या अवच्छेदकता तादृशावच्छेदकता निरूपिका या प्रतियोगिता तादृशप्रतियोगितानिरूपिता या पर्य्याप्तिः तादृशपर्य्याप्तिप्रतिभूता या अवच्छेदकता तादृशावच्छेदकतानिरूपिता या प्रतियोगिता तादृशप्रतियोगितानिरूपकत्वेन तादृशभेदस्य ग्राह्यत्वेऽपि तादृशभेदस्य धातावसत्वेन धातौ नास्त्यव्याप्तिः। एवञ्च उभयभेदीयप्रतियोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकता या धातुत्वघटत्वद्वित्वएतत्त्रितयवृत्तित्वेन धातुगतैकत्वावच्छिन्नस्य घटपदानुयोगितायामभावेन धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिभूतावच्छेदकता निरूपकप्रतियोगितानिरूपकभेदस्य च धातावसत्वेन न दोषः। नचैवमपि धातुत्वेन घटो नेत्याकारकभेदस्य धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकप्रतियोगिभूतावच्छेदकताकप्रतियोगिताकत्वेन तादृशभेदमादायाव्याप्तिस्तदवस्थैवेति वाच्यम्। धातुत्वविशिष्टा या प्रतियोगिता तादृशप्रतियोगितानिरूपकभेदस्य विवक्षणेनादोषात्। वैशिष्ट्यञ्च धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपकत्व स्वाधिकरणवृत्तित्व एतदुभयसम्बन्धेन। एवञ्च धातुत्वेन घटो नेत्याकारकभेदीयप्रतियोगितायां पूर्वसम्बन्धस्य सत्वेऽपि स्वाधिकरणवृत्तित्वरूपद्वितीयसम्बन्धाभावान्न दोषः। नचैवमपि धातुत्वेन धातुघटोभयन्नेत्याकारकभेदीयप्रतियोगितायाः उभयसम्बन्धेन धातुत्ववैशिष्ट्यसत्वात्तादृशभेदमादाय पुनरप्यतिव्याप्तिः। एतेन धातुत्वमात्रपर्याप्तावच्छेदकताकप्रतियोगिताकनिरूपितधातुनिष्ठभेदस्य धातुत्वपर्याप्तावच्छेदकताकप्रतियोगिताकत्वे सति धातुपर्याप्तप्रतियोगिताकभेदस्य विवक्षणेन न दोष इत्यपास्तम्। धातुत्वेन तद्धातुर्नेत्याकारकभेदमादायातिव्याप्तेः सुस्थत्वादिति। नचैवमपि धातुत्वेन धातुघटोभयन्नेत्याकारकभेदीयप्रतियोगितायाम् उक्तोभयसम्बन्धेन धातुत्ववैशिष्ट्यसत्वात् तादृशभेदमादाय पुनरप्यतिव्याप्तिरिति वाच्यम्। स्वपर्य्याप्तावच्छेदकताकप्रतियोगितानिरूपकत्व स्वाश्रयमात्रपर्याप्तप्रतियोगितानिरूपकत्व एतदुभयसम्बन्धेन धातुत्ववैशिष्ट्यस्य भेदे विवक्षितत्वेन प्रकृते स्वपर्याप्तावच्छेदकप्रतियोगितानिरूपकत्वसम्बन्धेन वैशिष्ट्याभावेनात्रातिव्याप्तेरभावात्।

ननु तथापि धातुत्वेन तद्धातुर्नेत्याकारकभेदे धातुत्ववैशिष्ट्यस्योभयसम्बन्धेन सत्वात्, तथाचातिव्याप्तिर्दुर्वारैवेति चेन्न। स्वपर्याप्तावच्छेदकतानिरूपकत्व स्वपर्याप्तावच्छेदकतानिरूपकानुयोगितानिरूपकपर्याप्तिप्रतियोगिताश्रयत्व एतदुभयसम्बन्धेन धातुवैशिष्ट्यस्य प्रतियोगितायां विवक्षितत्वेन धातुत्वेन तद्धातुर्ने-

विवक्षितमिति भावः। तथा हि प्रत्ययस्यैव पर्युदासे "कृत्तद्धित–" (पा०सू० १।२।४६) इति सूत्रेण तद्धितान्तस्य संज्ञाविधानं व्यर्थं स्यात्। न च तत्रापि तदन्तं न ग्राह्यमिति वाच्यम्। "अर्थवत्" इत्यनुवृत्तिसामर्थ्यात्तदन्तग्रहणात्। प्रशंसायां हि मतुप्। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वं च प्रशंसामूलम्। न च

शब्दरत्न।

व्यर्थं स्यादिति। न चास्यापत्यमिरित्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनेन तच्चरितार्थम्। अ अस् इ इत्यवस्थायां प्रवृत्तसंज्ञाया एकदेशविकृ(१)तन्यायेन सुलभत्वात्। एकार्थीभावेनेति। न चैतत्प्रत्ययमात्रस्य, तन्मात्रे(२) एकार्थीभावाभावादिति भावः। ए-

ज्योत्स्ना।

त्याकारकभेदीयप्रतियोगिताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकतायाः धातुत्वे एतदुभयपर्याप्तत्वेन धातुत्वपर्याप्तावच्छेदकतानिरूपकानुयोगितानिरूपकपर्याप्तिप्रतियोगिताकत्वस्य तादृशप्रतियोगितायामभावेन तादृशभेदस्याग्राह्यतया धातुर्नेत्याकारकभेदीयप्रतियोगिताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकतायाः धातुत्वपर्याप्तत्वेन धातुत्वपर्याप्तावच्छेदकतानिरूपकानुयोगितानिरूपकपर्याप्तिप्रतियोगिताश्रयत्वस्य तादृशभेदीयप्रतियोगितायां सत्वेऽपि तादृशभेदस्य धातौ सत्वेनातिव्याप्तेरभावादिति दिक्।

तन्त्रादिनेति। तन्त्रैकशेषान्यतरेणेत्यर्थः। उभयं विवक्षितमिति। आवृत्त्या अप्रत्ययपदं प्रत्ययबोधविषयत्वेन प्रत्ययान्ततदादिभिन्नं प्रत्ययभिन्नञ्चेत्युभयं विवक्षितमित्यर्थः। अत्र। प्रमाणमाह—तथाहीत्यादिना। तद्धितान्तस्येति। तद्धितान्ततदादेरित्यर्थः। कृतग्रहणे लिट् धुक् इत्यादौ धातुइति पर्युदासे प्राप्ते संज्ञार्थं चरितार्थमिति भवति। तत्रापीति। "कृत्तद्धित" इति सूत्रे तद्धितपदेऽपि इत्यर्थः। तदन्तग्रहणादिति। तद्धितान्ततदादिग्रहणमित्यर्थः। प्रशंसायां मतुबिति। तादृशप्रशस्तार्थवत्वं केवलतद्धितस्यैव सम्भवतीति भावः।

एकदेशविकृतन्यायेनेति। आनुमानिकस्थान्यादेशभावेनेत्यर्थः। अर्धाधिकविकारसत्वेन तन्न्यायस्येहाप्रवृत्तेः।

एकार्थीभाव इति। तत्वञ्च यत्किञ्चिच्छक्तिविशिष्टत्वम् वै०स्वपर्य्याप्त्यधिकरणघटितत्वं स्वनिरूपकेतरनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं स्वग्रहप्रयोज्यग्रहविषयीभूतशक्तिपर्य्याप्त्यधिकरणत्वम् एतत्त्रितयसम्बन्धेन। यथा राजपुरुष इत्यादौ राजत्वावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणराजपदघटितत्वं राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकेतरपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं राजत्वावच्छि-

प्र० (१) आनुमानिकस्थान्यादेशभावेनेत्यर्थः। अर्धाधिकविकारेण तन्न्यायस्येहाप्रवृत्तेः।
वि० (२) अर्थवद् द्वितीयाभावादिति शेषः।

"अर्थवत्" इत्यस्य पूर्वसूत्रे चरितार्थता। धातुप्रत्ययपर्युदासेनैव तल्लाभात्। तस्मात्प्रत्ययान्तं च वर्जयित्वेत्युचितमेव। यदि तु प्रत्ययो न पर्युदस्येत; तर्हि "सात्पदाद्योः" ( पा० सू० ८।३।१११ ) इति सूत्रे सातिग्रहणं व्यर्थं स्यात्। "अर्थवत्" इति किम्। धनं, वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत्। तस्यां च सत्यां स्वादयः स्युः।

## शब्दरत्न।

कार्थीभावश्च यस्य प्रातिपदिकसंज्ञा चिकीर्षिता तन्मात्रवृत्तिरेव ग्राह्यः। तेन पञ्चनावप्रिय इति समासघटकपञ्चनावेत्यस्य तद्धितान्तत्वसमासत्वयोरपि न प्रातिपदिकत्वम्। प्रियशब्दान्त(१) एव तत्रैकार्थीभावो न तु तन्मात्र इत्यदोषात्। न च क्विबन्ते दोषः। तत्र धातोरेव विशिष्टार्थबोधकत्वेन अर्थवद्द्वितीयाभावेन पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभावाभावादिति वाच्यम्। अलौकिके वाक्ये कल्पितैकार्थीभावस्य तत्राप्यारोपेणा(२)दोषात्। व्यर्थं स्यादिति। अनेन प्रत्ययपर्युदासे मानमुक्तम्। सातेः प्रातिपदिकत्वे हि तत औत्सर्गिकैकवचने तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसिद्धेस्तद् व्यर्थमिति भावः।

## ज्योत्स्ना।

त्रनिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वञ्च वर्तत इति लक्षणसमन्वयः।

न प्रातिपदिकत्वमिति। न च पञ्चनावेत्यस्य प्रातिपदिकसंज्ञायामपि टाप्ङीपौ न प्राप्नुतः, उत्तरपदपरकत्वं निमित्तीकृत्य जायमानायास्तत्पुरुषसंज्ञायाः तदविघातकत्वादिति वाच्यम्। तद्धितार्थोत्तरपदेतिसंज्ञाशास्त्रत्वेन साध्वनुशासनत्वादभ्यनुज्ञावाच्याभावेन तत्र स्वोपजीव्यविघातकातिरिक्तत्वेन सङ्कोचकसन्निपातपरिभाषाया अप्रवृत्तेः।

अर्थवद्द्वितीयाभावेनेति। तथाच स्वपर्याप्त्यधिकरणघटितत्व स्वेतरशक्तिपर्याप्त्यधिकरणघटितत्व स्वग्रहप्रयोज्यशक्तिग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्व एतत्त्रितयसम्बन्धेन शक्तिविशिष्टरूपएकार्थीभावस्याभावादिति भावः। तदेतदाह—पृथगर्थ इत्यादिना। प्रत्ययान्ततदादिपर्युदासे प्रमाणमुक्त्वा प्रत्ययपर्युदासे प्रमाणमाह–यदि त्वित्यादि।

मा भूदिति। न च वृक्षप्रचलनन्यायेन विशिष्टस्यैव प्रातिपदिकसञ्ज्ञा स्यान्नतु प्रत्येक-

---

वि० ( १ ) तत्र पञ्चनावप्रिय इत्यादौ अयं प्रियशब्दान्तनिष्ठैकार्थीभाव एवोत्तरपदनिमित्तकद्विगुप्रयोजको, न तु नौशब्दान्ते अन्यस्यैकार्थीभावस्य स्वीकारः। वृत्तिधर्माणामेकार्थीभावफलानां प्रियशब्दान्तनिष्ठेन तेनैवोपपत्तेरिति भावः।

वि० ( २ ) वास्तविकस्य विशिष्टार्थबोधकत्वस्य तत्राभावेन प्रातिपदिकत्वाभावापत्तिरूपदोषाभावादित्यर्थः।

ननु संख्याकर्मादेरभवात् न भविष्यन्तीति चेन्न । 'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात् । हुंफडादिभ्य इव सोर्दुर्वारत्वात् । न च अर्थवद्ग्रहणपरिभाषा ऽनर्थके न स्यादिति वाच्यम् । तस्या विशिष्टरूपोपादानविषय-

शब्दरत्न ।

सोर्दुर्वारत्वादिति । तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक् । समुदायसंज्ञा चान्तरङ्गत्वादवयवेभ्यः प्रातिपदिकत्वात्सुपि च सति प्रवर्तते इति तस्य तदवयवत्वमक्षतम् । पचति, ध्वनतीत्यादौ नावयवानां सा । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तन्निषेधात् । तस्मादव्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्तिरापाद्या । धनशब्दस्य धिनोतेर्धनमिति व्युत्पत्तिपक्षे तु वनाद्युदाहरणं बोद्धव्यम् । ध्वनितं चेदं भाष्यकैयटयोः । तस्मान्नलोपाद्यापत्तिर्दोषः । इदमव्ययेभ्य इव तेभ्योऽपि सुप एकवचनाभ्युपगमेन । यदि तु तदुत्पत्तिः सत्येव गमके यथाऽव्ययेभ्य उत्पत्तौ "अव्ययादाप्सुपः"(पा०सू० २।४।८२) इति गमकम् । नान्यत्र, एकवचनमिति महासंज्ञाकरणात् । प्रकृते तु न तथा गमकम् । अत एव "ङ्याप्—" ( पा०सू० ४।१।१। ) इति सूत्रे प्रातिपदिकाधिकाराभावे तिङन्तेभ्यस्तदुत्पत्तिमाशङ्क्यैकत्वादीनामुक्तत्वान्नेति समाहितं भाष्ये, त्वद्रीत्यौत्सर्गिकमेकवचनं दुर्वारमेव । अत एवाग्रे भाष्येऽर्थवत्पदस्य दश दाडिमानीत्यादिपदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितः । तत्र हि "सुपो धातु—" ( पा० सू० २।४।७१ ) इत्यस्य प्राप्तिरिति तदेवास्य मुख्यं(१) व्यावर्त्यम् । पचतः कल्पमित्यादौ तत्प्रवृत्तौ रूपप्सूत्रस्थं भाष्यं गमकम् । समासग्रहणकृतनियमस्तु अर्थवत्समुदायविषयक इति भाष्ये स्पष्टमि-

ज्योत्स्ना ।

मिति अर्थवदित्यस्य नेदमव्यावर्त्यमिति वाच्यम् । दशदाडिमानीत्यनर्थकसमुदायस्य प्रातिपदिकसंज्ञापत्तेः । वृक्षप्रचलनन्यायेन प्रत्येकमनापत्तेश्च । न च समासकृतनियमेन निस्तार इति वाच्यम् । लोके प्रयोगार्हार्थवदारब्धोऽर्थवांश्च यः समुदायस्तस्यैव तन्नियमव्यावर्त्यत्वात् । एतदेवाभिप्रेत्य भाष्येऽपि अर्थवदित्यस्य धनं वनमिति व्यावर्त्यं दत्वा अग्रे दशदाडिमानीत्यनर्थकसमुदायो व्यावर्त्यत्वेनोक्तः । वृक्षप्रचलनन्यायमबुद्ध्वा धनं वनमिति तन्न्यायेन दोषवारणे तु दशदाडिमानीत्यनर्थकसमुदायस्य व्यावर्त्यमिति तदाशयः सिद्धान्तादिति । अत एव "द्व्येकयोः" इत्यत्र एकग्रहणप्रत्याख्यानपरं भाष्यं सङ्गच्छते । विशिष्टरूपोपादानेति । तत्त्वं चानुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम् । तादृशविशिष्टरूपोपादानमर्थवत्वन्तत्र नास्तीति भावः ।

अत एवेति । सत्येव गमके औत्सर्गिकमेकवचनं भवतीति स्वीकारादेवेत्यर्थः । प्रदर्शित इति । अत्र यद्वक्तव्यं तन्मूलाख्यायामेवावोचाम । अर्थवत्समुदायविष-

वि० ( १ ) यथाश्रुतरीत्येदमपि बोध्यम् । वस्तुतस्तु वक्ष्यमाणसिद्धान्तरीत्या प्रत्ययस्य 'पञ्चगवधनः' इत्याद्येकदेशस्य पञ्चगवेत्यादेश्च व्यावर्त्यत्वमस्त्येव ।

त्वात् । "अधातुः" ( पा सू० १।२४५ ) इत्यादिपर्युदासबलेन यद्यप्यर्थवत्त्वं लभ्यते, तथाऽपि उत्तरार्थं तदित्युक्तम् । एतच्च "सुप्तिङन्तम्" ( पा० सू० १। ४।१४ ) इति सूत्रे भाष्ये ध्वनितम् । यत्त्वाहुः—पर्युदासो नार्थवत्त्वं गमयति । अनर्थकयोरपि धातुप्रत्यययोर्दर्शनात् । अधीते, यावक इति । अधिपूर्वस्यैवेङः प्रयोगात् विशिष्ट एव अर्थवान्, न तु केवलः । इङ् अध्ययने

शब्दरत्न ।

ति न तेनास्य व्यावृत्तिरिति(१) दिक् । यद्यप्यर्थवत्त्वमिति । (२)व्याख्यानादर्थवत्त्वेनैव साहश्यं गृह्यत इति भावः । उक्तमिति । एतेनेदमुक्तमेव पुनर्दार्ढ्यायोच्यत इति सूचितम् । भाष्ये इति । एवं हि तत्र भाष्यम्—"अर्थवदिति वर्त्तते कृत्तद्धितान्तं चैवार्थवद्, न केवलाः कृतस्तद्धिता वा" इति "कृत्तद्धित—" (पा०सू० १।२।४६) इति सूत्रेऽन्तग्रहणं

ज्योत्स्ना ।

यक इति । स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वकावयवकः स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकः अर्थवान् यः समुदायः तद्विषयकः इत्यर्थः । भाष्ये ध्वनितमिति । तत्र हि "सुप्तिङन्तम्" इति सूत्रे ऽन्तग्रहणस्य "संज्ञाविधौ" इति परिभाषायां ज्ञापकत्वमुक्त्वा एवं तर्हि "कृत्तद्धित" इति सूत्रे "अन्तग्रहणं कर्तव्यं न कर्तव्यम् । अर्थवदित्यनुवर्तते कृत्तद्धितान्तंचैवार्थवत्"इत्युक्तम् । तत्रार्थवत्सूत्रे यादृशमर्थवत्त्वं विवक्षितं तादृशस्यैवोत्तरसूत्रे विवक्षायां तस्य केवलतद्धितेऽपि सत्वान्नेह भाष्यं संगच्छेत । अत एव एकार्थीभावेन लोके प्रसिद्धत्वरूपप्राशस्त्यवदर्थवत्वमुत्तरसूत्रे विवक्षितमिति भावः ।

केचित्तु—एतद्भाष्यप्रामाण्यात्सूत्रद्वयं साधारणम्–एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वं स्वीकुर्वन्ति । तस्येत्थं व्याख्यानम् । तथाहि—एतस्य संज्ञा तन्मूलभूता या विभक्तिः तदितरस्य समभिव्याहारः तस्य अनपेक्षा तया इति समासः । राम इत्यस्य या प्रातिपदिकसंज्ञा तत्फलभूता विभक्तिः तस्मादागामिनी स्वादिविभक्तिः तदितरो घटपटादिः, तत्समभिव्याहारानपेक्षयैव लोके ऽर्थविषयकबोधजनकत्वेन रामादेरर्थवत्वम् । नचैतादृशार्थवत्वस्वीकारे खट्वा इत्यादौ अर्थवत्वन्न स्यात् । खट्वा इत्यस्य या प्रातिपदिकसंज्ञा तत्फलभूता विभक्तिस्तस्मादागामिनी स्वादिविभक्तिः तदितरष्टाप्प्रत्ययः तत्समभिव्याहारापेक्षयैव लोके खट्वादिशब्दानामर्थबोधजनकत्वादिति वाच्यम् । उक्तलक्षणघटकविभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्वेन प्रत्ययपदेन प्रत्ययस्यान्यग्रहणेन टाप्प्र-

---

वि० ( १ ) दिगर्थस्तु वस्तुतस्त्वित्यादिनोक्तः पूर्वोऽत्रावसेयः ।

वि० ( २ ) व्याख्यानञ्चात्र बहुलक्ष्यसंस्कारमूलं ग्राह्यम् ।

इत्याद्यर्थनिर्देशस्तु अवयवे समुदायार्थारोपात्। एवं कन्नप्यनर्थकः। यावश-ब्दादपि तदर्थप्रतीतेः। "ओषधेश्च विभक्तावप्रथमायाम्" (पा० सू० ६।३।१३२) "अकर्तरि च कारके-" (पा० सू० ३।३।१९) इति विभक्तिकारक-ग्रहणाभ्यां नञिवयुक्तन्यायस्यानित्यत्वकल्पनाच्चेति। अत्रेदं वक्तव्यम्।

---

शब्दरत्न।

न कार्यमिति। 'अर्थवद्ग्रहणानुवृत्तिसामर्थ्यादेव चेद्दशार्थलाभ' इति कैयटः। समु-दायार्थारोपादिति। तेन तन्मात्रस्य क्रियावाचित्वनिबन्धनधातुत्वसिद्धिरिति भावः।

ज्योत्स्ना।

त्ययस्यापि ग्रहणे तदितरपदेन घटादीनामेव ग्रहणेन तत्समभिव्याहारानपेक्षयैव लोकेऽर्थविषयकबोधजनकत्वस्य खट्वादिशब्दे सत्वेन नात्राव्याप्तिः। नचैवमिन्द्राणी इत्या-दिघटकइन्द्रइत्यस्यार्थवत्वन्न स्यात्, एतत्संज्ञाफलभूतप्रत्ययेतरानुगागमत्वसमभिव्या-हारापेक्षयैव लोकेऽर्थबोधजनकत्वादितिचेन्न। उक्तलक्षणे आगमेतरेत्यस्य निवेशेन इत-रपदेन घटपटादीनामेव ग्रहणेन तत्समभिव्याहारानपेक्षयैव लोके ऽर्थबोधजनकत्वा-न्नातिव्याप्तिः।

वस्तुतस्तु विभक्तिग्रहणं स्पष्टार्थमेव। अन्यथा आगमेतरेत्यस्य निवेशे गौरवापत्तेः। नचोक्तलक्षणे एतत्संज्ञाफलभूतेति न देयमिति चेन्न। अशब्दादिन्प्रत्यये अस्यापत्यम् इः "यस्येति च" इत्यलोपे इशब्दात्सुब्विभक्तौ इषु इत्यस्यार्थवत्त्वं स्यात्। प्रत्ययेतरो घटादिः तत्समभिव्याहारापेक्षयैव लोके ऽर्थविषयकबोधजनकत्वस्य सुशब्दे सत्वात्। एवं राजपुरुषौ इति समुदायघटकराजपुरुष इति समुदायस्य तथैव देवदत्तो गार्ग्यः इत्यत्र यञन्तस्य च प्रत्ययेतरघटपटाद्यनपेक्षयैव लोके ऽर्थविषयकबोधजनकत्वात्। इति तन्निवेशस्य सार्थक्यात्। तन्निवेशे तु एतत्संज्ञाफलभूतपदेन यस्यार्थवत्वं चिकीर्षितं तस्यैव ग्रहणात्, एतत्फलभूतप्रत्ययपदेन आगामिनः प्रत्ययस्यैव ग्रहणेन तदितरपदेन इषु इत्यत्र इकारस्य राजपुरुषावित्यत्रौकारस्य देवदत्तो गार्ग्य इत्यत्र सुप्रत्ययस्यापि ग्रहणेन तत्समभिव्याहारापेक्षयैव लोके ऽर्थविषयकबोधजनकत्वस्य तत्र तत्र सत्वेन तादृशार्थवत्वस्य तत्राभावेन दोषाभावात्। नन्वेतत्संज्ञेत्यस्य निवेशेऽपि एतत्संज्ञेत्यत्र कर्मधारयस्वीकारेण एषा संज्ञापदेन इषु इत्यत्र अशब्दात् या प्रातिपदिकसंज्ञा तत्संज्ञाफलभूतो य इन्प्रत्ययः तदितरो घटादिः तत्समभिव्याहारानपेक्षयैव लोके ऽर्थविषयकबोधजनकत्वस्य सुशब्दे सत्वेन सोरर्थवत्वापत्तिर्दुर्वारेति चेन्न। एतत्संज्ञेत्यत्र न कर्मधारयः, किन्तु षष्ठीतत्पुरुषः। तस्मात् यस्य प्रातिपदिकत्वं चिकीर्षितं तस्यैव एतत्पदेन ग्राह्यतया एतस्य संज्ञेत्यस्य एतद्वृत्तिविशिष्टा या सुशब्दस्य प्रातिपदिकसंज्ञा तत्फलभूतप्रत्ययः तस्मादागामी स्वादिप्रत्ययः तदितरपदेन सुप्रकृतिभूतो-

धातुरनर्थक इति इति तावद्व्याहतम् । क्रियावाचकत्वं विना धातुत्वायोगात् । आरोपितं तदिति चेत् । सत्यम् । तावतैवेष्टसिद्धेः । प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च सर्वः कल्पित एव । परमार्थतस्तु स्फोट एवार्थवानिति सि-

शब्दरत्न ।

तत्–क्रियावाचकत्वम् । तत्तदर्थविभागश्चेति । तस्य तस्येति कृतद्विर्वचनेन षष्ठीसमासे, स सोऽर्थविभाग इति कर्मधारये वा विभक्तिलुकि इदं साधु । एतेनान्यान्यप्रादुर्भावादिति "अपादाने पञ्चमी" ( पा० सू० २।३।२८ ) इति सूत्रस्थभाष्यप्रयोगोऽपि व्याख्यातः । सुबन्तत्वमपि द्विःप्रयोगपक्ष इव स्थाने द्विर्वचनपक्षेऽप्याद्यान्यशब्दे प्रकृतित्वबुद्ध्याऽन्त्यस्य शब्दे प्रत्ययत्वबुद्ध्या सूपपादम् । सर्व इति । (१)धातूपसर्गविभागो वृत्तिष्वेकार्थीभावश्चैवमेवेति भावः । स्फोट एवेति । पदरूपो वाक्यरूपो वेत्यर्थः । लोकानां

ज्योत्स्ना ।

कारस्यापि ग्रहणेन तत्समभिव्याहारापेक्षयैव लोके अर्थविषयकबोधजनकत्वेन सुशब्देऽर्थवत्त्वाभावेनादोषात् ।

नन्वत्र षष्ठीतत्पुरुष एव इत्यत्र किम्मानमिति चेन्न । अर्थवत्सूत्रे ऽधातुपदेन भूवादिसूत्रविहितधातुसंज्ञकस्य ग्रहणमाहोस्वित् "सनाद्यन्ता धातव" इत्यनेन विहितधातुसंज्ञकस्य ग्रहणमित्याशङ्क्य भूवादिसूत्रविहितधातुसंज्ञकस्यैव ग्रहणं न तु "सनाद्यन्त" इतिसूत्रविहितधातुसंज्ञकस्य ग्रहणम् । प्रत्ययान्तपर्युदासेनैव तत्र प्रातिपदिकसंज्ञाया निषेधादित्युक्तन्तन्न संगच्छते । एतत्संज्ञेत्यस्य कर्मधारयस्वीकारे एतत्संज्ञापदेन प्रातिपदिकसंज्ञाया एव ग्रहणात् । अपि काकः श्येनायते इत्यत्र एतद्वृत्तिविशिष्टा या श्येनायेत्यस्य प्रातिपदिकसंज्ञा तत्फलभूतो अप्रत्ययस्तस्मात् आगामी स्वादिप्रत्ययः तदितरस्तिप्रत्ययः तत्समभिव्याहारापेक्षयैव श्येनायते इत्यस्य लोकेऽर्थविषयकबोधजनकत्वात्तादृशार्थवत्त्वस्य तत्राभावेनार्थवत्त्वाभावादेव प्रातिपदिकसंज्ञाया अप्रवृत्तौ प्रत्ययान्तपर्युदासेन वारणमसंगतं स्यात् । षष्ठीसमासस्वीकारे तु एतद्वृत्तित्त्वविशिष्टासंज्ञापदेन प्रातिपदिकधातुसंज्ञयोरुभयोर्ग्रहणात् । एतद्वृत्तित्वविशिष्टा या श्येनायेत्यस्य प्रातिपदिकसंज्ञा धातुसंज्ञा च तत्फलभूतः प्रत्ययः स्वादिप्रत्ययः तिङ्प्रत्ययश्च तदितरपदेन घटपटादीनामेव ग्रहणेन तत्समभिव्याहारानपेक्षयैव लोकेऽर्थविषयकबोधजनकत्वस्य श्येनायेत्यत्र सत्त्वेनार्थवत्त्वादुक्तभाष्यसंगतिस्तस्मादत्र षष्ठीतत्पुरुषः ।

वि० ( १ ) एवमेव कल्पित एव स्फोटः । स्फुटत्यर्थोऽस्मादिति स्फोटः, वाचकः शब्दः । स च हृदयप्रदेशेऽभिव्यक्तः कर्णपिधानेन सूक्ष्मतरवाय्वभिघातेन स्वमात्रश्राव्यः प्रणवापरपर्यायनादश ब्दबोध्य आन्तरो व्यञ्जकतत्तद्वर्णप्रतिबिम्बयुक्तोऽभिधीयते । विस्तरतस्तु लघुमञ्जूषायां द्रष्टव्यः ।

द्धान्तात्। उक्तं च हरिणा—

ज्योत्स्ना।

नन्वेतल्लक्षणे नञ्द्वयोपादानं किमर्थम्? एतत्संज्ञाफलभूतप्रत्ययसमभिव्याहारापेक्षया लोकेऽर्थविषयकबोधजनकत्वम् इत्येतावतैव सकलेष्टसिद्धेरिति चेन्न। दधि मधु इत्यादिशब्दानामेतत्संज्ञाफलभूतप्रत्ययानपेक्षयैव लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्वं स्यात्। अत्राव्याप्तिदोषवारणाय नञ्द्वयोपादानम्। तथाच एतद्वृत्तित्वविशिष्टा संज्ञा दधि मधु इत्यस्य प्रातिपदिकसंज्ञा तत्फलभूतप्रत्ययः तस्मादागामी स्वादिप्रत्ययः, तदपेक्षया यो अभावेऽपि तदितरो घटादिस्तत्समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वेन दध्यादिशब्दानामर्थवत्वेन न किमपि बाधकम्। नचैतत्संज्ञाफलभूतविभक्तीतरानपेक्षयालोके ऽर्थविषयकबोधजनकत्वमित्येतावतैव सकलेष्टसिद्धौ समभिव्याहारपदोपादानङ्किमर्थमिति चेन्न। समभिव्याहारपदाभावे रामादीनां शब्दानाम् एतद्वृत्तित्वविशिष्टसंज्ञाफलभूतप्रत्ययेतरशक्तिज्ञानापेक्षयैव लोके ऽर्थविषयकबोधजनकत्वस्य सत्वेनार्थवत्वन्न स्यादिति समभिव्याहारपदोपादानम्। तत्सत्वे तु समभिव्याहारपदस्य पूर्वापरीभावरूपतया गगने पूर्वापरीभावस्य बाधितत्वेन इतरपदेन तद्ग्रहणस्य वक्तुमशक्यत्वेनापि तु घटपटादीनामेव ग्रहणेन तत्समभिव्याहारानपेक्षयैव लोकेऽर्थविषयकबोधजनकत्वेनादोषात्।

नन्वेमपि रामादिशब्दानामस्तिक्रियापेक्षयैव लोके ऽर्थविषयकबोधजनकत्वस्य दृष्टतया एतद्वृत्तित्वविशिष्टसंज्ञाफलभूतप्रत्ययेतरपदेन अस्तीत्यादीनामपिग्रहणादर्थवत्वन्न स्यादिति चेन्न। समभिव्याहारपदेन नियतपूर्वापरीभावरूपस्य विवक्षितत्वेनादोषात्। तथा च—रामोऽस्ति, अस्ति रामः इत्यादिप्रयोगस्य सर्वत्र सुलभत्वेन अस्तीत्यादिशब्देषु नियतपूर्वापरीभावस्य वक्तुमशक्यत्वेन इतरपदेन कस्यचिदुदासीनस्यैव घटादेर्ग्रहणस्य वक्तव्यत्वेन तत्समभिव्याहारानपेक्षयैव लोकेऽर्थबोधजनकत्वस्य रामादिशब्दे सत्वेन तत्राव्याप्तेरभावात्। नचैवमपि पक्त्रिमं घटकपक्तिरित्यस्यैतत्संज्ञाफलभूतप्रत्ययो मप्प्रत्ययः, तदितरो ऽम्प्रत्ययः तत्समभिव्याहारापेक्षया लोकेऽर्थबोधजनकत्वस्य सत्वेनार्थवत्वन्न स्यादिति वाच्यम्। नियताव्यवहितपूर्वापरीभावरूपस्य समभिव्याहारपदेन विवक्षणात्। अम्प्रत्यये नियतपूर्वापरीभावस्य सत्वेऽपि अव्यवहितत्वसमानाधिकरणनियतपूर्वापरीभावस्य वक्तुमशक्यत्वादिति दिक्। विस्तरस्त्वग्रे द्रष्टव्यः।

परे तु—संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं यत् प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तत्तदादिविशेष्यकतदन्तविधिप्रयोजकन्न भवतीत्यर्थकसंज्ञाविधाविति परिभाषाया प्राप्तिर्नास्तीत्येतद्बोधकमेव तद्भाष्यमित्याहुः।

उपाया: शिक्षमाणानां बालानामुपलालना: ।
असत्ये वर्त्मनि स्थित्वा तत: सत्यं समीहते ॥ १ ॥

इति । कथमन्यथा इङो द्विर्वचनमडादयश्च स्यु: । तथा च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति प्रघट्टके अध्येति अधीत इत्यत्रेकारोऽर्थवानिति भाष्ये स्पष्टमेवोक्तम् । एवं कन्प्रत्ययोऽप्यर्थवानेव । स्वार्थिकानां प्रकृत्यर्थेनैवार्थवत्त्वात् । कल्पनामात्रमिदमिति चेन्न । उक्तोत्तरत्वात् । नैषा कल्पना शास्त्रकृत्सम्मतेति चेन्न । "द्वितीयतृतीयचतुर्थतुर्याणि–" (पा०सू० २।२।३) इति सूत्रे पूरणात्स्वार्थेऽन्प्रत्ययस्य पूरणार्थताया भाष्यकारैरेवोक्तत्वात् । प्रत्यय इति महासंज्ञां कुर्वत: सूत्रकृतोऽपि सम्मतमेवेदम् । यदपि "ओषधेश्च–" ( पा० सू० ६।३।१३२ ) इत्यादि । तदपि न । अनित्यत्वेऽप्यौत्सर्गिकप्रवृत्त्या इष्टसिद्धे: । इष्टस्थले ऽप्यप्रवृत्तौ न्यायस्य निर्विषयत्वापाताच्च । अनित्यत्वज्ञापनस्य कथं चिदावश्यकत्वे अर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवाच्च । उत्तरार्थस्यापि इह किं चित्त्रपो इति न्यायेन इह करणस्य सफलत्वौचित्यात् । "ओषधेश्च-"

---

शब्दरत्न ।

तत्रैव शक्तिग्रहेण बोधादिति भाव: । अत एव तस्य परमार्थत्वं, लोके बोधजनकत्वात् । शास्त्रेण प्रकृतिप्रत्ययविभागव्युत्पादनेन विशिष्टपदस्येव तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टार्थबोधकत्वमेव बोध्यते । उपलालना भवन्तीति शेष: । न तु वास्तवा इतिं भावस्तदाह—असत्ये इति । आरोपिते इत्यर्थ: । लोकानान्तत्तच्छब्दजन्यबोधानुपयोगित्वात्तत्त्वम् । सत्यं विशिष्टशक्त्या बोधकं पदादीत्यर्थ: । स्युरिति । अधिजगे, ऽध्यगीष्टेत्यादौ । अर्थवत्त्वादिति । आरोपितार्थवत्त्वादित्यर्थ: । शास्त्रकृत्—भाष्यकृदादि: । संमतेति । तद्धितविषये इति शेष: । औत्सर्गिकप्रवृत्तौ हेतुमाह—इष्टस्थलेऽपीति । पञ्चम्यर्थो हेतुत्वानुवादक: । कथं चिदिति । अनेन तदनावश्यकत्वमेवेति ध्वनयति । ननूत्तरत्र चरितार्थस्य कथं ज्ञापकत्वमत आह—उत्तरार्थस्यापीति । "इकोचि—" ( पा० सू० ७।१।७३ ) इति सूत्रेऽजग्रहणस्योत्तरार्थतामुक्त्वा भाष्ये उक्तमिह किं चित्त्रपो इति । "न लुमता—" इति निषेधानित्यत्वज्ञापनद्वारा त्रपो इत्यत्र गुण: फलमिति तदर्थ: ।

ज्योत्स्ना ।

अत एवेति । लोकानां पदे वाक्ये वा बोधात् पदरूपो वाक्यरूपो वा स्फोट इतिं सिद्धान्तस्वीकारादेवेत्यर्थ: ।

अन्यथेति । अधिसमभिव्याहारे इङोऽर्थवत्त्वस्वीकारेणेत्यर्थ: । अधिसमभिव्याहारे इङ् अर्थवान् इत्यर्थे भाष्यं प्रमाणयति—तथाचेत्यादिना । अर्थवत्त्वादिति । अत:

( पा० सू० ६।३।१३२ ) इत्यादौ विभक्तिकारकग्रहणयोरेवेत्थं सति प्रत्याख्यानसम्भवाच्चेति दिक्। 'अधातुः' इति किम्। अहन्। नलोपो मा भूत्। न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासोऽस्त्विति वाच्यम्। प्रत्ययलक्षणे-

---

शब्दरत्न।

इत्थं सतीति। लघुनाऽनेनैवानित्यत्वज्ञापनमाश्रित्य न्यायानुसरणेन तयोः प्रत्याख्यानसम्भव इति भावः। नलोप इति। सुबुत्पत्तिस्तु नोक्ता। (१)"भूवादयो—" (पा० सू० १।३।१ ) इत्यस्य लविधौ तिबादिविधौ चोपस्थितेर्निरवकाशतयाऽपवादैस्तिबादिभिर्बाधात्। कार्यकालपक्षे इति। न च यथोद्देशेऽपि प्रत्ययान्तत्वस्य भावित्वेनाकृतव्यूहपरिभाषया फलाभावेन च संज्ञाया अप्रवृत्तिरिति वाच्यम्। अकृतव्यूहपरिभाषाया अनित्यत्वादसत्त्वाच्च। भविष्यति किं चित्फलमित्यभिसन्धिमात्रेणात्र पक्षे संज्ञायाः प्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणे कैयटेनोक्तत्वाच्च। यथोद्देशपक्षेण पर्युदासे लक्ष्यसिद्धेः शङ्कासमाधाने अत्र निर्दले। न हि व्यवस्थितयोः पक्षयोरन्यतरेण लक्ष्ये सिद्धे पक्षान्तरेण शङ्काऽप्यु-

ज्योत्स्ना।

एव स्वस्वप्रकृत्यर्थान्यतरप्रत्यायकत्वं स्वार्थिकानां सिद्धयति। न लोपो माभूदिति। न च "न लोपो ऽतिङ्" इति न्यासेनाहन् इत्यत्र तिङन्ततदादिभिन्नत्वस्याभावान्न लोप इति वाच्यम्। एधेरन् पचेरन् इत्यस्यां क्रियायाम् एधेरन् पचेरन्नित्यस्यासिद्धयापत्तेः। पचेरन्नित्यस्य तिङन्ततदादिभिन्नत्वस्याभावात्। न च भवन्मतेऽपि प्रातिपदिकसंज्ञकपदाभावान्नलोपो नैव स्यादिति वाच्यम्। बहुदण्डिकेत्यादौ नलोपाय "न लोपः प्रातिपदिकान्तस्य" इत्यस्य प्रातिकान्तस्य नस्य लोप इत्यर्थेनादोषात्। नचास्मन्मतेऽपि एधेरन् पचेरन् इत्यस्य समुदायस्य तिङन्ततदादिभिन्नत्वान्नलोपः स्यादेवेति वाच्यम्। विशिष्टस्यापदत्वान्नलोपाप्राप्त्या "ऋन्नेभ्यः" इति ङीपो दुर्वारत्वादिति दिक्।

भूवादय इत्यस्येत्यादि। एतेन चिकीर्षति बोभूयते इत्यादौ प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्तत्र सुपामप्राप्त्या तिङां चारितार्थ्यत्वात्कथमपवादत्वमिति शङ्का निरस्ता। "सनाद्यन्ता" इत्यस्य लादिविधावुपस्थितिवत् "भूवादय" इत्यस्यापि पृथगुपस्थितत्वेन भ्वादिमुद्दिश्य विहितेति भ्वादीनामपवादत्वं सुसङ्गतमेवेति।

कार्यकालपक्षे इति। ननु नलोपवारणस्य यथोद्देशपक्षेऽपि सम्भवेन विशिष्यात्र कार्य-

---

प्र० ( १ ) भूवादय इत्यस्य लविधौ तिबादिविधौ चोपस्थितेर्निरवकाशतयेति। एतेन चिकीर्षति बोभूयते इत्यादौ प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्तत्र सुपामप्राप्त्या तिङां चारितार्थ्यात्कथमपवादत्वमिति शङ्का निरस्ता। 'सनाद्यन्ता' इत्यस्य लादिविधावुपस्थितिवद् भूवादय इत्यस्यापि पृथगुपस्थितत्वेन भ्वादीनुद्दिश्य विहिततिबादीनामपवादत्वं सुसङ्गतमेवेति।

नोक्तपर्युदासाप्रवृत्तेः "न ङिसम्बुद्ध्योः" ( पा० सू० ८।२।८ ) इति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् । अप्रत्ययः किम् । हरिषु, करोषि । अत्र सुप्सिपोर्मा भूत् । अप्रत्ययान्तः किम् । तत्रैव विभक्तिविशि-

शब्दरत्न

चितेत्यर्थस्य प्रगृह्यसंज्ञाप्रकरणे भाष्ये ध्वनितत्वादिति कश्चित् । कथमन्यथेति । न च राजेत्यादौ कृदन्तत्वात्प्रवृत्तिः । तत्रापि "अप्रत्ययः" इत्यस्य सम्बन्धात् । अत एव दाक्षी, दिद्दक्षू इत्यादौ परादिवद्भावेन न सुपो लुक् । न च सुल्लोपविषयमेव ज्ञापकम् । असति बाधके प्रमाणानां सामान्ये पक्षपात इत्यर्थस्यापि ज्ञापनात् । अन्यथा सूत्रोपस्थितङिसम्बुद्धिमात्रविषयता स्यादिति राजपुरुषासिद्धिः । स्पष्टा चेयं रीतिः "सार्वधातुकमपित्" ( पा० सू० १।२।४ ) इत्यत्र भाष्ये । प्रकृतसूत्रभाष्ये चेदं स्पष्टम् । अत्र सुप्सिपोरिति । तयोः प्रातिपदिकत्वे तत्सामर्थ्यादौत्सर्गिकैकवचने तच्छ्रव-णापत्तिः । विभक्त्यर्थस्य लिङ्गं प्रति स्वरूपायोग्यत्वेन नपुंसकत्वाश्रयो विभक्तिलुक् । तत्सत्त्वे तु पदादित्वेन षत्वनिषेधापत्तिर्दोष इति भावः । तत्रैवेति । अत्राप्यौत्सर्गिकैक-वचनापत्तिः । "सुपो धातु—" ( २।४।७१ ) इति लुकापत्तिश्च, पचेरन्नित्यादौ नलोपा-

ज्योत्स्ना ।

कालोपादानं व्यर्थमित्याशङ्कां वारयितुमाह । भाष्ये ध्वनितत्वादिति—तत्र हि-'अग्नी इत्याह' इत्यत्र प्राक्प्रगृह्यसंज्ञायान्तस्य स्थाने "गुरोरनृत" इति प्लुते "ईदूदेद्" इतितपरकरणात्पुनः प्रगृह्यसंज्ञा प्रकृतिभावफलिका न प्राप्नोति प्लुतसंज्ञाकृतस्य प्रकृतिभावस्य त्वप्रवृत्तिः "अप्लुतवदुपस्थिते" इति अप्लुतवद्भावविधानात्प्रगृह्य-संज्ञाविधायकसूत्रदृष्ट्या प्लुतस्यासिद्धत्वन्न भवति, कार्यकालपक्षे प्रगृह्यसंज्ञायाः "प्लुतप्रगृह्या" इत्येतदेकवाक्यतया स्वसन्धिस्थत्वसम्पत्त्या 'सिद्धः प्लुतः स्वरसन्धिषु' इत्यनेन सिद्धत्वस्य बोधनादित्याशङ्क्य यथोद्देशपक्षाश्रयणेन समाहितम् । तेनास्य ध्वनितत्वादित्यर्थः ।

अत एवेति । "कृत्तद्धित" इति सूत्रे अप्रत्यय इत्यनुवर्त्य कृदितरप्रत्ययान्तत-दादिभिन्नकृदन्ततदादितद्धितेतरप्रत्ययान्ततदादिभिन्नतद्धितान्ततदादेर्ग्रहणादेवेत्यर्थः । दाक्षी इति । अत्र तद्धितेतरसुप्प्रत्ययान्ततदादित्वान्न प्रातिपदिकत्वम् । एवं दिद्दक्षू इत्यादौ कृदितरतरबन्ततदादित्वं बोध्यम् । तथाचाप्रत्यय इति निषेधात् दाक्षी इत्यत्र तद्धितान्तत्वनिबन्धना, दिद्दक्षू इत्यत्र च कृदन्तत्वनिबन्धना प्रातिपदिकसञ्ज्ञा न भव-तीति भावः । प्रातिपदिकसञ्ज्ञायां तु परादिवद्भावेन सुप्त्वात् "सुपो धातु" इति लुक् स्यादिति भावः ।

सुप्सिपोर्माभूदिति । प्रत्येकं सुबुत्पत्तौ हि "सात्पदाद्योः" इति षत्वनिषेधापत्ते-रिति भावः ।

न लोपापत्तिश्चेति । न च पचेरन् इत्यादौ "झस्य रन्" इत्यादौ नकारोच्चारणसाम-

ष्टयोर्मा भूत् । न चान्तवद्भावेन काण्डे, कुड्ये इत्यादौ प्रातिपदिकत्वं स्यादेव । तथा च "ह्रस्वो नपुंसक-" ( पा० सू० १।२।४७ ) इति ह्रस्वत्वं सोरुत्पत्तिश्च स्यादिति वाच्यम् । कार्यकालपक्षेऽिष्टसिद्धेः । यथोद्देशेऽपि विभक्त्येकादेशो नान्तवत् । "सप्तम्यधिकरणे च" ( पा० सू० २।३।३६ ) इत्यादिनिर्देशात् । "ह्रस्वो नपुंसके-" ( पा० सू० २।२।४७ ) इति सूत्रे प्रातिपदिकग्रहणं वा उक्तार्थे सामान्यापेक्षं ज्ञापकमस्तु ।

शब्दरत्न ।

पत्तिश्चेति भावः । स्यादेवेति । पूर्वं विभक्त्युत्पत्तये जातस्यातिदेशेन विभक्त्यन्ते बुद्धिरिति भावः । यथोद्देशेऽपीति । अपिना कार्यकालपक्षेऽपि । न हि तत्र पक्षे उपदेशेनैवैकवाक्यता अतिदेशेनेत्यत्र मानमस्ति अतिदेशैकवाक्यतयैव ह्रस्वप्राप्तेः सुवचत्वात् । प्रातिपदिकग्रहणं वेति । नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वान्नपुंसके वर्तमानस्येत्यर्थेनैव प्रातिपदिकलाभे सिद्धे तस्य व्यर्थत्वादिति भावः । उक्तार्थे—विभक्त्येकादेशस्यान्तन्तवस्त्वाभावे । सामान्यापेक्षमिति । अन्यथा ह्रस्व एव न स्यात्स्वाद्युत्पत्तिस्तु स्यादेवेति

ज्योत्स्ना ।

थ्यादेव नलोपो न भवतीति वाच्यम् । पचन्तीत्यादौ अन्तादेशे नकारोच्चारणस्य चारितार्थ्येन पचेरन् इत्यादौ प्रातिपदिकसञ्ज्ञाया नलोपापत्तेः । न च गोमान् इत्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नलोपो न स्यादिति वाच्यम् । सर्वस्मिन्नित्यादौ नलोपापत्तेः । स्मिन् नकारोच्चारणं तु हे सर्वस्मि शय इत्यादौ संज्ञायां नलोपस्य सिद्धत्वात् संयोगसंज्ञासम्पादनद्वारा "गुरोरनृत" इति प्लुतार्थं तच्चरितार्थमिति कश्चित् ।

वस्तुतस्तु—"इकोऽचि" इति सूत्रस्थभाष्यप्रामाण्यात्संयोगसंज्ञायां नलोपो नासिद्धः । तत्र हि अचीत्यस्याभावे हलादौ नुममाशङ्क्य नलोपेन रूपसिद्धिं कृत्वा "न ङिसम्बुद्ध्योः" इति निषेधात् सम्बुध्यर्थमचीत्युक्तम् । अन्यथात्रशमार इत्यादौ नलोपेऽपि तस्मात्संयोगसंज्ञाद्वारा "गुरोरनृत" इति प्लुतः स्यात्, तद्वारणायाचीत्यस्य चारितार्थ्येन तदसङ्गतिः स्पष्टैव । वस्तुतस्तु नकारोच्चारणप्रत्ययान्तपर्युदासे मानमिति कल्पनैवोचितेति दिक् ॥

ह्रस्वप्राप्तेः सुवचत्वादिति । न च 'लक्ष्ये लक्षणन्यायेन, पुनर्ह्रस्वो न प्राप्नोतीति वाच्यम् । तल्लक्ष्यत्वाभावात् । तत्वं च स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायः तदघटको यस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्त्वमिति परिष्कृतार्थस्वीकारेऽपि विकारे तन्मात्रोद्देश्यकत्वस्य सत्त्वेन गुणस्य तन्मात्रोद्देश्यक-

यत्तु वदन्ति-प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थ-

शब्दरत्न ।

भावः । यद्यपीदं प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकग्रहणार्थं तेनात्र न ह्रस्वः। मूलोक्तार्थे ज्ञापिते चारितार्थ्यं दुर्निरूपं च । संख्याकर्माद्ययोगात्स्वाद्युत्पत्तिरपि न, औत्सर्गिकमेकवचनमपि न । गमकं विना तदनुत्पत्तेः । "सुपो धातु—" ( पा० सू० २।४।७१ ) इति लुगपि न धातुसाहचर्येण (१)सुप्तिङ्भिन्नेतरसमभिव्याहृतस्यैव तेन लु-

ज्योत्स्ना ।

त्वाभावेनादोषात् । ननु 'विभक्त्येकादेशो नान्तवत्' इति ज्ञापने दोषाभूतमहः दिवाभूतारात्रिरित्यादौ "ह्रस्वो नपुंसके" इति ह्रस्वापत्तिः । एतेन "ह्रस्वो नपुंसके" इति सूत्रे प्रातिपदिकग्रहणसामर्थ्यात् अनतिदिष्टप्रातिपदिकस्यैव ह्रस्व इति कैयटोक्तमप्यसङ्गतमित्यभिप्रेत्य शङ्कते—यद्यपीत्यादिना ।

सत्वप्रधानेति । तथाच दोषादिवाशब्दयोरव्ययत्वात् सत्वप्रधानत्वाभावान्न ह्रस्वापत्तिरिति भावः ।

तत्त्वं च यस्य ह्रस्वश्चिकीर्षितः तत्प्रयोज्यप्रधानतानिरूपिताप्रधानत्वासमानाधिकरणा या लिङ्गान्वयितावच्छेदकरूपावच्छिन्नाऽप्रधानता तत्प्रयोजकत्वम् । अप्रधानत्व विशेष्यत्व, उभयसम्बन्धसाधारणविषयताविशेष इति बोध्यम् ।

न ह्रस्व इति । काण्डे इत्यादौ क्रियाधिकरणभावसम्बन्धनिष्ठप्रधानतायां लिङ्गान्वयितावच्छेदकरूपावच्छिन्नत्वस्य काण्डत्वनिष्ठप्रधानतानिरूपितकाण्डनिष्ठप्रधानतायां लिङ्गान्वयितावच्छेदकरूपावच्छिन्नत्वस्य सत्त्वेऽपि क्रियाधिकरणभावसम्बन्धनिष्ठप्रधानतानिरूपिताप्रधानतासमानाधिकरण्यस्यैव सत्वेन तदसामानाधिकरण्यस्य चाभावान्नोक्तसत्वप्रधानत्वमितीह न ह्रस्व इति भावः । न च क्रियाधिकरणभावे प्रधानतैव नास्तीति वाच्यम् । सम्बन्धस्य प्रतियोग्यपेक्षया प्रधानत्वेन काण्डनिष्ठप्रधानतानिरूपिताप्रधानतायास्तत्र सत्वादिति दिक् ।

सुप्तिङ्भिन्नेतरसमभिव्याहृतस्येत्यादि । सुप्तिङ्भिन्नौ यौ इतरौ तत्समभिव्याहृतस्येत्यर्थः । इतरसुप्तिङ् समभिव्याहृतन्तथेति यावत् । तेन हरिषु इत्यादौ न दोषः । सुप्तिङ्भ्यामितर इति आपाततःप्रतीयमानार्थाश्रयणे तु हरीति प्रकृतिरूपसुप्तिङ्भिन्नेतरसमभिव्याहृतत्वात् सुपो लोपापत्तिः प्रसज्येतेति दिक् ।

इतरसमभिव्याहृतस्यैवेति । न च सुप्तिङ् इतरत् काण्डे इति तत्समभिव्याहृतत्वस्य

प्र० ( १ ) सुप्तिङ्भिन्नेतरसमभिव्याहृतस्यैव तेन लुग्विधानादिति । सुप्तिङ्भिन्नौ यौ इतरौ तत्समभिव्याहृतस्येत्यर्थः । इतरसुप्तिङ्समभिव्याहृतस्येति यावत् । तेन हरिषु इत्यादौ न दोषः । सुप्तिङ्भ्यामितर इति आपाततः प्रतीयमानार्थाश्रयणे तु हरीति प्रकृतिरूपसुप्तिङ्भिन्नेतरसमभिव्याहृतत्वात्सुपो लोपापत्तिः प्रसज्येतेति दिक् ।

त्वात्। व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति। तन्न। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात्। केवलस्य च अतथात्वात्। अन्यथा त्वदुक्तरीत्या सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात्। तथा च हरिषु, करोषि, इत्यादौ षत्वं न स्यात् "सात्पदाद्योः" (पा० सू० ८।३।१११) इति निषेधात्। अ-

शब्दरत्न।

ग्विधानात्। एवं च प्रत्ययान्तपर्युदासो न कर्तव्य इति सूत्रशेषे भाष्ये ध्वनितम्। पचेरन्, सर्वस्मिन्नित्यादौ नकारोच्चारणसामर्थ्येन न नलोपस्तथाप्येतावत्क्लिष्टकल्पनापेक्षया लाघवात्प्रत्ययान्तपर्युदास एवोचित इति भावः। अतथात्वादिति। यस्माद्विहितस्तदादित्वस्याशास्त्रीयत्वेन व्यपदेशिवद्भावालभ्यत्वादिति भावः। निषेधादिति। यद्यपि

ज्योत्स्ना।

सत्वात् काण्डे इत्यादौ "सुपो धातु," इति लुग् दुर्वार इति वाच्यम्। धातुसाहचर्येणः 'सुप्तिङितरप्रातिपदिकसमभिव्याहृतस्यैव सुपो लुगिति' इत्यर्थेनादोषात्। काण्डे इत्यादौ काण्ड् इति डान्ते न प्रातिपदिकत्वम्। न च एकदेशविकृतन्यायेन डान्तेऽपि प्रातिपदिकत्वमस्त्येवेति तद्दोषतादवस्थ्यमिति वाच्यम्। तस्यानित्यत्वात्। 'सुपो ऽङ्गस्य' इति वा न्यासेन काण्डे इत्यादौ न दोषः। काण्डे इत्यस्माद्गमकाभावेन औत्सर्गिक एकवचनप्राप्त्या तस्याङ्गत्वाभावेन काण्डे इत्यत्र लुकोऽप्राप्तेः।

न च 'सुपोऽङ्गस्य' इति न्यासे परमसर्वेषामित्यादौ सुप् न स्यात्। परमजस् सर्वजस् इत्यस्मादाम्प्रत्ययप्रवृत्तिं विनाऽङ्गत्वाभावेन लुकोऽप्राप्त्या आमि लुक्यपि जसन्ताद्विहिते आमि जसन्तस्य सर्वनामत्वाभावेन सर्वनाम्नो विहितस्यामोऽभावादिति वाच्यम्। सर्वनाम्नो विहितस्येत्यस्य सर्वनामाभिन्नं यदङ्गं, ततः परस्यामः सुडित्यर्थेन परमसर्वेषामित्यादौ सुट् प्रवृत्तेः। वर्णाश्रमेतराणामित्यादौ सुडप्रवृत्तेश्च सिद्धत्वेन 'सुपोऽङ्गस्य' इति न्यासे दोषाभावात्। नचैवं परमगौरित्यादौ विशिष्टाज्जायमानसुपः परम सु गो सु इत्यस्माद्विहितत्वेन ओकाराद्विहितसर्वनामत्वाभावात् "ओतो णित्" इति णित्वानापत्तिः। "ओतो णित्" इतिवार्तिके विहितविशेषणस्य स्वीकारादिति वाच्यम्। नागेशमते गो घो शब्दव्यतिरिक्तौकारान्तानामनभिधानेन "ओतो णित्" इति वचनस्यैवाभावात्। अत एव भाष्ये "द्योश्चेति वक्तव्यम्" इति वार्तिकं पठितमिति तेन न्यासेन काण्डे इत्यादावपि लुको वारयितुं शक्यत्वादिति दिक्।

ग्रहणादिति। व्यपदेशिवद्भावेन स्वस्मिन् स्वघटकत्वस्वघटितत्वयोरेवातिदेशेन घटितघटकत्वप्रत्ययान्तत्वस्यातिदेशेऽपि प्रकृत्यादित्वस्यातिदेष्टुमशक्यत्वादितिभावः।

व्यपदेशिवद्भावेन स्वघटकत्वस्वघटितत्वातिरिक्तधर्मातिदेशे दोषमाह—अन्यथेत्यादिना। तदन्तत्वादिति। केवलसुपः सुबन्तत्वतदादित्वात् केवलतिङश्च तिङन्तत्वतदादित्वादिति भावः।

शब्दरत्न ।

व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशेन लाभसम्भवोऽत एव भवतीत्यादौ भवतेः शब्निरूपिताङ्गत्वसिद्धिः, व्यतिसे इत्यादौ से इत्यस्य पदत्वसिद्धिश्च, इरित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वसिद्धिश्च, युवापत्ये तत इञन्तत्वनिबन्धनफक्सिद्धिश्च । तथाप्यसहाय एव व्यपदेशिवद्भावो न तु ससहाये,

ज्योत्स्ना ।

अशास्त्रीयत्वेनेति । स्वस्मिन् स्वघटितत्वस्य स्वघटकत्वस्य च, एवं स्वस्मिन् घटकत्वघटितस्वान्तत्वस्य घटकत्वघटितादित्वस्य चानेनातिदेशो भवति । नान्यधर्माणामित्यस्योपलक्षणमिदम् ।

एकाच्त्वादेरिति । एकाच्त्वस्य एकाच्घटितत्वरूपत्वेन तस्य स्वस्मिन्नतिदेशो भवत्येवेति भावः । अङ्गत्वसिद्धिरिति । आदित्वस्य घटकत्वघटितत्वेन भवतीत्यादौ भूइत्यत्र स्वनिष्ठाद्यवयवतानिरूपकत्वं व्यपदेशिवद्भावेनायात्येवेति भावः । पदत्वसिद्धिरिति । अस् से इत्यत्र स्थितस्य पदत्वस्य से इत्यत्र स्थानिवद्भावेनातिदेशादिति भावः ।

प्रातिपदिकत्वसिद्धिरिति । अत्रापि पूर्ववद्वर्तमानतद्धितान्ततदादित्वं प्रातिपदिकत्वं वा स्थानिवद्भावेनानेयम् । व्यपदेशिवद्भावेन तु न सिद्ध्यति, उक्तयुक्तेः ।

असहाय एवेति । स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्यापकतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्याप्यतावत्व स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्याप्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्यापकताभावत्व एतदुभयसम्बन्धेन स्वविशिष्टत्वरूपघटितत्वशरीरे एवं स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्याप्यतानिरूपितव्यापकतावत्व स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यत्वाभावत्व एतदुभयसम्बन्धेन स्वविशिष्टत्वरूपघटकत्वशरीरे चाभावघटितसम्बन्धरूपसहायाभाव एव व्यपदेशिवद्भावप्रवृत्तिस्वीकारादित्यर्थः ।

यत्तु—मुख्यधर्मवद्घटितत्वे सति मुख्यधर्मवद्घटकत्वे सति मुख्यधर्मवदसमभिव्याहृतत्वमसहायत्वमिति । प्रथमसम्बन्धदानात्सभासन्नयनशब्दे आदित्वस्य । दरिद्राधाताविवर्णान्तस्य च नातिदेशः । द्वितीयसत्यन्तदानात्तत्रैव सभासन्नयनघटकभासन्नयने प्रातिपदिकत्वस्य हरि इत्यादौ धातुत्वस्य नातिदेशः । तृतीयसम्बन्धदानात्तत्रैव सभासन्नयननिरूपितादित्वस्य भाशब्दाकारे दरिद्रानिरूपितान्तत्वस्य दरीत्येकारे नातिदेशः । अन्यथा वृद्धत्वलक्षणः छो इवर्णान्तत्वलक्षणेऽच्प्रत्ययश्च दुर्वारः स्यादिति चेत्? न । सभासन्नयने वृद्धप्रातिपदिकत्वेऽतिदेष्टव्ये दरिद्राधाताविवर्णान्तत्वेऽतिदेष्टव्ये हरिण्वित्यादौ केवले सुपि सुबन्ततदादित्वेऽतिदेष्टव्ये भवदुक्तासहायत्वस्य सत्त्वेन शेखरग्रन्थशब्दरत्नग्रन्थयोरसङ्गत्यापत्तेरिति दिक् ।

न तु ससहाय इति । घटकत्वघटितत्वान्तःपातिसम्बन्धद्वयविशिष्टे इत्यर्थः ।

धातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्। महासंज्ञाकरणं श्रुत्यनुरोधात्। तथा चाथर्वणे पठ्यते। 'को धातुः, किं प्रातिपदिकं। कः प्रत्यय' इति। डित्थादीन्यव्युत्पन्नानीहोदाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः।

यत्तु व्युत्पत्तिपक्षेऽपि निपातार्थमनुकरणार्थं चेदमिति हरदत्तेनोक्तम्। तच्चिन्त्यम्। तत्रापि प्रकृत्यादिकल्पनसम्भवात्।

वस्तुतस्तु व्युत्पत्तिपक्षेऽपि बहुपटव इत्याद्यर्थं सूत्रम्। न चैवं बहुच्पूर्व

शब्दरत्न।

तेनेतरावयवे तदप्रवृत्तिः। स्पष्टा चेयं रीतिः "आदेच उपदेशे—" ( पा० सू० ६।१।४५ ) इत्यत्र कैयटे। अत एव सभासन्नयने व्यपदेशिवद्भावेनाकारस्य नादित्वं, दरिद्राधाताविकारस्य नान्तत्वं, तथा सति वृद्धत्वप्रयुक्तश्छः, इवर्णान्तत्वप्रयुक्तोऽच्प्रत्ययश्च स्यात्। ततोऽत्र न किंचिद्वैषम्यम्। लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठादिव्यवहारो विजातीयकन्यादिसत्त्वे त्वेकस्मिन्नपि तथा व्यवहारो भवत्येवेति बोध्यम्। अत एव हरिष्वित्यादौ सोः पदत्वं न। "निजौ चत्वार एकाच" इति भाष्यं त्वेकस्मिन्नित्यस्यापर्यालोचनयैकदेश्युक्तिरिति तात्पर्यम्।

(१)वस्तुतस्तु पर्युदासेनैवार्थवत्त्वे लब्धे अर्थवद्ग्रहणादत्र सूत्रेऽपि विभक्तीतरा-

ज्योत्स्ना।

अतएवेति। निरुक्तासहाय एव व्यपदेशिवद्भावः प्रवर्तत इति स्वीकारादेवेत्यर्थः। अत एव निरुक्तासहायव्यपदेशिवद्भावप्रवृत्तेरित्यर्थः। पदत्वं नेति। केवलसोः सुबन्ततदादित्वाभावादित्यर्थः। एकस्मिन्नित्यस्यापर्यालोचनयेति। आद्यन्तपर्यालोचनयेत्यर्थः। सम्यक्पर्यालोचनयेति यावत्। एकदेश्युक्तिरिति। एको मुख्यः तस्य देशी स्थानी मुख्यस्थानीय इति यावत्। तथाचैकदेश्युक्तिरित्यस्य सिद्धान्तान्त्युक्तिरिति निष्कृष्टोऽर्थः।

श्रुत्यनुरोधादिति। अव्यक्तो धातुः कः प्रत्ययः किं प्रातिपदिकमिति श्रुत्यनुरोधादिति भावः। तामेव श्रुतिमनुवदति—को धातुरित्यादिना। बहुपटव इत्याद्यर्थमिति।

---

// प्र० ( १ ) वस्तुतस्तु पर्युदासेनैवार्थवत्त्वे लब्धे इति। अत्र मनोरमाकृतोत्तरसूत्रेऽर्थवद्ग्रहणानुवृत्तिसामर्थ्यात् "शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते" इति कैयटोक्तेश्च, एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वरूपमर्थवत्त्वमाश्रितम्। प्रकृतसूत्रे चार्थवत्त्वं वृत्तिमत्त्वसामान्यमभिप्रेतम्। तत्र पूर्वसूत्रे विभिन्नार्थवत्त्वग्रहणे प्रत्ययेष्वतिव्याप्तिः स्यात्। तदर्थं च प्रत्ययपर्युदासकरणे गौरवमात्रमित्यालोच्योभयसूत्रे समानमर्थवत्त्वं वक्तुमुपक्रमते शब्दरत्नकारो वस्तुत इति।

शब्दरत्न ।

(१)नपेक्षयाऽर्थबोधकत्वमर्थवत्त्वं गृह्यते । एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमिदमप्यलौकिके आरोपितमस्तीति दक्ष अस् इ इत्यवस्थायां प्रातिपदिकत्वाक्षतिः । तत्र प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो व्यर्थः । ध्वनितं चेदं प्रत्ययपर्युदासानुक्त्या भाष्ये । "सुप्तिङन्तम्—" ( पा० सू० १।४।१४ ) इति सूत्रस्थभाष्यकैयटयोर-

ज्योत्स्ना ।

आदिना परमगार्ग्यायणः शिवभागवत इत्यादेर्ग्रहणम्, विशिष्टे तद्धितान्ततदादित्वस्य कृदन्ततदादित्वस्य समासत्वस्य चाभावेन उत्तरसूत्रेण स्वप्रवृत्युत्तरकालिकप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साधु इत्युक्तम् । एतेन 'बहुच् पूर्वम्' इत्येव सूत्र्यतामित्येवं शङ्का तत्समाधानं चासङ्गतमिति बोध्यम् ।

विभक्तीतरानपेक्षया लोकेऽर्थबोधजनकत्वमिति । अत्र यद्वक्तव्यं तदुक्तं प्राक् । तथाहि-

---

प० ( १ ) विभक्तीतरानपेक्षयेति । विभक्तिमात्रापेक्षयेत्युक्तौ दध्यादिशब्देऽव्याप्तिः स्यादिति नञ्घटितोक्तिः ।

ननु विभक्तीतरानपेक्षयाऽर्थबोधकत्वमर्थवत्त्वमित्यङ्गीकारे खट्वा, पवित्रमं, सांकूटिनमित्यादौ खट्व, पवित्र, सांकूटिन् इत्यादीनां विभक्तीतरटाबृमबण् समभिव्याहारेणैवार्थबोधकत्वात्तत्त्वं न स्यात् । न च विभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्वाङ्गीकारेण न दोष इति वाच्यम् । एवमपि एधां चक्रे इत्यादावामन्तस्य अनुप्रयुज्यमानकृञादिसमभिव्याहारे एवार्थबोधकत्वेन तस्यार्थवत्त्वाभावेन संज्ञाभावेन स्वाद्यनुत्पत्त्या पदत्वाभावेन 'वा पदान्तस्य' इत्यनेन परसवर्णविकल्पानापत्तेः । तदर्थं प्रत्ययेतरो यः पदेतरस्तत्समभिव्याहारेत्यादिव्याख्याने तु पञ्चनावप्रिय इत्यादौ प्रियरूपपदादितरानपेक्षयार्थबोधकस्य पञ्चनाव इत्यस्य तत्वापत्तेः । इति चेन्न । स्ववृत्तिसमासत्वाभाववत्पदेतरस्य लक्षणे निवेशेन पञ्चनावप्रिय इत्यत्र पञ्चनाववृत्तिसमासत्वाभाववत्त्वस्य प्रियपदेऽभावेन विशेषणाभावप्रयुक्तविशिष्टाभावेन तादृशपदेतरत्वस्य सुलभत्वेन दोषाभावात् ।

नन्वेवमपि तन्निभः, कुम्भकार, एधामासतुः कल्पम्, इत्यादौ निभकारासतुः कल्पमित्यादीनां पूर्वपदसमभिव्याहार एवार्थबोधकत्वात् पञ्चनाव इत्यादिवदर्थवत्त्वानापत्तिः । तद्वारणार्थं पूर्वपदेतरत्वस्यापि निवेशे तु हरिभ्यामित्यादौ सुपोऽपि तत्त्वापत्तिः । नच समासावयवपूर्वपदेतरत्वस्यैव निवेशे नोक्तदोष इति वाच्यम् । पञ्चनावप्रियपुत्र इत्यादौ प्रियशब्दस्य समासावयवपूर्वपदेतरत्वाभावेन पञ्चनावेत्यस्यार्थवत्वापत्तेः । तदर्थं नियतपूर्वत्ववत्सुबन्तस्यैव लक्षणीयपूर्वपदशब्देन विवक्षणे तु कनलुवन्तचञ्चाशब्दात्सुपि चञ्चास्वित्यादौ सुपोऽप्यर्थवत्त्वापत्तेः । इति चेन्न । प्रत्यय—स्ववृत्तिसमासत्वाभाववत्पद—स्वादिभ्वितिपदत्वानाश्रयनियतपूर्वत्ववत्सुबन्तेतत् त्रितयेतरसमभिव्याहारानपेक्षयार्थबोधकत्वमित्युक्तौ दोषाभावात् । चञ्चास्वित्यादौ दोषवारणाय स्वादिभ्वितिपदत्वानाश्रयेति, पञ्चनावप्रियपुत्र इत्यादिषु दोषवारणाय नियतपूर्वत्ववदिति च विशेषणं बोध्यम् ।

ज्योत्स्ना।

विभक्तिमात्रापेक्षया इत्युक्तौ दध्यादिशब्देऽव्याप्तिः स्यादिति नञ्घटितोक्तिः। ननु विभक्तितरानपेक्षयाऽर्थबोधकत्वमर्थवत्वमित्यङ्गीकारे खट्वा पक्त्रि, सांकूटिनम्, इत्यादौ खट्व पक्त्रि सांकूटिन् इत्यादीनां विभक्तीतरटाब् मवण्समभिव्याहारेणैवार्थबोधकत्वात्तत्वं न स्यात्। न च विभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्वाङ्गीकारेण न दोष इति वाच्यम्। एवञ्च एधाञ्चक्रे इत्यादावामन्तस्य अनुप्रयुज्यमानकृञादिसमभिव्याहारे एवार्थबोधकत्वेन तस्यार्थवत्वाभावेन संज्ञाभावेन स्वाद्यनुत्पत्या पदत्वाभावेन "वा पदान्तस्य" परसवर्णविकल्पानापत्तेः। तदर्थं प्रत्ययेतरो यः पदेतरस्तत्समभिव्याहारेत्यादि व्याख्याने पञ्चनावप्रिय इत्यादौ प्रियरूपपदादितरापेक्षया अर्थबोधकस्य पञ्चनाव इत्यस्य तत्वानापत्तेरिति चेत्? न। स्ववृत्तिसमासाभाववत्पदेतरस्य लक्षणे निवेशेन पञ्चनावप्रिय इत्यत्र पञ्चनाववृत्तिसमासत्वाभाववत्वस्य प्रियपदे अभावेन विशेषणाभावप्रयुक्तविशिष्टाभावेन तादृशपदेतरत्वस्य सुलभत्वेन दोषाभावात्। नन्वेवमपि तन्निभः कुम्भकारः एधामासतुःकल्पमित्यादौ निभकारासतुःकल्पमित्यादीनां पूर्वपदसमभिव्याहार एवार्थबोधकत्वात् पञ्चनावइत्यादिवदर्थवत्वानापत्तेः। तद्वारणार्थं पूर्वपदेतरत्वस्यापि निवेशे तु हरिषु इत्यादौ सुपोऽपि तत्वापत्तिः। नच समासावयवपूर्वपदेतरत्वस्य निवेशेनोक्तदोष इति वाच्यम्। पञ्चनावप्रियपुत्र इत्यादौ प्रियशब्दस्य समासावयवपूर्वपदेतरत्वाभावेन पञ्चनावेत्यस्यार्थवत्वापत्तेः। तदर्थं नियत-पूर्वत्ववत्सुबन्तस्यैव लक्षणीयपूर्वशब्देन विवक्षणे तु कन्लुबन्तचञ्चाशब्दात् सुपि चञ्चासु इत्यादौ सुपोऽप्यर्थवत्वापत्तेः। इति चेत्? न। प्रत्ययस्ववृत्तिसमासत्वाभाववत्पदस्वादिष्वितिपदत्वानाश्रयनियतपूर्वत्वात्सुबन्तैतत् त्रितयेतरसमभिव्याहारानपेक्षयाऽर्थबोधकत्वमित्युक्तौ दोषाभावात्। चञ्चासु इत्यादौ दोषवारणाय स्वादिष्वितिपदत्वानाश्रयेति। पञ्चनावप्रियपुत्र इत्यादौ दोषवारणाय नियतपूर्वत्ववदिति च विशेषणं बोध्यम्।

अत्र मनोरमाकर्तुरेवाभिमतम्—उत्तरसूत्रेऽर्थवद्ग्रहणाद्नुवृत्तिसामर्थ्यात् लौकिकार्थत्वप्रत्यासन्नोऽभिव्यक्तो योऽर्थः प्रत्ययान्तेषु लक्षते स आश्रीयते इति कैयटोक्तेश्च। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वरूपमर्थवत्वं गृह्यते। प्रकृते च वृत्तिमत्वमर्थवत्वमाश्रितम्। ;तत्र पूर्वसूत्रे भिन्नार्थवत्वस्वीकारे प्रत्ययेऽतिव्याप्तिः स्यात्। तदर्थञ्च प्रत्ययपर्युदासकरणे गौरवमात्रमित्यालोच्य उभयसमानमेवार्थवत्वमिति वक्तुं प्रक्रमते—वस्तुतस्त्वित्यादिना। इति शब्दरत्नकृन्मतम्।

परेतु—दधि मधु इत्यादौ तु सुब्विभक्त्यानुसन्धानं विनैव वैयाकरणमते शाब्दबोधस्य जननात् तत्रार्थवत्वसम्पत्तये विभक्तिसमभिव्याहारापेक्षयेति विहाय विभक्तीतरसमभिव्याहारानपेक्षयेत्युक्तम्। अत्र विभक्तौ चिकीर्षितप्रातिपदिकसंज्ञाफल-

ज्योत्स्ना।

भूतत्वं निवेशनीयम्। अत एव राज्ञः पुरुषावित्यादौ राज्ञः पुरुष इत्यस्य नार्थवत्त्वम्। चिकीर्षितप्रातिपदिकसंज्ञाफलभूतविभक्तीतर औ इत्येतत्समभिव्याहारापेक्षस्यैव राज्ञः पुरुष इति समुदायस्यार्थबोधकत्वात्। न च समासकृतनियमेन न दोष इति वाच्यम्। पुरुष इत्युत्तरभागस्य स्वातन्त्र्येण लौकिकप्रयोगार्हार्थवत्त्वस्याभावात्। न च खट्वा पक्त्रिमम् इत्यादौ टाप्रकृतेः मप्प्रकृतेश्चार्थवत्त्वं न स्यात्। चिकीर्षितप्रातिपदिकसंज्ञाफलभूतविभक्तीतरटाप् मप् समभिव्याहारापेक्षयैव लोकेऽर्थबोधकत्वादिति वाच्यम्। विभक्तीपदं प्रत्ययमात्रोपलक्षणमिति स्वीकारेणादोषात्। नचैवमपि एधाञ्चक्रे इत्यादौ एधामित्यस्यार्थवत्त्वं न स्यादेतत्संज्ञाफलभूतप्रत्ययेतर चक्रे समभिव्याहारापेक्षयैव एधामित्यस्य लोकेऽर्थबोधजनकत्वात्। नच एधामित्यस्य प्रातिपदिकत्वाभावेऽपि न क्षतिः। एधामिति मान्ते पदत्वाभावेन "मोऽनुस्वारः" इत्यस्याप्रवृत्तावपि "नश्चापदान्तस्य झलि" इत्यनेनानुस्वारस्य सिद्धत्वादिति वाच्यम्। "तिङ्ङतिङः" इतिनिघातार्थमेधामित्यस्य पदत्वस्वीकारात्। न च लक्षणे पदेतरत्वस्यापि निवेशान्न दोषः। अत एव तन्निभः कुम्भकारः इत्यादौ निभकारादीनामर्थवत्त्वं सिद्ध्यति। अन्यथा 'अभिसङ्काशनीकाश' इति कोशेन "उपपदमतिङ्" इति शास्त्रेण च पूर्वपदसत्त्वे एव निभकारादीनामर्थबोधजनकत्वादर्थवत्त्वं न स्यादिति वाच्यम्। पञ्चगवधन इत्यत्र पञ्चगवेत्यस्य प्रातिपदिकत्वापत्तेरिति चेन्मैवम्। एतत्संज्ञाफलभूतप्रत्ययेतरत्ववत् स्ववृत्त्येकार्थीभावाभाववत्पदेतरत्वस्यापि निवेशेनादोषात्। न च तन्निभः कुम्भकारः इत्यादौ पूर्वपदेतरत्वस्यापि निवेशेनादोषात्। न च हरिषु इत्यादौ सोरर्थवत्त्वं दुर्वारमिति वाच्यम्। पदपदेन सुप्तिङन्तान्यतरस्यैव ग्रहणेनादोषात्। नच कन्लुबन्तचञ्चाशब्दात्सुपि चञ्चासु इत्यादौ सुइत्यस्यार्थवत्त्वं दुर्वारमिति वाच्यम्। स्वादिष्विति पदत्वानाश्रयत्वइत्यस्य पूर्वपदे विशेषणदानेनादोषात्। न च एधाञ्चक्रेतरामित्यादौ एधामित्यस्य न स्यात्। चक्रे इत्यस्य स्वादिष्विति पदत्वाश्रयत्वस्य सत्वादिति वाच्यम्। इष्टापत्तेः।

न च एधामित्यस्य पदत्वाभावात् "मोऽनुस्वारः" इति न स्यादिति वाच्यम्। "नश्चापदान्तस्य" इत्यनेन तत्सिद्धेः। न च एधाञ्चक्रे इत्यादावपि उक्तदिशा दोषाभावादेव सिद्धेः। एधामित्यस्यार्थवत्त्वाय पदेतरत्वनिवेशो व्यर्थ इति वाच्यम्। "तिङ्ङतिङः" इति निघातार्थम् एधामित्यस्यार्थवत्त्वपदत्वयोः प्रकल्पकत्वात्। अत एव एधामासतुःकल्पमित्यादौ आसतुःकल्पमित्यस्यार्थवत्त्वं सिद्ध्यति। तथाच–एतत्संज्ञाफलभूतप्रत्ययस्वादिष्विति पदत्वानाश्रयपूर्वपदस्ववृत्त्येकार्थीभावाभाववत्पदएतदन्यतमेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वमिति फलितम्।

नचैवमपि 'अप्रत्यय इति किं, अपिकाकः श्येनायते, नैतदस्ति प्रयोजनम्' अधातुरि-

इत्येव सूच्यतामिति वाच्यम् । मूलकेनोपदंशमित्यादौ कृदन्तत्वेनातिप्रसङ्गात् । न च समासग्रहणं नियमार्थमिति निस्तारः । अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगादिति दिक् ।

"कृत्तद्धितसमासाश्च" ॥ 'अर्थवत्' इत्यनुवर्तते । तत्सामर्थ्यात्तदन्तविधिः । न हि जहत्स्वार्थायां वृत्तौ कृतां तद्धितानां चार्थोऽस्ति । भूतपूर्वगतिलभ्यस्तु न प्रशस्तः । अजहत्स्वार्थायामपि न प्रत्ययमात्रेणार्थपर्यवसानमि-

शब्दरत्न ।

त्यत्रैव तात्पर्यमिति बोध्यम् । इत्याद्यर्थमिति । अन्यथा विभक्त्यन्तस्योदात्तता स्यात् । प्रातिपदिकत्वे तु पूर्वं विभक्तिलुकि टकारोकारस्योदात्तत्वे पुनर्जसि टकाराकारोदात्तत्वसिद्धिरिति भावः । कृदन्तत्वेनेति । न च समासविकल्पविधानस्य वैयर्थ्यम् । समासे एकस्वरश्रवणं समासाभावे प्रातिपदिकत्वे तु पूर्वोत्तरपदयोर्भिन्नस्वरश्रवणमिति विशेषात् । दधि उपदंशमित्यादौ पक्षे प्रकृतिभावप्रवृत्तेरपि फलस्य वक्तुं शक्यत्वाच्च ।

तत्सामर्थ्यादिति । अन्यथा संज्ञाविधित्वान्न स्यात् । न प्रत्ययमात्रेणेति । प्रकृतेरपेक्ष-

ज्योत्स्ना ।

तिपर्युदासो भविष्यति'इति भाष्यविरोधः । श्येनायेत्यस्य निरुक्तेतरतिङ्समभिव्याहारेणैव अर्थविषयकबोधजनकत्वादिति वाच्यम् । तिङितरत्वस्यापि लक्षणे निवेशेनादोषात् । अत्रार्थविषयकबोधजनकत्वम् अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वं बोध्यम् । एतेन स्वरूपयोग्यतारूपजनकताया ग्रहणे उमाधववस्कमाधवादीनामपि अर्थवत्वापत्तिः । फलोपधायकतारूपजनकताग्रहणे च यादृशपदात् शक्तिज्ञानाद्यभावदशायां बोधो न जातस्तस्यार्थवत्वं न स्यादित्यपास्तम् । अत्र समासकृतनियमपरभाष्यप्रामाण्येन प्रत्येकस्मात् समुदायेऽतिरिच्यते । समुदायात् प्रत्येकमतिरिच्यते इतिस्वीकारात् प्रत्येकमपर्याप्तस्य समुदाये पर्य्याप्तसम्भवात् धनं वनं इत्यादौ प्रतिवर्गं संज्ञा स्यादिति नापादनीयम् । न च प्रतियोग्यवृत्तिधर्म एवानुयोगितावच्छेदको भवतीति धातुभिन्नमर्थवदित्यसङ्गतम् । अत एव 'घटो न द्रव्यमित्यादयः प्रयोगा न भवन्तीति वाच्यम् । अभावविधेयकस्थलस्य तादृशविषयत्वात् । अत एव अघटं द्रव्यमानय इत्यादयः प्रयोगाः सङ्गच्छन्ते ।

वस्तुतस्तु—प्रतियोग्यवृत्तिधर्मस्यानुयोगितावच्छेदकत्वेऽपि अन्वयितावच्छेदको भवत्येवेति नायं दोष इति दिक् ॥

अन्यथेति । बहुच्पूर्वस्य प्रातिपादिकत्वाभावादित्यर्थः । सिद्धिरिति । 'चितः प्रकृतेर्ग्रहणं बह्वकजर्थम्' इति वार्तिकादिति भावः ।

तत्सामर्थ्यादिति । अनुवृत्तिसामर्थ्येन लब्धैकार्थालौकिके प्रयोगे प्रसिद्धत्वरूपप्राश-

त्यभिप्रेत्याह—कृत्तद्धितान्ताविति । लिट्, धुक्, इत्यादौ 'अधातुः' इति, कर्तेत्यादौ अप्रत्ययान्तमिति पर्युदासे प्राप्ते कृदन्ते विधिरयं नियमार्थमिति । न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम् । वाक्यस्याप्रत्ययान्तत्वात् । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः' एव ग्रहणात् ।

ननु स्त्रीप्रत्यये तदादिनियमो निषिद्धः । एवं च राजकुमारीत्यादौ विध्यर्थमस्त्विति चेन्मैवम् । अन्तरङ्गस्यापि हल्ङ्यादिलोपस्य लुग्विषये ऽप्रवृत्त्या-

शब्दरत्न ।

णादिति भावः । अधातुरिति । कर्तृरूपार्थस्याधिक्यस्य भानेऽपि क्रियावाचकत्वाक्षत्या धातुत्वाक्षतेरिति भावः ।

स्त्रीप्रत्यये इति । अनुपसर्जनस्त्रीप्रत्यय इत्यर्थः । तस्य येन केनापि रूपेण ग्रहणे तन्निषेध इत्यभिमानः शङ्कितुः । राजकुमारीति । नन्वत्र प्रातिपदिकत्वस्य न फलं लिङ्गविशिष्टपरिभाषयैव तत्कार्यसिद्धेरिति चेन्न । प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽनयाऽतिदेशेन तस्या अत्राप्रवृत्तेः । न हि ङीब्रहिते राजकुमारेत्यादौ तदस्ति, ङ्याब्ग्रहणं त्वन्यार्थमिति वक्ष्यते । शङ्कित्र-

ज्योत्स्ना ।

स्त्वं गृह्यते, तादृशप्राशस्त्यार्थवत्वस्य केवलकृत्तद्धिते व्युत्पत्तेरभावादिति भावः । जहत्स्वार्थायामिति । जहति स्वं अर्थं वर्तिपदार्थं, या वृत्तिः, सा जहत्स्वार्था इत्युच्यते । यथा—रथन्तरम् अक्षौहिणीत्यादि । कृत्तद्धितान्ताविति । कृदन्तं तद्धितान्तं —यदर्थवत् कृद्यस्माद्विहितः, तद्धितश्च यस्माद्विहितः तदादित्वविशिष्टं च तदित्यर्थः ।

क्रियावाचकत्वाक्षत्येति । स्वावच्छिन्नविषयकबोधतात्पर्येणोच्चारितत्व स्वावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणघटितत्व स्वावच्छिन्नेतरनिरूपितशक्तिपर्य्याप्त्यधिकरणघटितत्व एतन्त्रितयसम्बन्धेन क्रियात्वविशिष्टत्वरूपक्रियावाचकत्वस्याक्षतेरित्यर्थः । अत्र च मानं "दादेर्धातोर्घः" इत्यनेन पदान्ते घत्वविधानम् ।

अप्रत्ययान्तत्वादिति । प्रत्ययान्ततदादित्वभिन्नत्वादित्यर्थः । लुग्विषय इति । अन्तरङ्गनिमित्तविनाशकलुग्विषय इत्यर्थः । अत एवाङ्गानतिक्रान्तो अत्यङ्ग इत्यादौ बहुवचने तद्राजस्येति लुकि अन्तरङ्गत्वात्सुप्लुकि तद्राजस्येति लुङ् न स्यादिति भाष्योक्तं संगच्छते । तद्राजलुकि सुब्लुङ्निमित्तविनाशकत्वाभावेन सुब्लुकि तद्राजलुङ्निमित्तविनाशभूतेन तया परिभाषया सुब्लुक एव प्रवृत्तेः । अत एव 'उर्णुहि' इत्यादौ "उतश्च प्रत्ययात्" इति हेर्लुगभावः । एकपुत्रीत्यादौ समासप्रयुक्तान्तोदात्तत्वं च सिद्ध्यति । अन्यथा पूर्वं लुकि समासे पश्चान्ङीपि नित्वादाद्युदात्तत्वं च स्यात् ।

अभिमान इति । तथाचेयं शङ्का न युक्तेति बोध्यम् । तदिति । प्रातिपादिकत्वमिति तदर्थः । अस्तीति । राजकुमारीघटकराजकुमारेत्यस्य प्रातिपदिकत्वं नास्तीत्यन्वयः ।

श्रूयमाण एव सुपि समासप्रवृत्तेः। तत्र चाप्रत्ययान्तत्वेन प्रवृत्ताया: संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात्। अत एव गोमत्प्रिय इत्यादौ नुमादयो न। लुकः प्रागन्तरङ्गप्रवृत्तौ तु स्युरेव।

नन्वेवमपि असमर्थसमासे दशदाडिमादिवदनर्थके विध्यर्थमस्त्विति चेन्न। "अर्थवत्" इत्यस्यानुवृत्तेरुक्तत्वात्। कथं तर्हि असमर्थसमासे संज्ञेति चेद्धर्मिग्राहकमानादेवेति गृहाण। "असूर्यललाटयोः–" ( पा० सू० ३।२।३६ )

शब्दरत्न।

भिमानानुसारेणैवोत्तरयति–अन्तरङ्गस्यापीति। सुलभत्वादिति। यथोद्देशे इदम्। यदित्वस्य निषेधस्य प्रत्ययग्रहणपरिभाषाशेषत्वं, एवं च यथा सा प्रत्ययग्रहणे एव न तु प्रत्ययाप्रत्ययग्रहणे इति "उगितश्च" ( पा० सू० ४।१।६ ) इति सूत्रे भाष्ये स्पष्टं, तथाऽयं निषेधोऽपि स्त्रीप्रत्ययमात्रग्रहणे(१) न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे इत्युच्यते तदा न दोषः। समुदायस्य प्रत्ययान्तत्वाभावादिति दिक्।

असमर्थसमासे इति। असूर्यंपश्या इत्यादावित्यर्थः। धर्मिग्राहकेति। प्रातिपदिकसंज्ञा(२) धर्मः, तद्धर्मी असमर्थसमासः, ग्राहकं मानं खश्विधायकम्। अन्यथा परस्पर-

ज्योत्स्ना।

न तु प्रत्ययाप्रत्ययग्रहण इति। अत एव सर्वादिघटिताद्वत्वच्छब्दात् भवतीत्यत्र "उगितश्च" इति ङीप् भवति।

स्त्रीप्रत्ययमात्रग्रहण इति। 'उत्सर्गसमानदेशा अपवादा' इति न्यायादिति भावः। स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे इति। अत एव "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वं सिद्ध्यति। परमशार्ङ्गरवीत्यादौ नेति न दोष इति। अर्थवत्सूत्रे प्रत्ययपदस्य स्त्रीप्रत्ययास्त्रीप्रत्ययबोधकत्वेन तत्परिभाषाया अप्रवृत्तेरिति भावः।

अत एवेति। अन्तरङ्गनिमित्तविनाशकलुक्तत्प्रयोजकसमासादिकं च पूर्वं प्रवर्त्तत इति भावः।

धर्मिग्राहकमानादेवेति। धर्मी असमर्थसमासः तद्ग्राहकं मानं प्रमाणम् "असूर्यललाटयोः" इति। तस्मादेव ज्ञापकादिति भावः।

---

प्र० ( १ ) न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे। एतदग्रे 'अत एव घटोऽस्ति हे युवते' इत्यादौ तद्धितान्तत्वेन न प्रातिपदिकत्वम्'। इति पाठः क्वचिद् दृश्यते।

वि० ( २ ) "कृत्तद्धितसमासाश्च" इति सूत्रीयप्रातिपदिकसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यता समाससंज्ञावन्निष्ठा, तदवच्छेदकता समाससंज्ञानिष्ठेति तादृशावच्छेदकतावत्त्वम् असूर्यशब्दे इति भावः।

इत्यनेन हि असूर्यशब्दे उपपदे खश् विधीयते । उपोच्चारितं पदं चोपपदम् । पदं च "सुप्तिङन्तम्" ( पा० सू० १।४।१४ ) इति । नियमशरीरमाह—यत्र संघाते इत्यादि । पूर्वो भाग इत्युपलक्षणम् । उत्तरस्तु प्रत्ययो नेत्यपि बोध्यम् । अन्यथा जन्मवानित्यादौ संज्ञा न स्यात्तद्धितग्रहणस्य औपगवादौ कृतार्थत्वात् । पूर्वो भागः पदमिति किम् ? बहुज्रिशिष्टस्य प्रातिपदिकसंज्ञा

---

शब्दरत्न

सम्बन्धेनैकार्थीभावाभावात्समासो दुर्लभः स्यात् । असूर्यशब्द इति । तत्प्रकृतिके सुबन्त इत्यर्थः । सुपीत्यधिकारात्, उपपदमिति महासंज्ञाकरणाच्च । तदेतदाह—पदं चेत्यादि । शशशृङ्गादिपदानां च बौद्धे तस्मिन् शक्तिरिति न तदर्थमपि समासग्रहणमिति बोध्यम् । यत्र संघाते इतीति । अर्थवतीति शेषः । सजातीयापेक्षनियमस्यौचित्यादिति बोद्धव्यम् । प्रत्ययो नेत्यस्य पूर्वभागप्रकृतिकप्रत्ययो नेत्यर्थः । तेन राजा इयानित्यादौ

ज्योत्स्ना ।

तत्प्रकृतिके सुबन्त इति । तत्प्रकृतिको यः सुप् तदन्त इत्यर्थः ।

बौद्धे तस्मिन्निति । ज्ञानमात्रं प्रति विषयस्य कारणत्वेन स्वप्नभ्रमाद्युपपत्तये बौद्धपदार्थकल्पनाया आवश्यकत्वादिति भावः । तदर्थमिति । निरर्थकशशशृङ्गाद्यर्थमिति तदर्थः ।

नियमस्थले सर्वत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे संकोचस्यावश्यकत्वादाह—नियमशरीरमाहेत्यादिना ।

अत्र नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपावच्छिन्नातिरिक्तत्वेन सङ्कोचो न भवति । नियामकशास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वादिव्यापकार्थवत्त्वशब्दत्वावच्छिन्नातिरिक्तत्वस्यार्थवति बाधात् । नियामकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूपावच्छिन्नातिरिक्तत्वेन संकोचे तु स्नुषाश्वश्रुन्यायप्रसङ्गपातादित्युक्तरूपावच्छिन्नातिरिक्तत्वेनावश्यकः सङ्कोचः । तथाच पदपूर्वावयवकसमुदायत्वनियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकत्वं नियम्यशास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वव्याप्यं च वर्तते इति पदपूर्वावयवकसमुदायत्वावच्छिन्नातिरिक्तत्वेनार्थवत्पदार्थे सङ्कोच इति बोध्यम् ।

अर्थवतीतिशेष इति । अत एवार्थवदिसूत्रेऽर्थवदित्यस्य व्यावर्त्यत्वेन दशदाडिमानीति निरर्थकपदसमुदायो भाष्योक्तः सङ्गच्छते । अन्यथा समासकृतनियमेन वारणसम्भवात्तदसङ्गतिः स्पष्टैव । मम तु—यस्मिन्नर्थवति पूर्वो भागः पदमित्याद्युक्त्याऽनर्थकसंघातेऽर्थवत्त्वाभावान्नियमाप्राप्त्या न दोष इति दिक् ।

उत्तरस्तु प्रत्ययो नेति । अनेन क्वाचित्कोऽयं पाठः कौमुद्यां प्रक्षिप्त इति बोध्यम् ।

यथा स्यात्। तेन बहुपटव इत्यत्र प्रथमजसो लुकि बहुपटुशब्दस्य चित्स्वरे पुनर्जसि उपोत्तमोदात्तत्वं सिद्ध्यति।

यद्वा(१) (२)प्रकृतिप्रत्ययभावानापन्नसङ्घातविषयको नियमोऽस्तु। न

शब्दरत्न।

न दोषः। जन्मवानित्यादाविति। तत्र पूर्वभागस्य पदत्वादिति भावः। ननु तद्धितग्रहण-सामर्थ्यं तत्राह-तद्धितेति। तत्र पूर्वभागस्य भत्वात्पूर्वो भागः पदमित्यत्र च पदशब्देन पदसंज्ञकग्रहणमिति भावः।

नन्वत्र पक्षे गवित्ययमाहेत्यादौ दोषः। गो इत्यादीनां सुबन्तत्वाभावेन पदत्वाभावात्। वृषण्वसुरित्यादिसमासे पूर्वभागस्य भत्वेन तत्साजात्येन पूर्वो भागः। पदमित्यर्थलाभासम्भवश्चेत्यत आह—यद्वेति। प्रकृतसूत्रे भाष्ये तु अर्थवत्समुदायानां समा-

ज्योत्स्ना।

तेनेति। उत्तरस्य पूर्वभागप्रकृतिकप्रत्ययो नेत्युक्तत्वेनेत्यर्थः। तस्य फलमाह—राजा इयानिति। अत्र वतुप् इदंशब्दप्रकृतिको न तु राजन्शब्दप्रकृतिकः इति दोष इति बोध्यम्।

ननु वृषण् वसुरित्यादौ समासलक्ष्यसत्त्वेन "वृषण्वस्वश्वयोः" इति भत्वात् पदपूर्वकसमुदायत्वस्याभावात् नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकत्वं पदपूर्वावयवकसमुदायत्वेनास्तीति स्वीकृत्याह—नन्वत्रेत्यादिना। दोष इति। गवित्ययमाहेत्यादौ पदपूर्वावयवकसमुदायत्वस्य सत्वेन नियमशरीरानाक्रान्तत्वात्तत्र वाक्यस्य संज्ञायाः दुर्वारत्वादिति भावः।

अर्थवत्समुदायानामिति। अर्थवतोरर्थवतां च यः समुदायः अर्थवत्समुदायः। अर्थवांश्चासौ समुदायश्चार्थवत्समुदायः तेषां सर्वेषामेकशेषेण निर्देशः। तथाच—अर्थवत्पूर्वावयवकोऽर्थवदुत्तरावयकोऽर्थवांश्च, तस्य चेत्समासस्यैवेति नियमशरीरमादधाति। तदेवाभिप्रेत्याह—अत्र तन्त्रेणेत्यादिना।

प्रकृतिप्रत्ययभावानापन्नसंघातविषयक इति। प्रकृतिप्रत्ययभावापन्नत्वं च प्रत्ययविशि-

वि० (१) प्रत्ययविशिष्टत्वं प्रकृतिप्रत्ययभावानापन्नत्वम्। वै० स्वान्तत्व स्वविशिष्टघटितत्व स्वविशिष्टाघटितत्व एतत्त्रितयसम्बन्धेन। वै० स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्व, स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व, एतदन्यतरसम्बन्धेन। स्वाघटकत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाघटकत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावानाश्रयत्व, स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयाघटकत्व, एतच्चतुष्टयसम्बन्धेन। लक्षणसमन्वयस्तु विस्तारभयान्नेह तन्यते।

प्र०(२) प्रकृतिप्रत्ययभावानापन्नसंघातेति। प्रकृतिप्रत्ययभावानापन्नानां संघात इत्यर्थः। नन्वेवं बहुपटव इत्यादेः समासग्रहणकृतनियमेनावारणेऽपि परमगार्ग्यायण इत्यादेर्वारणं स्यादेव, तथा च

शब्दरत्न ।

सग्रहणं नियमार्थमित्युक्तम् । अत्र तन्त्रेण(१) षष्ठीतत्पुरुषः कर्मधारयश्च,तत्र षष्ठीसमासे अर्थवदित्यस्य स्वातन्त्र्येणापि प्रयोगार्हार्थवदित्यर्थः । गवित्ययमित्यादावनुकरण-

ज्योत्स्ना ।

ष्टत्वम्-वैशिष्ट्यं च । स्वघटितत्वं स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व स्व-विशिष्टाघटितत्व एतत्त्रितयसम्बन्धेन । विशिष्टवैशिष्ट्यं च । स्वघटकत्व स्वनिष्ठविधेय-तानिरूपितोद्देश्यताश्रयाघटकत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यतासमानाधिकरणोद्देश्य-तानिरूपितविधेयताश्रयप्रत्ययाघटकत्व स्ववृत्त्येकार्थीभावाभाववत्समासाघटकत्व एत-च्चतुष्टयसम्बन्धेन । अत्र प्रथमसम्बन्धोपादानेन केवलप्रकृतेः प्रकृतिप्रत्ययभावापन्न त्वम् । द्वितीयसम्बन्धेन केवलप्रत्ययस्य, तृतीयसम्बन्धदानान्नवाक्यस्य तत्वम् । तृ-तीयसम्बन्धघटक प्रथमद्वितीयसम्बन्धयोः दानात् रामस्तु इत्यस्य न प्रकृतिप्रत्ययभा-वापन्नत्वभङ्गः । तथैव तृतीयसम्बन्धदानात् बहुपटव इत्यस्य न प्रकृतिप्रत्ययभावापन्न-त्वस्य क्षतिः । नचैवं चतुर्थसम्बन्धदानात्परमगार्ग्यायणः इत्यादेः प्रकृतिप्रत्ययभावा-पन्नत्वं सिद्ध्यतीति दिक् ।

अत्र तन्त्रेण षष्ठीतत्पुरुषः कर्मधारयश्चेति । तत्र अर्थवन्तश्च ते समुदायाश्चेति कर्मधारयाश्रयणेन दशदाडिमानीत्याद्यनर्थकसमुदायानां नियमेन न व्यावृत्तिः । इति पूर्वसूत्रस्यार्थवद्ग्रहणव्यावर्त्यत्वं तेषां भाष्योक्तं सङ्गच्छते । तथा षष्ठीस-

तस्य 'अर्थवत्' सूत्रेणेष्टं प्रातिपदिकत्वं न स्यादिति चेन्न । प्रत्ययविशिष्टत्वं तत्त्वमिति स्वीकारेणा-दोषात् । वैशिष्ट्यं च स्वान्तत्वं, स्वेतर—स्वप्रकृतीतर—स्वान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतर-स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावाश्रयेतरार्थवद्घटितत्वमित्युभयसम्बन्धेनेति । तथा च परमगार्ग्यायण इत्यत्र फक्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकैकार्थीभावाश्रयत्व-मेव परमशब्दस्य न तु तदितरत्वमिति तादृशेतरघटितत्वाभावान्न प्रकृतिप्रत्ययभावावापन्नसङ्घा-तत्वं परमगार्ग्यायणशब्दस्येति न दोषो भवति । बहुपटवइत्यस्य तत्त्ववारणाय स्वान्तनिष्ठोद्देश्य-तानिरूपितविधेयताश्रयेतरेति विशेषणम् । अन्यविशेषणयोः सार्थक्यं स्वयमूहितुं शक्यमेवेत्यलम् ।

प्र० ( १ ) अत्र तन्त्रेण षष्ठीतत्पुरुषः कर्मधारयश्चेति । तत्र अर्थवन्तश्च ते समुदायाश्चेति कर्म-धाराश्रयणेन दश दाडिमानीत्याद्यनर्थकसमुदायानां नियमेन न व्यावृत्तिरिति पूर्वसूत्रस्यार्थवद्ग्रह-णव्यावर्त्यत्वं तेषां भाष्योक्तं सङ्गच्छते । तथा षष्ठीसमासेऽर्थवदित्यस्य स्वातन्त्र्येण प्रयोगार्हार्थ-वदुपलक्षणत्वात् स्वातन्त्रेण प्रयोगार्हार्थवत्पूर्वावयवकः तादृशार्थवदुत्तरावयवकोऽर्थवांश्च यः समुदा-यस्तस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमाकारः सिद्धः । उत्तरावयवस्यापि तादृ-शार्थवत एव ग्रहणात्पुत्रकाम्येत्यादौ न दोषः । तत्र हि 'अप्रत्ययात्' इति सूत्रविहितस्य अप्रत्य-यस्य पुत्रकाम्येत्यनेन सह सामर्थ्यात्केवलकाम्यशब्देन सहैकार्थीभावान्नोत्तरावयवस्योक्तार्थव-त्त्वमस्तीति ।

चाद्यपक्षे राजपुरुषावित्यादौ पुरुषावित्यादेः संज्ञा स्यादिति वाच्यम्। अर्थवत्त्वेनैव वारणात्। प्रत्ययार्थो हि विशिष्ट एवान्वेति, न तूत्तरपदार्थमात्रे येन पुरुषावित्यस्यार्थवत्त्वं स्यात्। नियमफलमाह—तेनेत्यादि।

नन्वेवमपि मूलकेनोपदंशमित्यादौ वाक्यस्य संज्ञा दुर्वारा। 'कृद्ग्रहणे

शब्दरत्न।

स्यानितिपरस्यापि प्रयोगसत्त्वेन तत्त्वमस्त्येव। प्रकृतिप्रत्ययसमुदायस्य तु न व्यावृत्तिः। प्रत्ययस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वा(१)भावात्। "सरूप" (पा० सू० १।२।६४) सूत्रे भाष्ये सुबन्तानामित्यनेनेदमेवोपलक्ष्यते इति स्पष्टमेव कैयटेनोक्तमिति बोद्धयम्। पुरुषावित्यादेरिति। तत्पूर्वभागस्य 'उत्तरपदत्वे च—' इति निषेधेनापदत्वात्। पदस्य तत्प्रकृतिकप्रत्ययत्वाभावादिति भावः। अर्थवत्त्वेनैवेति। उत्तरपदस्य कार्यित्वाभावेन तन्निषेधाप्रवृत्तेश्चेत्यपि बोद्धयम्।

वाक्यस्येति। कृदन्तत्वादिति भावस्तदाह–कृदिति। न चास्य भुजौ करणत्वेनोपदंशं

ज्योत्स्ना।

मासे अर्थवदित्यस्य स्वातन्त्र्येण प्रयोगार्हार्थवदुपलक्षणत्वात् स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकः तादृशार्थवदुत्तरावयवकोऽर्थवांश्च यः समुदायस्तस्य प्रातिपदिकसंज्ञा चेत् तर्हि समासस्यैवेति नियमाकारः, उत्तरावयवस्यापि तादृशार्थवत एव ग्रहणात् पुत्रकाम्येत्यादौ न दोषः। तत्र हि अप्रत्ययादिति सूत्रविहितस्य अप्रत्ययस्य पुत्रकाम्येत्यनेन सह सामर्थ्यात्केवलकाम्यशब्देन सहैकार्थीभावाभावात् नोत्तरावयवस्योक्तार्थवत्त्वमस्तीति।

स्वातन्त्र्येण प्रयोगार्हार्थवदिति। स्यादेतत्। एधाञ्चक्र एधामास मूलकेनोपदंशमित्यादौ एधामित्यस्य आसेत्यस्य उपदंशमित्यस्य च स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वस्य विवक्षणेनात्राप्यदोषात्। परन्त्वयान् विशेषः—तत्र चिकीर्षितप्रातिपदिकसंज्ञाफलभूतेति विभक्तौ विशेषणम्, अत्र तु एतस्याः प्रातिपदिकसंज्ञायाः फलभूता या विभक्तिरिति।

इति भाव इति। नियमशास्त्राणां क्वचिन्निषेधमुखेनापि प्रवृत्तिर्भवतीति स्वीकारेण स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकस्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकोऽर्थवांश्च यः समुदायः तस्य समासातिरिक्तस्य प्रातिपदिकसंज्ञा न भवतीति वाक्यार्थादिति भावः।

अत्रार्थवत्सूत्रस्यार्थवत्पदार्थे स्वातन्त्र्येण प्रयोगार्हार्थवत् पूर्वावयवकस्वातन्त्र्येण

वि० (१) निरुक्तस्वातन्त्र्यभावस्य सत्वेन विशेषणाभावप्रयोज्यविशिष्टाभावस्य तत्र सत्वादिति भावः।

गतिकारकपूर्वस्यापि ग्रहणात्' इति चेन्मैवम्। समासग्रहणकृतनियमेन परत्वाद् बाधात्। एवं च "कृत्तद्धित–" ( पा० सू० १। २।४६ ) इति सूत्रे कृद्ग्रहणपरिभाषा नोपतिष्ठत एव निष्फलत्वादिति तत्त्वम्।

यत्तु वदन्ति—समासग्रहणं न नियमार्थं किं तु विध्यर्थमेव। अर्थवत्त्वं हि वृत्तिमत्त्वम्। वृत्तिश्च द्विधा। शक्तिर्लक्षणा च। न च सा समासेऽस्तीति। अत्रेदं वक्तव्यम्। सिद्धान्ते तावदेकार्थीभावाभ्युपगमाद् वृत्तिर्नास्तीति बाधितमेव। मीमांसकमतेऽपि लक्षणाऽस्त्येव। यदाहुः—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम्॥ इति।

अथ नैयायिकरीत्योच्येत। तदपि न। बहुपटव इत्याद्यसिद्धेः। तद्धितग्रहणं तद्विशिष्टपरमिति चेन्न। पचतकीत्यादावतिव्याप्तेः। किं चैवं कृद्ग्रह-

शब्दरत्न।

प्रति न कारकत्वम्। मूलकस्योपदंशे कर्मत्वेनान्वयो विभक्तिस्तु(१) प्रधानानुरोधिकरणत्वकृता तृतीयैवेति तं प्रत्यपि कारकत्वमित्याशयात्। परत्वाद् बाधादिति। नियमस्यार्थतो निषेधेऽपि तात्पर्येणार्थवत्सूत्रापवादस्यास्य परत्वेन कृदन्तत्वप्रयुक्तस्यापि निषेधे तात्पर्यादिति भावः। निषेधानां (२)बलवत्त्वाच्चेत्यपि बोद्ध्यम्। निष्फलत्वादिति। स्पष्टं चेदं "पुंयोगात्—" (पा०सू० ४।१।४८) इति सूत्रे भाष्यकैयटयोः।

न च समासे इति। नापि वाक्ये इति बोद्ध्यम्। एकार्थीभावेति। एकोपस्थितिनियामिका समुदायशक्तिरेवात्रैकार्थीभाव इति भावः। एवं समासे वृत्तिः सिद्धा। वाक्येऽपि शक्तिरस्ति। विशेषणविशेष्यभावांशे तच्छक्तेरर्थवत् (पा०सू० १।२।४५) सूत्रभाष्यादावुक्तत्वात्। लक्षणेति। वृत्तौ वाक्ये चेति भावः। असिद्धेरिति। समास इव तद्धितेऽपि शक्तिलक्षणयोरभावादिति भावः। पचतकीत्यादाविति। न च पूर्ववर्तित्वोत्तरवर्त्तित्वा-

ज्योत्स्ना।

प्रयोगार्हार्थवदुत्तरावयवमर्थवत्समुदायातिरिक्तत्वेन सङ्कोचं कृत्वा समासः प्रातिपदिकसंज्ञको भवतीति विधिमुखेन प्रवृत्तिर्न युक्ता। मूलकेनोपदंशमित्यादौ कृदन्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया दुर्वारत्वादिति दिक्। तदेतत्सर्वमभिप्रेत्याह—निषेधानां बलवत्त्वाच्चेति। 'निषेधाश्च बलीयांस' इति न्यायादिति भावः।

---

वि० ( १ ) तिङन्तार्थक्रियाः समुदायजन्यशाब्दबोधे विशेष्यतया भानादस्याः प्राधान्यं। 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्शक्तिगुणाश्रया तत्र प्रधानमनुरुध्यते' इति न्यायादिति बोध्यम्॥

प्र० ( २ ) निषेधानां बलवत्त्वाच्चेत्यपि बोध्यमिति। नियमशास्त्राणां विधिमुखेन प्रवृत्तिपक्षे कृत्तद्धितांशे सङ्कुचितार्थकार्थवत्पदानुवृत्त्या न दोष इत्यपि बोध्यम्।

णपरिभाषया मूलकेनोपदंशमित्यादावतिव्याप्तिर्दुर्वारैवेत्यास्तां तावत्। चकारोऽनुक्तसमुच्चयार्थः। तेन 'निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति गतार्थम्। येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्। अवद्यति। अनुकरणेषु तु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम्। "भू सत्तायाम्" इति यथा। भेदविवक्षायां तु संज्ञा स्यादेव। "भुवो वुक्"

शब्दरत्न।

भ्यामेव वैशिष्ट्यं निवेशनीयम्। विनिगमनाविरहेण मध्यवर्तित्वस्यापि ग्रहणापत्तेरित्याशयात्। किं (१)च बहुपटवस्तिष्ठन्तीतिवाक्यस्यापि संज्ञापत्तिः। एवं समाग्रहणस्य नियमार्थत्वाभावे। न चार्थवत्त्वाभावाद्वारणं,न्यायनये उत्तरसूत्रे तदसम्बन्धात्।

ज्योत्स्ना

ननु मीमांसकमते सर्वत्र वाक्यार्थः लक्षणयैव भवतीत्यत्र किं प्रमाणमित्याह— सर्वत्रैव हि इति। बहुपटव इत्यादीति। आदिना परमगार्ग्यायणः शिवभागवत इत्यादेर्ग्रहणम्। असिद्धेरिति। नैयायिकमते बहुपटवः परमगार्ग्यायणः शिवभागवत इत्यादौ शक्तेरभावेन वृत्तिगतत्वरूपार्थवत्वस्याभावादिति भावः।

ननु स्वनिष्ठचरमावयवतानिरूपकत्वस्वनिष्ठाद्यवयवतानिरूपकत्व एतदन्यतरसम्बन्धेन तद्धितपदं तद्धितविशिष्टपरमिति पचतकि इत्यादौ न दोष इत्यरुचेराह—किञ्चेत्यादिना।

मूलकेनोपदंशमिति। देवदत्तो गार्ग्यः बहुपटुः सुन्दर इत्यादावपि देवदत्तो गार्ग्य बहुपटुः सुन्दर इत्यस्य च पूर्वोक्तसम्बन्धद्वयेन तद्धितविशिष्टत्वात्तद्दोषस्याप्युपलक्षणमिदम्। न च समासकृतनियमेन निस्तार इति वाच्यम्।। दशदाडिमानि इत्यादौ समासकृतनियमव्यावृत्तयेऽर्थवत्पूर्वावयवकः अर्थवदुत्तरावयवकश्च यः समुदायः तद्विषयकत्वस्याप्यावश्यकत्वेन देवदत्तो गार्ग्य इत्यत्र बहुपटुः सुन्दर इत्यत्र चार्थवत्वस्याभावेन नियमाप्रवृत्तेस्सामानाधिकरण्यस्थले समानविभक्तिकयोरेव वाक्यशक्तेः स्वीकारात्।

अर्थवत्वाभावादेवेति। सादृश्यज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्य्याप्त्यधिकरणत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्य्याप्त्यधिकरणत्वस्याभावादिति भावः।

संज्ञा स्यादेवेति। भेदविवक्षायां शक्तिज्ञानाधीनोपस्थित्या बोधादिति भावः। ननु 'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायेन प्राधान्येन क्रियाविषयकबोधजनकस्यैव धातुसंज्ञा स्यात्। तथाच लिङ्, धुक् इत्यादौ धात्वर्थस्य कर्तरि विशेषणाधिकार्थभावान्नस्यादित्याह कर्तृरूपार्थस्याधिकस्य भानेऽपि इति।

तदसम्बन्धादिति। न्यायमते समासे तद्धितान्ते कृदन्ते च शक्तेरभावेन वृत्तिमत्व-

प्र० (१) किञ्च बहुपटवस्तिष्ठन्तीति वाक्यस्यापि सज्ञापत्तिरिति। केचित्तु स्वादित्वं स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयान्तत्वमित्युभयवत्त्वं, स्वान्तत्वं स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयादित्वमित्युभयवत्त्वमित्येतदन्यतरसम्बन्धेन तद्धितविशिष्टग्रहणेन न कोऽपि दोष इति वदन्ति।

( पा० सू० ६।४।८८ ) इति यथा ।

लिङ्गविशिष्टस्येति । लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । परिभाषायाः प्रयोजनन्तु अयस्कुम्भी । "अतः कृकमि–" ( पा० सू० ८।३।४६ ) इति सत्वम् । तद्धि कंसादिपूत्तरपदेषु विधीयते । किं च कुमारीमाचष्टे कुमारयति । "णाविष्ठवद्" इति टिलोपः ।

---

शब्दरत्न ।

"तृतीयाप्रभृतीनि–"(पा०सू० २।२।२७) इति तु स्वरे विशेषार्थम् । अभेदविवक्षायामिति । सादृश्यमूलाभेदविवक्षायामित्यर्थः । अनुकरणं च स्वसादृश्येनानुकार्यमुपस्थापयति, तथोपस्थितस्य शाब्दे ऽन्वयप्रतियोगित्वं व्युत्पत्तिवैचित्र्यात् । एवं च वृत्त्यार्थबोधकत्वरूपार्थवत्वाभाव इति भावः । अत एव "भू सत्तायाम्" इत्यादिनिर्देशाः सङ्गच्छन्ते तदाह—भू इति । अपदं न प्रयुञ्जीतेत्यस्यापरिनिष्ठितमित्यर्थः । अस्य चास्मादेव लिङ्गात्परिनिष्ठितत्वम् । भेदविवक्षायामिति । अर्थवच्छब्दोऽपि वृत्तिविषय एवैतत्पक्षे इति भावः । अयं पक्षो "मतौ छः सूक्त–"( ५।२।५९ ) इति सूत्रे भाष्ये । अनयोश्च लक्ष्यानुरोधात् व्यवस्थेति दिक् ।

विशिष्टस्यापीत्यर्थ इति । प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशादिति भावः । स्पष्टं चेदम् "बहुव्रीहेरूधस—" (पा०सू० ४।१।२५) इत्यत्र भाष्ये । इयम् च प्रातिपदिकसामान्यग्रहणे तद्विशेषग्रहणे च तद्ध्वनयन्नाह–अयस्कुम्भीति । किं चेत्यादि । उत्तरपदेष्विति । अत्र च ङ्यन्तमुत्तरपदमिति भावः । टिलोप इति । इदमुपलक्षणम्,

ज्योत्स्ना ।

रूपार्थवत्वस्यासम्भवात् । "कृत्तद्धित" इति सूत्रेऽर्थवदित्यनुवृत्तेः कर्तुमशक्यत्वादिति भावः ।

व्युत्पत्तिवैचित्र्यादिति । शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्योरिव सादृश्यज्ञानाधीनोपस्थित्यापि शाब्दबोधस्यानुभाविकत्वात्तस्यापि कारणत्वं स्वीक्रियत इति भावः ।

अत एवेति । अनुकार्यानुकरणयोरभेदविवक्षायां वृत्त्यार्थबोधकत्वरूपार्थवत्वाभाव इति स्वीकारादेवेत्यर्थः ।

ननु "अपदं न प्रयुञ्जीत" इति नियमाद् भू सत्तायामिति निर्देशोऽनुपपन्न इत्याशङ्क्य समाधत्ते—अपदमित्यादिना ।

लिङ्गबोधकप्रत्ययविशिष्टस्यापीति । वैशिष्ट्यञ्च—स्वघटितत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व स्वविशिष्टाघटित्व एतत्त्रितयसम्बन्धेन । विशिष्टवैशिष्ट्यं च स्वघटकत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटकत्व एतदुभयसम्बन्धेन । प्रथमसम्बन्धदानात्केवलप्रकृतेर्न ग्रहणम् । द्वितीयसम्बन्धदानात्केवलस्त्रीप्रत्ययस्य न ग्रहणम् । तृतीयसम्बन्धदानात्तद्धितरूपग्रहणं बोध्यम् । तदन्यतरसम्बन्धानुपादाने

एवं यामिनयन्त्यहानि इत्यत्र आचारे क्विपि फलम्। ङ्यावभ्यां प्रा-गिति। तेन लोहिनिका आर्यका च सिद्ध्यति। तथा हि स्वार्थिकत्वेनान्तरङ्गः

शब्दरत्न।

पुंवत्त्वस्य णिचश्च। सामान्यग्रहणेऽपि प्रवृत्तैरेवानया परिभाषया ङ्याब्ग्रहणत्रैयर्थ्यं भाष्ये शङ्कितम्। न च दृष्टा माला दृष्टा गौरीति समुदायस्यानुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात् ङ्याबन्तत्वेन ततः सुबुत्पत्त्यर्थं तदस्तु। लिङ्गविशिष्टपरिभाषया तु नात्र सिद्धिः। ङ्याब्रहितस्य(१) दृष्टामाल इत्यादेः समुदायस्य प्रातिपदिकत्वाभावेन तदतिदेशाप्रवृत्तेः। एवं चाम् दृष्टा माला देवदत्तेत्यादावेकपदान्तरितत्वेनैकान्त-

ज्योत्स्ना।

स्त्रीप्रत्ययान्ततदादेरपि ग्रहणं न स्यादिति दिक्।

तद्व्याप्यधर्माणामिति। स्यादेतत्। कुमारशब्दत्वस्य कुमारक्रीडायामिति धातावपि सत्वेन कुमारशब्दे प्रातिपदिकत्वव्याप्यत्वस्याभावात्। कुमारेत्यादौ ङ्यन्ते कुमारश्रमणेत्यादावपि कुमारशब्दत्वस्यातिदेष्टुमशक्यत्वात्स्वांशे चारितार्थ्याभावेन श्रमणाप्रव्रजिता इत्यादिस्त्रीलिङ्गनिर्देशस्यैतत्परिभाषाज्ञापकत्वासंगतिः। किञ्चादन्तप्रातिपदिकत्वस्यापि प्रातिपदिकत्वव्याप्यत्वेन तस्य रमाशब्देऽतिदेशेन तस्मादतइञ्, इन्ठनौ, इत्यापत्तिश्चेति चेन्मैवम्। प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्माणामतिदेशो भवतीति कल्पनेनादोषात्। विषयतायां प्रातिपदिकमात्रवृत्तित्वं च प्रातिपदिकवृत्तित्वे सति प्रातिपदिकेतरनिरूपितवृत्तित्वाभाववत्त्वम्। अभावश्च समानाधिकरणेनान्वयप्रयोज्यो विवक्षित इति रमाशब्दादावदन्तत्वप्रयुक्तकार्यं नेति दिक्।

तेनेति। ङ्याप्ग्रहणसामर्थ्यात् स्त्रीप्रत्ययोत्पत्तेः प्राक् स्वार्थिकः प्रत्ययो भवतीति कल्पनेनेत्यर्थः। चेनेति। अत्यन्तस्वार्थिकोऽपि कन् ङ्याप्ग्रहणसामर्थ्यात् आर्यिकेत्यादौ पूर्वं न प्रवर्तत इति स्वीकारेणेत्यर्थः।

अप्रवृत्तेरिति। लिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयपर्याप्तप्रातिपदिकत्वव्याप्यधर्माणामेव तेनातिदेशेन दृष्टामालेति समुदाये टाब्निष्ठविधेयतानिरूपितोद्देश्यतायास्तत्राभावादिति भावः। न च दृष्टामालेति समुदायस्यापि प्रातिपदिकत्वेऽपि न क्षतिः। समुदायस्यादन्तत्वाभावादापो ऽप्राप्त्या समुदायात्सुप्यपि तस्य हल्ङ्यादिलोपेनेष्टसिद्धिश्चेत्याशङ्क्याह—एवंचेत्यादिना। एकान्तरतापत्तिरिति। आम-

प्र० (१) दृष्टा माल इत्यादेः समुदायस्य प्रातिपदिकत्वाभावेन तदतिदेशाप्रवृत्तेरिति। अन्ये तु अत्र प्रातिपदिकपदस्य लिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयलक्षकत्वेन लिङ्गबोधकप्रत्ययप्रकृतित्वाभावादिति लेखनमुचितम्। अत एव दृषद ई दृषदीत्यादौ तया परिभाषया विशिष्ट न दृषच्छब्दत्वातिदेश इति व्याचख्युः।

परश्च "लोहितान्मणौ" ( पा० सू० ५।४।३० ) इति कन् ङीपं बाधेत । ततो लोहितिकेत्येव स्यादिष्यते तूभयम् । ङीब्ग्रहणसामर्थ्यात्तु ङ्यन्तात्कनि रूपद्वयं सिद्धम् । "वर्णादनुदात्तात्–" ( पा० सू० ४।१।३९ ) इत्यस्य वैकल्पिकत्वात् । आर्यशब्दात्तु "न सामि वचने" ( पा० सू० ५।४।५ ) इत्यत्र ज्ञापयिष्यमाणो ऽत्यन्तस्वार्थिकोऽपि कन् आब्ग्रहणसामर्थ्यात् पूर्वं न प्रवर्त्तते । तेन "उदीचामातः स्थाने यकपूर्वायाः" ( पा० सू० ७।३।४६ ) इति इत्ववि-

शब्दरत्न

रतापत्तिरिति वाच्यम् । एतद्भाष्यप्रामाण्येन प्रातिपदिकसाहचर्येण च पृथगर्थोपस्थापकविभक्त्यन्तानवयवकङ्याबन्तस्यैव ग्रहणेनादोषात् । प्रत्येकमपि पदत्वसत्त्वेनैकान्तरत्वाभावाच्च । उत्तरसङ्ख्यायाः पूर्वसङ्ख्या(१)बाधकत्वात् । नियमार्थं तु न त्यूङन्ते दोषापत्तेः । कुत्साद्यर्थकस्वार्थिकानां "कुत्सिते" (पा० सू० ५।३।७४) इति सूत्रस्थभाष्योक्तरीत्या ङ्याबन्तादुत्पत्तेः सिद्धत्वादत्यन्तस्वार्थिके फलमाह—तथा हीत्यादिना । स्वार्थिकत्वेन—अत्यन्तस्वार्थिकत्वेन । परश्चेत्यभ्युच्चयः । एवं च "लोहिताल्लिङ्गबाधनम् वा" इति न वक्तव्यमिति भावः । विकल्पः सिद्ध्यतीति । (२)अन्यथा ऽऽर्यशब्दात्कनि समुदायोत्तरटापैव लिङ्गसम्बन्धबोधनसम्भवादे(३)काज्द्विर्वचनन्यायेन समुदायादेव टापि

ज्योत्स्ना ।

एकान्तरस्य "आमन्त्रितमनन्तिके" इति सूत्रेणेत्यर्थः ।

पृथगर्थोपस्थापकविभक्त्यनवयवकङ्याबन्तस्यैवेति । पृथगर्थोपस्थापकौ यौ विभक्त्यन्तौ तदनवयवको यो ङ्याप् तदन्तस्येत्यर्थः । एकान्तरत्वाभावाच्चेति । चिन्त्यमिदं । दृष्टा चासौ माला चेति कर्मधारयसमासे आम् दृष्टामाला देवदत्तेत्यादौ पदद्वयव्यवधाने स्वरानापत्तेः । प्रातिपदिकग्रहणेनैव सिद्धे स्त्रीप्रत्ययान्ताच्चेन्ङ्यन्तादेवेति नियमः कस्मान्नेत्या-

---

वि० ( १ ) गौणी मुख्या वा उत्तरसंख्या पूर्वसंख्याया बाधिकेति "अ इ उ ण्" सूत्रस्थभाष्यसिद्धान्तादिति भावः ।

वि० ( २ ) ङ्याब्भ्यां प्राग्स्वार्थिकप्रत्ययो भवतीति स्वीकारादित्यर्थः ।

वि० ( ३ ) "एकाचो द्वे" इति सूत्रे भाष्येऽयं न्यायः स्पष्टः । तथाहि—एकाचो द्विरुच्यते चत्वारश्चैकाचः, तत्रैकस्यैकाचो द्वित्वे लब्धे लक्षणन्यायेन अपरस्य द्वित्वाभावः । इति शास्त्रस्यापरदेशावच्छेदेन त्यागो भवति । यदा हि भूव् इत्यस्य द्वित्वं, तदा चतुर्णामेकाचां द्वित्वमुक्तं भवतीति न शास्त्रत्यागः । तस्मात् भूव् इत्यस्यैव द्वित्वं स्वीकार्यम् । एवं प्रकृतेऽपि प्रकृत्यर्थगतस्त्रीत्वे द्योत्ये टाब् विधीयते । यदा आर्यशब्दादेव टाप्स्यात्तदा कन्विशिष्टप्रकृत्यर्थगतस्त्रीत्वद्योतकता न स्यादिति शास्त्रं त्यक्तं स्यात् । विशिष्टात्तु टापि उभयार्थगतस्त्रीत्वद्योतकत्वलाभात् न शास्त्रस्य वैयर्थ्यमिति भावः ॥

कल्पः सिद्ध्यति ।

स्यादेतत् । एवं सति बहुगोमत्केति न सिद्ध्येत्, कपः प्रागुगिल्लक्षणङी-प्प्रसङ्गादिति चेन्मैवम् । अकृत एव समासे ऽलौकिकप्रक्रियावाक्ये एव उत्तर-पदस्यावयवीभूय (१)समासान्तः प्रवर्तते इति वक्ष्यमाणत्वात् । स च विभक्तेः पुरस्तादित्येके । परस्तादिति पक्षे तु तद्धितान्तत्वात् सुब्लुकि पुनः सुपि चाकृते

---

शब्दरत्न ।

कनः पूर्वं टाबभावे आतः स्थानिकत्वाभावाद्विकल्पासिद्धिरिति भावः ।

ङीप्प्रसङ्गादिति । अन्यपदार्थस्य स्त्रीत्वादिति भावः । अकृत एवेति । इदं "गोस्त्रियोः–" (पा०सू० १।२।४८) इति सूत्रे भाष्ये स्पष्टम् । समासान्ता इत्यत्र तादर्थ्यात्ताच्छब्द्यमिति हि तत्र भाष्यम् । अलौकिके प्रक्रियावाक्ये एवेत्यस्य प्रवर्त्तत इत्यनेनान्वयः । क्व प्रवर्त्तते तत्राह–उत्तरपदस्येति । अनन्तरमिति शेषः । अवयवीभूयेत्यस्य(२) प्रक्रियावाक्य-स्येत्यादिः । एतत्स्वरूपकथनम् । अवयवत्वे प्रमाणमाह—समासान्त इति । तच्छब्दवा-च्यत्वादिति भावः । समासस्यैवायमन्तावयव इति "अन्तः" ( पा० सू० ६।२।९२ ) इति सूत्रे भाष्ये स्पष्टम् । इत्येके इति । अत्रारुचिबीजं तु समासार्थवाक्यस्य "अन्तः" ( पा० सू० ६।२।९२ ) इति "गोस्त्रियोः—" ( पा० सू० १।२।४८ ) इति सूत्रस्थ-भाष्यस्य वाच्यार्थविरोधः । न हि सुब्रहितं समासार्थं किं तु तद्विशिष्टमेव । किं च ततः पूर्वं कपि ततः समाससंज्ञायां सुब्लुकि टापि बहुचर्मिकेत्यादावापः सुपः परत्वादित्वानापत्तिः । तत्र विभक्त्यन्ते ऽन्यपदार्थबोधकत्वारोपेण स्त्रीत्वस्य

ज्योत्स्ना ।

शङ्क्याह—नियमार्थं तु नेत्यादिना । उत्तरपदस्यावयवीभूयेति । अन्तरावद्विपुरीत्यादौ 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति प्रवर्तत इति बोध्यम् । अन्यथा समासान्त-स्योत्तरपदानवयवत्वेन अकारान्तोत्तरपदकत्वाभावात् स्त्रीत्वं न स्यादिति मूलव्याख्या-नम् । "ङ्याप्प्रातिपदिकात्" इत्येकसूत्रत्वेन वाक्यभावादेकरूपावच्छिन्नविधेयताकत्वे सति व्याप्यव्यापकभावापन्ननियमावच्छिन्नोद्देश्यताकत्वे सति स्वातन्त्र्येण वाक्यार्थ-बोधजनकत्वरूपनियम्यनियामकभावस्य प्रकृते सम्भवादिति भावः ।

समासार्थलौकिकविग्रहवाक्यस्यावयवीभूयसमासान्ताः प्रवर्तन्ते इत्यस्याः स्वीकारे भाष्यविरोधमुक्त्वा ङ्याब्भ्यां प्राक् समासान्तानां प्रवृत्तौ च दोषमाह—किंचेति । ततः पूर्वमिति । ङ्यापः पूर्वमित्यर्थः । इत्वानापतिरिति । "प्रत्ययस्थात्" इति

---

वि० ( १ ) 'उत्तरपदस्यावयवीभूय समासान्ताः प्रवर्तन्ते' इति कैयटमतानुसारेण मूलग्रन्थः । वस्तुतस्तु समासस्यैवायमन्तावयव इति भाष्यसिद्धान्तोऽभ्युपेयः ।

वि० ( २ ) न च द्विपुरीत्यादौ अदन्तोत्तरपदकत्वाभावादकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः

समास इति सिद्धान्तः । तस्मादन्तरङ्गादपि तद्धितात्प्राङ् ङ्यापोः प्रवृत्त्यर्थं ङ्याब्ग्रहणमिति स्थितम् ।

यत्त्वाहुः—आब्ग्रहणं स्पष्टार्थमिति । तदनेन प्रत्युक्तम् ।

वस्तुतस्तु ङ्यापोर्ग्रहणं मास्तु । सुबन्तात्तद्धितोत्पत्तिरिति निष्कर्षः ।

शब्दरत्न ।

तदन्ते सत्त्वात्सुब्लुकः पूर्वं कबन्ताट्टाबिति वक्तुमशक्यमिति । परस्तादिति पक्षे-त्विति । न च विशिष्टस्य सुबन्तत्वाभावेन सुबन्तात्तद्धित इति सिद्धान्तविरोधः । तेषा-मतिरिक्तार्थाभावेन 'परिपूर्णम्पदम्' इति न्यायाविषयतया तस्य सिद्धान्तस्य समासा-न्तविषये ऽभावात् । एवं च समासान्तेषु "ङ्याप्प्रातिपदिकात्" ( पा० सू० ४।१।१ ) इत्यस्यासम्बन्ध एव । (१)तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वाभावादिति भावः । तद्धितान्तत्वादिति । प्रातिपदिकत्वेनेति शेषः । पुनः सुपि चाकृते इति । प्रत्ययलक्षणेन सुबन्तत्वात्समाससंज्ञा । कपस्तद्वाक्यावयवत्वेन तद्ग्रहणेन तदन्तस्य ग्रहणम् । सुपि च कृते इति क्वाचित्कः पाठः प्रामादिकः । यद्यपि तत्र पाठे ऽलौकिक-विग्रहवाक्ये ऽपि अन्यपदार्थान्तर्भावेण एकार्थीभावारोपात् स्त्रीत्वसत्त्वेन पूर्वं टापि ततः सुपि आपः सुपः परत्वाभावाद् बहुचर्मिकेत्यत्रेत्वसिद्धिरस्ति, तथापि तदुत्पत्तिपर्यन्तं समाससंज्ञाया अप्रवृत्तौ मानाभावात् । न च सुबन्तत्वाभावः । अनेन सुपा समुदायस्य सुबन्तत्वेऽपि उत्तरपदमात्रस्य तत्त्वाभावात् । पूर्वपदस्य सुबन्ततायाः प्रत्ययलक्षणे-नैवोपपाद्यत्वात् । एवं च पूर्वं तत्करणे फलाभावः । बहिर्भूतसंख्याकारकसापेक्षसु-पस्तस्यामवस्थायां तदनभिव्यक्त्या ऽप्रवृत्तेश्च । वस्तुतस्तु तद्धितान्तत्वनिमित्तप्राति-पदिकसंज्ञासमकालमेव विरोधाभावेन तत्पूर्वभागस्य समाससंज्ञेति बोद्धव्यम् । यौगप-द्यासम्भव एव शास्त्राणां क्रमप्रवृत्त्यङ्गीकारादिति दिक् ।

यत्त्वाहुरिति । ङीब्ग्रहणन्तु लोहिनिकेत्यर्थमिति तद्भावः । अनेनेति । आर्यकेत्यस्य साधनेनेत्यर्थः ।

ज्योत्स्ना ।

सूत्रे ऽसुपीत्युक्तेति भावः ।

तद्वाक्यावयवत्वेनेति । समासार्थबोधकालौकिकविग्रहवाक्यग्रहणेनेत्यर्थः । तदन्त-स्येति । स्त्रीप्रत्ययान्तस्येत्यर्थः । तदनभिव्यक्त्येरिति । स्वार्थद्रव्यलिङ्गेभ्यः प्राक् संख्या-

इत्यनेन स्त्रीत्वं न स्यादिति वाच्यम् । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यात् लिङ्ग-प्रकरणस्य तत्र प्रत्याख्यानादिति भावः ।

वि० (१) अलौकिके विग्रहवाक्ये एव समासान्तस्य प्रवृत्त्या, तदानीं ङ्याबन्तत्वप्रातिपदि-कत्वयोरसम्भवादिति भावः ॥

सुपः प्रागेव च ङ्याप्पौ प्रवर्त्तेते। स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्।

सुङस्योरिति। सोरुकारो "अर्वणस्त्रसौ–" (पा० सू० ६।४।१२७) इत्यत्र विशेषणार्थः। असीत्युक्ते ह्रसकारादावित्यर्थः स्यात्। तथा च "वाजमर्वत्सु पय उत्स्रियासु" इति न सिद्ध्येत्, ङसेरिकारो "युष्मदस्मद्भ्यां ङसोऽश्" (पा० सू० ७।१।२७) इत्यत्र अस्य ग्रहणं मा भूदिति। यदि तु

---

शब्दरत्न।

सुबन्तात्तद्धितोत्पत्तौ, प्रागेव ङ्याप्पोः प्रवृत्तौ च बीजमाह—स्वार्थादीति। स्वार्थद्रव्यलिङ्गसंख्याकारकेत्यर्थः। स्वार्थः प्रवृत्तिनिमित्तम्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्पूर्वं जात्यादिज्ञानं, ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरप्याकाङ्क्षितत्वात्तदाश्रयज्ञानं, ततः स्वमात्रापेक्षत्वाल्लिङ्गस्य ज्ञानं, ततो विजातीयक्रियाकारकापेक्षया सजातीयपदार्थापेक्षसंख्यायाः प्रथममुपस्थित्या तज्ज्ञानं, ततः कारकरूपविभक्त्यर्थाकाङ्क्षा, तन्निवृत्तौ हि बहिर्भूतकुत्सादियोग इति "कुत्सिते" (पा० सू० ५।३।७४) इति सूत्रे भाष्ये स्पष्टम्। एवं च ज्ञानक्रमानुरोधेनैव तत्तत्प्रयुक्तकार्यप्रवृत्तेरौचित्येन क्रमिकत्वं स्पष्टमेव। यद्यपि लोकानां बोधो न क्रमेण तथाऽपि शास्त्रप्रक्रियायां शास्त्रकृत्कल्पितोऽयं क्रमः। अर्थवदुद्देशेन प्रातिपदिकत्वविधानात्। प्रातिपदिकोद्देशेन लिङ्गादौ ङीबादिविधानादिति बोद्धयम्। अत एव "घकालतनेषु–"(पा०सू० ६।३।१७) इति चरितार्थम्। स्पष्टं चेदम्— "अचः परस्मिन्—"(पा०सू० १।१।५७) इत्यत्र भाष्यकैयटयोः। एवं चैतन्न्यायसिद्धार्थानुवाद एव ङ्याब्ग्रहणम्। अत्यन्तस्वार्थिकानारभ्य तस्य निवृत्तेरुक्तन्यायविषयाभावाच्च समासान्तेषु न दोषः। अत्यन्तस्वार्थिके कन्यार्यिकेत्येव यद्यभिधानमस्ति। लोहिनिकेत्येतत्सिद्ध्यर्थं च "लोहिताल्लिङ्गबाधनं वा" इति कार्यमेवेति भावः। स्पष्टं चेदं सूत्रशेषे भाष्ये इत्यन्यत्र विस्तरः।

ज्योत्स्ना।

कारकयोरनुपस्थितेरित्यर्थः। अत एवेति। स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमिकत्वस्वीकारादित्यर्थः। चरितार्थमिति। अन्यथा कप्रत्ययात्प्रागेव सुबुत्पत्तौ तद्धितान्तत्वेन प्रातिपदिकत्वात्तस्य लुकि तदसङ्गतिः स्पष्टैव।

एतन्न्यायेति। स्वार्थद्रव्यलिङ्गसंख्याकारकाणां येन क्रमेणोपस्थितिस्तेन क्रमेण शब्दप्रादुर्भावः। तेनैव क्रमेण तत्प्रयुक्तकार्याणीति स्वीकारेणेत्यर्थः। अत एव "लोहिताल्लिङ्गबाधनं वा" इति वार्तिकं सङ्गच्छत इति दिक्।

तस्य निवृत्तेरिति। ङ्याप्ग्रहणस्य निवृत्तेरित्यर्थः।

"एकवचनस्य च" ( पा० सू० ७।१।३२ ) इत्यत्र 'पञ्चम्या' इत्यनुवृत्तेः परिशेषादन्यस्य ङसोऽत्र ग्रहणं भविष्यतीत्युच्यते तर्हि "टाङसिङसाम्—" ( पा० सू० ७।१।१२ ) इत्येतदर्थः। जश्शसोर्जकारशकारौ "जसः शी" ( पा० सू० ७।१।१७ ) "तस्माच्छसो नः" ( पा० सू० ६।१।१०३ ) इत्यनयोर्विषयविभागार्थौ। अन्यतरस्य निरनुबन्धकत्वमेवास्तु इति चेन्न। जसो जकाराभावे औ इत्यस्याव् स्यात्। ततश्च प्रत्ययस्य वकारान्ततापि सम्भाव्येत। एवं शसः शकाराभावे औटो डित्वं सम्भाव्येत। अतोऽसन्देहार्थं तत्करणौचित्यात्। औटष्टकारः सुडिति प्रत्याहारार्थः। टाटकारस्तु "टाङसि–" ( पा० सू० ७।१।१२ ) इति विशेषणार्थः। ङेप्रभृतीनां ङकारो "घेर्ङिति" ( पा० सू० ७।३।१११ ) इति विशेषणार्थः। पकारस्तु प्रत्याहारार्थः। एवं

शब्दरत्न।

पञ्चम्या इत्यनुवृत्तेरिति। तृतीयाव्यावृत्तये इति भावः। टाङसीति। तत्रैकारानुच्चारणे इष्टस्य यथासंख्यस्यानापत्तिरिति भावः। ङित्वमिति। ततश्च टिलोपः स्यादिति भावः। विशेषणार्थ इति। तत्फलन्तु "सुपां सुलुक्" ( पा० सू० ७।१।३९ ) इतिसूत्रेणाकारादेशे इनादेशाभावः। घेर्ङितीति। न च घेः सुपि गुण इत्येवास्तु "जसि च" ( पा० सू० ७।३।१०० ) (१)इति नियमात्तु नाङिति प्रवृत्तिरिति वाच्यम्। पतय इत्यर्थं "जसि

ज्योत्स्ना।

जकाराभावे इति। न च जकाराभावे "जसि च" इत्यस्य स्थाने ऽसिचेति वक्तव्यत्वेन शस्यपि गुणः स्यादिति वाच्यम्। "निरनुबन्धक" इति परिभाषया दोषाभावात्।

विशेषणार्थ इति। न च टाटकारसत्वे तदनुबन्धकपरिभाषया टापो ग्रहणं न भवति, तदभावे च तस्य ग्रहणं दुर्वारमिति वाच्यम्। निरनुबन्धकपरिभाषया दोषाभावात्। ङसि साहचर्येण सुपा एव ग्रहणाच्च।

"जसि च" इति नियमादिति। अयम्भावः—अनेकवचने सुपि परतः यदि गुणो भवति

प्र० ( १ ) 'जसिच' इति नियमात्तु नाङिति प्रवृत्तिरिति। ननु ङप्रभृतीनां ङकारानुबन्धाकरणे ङित्प्रत्ययस्याभावेन अङिति चेत्तर्हि जस्येवेति नियमाकारस्यासम्भवात्कथमुक्तनियमाकारप्रदर्शनमिति चेन्न, । एतादृशार्थकनियमाकार ऊहनीय इति तदुक्तेस्तात्पर्यात्। नियमाकारस्तु 'अनुनासिकाघटितगुणाद्येकवचनेतरविभक्तौ परतश्चेद् गुणस्तर्हि जस्येव' इति। अमो व्यावृत्तये अनुनासिकाघटितेति। तथा च अनुनासिकाघटिता गुणाद्येकवचनविभक्तयो ङे ङसि ङस् इति तिस्रः, तदितरा अष्टादश स्वादिविभक्तयस्तासु परतश्चेत्तर्हि जस्येवेति नियमात्सप्तदशसु गुणव्यावृत्तिः सिद्धा। सप्तम्येकवचने ङौ परे गुणाभावेऽपि न क्षतिरिति तात्पर्यम्।

च सर्वेषां सफलत्वेऽपि संज्ञार्था इति प्राचो ग्रन्थोऽसङ्गत एव। सम्यग् ज्ञानं संज्ञा तदर्थाः। विशेषणार्था इति यावत्। इति भङ्क्त्वा व्याख्यानेऽपि क्लिष्टत्वमेवेत्युपेक्षितम्।

"सुपः" ॥ ( पा० सू० १।४।१०३ ) "तिङस्त्रीणि त्रीणि" ( पा० सू० १।४।१०१ ) इति सूत्रात् त्रीणि त्रीणि इति पदं, "तान्येकवचन—" च" ( पा० सू० ७।३।१०० ) इत्यस्यावश्यकत्वात्।

शब्दरत्न।

तान्येकेति। तत्रानुवृत्ततानीत्यस्य लब्धव्याकरणान्तरोक्तप्रथमादिसञ्ज्ञानीत्यर्थः।

ज्योत्स्ना।

तर्हि जस्येवेति नियमेन द्विवचनबहुवचनयोर्गुणः। समसंख्याकाहलविभक्तिद्वयाव्यवहितपूर्वत्वाभाववदेकवचने सुपि परतः यदि गुणो भवति तर्हि संबुद्धावेवेति ह्रस्वस्य गुण इत्यस्य नियमस्वीकारेण सु अम् टा सु न दोषः। नचाङिति परतः यदि गुणो भवति तर्हि जस्येवेति नियमः कस्मान्न स्वीक्रियत इति वाच्यम्। अङित्वेऽपि नियामकजसि चेति शास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वस्य सत्वेऽपि नियम्ययोः सुपीति शास्त्रीयोद्देश्यतावच्छेदकसुप्त्वव्याप्यत्वस्याश्रितस्तृजादेरपि सत्वेनाभावात्। नचाङिति सुपिचेत्तर्हि जस्येवेति नियमेन न दोषः। अङित्सुप्त्वे नियामकशास्त्रीयोद्देश्यतावच्छेदकजस्त्वव्यापकत्वस्य नियमाच्च सुपीति शास्त्रीयोद्देश्यतावच्छेदकसुप्त्वव्याप्यत्वस्य च सत्वादिति वाच्यम्। जसिचेत्यस्य नियामकत्वं वा ह्रस्वस्य गुण इत्यस्य नियामकत्वमित्यत्र विनिगमनाविरहप्रसंगात्। नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकनियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूपद्वयं यत्र तत्रोभयव्याप्यं रूपं तद्द्वयावच्छिन्नातिरिक्तत्वेनैव नियम्यशास्त्रे संकोचो भवतीति सिद्धान्तः। अन्यथा समासकृतनियमेन पदपूर्वावयवकसमुदायातिरिक्तेनार्थवत्सूत्रे संकोचाज्जन्मवानित्यादौ प्रातिपदिकत्वं न स्यात्।

केचित्तु—ननु ङेप्रभृतीनां ङकारानुबन्धाकरणे ङत्प्रत्ययाभावेन अङिसिचेत्तर्हि जस्येवेति नियमाकारस्यासम्भवात् कथमुक्तनियमाकारस्य प्रदर्शनमिति चेन्न। एतादृशार्थकनियमाकारप्रदर्शनीय इति तदुक्तेस्तात्पर्यात्। नियमाकारस्तु अनुनासिकाघटितगुणाद्येकवचनेतरविभक्तौ परतश्चेत् गुणस्तर्हि जस्येवेति। अतो व्यावृत्तये अनुनासिसिका घटितेति। तथाचानुनासिकाघटितगुणाद्येकवचनविभक्तयो ङे ङसि ङस्, तिम्रः तदितरा अष्टादशस्वादिविभक्तयः तासु परतश्चेत् जस्येवेति सप्तदशसु व्यावृत्तिः सिद्धा। सप्तम्येकवचने सौ परतः गुणाभावेऽपि न क्षतिरितिप्रकारेण लापयन्ति।

त्रीणि इति। एकं त्रितयं सु औ जस् इति प्रत्येकगतम्। वीप्सायां द्विर्भावः। तथाच सु औ जस् इति यावन्ति त्रिकाणि तानि यानि क्रमेणैकवचनादिसंज्ञानि भवन्ती-

(पा० सू० १।४।१०२) इत्यादि सूत्रं च सम्पूर्णमनुवर्तत इति व्याचष्टे—सुपस्त्रीणि त्रीणीत्यादिना । एकश इति । एकैकमित्यर्थः । "सङ्ख्यैकवचनाच्च–" ( पा० सू० ५।४।४३ ) इति वीप्सायां प्रथमान्तात् शस् ।

यत्तु प्राचा एकैकश इत्युक्तम् । तदयुक्तम् । शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात् । येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शस् इति सिद्धान्तात् ।

यत्त्वाहुः "सर्वस्य द्वे" ( पा० सू० ८।१।१ ) इत्यत्र एकैकशो ददातीति भाष्यप्रयोगात् "तान्येक—" ( पा० सू० १।४।१०२ ) इति सूत्रे एकश इति सूत्रकारनिर्देशाच्चोभयं साध्विति । तन्न । उदाहृतभाष्यस्यान्यविषयत्वात् । 'यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्' इत्युपक्रम्य हि 'तद्यथा एकैकशो ददाति' इति भाष्ये उदाहृतम् । व्याख्यातं च कैयटेन अल्पार्थोऽप्येकशब्दोऽस्ति तस्य वीप्सायां द्विर्वचने "बह्वल्पार्थात्—" (पा० सू० ५।४।४२) इति शस्प्रत्यय इति । न चैषोऽर्थः प्रकृते सम्भवतीत्यास्तां तावत् । राम इति । सञ्ज्ञाशब्दोऽयमव्युत्पन्न इति पक्षेऽर्थवत्सूत्रेण प्रातिपदिकसञ्ज्ञा । "करणाधिकरणयोश्च" ( पा० सू० ३।३।११७ ) इत्यधिकारे घापवादेन "हलश्च"

---

शब्दरत्न ।

वीप्सायां द्विर्वचने इति । शसः कारकाद्विधानेन मङ्गलामङ्गलरूपार्थापेक्षणेन च बहिरङ्गतया द्विर्वचने कृते शस् इति भावः । यद्यपि क्वचिदुक्तार्थानामपि प्रयोगो भवति तथाऽपि यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम् । यथैकैकशो ददातीत्यादिभाष्योक्त्याऽल्पार्थकैकशब्दाद्वीप्सायां द्विर्वचने "बह्वल्पार्थात्—" (पा०सू० ५।४।४९) इति शसिति कैयटोक्त्या च प्रकृते तद्वक्तुमशक्यम् । न चैवं 'ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया ते सर्वे सहस्रदक्षिणाः सम्पन्नाः'इति "अइउण्" (म०१) सूत्रस्थभाष्ये एकैकश इति प्रयोगासङ्गतिरिति वाच्यम् । एकेति प्रधानार्थैकसम्बोधनसत्त्वेनैकश इत्यस्य प्रत्येकमित्यर्थकत्वेनादोषात् । एतद्भाष्यप्रामाण्येन स्वार्थिकद्विर्वचनकल्पनापेक्षया मदुक्तस्यैव न्याय्यत्वात् । किं च नायं भाष्यप्रयोगः किं तु गौण्यप्युत्तरा संख्या पूर्वा सख्यां बाधते इत्यत्र श्रौतो वा स्मार्त्तो वा ऽयं व्यवहारो दृष्टान्तत्वेनोक्तो भगवतेति तत्र छान्दसत्वान्न दोषः । "एकैकशः पितृसंयुक्तान्"

ज्योत्स्ना ।

त्यर्थः । सहस्र कृत्वो दत्वेति । पुनर्गृहीत्वा इति शेषः । तथाच सहस्रवारं दत्वा सहस्रवारं प्रतिगृह्य च सहस्रदक्षिणासम्पन्ना इति तत्र शास्त्रनिषिद्धस्य गोविक्रयस्यात्यन्तनिषिद्धस्य ऋषीणां कल्पनस्यानुचितत्वात् ।

(पा०सू०३।३।१२१) इति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु "कृत्तद्धित—" ( पा० सू० १।२।४६ ) इति सूत्रेणेति विवेकः ।

"सरूपाणामेकशेष एकविभक्तौ" ॥ (पा० सू० १।२।६५) विभक्तिः सारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं चानैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्त्तते । यद्येतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्यात्, द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद् द्वन्द्वस्याप्राप्तिरेवफलिता भवतीति भावः । सरूपाण्येवेति । एतच्चोत्तरसूत्रस्थैवकारस्येहानुकर्षणाल्लभ्यते, तेन मातृशब्दयोर्जननीवाचिपरिच्छेत्तृवाचिनोर्नैकशेषः । मातृ-

शब्दरत्न ।

इत्यादिवदिति(१) दिक् । रमन्तेऽस्मिन्निति । योगिन इति शेषः ।

इति भाव इति । एतावतैव द्वन्द्वापवाद एकशेष इति व्यवहार इति भावः । एतेनैकशेषारम्भफलमपि निरूपितं द्वन्द्वनिवृत्तिरूपम् । उत्तरसूत्रस्थस्येति । "वृद्धो यूना"— (पा० सू० १।२।६५ ) इत्यर्थः । अनुकर्षणादिति । अनुपश्चात्कर्षणादाकर्षणादित्यर्थः । क्वचिदपकर्षणादित्यपि पाठः । नैकशेष इति । भ्यामादावपीत्यर्थः । भ्यामि स्त्रीपुंसयोस्ताभ्यामित्यनुप्रयोगस्य समत्वात् । एतेनानुप्रयोगविरोधादत्र नैकशेष इत्यपास्तम् । "पुमान्स्त्रिया" ( पा० सू० १।२।६७ ) इत्येकशेषोऽपि न । तत्राप्येकविभक्तौ

ज्योत्स्ना ।

सरूपाणामिति । विभक्तिः सारूप्ये उपलक्षणम् । अविद्यमानं सद्व्यावर्तकमुपलक्षणम् । तथाच येषां प्रातिपदिकानां विभक्तौ परतः सारूप्यं दृष्टं तेषामेकः शिष्यते इति बोध्यम् । एवं चैकशेषप्रवृत्तिवेलायां सारूप्याभावेऽपि न क्षतिरिति दिक् ।

विभक्तिः सारूप्ये उपलक्षणमित्यस्य फलमाह—एवं चेत्यादिना । एतदिति । एकशेषशास्त्रमित्यर्थः ।

एतेनेति । एकशेषविषये द्वन्द्वस्य प्राप्तिरेव नेति स्वीकारेणेत्यर्थः । नन्वनुकर्षणशब्दोऽनुवृत्तिपर इति प्रकृते ऽपकर्षलाभः कथमिति चेदाह—अनुपश्चादित्यादिना ।

एवकारस्येहानुकर्षणादिति । स्यादेतत् । सरूपाणामिति निर्धारणे षष्ठी । सारूप्यवदारब्धसमुदायघटकानामित्यर्थः । तत्र न तावत् अपकृष्ट एवकारः सारूप्यवदारब्धसमुदायघटकानामित्यस्यानन्तरं योजयितुं शक्यः । सारूप्यवदारब्धसमुदाय-

वि० ( १ ) दिगर्थस्तु लोके यत्र तद्धितमात्रेण वीप्साया अनभिधानं तत्रोभयोस्सत्वं न तु केवलशसो, यथा—एकैकश इत्यत्र माषश इत्यत्र तु तावन्मात्रेणापि वीप्साभिधानान्न द्वित्वमिति भाष्याशयोऽवसेयः ।

ज्योत्स्ना ।

घटकानामेवैकः शिष्यते इत्युच्यमाने एकपदवैयर्थ्यापत्तेः । नापि सारूप्यवदारब्धसमुदायानन्तरं योजयितुं शक्यः । सारूप्यवदारब्धसमुदायमात्रघटकान्तमित्युच्यमानेऽप्येवपदवैयर्थ्यापत्तेः । नापि सारूप्यवदित्यस्यानन्तरं योजयितुं शक्यः । सारूप्यवन्मात्रारब्धसमुदायघटकानामित्युच्यमानेऽपि जननीपरिच्छेतृवाचिनोर्मातृशब्दयोः भ्यामादौ समुदायस्य सारूप्यवन्मात्रारब्धत्वेनैकशेषापत्तेः । नापि सारूप्यानन्तरं योजयितुं शक्यः । सारूप्यमात्रवदारब्धसमुदायघटकानामित्युच्यमाने मृगीवाचकहरिणीशब्दस्य वर्णवाचकहरिणीशब्दस्य तद्धितादौ वैरूप्यसत्वेन हरिणी हरिणीति समुदाये सारूप्यमात्रवदारब्धत्वस्याभावेनैकशेपानापत्तेरिति चेन्मैवम् । तस्य सारूप्यपदार्थतावच्छेदकसारूप्ये ऽन्वयः । तथा च विभक्तौ परतः सारूप्यमेव येषां प्रातिपदिकानां दृष्टं तेषामेकः शिष्यते इत्यर्थः । तथाच हरिणीशब्दयोर्विभक्तौ परतः सारूप्यस्यैव दर्शनादेकशेषः सिद्धयति । मातृशब्दयोस्तु औजसादिषु वैरूप्यदर्शनान्नैकशेप इति दिक् ।

विभक्तौ परतः सारूप्यमेव येषां तेषां तत्वं च किम् । स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वे सति स्ववृत्तिरूपविशिष्टरूपत्वम् । सत्यन्ते रूपवैशिष्ट्यं च । स्वभिन्नत्वं, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यमेतदुभयसम्बन्धेन । द्वितीयदले रूपवैशिष्ट्यं च । रूपे स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यसम्बन्धेन । द्वितीयदलदानादेकद्विशब्दयोर्नैकशेषः । प्रथमदले रूपे रूपवैशिष्ट्यघटकस्वविशिष्टभिन्नत्वदानादतिजरादिशब्दानामेकशेषः सिद्धः । स्वविशिष्टभिन्नत्वघटकवैशिष्ट्ये स्वाश्रयप्रकृतिकेत्यादिसम्बन्धदानात् संज्ञाभूतसर्वशब्दसर्वनामप्रकृतिकसर्वशब्दयोर्नैकशेषः । तत्रैव स्वसमानाधिकरणमात्रोक्तावसम्भवरूपवैशिष्ट्ये स्वाश्रयप्रकृतिकेत्यादिमात्रोक्तावप्यसंभव एवेति दिक् ।

परे तु—तत्वं च स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वे सति वृत्तिरूपविशिष्टरूपवत्वम् । सत्यन्ते रूपवैशिष्ट्यं च । स्वविशिष्टभिन्नत्व स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्य एतदुभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकवैशिष्ट्यं च स्वसामानाधिकरण्य स्वाश्रयप्रकृतिकविभक्तिवृत्ति विभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसमानाधिकरणस्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्य उभयसम्बन्धेन । द्वितीयदले रूपवैशिष्ट्यं च । स्वतादात्म्य स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्य एतदुभयसम्बन्धेन । जननीपरिच्छेतृवाचिनोर्मातृशब्दयोरेकशेषवारणाय सत्यन्तम् । सत्यन्ते प्रथम-

शब्दरत्न ।

सरूपाण्येवेत्यनुवृत्तेः । अत एव "प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः"

ज्योत्स्ना ।

सम्बन्धोपादानेन नित्यबहुवचनअक्षतशब्दस्य न विद्यते क्षतं यस्य स इत्येतदर्थक-सर्वविभक्त्यन्ताक्षतशब्दस्यैकशेषः सिद्ध्यति । सत्यन्ते द्वितीयसम्बन्धदानान्नासंभवः । भेदप्रतियोगिवैशिष्ट्यदानात् जराशब्दयोर्मतिशब्दयोश्चैकशेषः सिद्ध्यति । अन्यथा मत्यै जरसे इत्येतद्घटकरूपभेदस्य मतये जरायै इत्येतद्घटकरूपे सत्वाद्दोषो दुर्वारः स्यात् । भेदप्रतियोगितावच्छेदकवैशिष्टे प्रथमसम्बन्धदानान्नासम्भवः । द्वितीयसम्बन्धदानात् संज्ञाभूतसर्वशब्दस्य उपसर्जनभूतसर्वशब्दस्य च नैकशेषः । अन्यथा तयोः सर्वेषां रूपाणां तुल्यत्वेन दोषो दुरुद्धरः स्यात् । द्वितीयदलदानादेकद्विशब्दयोः नैकशेषः । द्वितीयदले प्रथमसम्बन्धदानेन संज्ञाभूतद्विशब्दस्य एकवचनबहुवचनपरकत्वस्य मुख्यार्थकैकशब्दस्य द्विवचनादिपरकत्वसम्भवेऽपि नैकशेषः । तत्रैव द्वितीयसम्बन्धदानात् संज्ञाभूतद्विशब्दस्य जसि एकवचनबहुवचनपरकत्वस्य च मुख्याद्यर्थक-एकशब्दस्य द्विवचनादिपरकत्वसम्भवेऽपि नैकशेषः । तत्रैव द्वितीयसम्बन्धदानात् संज्ञाभूतसर्वद्विशब्दयोः सर्वनामादिसर्वशब्दयोश्च नैकशेषः ।

नन्नु विभक्तौ परतः सारूप्यमेव येषामिति वाक्येन कथमुक्तार्थता इति चेच्छृणु । समाननगरे समान इव वृत्तिर्येषां तेषां एको गुरुः अन्ये शिष्या भवन्ति इति वाक्येन काशीगयाप्रयागेषु समानवृत्तिकानां बोधो भवति । तद्भिन्नवृत्तिकानामित्यनुभवस्यैव प्रमाणत्वात् । तत्रापि समाने नगरे समानेव वृत्तिर्येषाम् । तत्त्वम् च—स्ववृत्तिविशिष्टवृत्तिमद्भिन्नत्वम् । वृत्तिवैशिष्टं च वृत्तौ स्वविशिष्टभिन्नत्व स्वाश्रयनगरवृत्ति नगरत्वव्याप्यधर्मसामानाधिकरण्य एतदुभयसम्बन्धेन । एकप्रतियोगिवृत्तिवैशिष्ट्यं च । स्वसमानाधिकरण्य स्वाश्रयनगरवृत्तिनगरत्वव्याप्यधर्मसामानाधिकरण्य एतदुभयसम्बन्धेन विस्तरस्तु शब्देन्दुचन्द्रिकायां द्रष्टव्यः ।

वृत्तिमद्भिन्नत्वम् । वृत्तिवैशिष्ट्यं च वृत्तौ स्वविशिष्टभिन्नत्व स्वाश्रयनगरवृत्तिनगरत्वव्याप्यधर्मसामानाधिकरण्य एतदुभयसम्बन्धेन । भेदप्रतियोगिवृत्तिवैशिष्ट्यं च । स्वसामानाधिकरण्य, स्वाश्रयनगरवृत्तिनगरत्वव्याप्यधर्मसामानाधिकरण्य एतदुभयसम्बन्धेन । विस्तरस्तु शब्देन्दुचन्द्रिकायां द्रष्टव्यः ।

अत एवेति । "वृद्धो यूना" इति सूत्रादेवकारोऽपकृष्यत इति स्वीकारादेवेत्यर्थः । "मातृमात्रोः प्रतिषेधः" इति । अत एव वार्तिके मातृमात्रोरित्यत्र भगवता एकशेषो न कृतः । अन्यथा "मात्रोः प्रतिषेधो वक्तव्यः" इत्येव ब्रूयात् । एतेन यस्यां विभक्तौ सारूप्यं तेषामेकः शिष्यते । तथाच—जननीपरिच्छेत्तृवाचिमातृशब्दयोर्नैरूप्यादौजसादिषु नैकशेषः । भ्यामादिषु सारूप्यादेकशेषो भवत्येवेत्यपास्तम् । ननु वार्तिके सामान्यतो

शब्दरत्न।

इति वार्तिककृतोक्तम्। ननु वार्तिके प्रातिपदिकैकशेष इत्ययुक्तम्। विभक्त्यन्तानामेकशेषेऽपि जननीमातृधान्यमात्रर्थके मातृभ्यां देहि मातृभ्यां चेत्यत्र प्रतिषेध आवश्यकः। न च तत्पक्षे इष्टापत्तिः। "किमुच्यते प्रातिपदिकानामेकशेष इति न पुनर्यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि प्रतिषेधो वक्तव्यस्तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां चेति। अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेण" इति भाष्योक्तेरिति वाच्यम्। सूत्रव्याख्यानपक्षभेदेनैकलक्ष्यस्य साधुत्वासाधुत्वयोरनौचित्यात्। अत एवाथ मतमेतदिति प्रतीकमुपादायाभ्युपगमवादेन त्वेतदुच्यते इति कैयटादिभिर्व्याख्यातमिति चेन्न। ईदृशविरुद्धमभ्युपेत्यैव वार्तिके तदुक्तेः। अत एव तदुत्तरमेवं च कृत्वा चोद्यते इत्युक्तं भाष्ये। अस्य प्रातिपदिकानामेकशेष इत्यादीति शेषः। अनेन चास्य पूर्वपक्षवार्तिकत्वं स्फुटमेवोक्तम्। तत्र मातृग्रहणं विभक्तौ विरूपाणामुपलक्षणम्। अयं च पूर्वपक्षः प्रातिपदिकैकशेषस्य "एकविभक्तौ" इति पदाभावे एवोपपत्तिं मत्वा कृतः। तदभावे हि यानि सरूपाणि तेषामेकशेष एवेत्यर्थ एव प्राप्नोति। प्रयोगमात्रावच्छेदेन सारूप्यस्य हरिणहरितप्रकृतिकहरिणीशब्दादौ तद्धिते वैरूप्येणासम्भवात्प्रयोगसामानाधिकरण्येनैव सारूप्यस्य ग्राह्यतया तस्यात्रापि सत्त्वात्प्राप्तस्य स निषेधः। अत एवाग्रे विभक्तेः सारूप्ये उपलक्षणत्वमाश्रित्य तत्पक्षस्थापनेन तत्खण्डनं कृतमित्येवकारापकर्षौ

ज्योत्स्ना।

"मातृमात्रोः प्रतिषेधो वक्तव्य" इत्येव वक्तव्ये "प्रातिपदिकैकशेषे" इति वक्तुं शङ्कते—नन्वित्यादिना। तथाच 'प्रातिपदिकैकशेष' इत्युपलक्षणं विभक्त्यन्तैकशेषस्यापि। यथाचानयोः पक्षयोर्न मूलभेद इति भावः। अत एवेति। 'विभक्त्यन्तानामेकशेष' इति कल्पेऽपि जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोरेकशेषो न भवत्येवेति स्वीकारादेवेत्यर्थः। अत एवेति। ईदृशविरुद्धमभ्युपेत्यैव प्रातिपदिकोपादानं वार्तिके कृतमिति स्वीकारादेवेत्यर्थः।

यानि सरूपाणि तेषामिति। येषां सारूप्यमेव तेषामित्यर्थः। तथाच स्ववृत्तियावद्रूपवत्त्वसम्बन्धेन स्वविशिष्टानामेकः शिष्यत इति फलति। तदेतदभिप्रेत्याह—प्रयोगावच्छेदेन सारूप्यस्येति।

वैरूप्येणेति। तथाच हरितवर्णवाचकहरिणीशब्दवृत्तियावद्रूपवृत्तित्वस्य मृगीवाचकहरिणीशब्दे ऽभावात् तयोरेकशेषो न स्यादिति भावः। अत एवेति। एवकारापकर्षेणेन स्ववृत्तियावद्रूपवत्त्वसम्बन्धेन स्वविशिष्टानामेकशेष इति स्वीकारादेवेत्यर्थ इति भावः। सारूप्ये उपलक्षणत्वमिति। एतत्तत्त्वं मनोरमाव्याख्यायां प्रागेवोक्तम् इति तत एवावगन्तव्यम्।

शब्दरत्न ।

भाष्ये ध्वनितः । तं विना तावन्मात्रेण तत्खण्डनायोगात् । एतेन "एकविभक्तौ" इत्यावर्त्यैकविभक्तौ सरूपाणामेकविभक्तौ विवक्षितायामेकशेष इत्यर्थे यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ सरूपाणामित्यर्थस्य प्रत्यासत्त्या लाभेन(१) भ्यामादावे-

ज्योत्स्ना ।

यत्तु—स्वोत्तरं यावन्त्यो विभक्तयो भवेयुः तावद्विभक्त्यव्यवहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयुस्तावद्रूपवानर्थं भवेदिति सम्भावनामादाय स्वाश्रयाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यकसम्भावनाप्रयोज्यविभक्त्यव्यवहितपूर्वत्वप्रकारकयावद्रूपविशेष्यकसम्भावनाप्रयोज्यतावद्रूपप्रकारकसम्भावनाविशेष्यत्वसम्बन्धेन । स्ववृत्तिरूपविशिष्टरूपवत्त्वमेव विभक्तौ परतः सारूप्यमेव येषां तेषां तत्वम् । अत एव नित्यबहुवचनान्ताक्षतशब्दस्य सर्वविभक्त्यन्ताक्षतशब्दस्य चैकशेषः सिद्ध्यतीति तन्न। संज्ञाभूतसर्वशब्दस्य उपसर्जनीभूतसर्वशब्दस्य चैकशेषापत्तिरिति दिक् ।

ध्वनित इति । आरम्भकल्पे जननीपरिच्छेतृवाचिनोरेकशेषो न प्राप्नोति । विभक्तिः सारूप्ये उपलक्षणमिति प्रत्याख्यानकल्पे चैकशेषः प्राप्नोतीति फलभेदवारणायैवकारापकर्षो ह्यावश्यक इति भावः ।

---

प्र० (१) 'भ्यामादावेकशेषो नौजसादाविति वार्तिकं व्यर्थमिति तदाशय' इत्यपास्तमिति । वस्तुत इदमेव युक्तं तथाहि—'प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः' इति प्रातिपदिकैकशेषकल्पे एव निषेध आरब्धो भाष्ये, न तु विभक्त्यन्ताद्येकशेषकल्पे । अन्यथा प्रातिपदिकैकशेषकल्प इव तेष्वपि कल्पेषु निषेधवार्तिकमारभ्येत । अत एव 'किमुच्यते प्रातिपदिकानामेकशेष इति, न पुनर्यस्यापि विभक्त्यन्तानामेकशेषः, तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात् । तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां मातृभ्यां चेति । अथमतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेणेति प्रातिपदिकानामेकशेषे दोषो भवति'इति भाष्यं स्वरसतः सङ्गच्छते । 'ईदृशविरुद्धमभ्युपेत्यैव वार्तिके तदुक्तेरि'ति तद्भाष्यस्य प्रमादपाठतात्पर्यकत्ववर्णनं नोचितमभियुक्तानाम् । सूत्रव्याख्यानभेदेनैकलक्ष्यस्य साधुत्वासाधुत्वपरिहारस्तु 'अथमतमेत'दित्यादिभाष्यानुरोधेन सामान्यप्रवृत्तस्यापि 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेध' इति वार्त्तिकस्य प्रथमाद्वितीयाविभक्तिपरकत्वमात्रविषयकत्वाङ्गीकारेण करणीयः । अन्यथा विभक्त्यन्तैकशेषवादिमते मातृभ्यामित्यादावेकशेषो भवति प्रातिपदिकैकशेषवादिमते नेति फलभेदो दुरुद्धरः स्यात् । 'एकविभक्तौ' इत्यावर्त्याऽपि वार्तिकार्थोपसङ्ग्रहो भवितुमर्हतीत्यन्यदेतत् ।

तस्मात् भ्यामादावुभयमतेनैकशेषः, औजसादावुभयमतेन नैकशेष इति ऐकमत्यसम्पादकव्याख्यानमेव सुधीभिरादरणीयमिति नैवकारापकर्षे मानम् । न च वार्तिके 'मातृमात्रोः प्रतिषेधः' इत्यत्र ओस्विभक्तौ परतो मातृशब्दे एकशेषाकरणादेवकारापकर्षः सप्रमाणमिति वाच्यम् । अनुकरणस्वरूपभङ्गभिया तत्रैकशेषस्याकरणात्तस्य तत्र मानत्वासम्भवादित्यलम् ।

भ्यामित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात् । एक एवेति । एतच्च

शब्दरत्न ।

कशेषो नौजसादाविति वार्तिकं व्यर्थमिति तदाशय इत्यपास्तम् । वार्तिकमते भ्यामादावपि तदभावस्य प्राप्तत्वाच्चेति दिक् । एतच्चेति । एकशेषविधायकं चेत्यर्थः । ध्वनितं चेदं पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे, विभक्त्यन्तानामेकशेष इति पक्षे च "द्वन्द्वप्रतिषेधो वक्तव्य" इत्याशङ्क्य "अनवकाश एकशेषो द्वन्द्वं बाधि-

ज्योत्स्ना ।

परे तु—यस्यां विभक्तौ परतो येषां सारूप्यं दृष्टं तद्विभक्तिसंभावनायां तेषामेवैकः शिष्यत इति भाष्यसम्मतः पन्थाः । एवकारापकर्षस्त्वप्रामाणिकः । अत एव भाष्ये 'विभक्त्यन्तानामेकशेष' इति वचनं नारब्धम् । न च विभक्त्यन्तानामेकशेषवादिमते भ्यामादावेकशेषो जननीपरिच्छेत्तृवाचिमातृशब्दयोः भवति । औजसादिषु न भवति । प्रातिपदिकैकशेष इति कल्पे "मातृमात्रोः प्रतिषेध" इति वचनादेकशेषो न स्यादिति फलभेदः स्यादिति वाच्यम् । विभक्त्यन्तानामेकशेष इति पक्षे एकवाक्यतया प्रातिपदिकैकशेषे "मातृमात्रोः प्रतिषेधः" इति वार्तिकस्य औजसोर्विषयत्वेनादोषात् । अत एव विभक्तिः सारूप्ये उपलक्षणमिति तत्प्रत्याख्यानपक्षे न फलभेदः । न च मातृमात्रोरित्यत्रैकशेषाकरणमेवकारापकर्षे मानमिति वाच्यम् । भवन्मतेऽपि मातृमात्रोरितिशब्दपरत्वेन शब्दपरमातृशब्दयोः सर्वासु विभक्तिषु सारूप्यस्यैव सत्त्वेन एकशेषस्य दुर्वारत्वात् । नचास्मन्मते प्रकृतिवदनुकरणमित्यतिदेशात् प्रतिषेधादनुकरणेऽपि निषेधः स्यादिति न दोष इति वाच्यम् । अस्मन्मतेऽपि औजसो निषेधस्य सत्त्वेन तत्र निषेधात् अनुकरणेऽपि निषेधेन न दोष इत्याहुः ।

प्राप्तत्वाच्चेति । वस्तुतस्तु—औजसादिविषयकमेवैतद्वार्तिकमिति भ्यामादावेकशेषो भवत्येवेति बोध्यम् ।

दिगिति । वस्तुत इदमेव युक्तम् । तथाहि—प्रातिपदिकानामेकशेषकल्पे एव भाष्ये प्रातिपदिकानामेकशेषे "मातृमात्रोः प्रतिषेधो वक्तव्यः" इति वार्त्तिकमारब्धं न तु विभक्त्यन्तैकशेषकल्पे । अन्यथा प्रातिपदिकैकशेषकल्प इव तत्रापि निषेधवार्त्तिकमारभ्येत । अत एव 'किमुच्यते, प्रातिपदिकानामेकशेष' इति । न पुनर्यस्यापि विभक्त्यन्तानामेकशेष इति । 'तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात्, तस्यापि ह्येतानि विभक्त्यन्तानि क्वचित्सरूपाणि मातृभ्यां मातृभ्यां चेति । अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यम् एकशेषेणेति प्रातिपदिकानामेकशेषे दोषो भवति' इति भाष्यं स्वरसतः सङ्गच्छत इति । ईदृशविरुद्धमभ्युपेत्यैव वार्तिके तदुक्तेरिति तद्भाष्यस्य प्रमादपाठतात्पर्यकत्त्ववर्णनं नोचितमभियुक्तानाम् । सूत्रस्याख्यानभेदेन एकैकस्य लक्ष्यस्य साधुत्वासाधुत्वपरिहारस्तु अथमतमेतदिति

सहविवक्षायामेव प्रवर्तते। इतरेतरेतरयोगद्वन्द्वस्य विषय इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतोऽस्य विषयः। इदं च "इदितो नुम् धातोः" (पा० सू० ७।१।५८) इति लिङ्गाल्लभ्यते न्यायाच्च।

तथा हि—यः शिष्यते स लुप्यमानार्थाभिधायीति स्थिते श्रूयमाणैकश-

### शब्दरत्न।

ब्यते" इति ग्रन्थेन भाष्ये। इतरेतरेति। "एकवच्चास्यान्यतरस्याम्" इत्यनेनैकशेष-विषयपदानां समाहारेऽवृत्तिबोधनादिति भावः। इतरान्वय इति। एकरूपेणैकरूपाव-वच्छिन्ने इतरत्रान्वय इत्यर्थः। इदित इति। अत्र ह्यभेदेन परस्परान्वयाद्भेदघटित-साहित्यनिमित्तैकशेषाप्रवृत्तिरिति भावः।

### ज्योत्स्ना

भाष्यानुरोधेन सामान्यप्रवृत्तस्यापि प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेध इति वार्तिकस्य प्रथमाद्वितीयाविभक्तिपरकत्वमात्रविषयकत्वाङ्गीकारेण करणीयः। अन्यथा विभक्त्यन्तैकशेषवादिमते मातृभ्यामित्यादावेकशेषो भवति। प्रातिपदिकैकशेषवादिमते नेति फलभेदो दुर्वारः स्यात्। एकविभक्तावित्यावृत्त्यापि वार्तिकार्थोपसंङ्ग्रहो भवितुमर्हतीत्यन्यदेतत्। तस्माद्भ्यामादावेकशेषः उभयमतेन। औजसादौ नैकशेषः उभयमतेनेति। ऐकमत्यसम्पादनाय व्याख्येयव्याख्यानमेवादरणीयं सुधीभिरित्यलम्, इति नैव एवकारापकर्षे मानम्। न च वार्तिकमते मातृमात्रोः प्रतिषेध इत्यत्र ओस्विभक्तौ परतो मातृशब्दे एकशेपाकरणात् एवकारापकर्षः सप्रमाण इति वाच्यम्। अनुकरणस्वरूपभङ्गभिया तत्रैकशेषस्याकरणात्तत्र मानत्वासम्भवादिति दिक्।

सहविवक्षायामेवेति। एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षायामेवेत्यर्थः।

आवृत्तिबोधनादिति। एवञ्चास्यान्यतरस्यामित्यस्य समाहारएवैकशेषो नेतरेतरयोग इति कल्पनेऽपि सार्थक्यसम्भवात्। तथा कस्मान्न कल्प्यत इति वाच्यम्। सरूपाणामितिनिर्देशासङ्गत्यापत्तेः। समाहारविषये एकवचनस्यैव न्याय्यत्वाच्चेति दिक्।

सहविवक्षापदार्थमाह—यत्र हीत्यादिना। अनेकस्येति। एकरूपावच्छिन्नस्येत्यर्थः। मिलितस्येति। परस्परान्वितस्येत्यर्थः।

अभेदेनेति। इदितोनुमित्यादौ इदित्पदे इच्चासौ इच्चेति कर्मधारयमाश्रयणादिति भावः। तथाचेदिदन्तस्य नुमित्यर्थः। अत एव चक्षिङ्धातोर्नुम् न भवतीति बोध्यम्।

लिङ्गादिति। अन्यथा इच्चासाविच्चेति कर्मधारयेऽपि एकशेषापत्तिरिति भावः। तथाहीति। न्यायभेदोपपादयतीति भावः।

ब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवान्वेतुमर्हति। यद्वा पूर्वसूत्राद् "द्वन्द्वे" इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सतीति व्याख्येयम्।

स्यादेतत्। द्वन्द्वे कृते सतीत्यर्थोऽस्तु। मैवम्। पन्थानौ पन्थान इत्यादौ समासान्तापत्तेः। करौ करा इत्यादौ एकवद्भावापत्तेः। सर्वे सर्वेषामित्यादौ "द्वन्द्वे च" ( पा० सू० १।१।३७ ) "विभाषा जसि" ( पा० सू० १।१।३२ ) इत्यनयोरापत्तेश्चेति दिक्।

यत्तु प्राचा राम, राम औ इति स्थिते इत्युक्तम्, एकविभक्तौ परत इति च तत्रेत्थमुक्तिसम्भवः-राम, राम इत्यत्र अवयवयोरिव समुदायस्यापि प्रातिपदिकसंज्ञास्ति मिलितेनार्थवत्त्वात्। न चार्थवत्त्वे ऽपि समासग्रहणस्य नियमार्थत्वान्नैवमिति वाच्यम्। यत्र समुदाये पूर्वो भागः पदं तद्विषयको नियम इत्युक्तत्वात्। बहुपटव इत्याद्यनुरोधेन नियमस्य सजातीयविषयताया औचित्याच्च। तथा चैकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विर्वचनाद्युत्पत्तिः। तावताप्यवयवार्थानां संख्यान्वयेनानुग्रहसम्भवात्।

नन्वेवं रामकृष्णावित्यादिष्वपि द्वन्द्वं विनैव समुदायाद्विभक्तिः स्यादिति चेन्मैवम्। द्वन्द्वविधावनेकं सुबन्तमित्यस्यानुवृत्त्या एकाज्द्विर्वचनन्यायस्य

---

शब्दरत्न।

ऐकरूप्येणैवेति। पुष्पवन्तपद इवेति भावः। द्वन्द्वे प्रसक्ते इति। विभक्त्युत्पत्तौ सत्यां तत्प्रसक्तिर्बोद्धव्या।

एकवद्भावापत्तेरिति। एवं चेतरेतरयोगविषयाभावेनैकशेषानापत्तिरिति भावः। इत्यनयोरिति। "जसः शी" ( पा० सू० ७।१।१७ ) इत्यत्र "वा" इति वक्तव्ये "विभाषा जसि" ( पा० सू० १।१।३२ ) इति तद्भूतावयवभेदविवक्षया बहुवचने एकशेषद्वन्द्वयोरभावात्तत्र विकल्पवारणायोत्तरार्थं चेति भावः।

सजातीयेति। स्वातन्त्र्येण प्रयोगार्हत्वेन साजात्येऽपि न दोषः। एतत्पूर्वभागस्य विभक्त्युत्पत्तिमनपेक्ष्य स्वातन्त्र्येण प्रयोगानर्हत्वात्। अनुग्रहसंभवादिति। अत एव न प्रत्येकं तदुत्पत्तिः।

ज्योत्स्ना।

समासान्तापत्तेरिति। "ऋक्पूरब्धूः पथामानक्षे" इत्यनेनेत्यर्थः। एकवद्भावापत्तेरिति। "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इत्यनेनेत्यर्थः। बहुपटव इत्यादीति। आदिना परमगार्ग्यायणः शिवभागवत इत्यादेर्ग्रहणम्।

चाधादिति दिक् ।

इत्थमुक्तिसम्भवे सत्यपि समुदायादेकविभक्तौ परत इति पक्षः किमर्थमुपेक्षित इति चेत् । शृणु । अस्मिन्पक्षे मातृमातारौ इत्यादावप्येकशेषः स्यात् ।

नन्वेकविभक्तावित्यावर्त्य एवकारं चानुकृष्य एकविभक्तौ यानि सरूपाण्येवेति व्याख्येयमिति चेन्न । आवृत्तौ मानाभावात् । विभक्तेरेकशेषस्य विशेषणत्वे फलाभावाच्च । न च पयः पयो जरयतीत्यादिव्यावृत्तिः फलम् । सहविवक्षायामित्यस्यावश्यकत्वात् । अन्यथा पयः पयो नयतीत्यत्र गौणमुख्यकर्मणोरेकशेषापत्तेः । देव देव इत्यादावतिप्रसङ्गाच्च । प्रत्युत आवृत्त्या उभयविशेषणत्वे भिक्षाणां समूहो भैक्षमिति न सिद्ध्येत् । तथा हि—भिक्षा३ अ इति स्थिते 'अन्तरङ्गानपि विधीन् बहिरङ्ग' इति लुकि कृते विभक्तिपरत्वाभा-

---

शब्दरत्न ।

बाधादिति । अन्यथा द्वन्द्वोच्छेदो नलोपाद्यसिद्धिश्चेति भावः । यानि सरूपाण्येवेति । तेषामेकविभक्तौ परत एकशेष इति शेषः । मानाभावादिति । भाष्येऽनुक्तत्वादिति भावः । किञ्चावृत्तौ प्रत्यासत्तिन्यायेन यस्यां विभक्तावेकशेपस्तस्यां विभक्तौ यानि सरूपाण्येव तेषामित्यर्थापत्त्या भ्यामादावेकशेषापत्तिः । "प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः" इति वार्तिकेन भ्यामादावपि तदभावस्यैवेष्टत्वानुमानात् । फलमिति । समुदायादेकविभक्तेरभावाद्विभक्तेर्लुका लुप्तत्वाच्चेति भावः । सहविवक्षायामिति । सा च समुदायस्यैकार्थनिरूपितैकैककारकावेश एव भवतीति भावः । गौणमुख्यकर्मणोरिति । उभयोरपि कर्मत्वेन तत्र समुदायादेकविभक्तेः कर्त्तुं शक्यत्वेन विभक्तिपदेन व्यावर्त्यासम्भवेन सहविवक्षायामित्यावश्यकमिति भावः । नन्वत्रापि लुकि विभक्तिपरत्वाभाव इत्यरुचेराह–देव देव इति । असहविवक्षायामप्येकशेषे तत्पुरुषादिविषयेऽपि तदापत्तिरिति भावः । तत्रापि समुदायादेकविभक्तेः सत्त्वात् । नन्वनेकबोधकैकभिक्षाशब्दादणि भैक्षसिद्धिरस्तीत्यत आह–तथा हीत्यादि । एकशेषारम्भे एकशेषं विना तादृशस्य ज्ञानासम्भव इति भावः । विभक्तिपरत्वाभावादिति । परत्वान्नित्यत्वा-

ज्योत्स्ना

ननु स्वमतेऽपि नियमशरीरे यत्र सङ्घाते पूर्वो भागः पदमित्यस्याभावेन राम इत्यत्र च समासकृतनियमेन समुदायस्य प्रातिपदिकसंज्ञावारणं न सम्भवतीत्याशङ्क्य समाधत्ते—स्वातन्त्र्येणेत्यादिना । भ्यामादावपि तद्भावस्येति । वस्तुतः औजसादावेव नैकशेषो मातृमातारौ ; भ्यामादिषु भवत्येव मातृभ्यां कृतं मातृभ्यां देहीत्यादाविति बोध्यम् । भैक्षसिद्धिरिति । प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्य-

वादेकशेषो न स्यात् । लुका लुप्ते प्रत्ययलक्षणाभावात् । किं च रामावित्यादौ परत्वान्नित्यत्वाच्च "वृद्धिरेचि" (पा०सू० ६।७।८८) इत्येकादेशे कृते विभक्तिपरत्वाभावादेकशेषो न स्यात् । उभयत आश्रयणे ऽन्तादिवद्भावाभावादिति दिक् ।

यत्तु प्राचा व्याख्यात्रा पक्षान्तरमुपन्यस्तं 'सविभक्तिकानामेकशेष' इति । तन्न । निवर्तमानानां विभक्त्या सहैव निवृत्तावपि शिष्यमाणे एकवचनश्रवणप्रसङ्गात् ।

शब्दरत्न ।

त्वादिवृद्धौ सारूप्याभावाच्चेत्यपि बोद्धयम् । (१)अविरविकन्यायेन समाधानं तु लक्षणैकचक्षुष्कैर्दुर्ज्ञेयम् । न च समर्थग्रहणेन परिनिष्ठितप्रातिपदिकात्तद्धितोत्पत्तेः पूर्वमेकशेषे पश्चात्तद्धित इति वाच्यम् । प्रातिपदिकाधिकारात्कि तत्समर्थं कृतवर्णानुपूर्वीकमिति भाष्यात्प्रातिपदिकसम्बन्धिवर्णमात्राश्रयतत्सम्बन्धिवर्णनिमित्तकार्येण परिनिष्ठितत्वस्यैवाश्रयणात् । अत एव(२) "अश्विमानण्" ( पा० सू० ४ ।४ । १२६ ) इति सङ्गच्छते । अन्यथा प्रकृत्यंशे दीर्घश्रवणं स्यात् । उभयत इति । विभक्तौ परतो यतः

ज्योत्स्ना ।

ताकबोधजनकत्वरूपार्थतन्त्रेणेति भावः । अविरविकन्यायेनेति । यथा आविकमिति अविशब्दात्के निष्पन्नाविकशब्दात्समूहे ऽणि आविकमित्येव भवति, न तु केवलादविशब्दादपि सामूहिकप्रत्ययेन आवमिति वाचोयुक्तिः शास्त्रज्ञानाम् । तथेहापि अनेकार्थकभिक्षाशब्दादेवाण् नत्वेकशेषनिष्पन्नभिक्षाशब्दादपीति वाचोयुक्तेर्लक्षणैकचाक्षुषैर्दुर्ज्ञेयत्वादिति भावः । अत्र अव्यविकन्यायेनेति पाठोऽपि क्वचित् । दुर्ज्ञेयत्वादिति । अत एव शब्दनिष्ठसर्वशब्दानामर्वाग्दृशां ज्ञातुमशक्यत्वादिति भावः । अत एवेति । "समर्थानाम्" इति सूत्रे समर्थपदेन कृतसन्धिकार्यमात्रस्यैव ग्रहणेनेति स्वीकारादित्यर्थः । अश्विमानिति । अश्विन्शब्दो वर्तते यस्मिन् मन्त्रे सो ऽश्विमान् । तादृशाश्विमच्छब्दात् अण् प्रत्ययो भवतीति सूत्रार्थः । "तद्वानासाम्" इति सूत्रविहितयत्प्रत्ययापवादो ऽयम् । आश्विनीरुपदधातीति तदुदाहरणम् । दीर्घश्रवणं स्यादिति । समर्थपदेन प्राति-

प्र० ( १ ) अविरविकन्यायेन समाधानं तु लक्षणचक्षुष्कैर्दुर्ज्ञेयमिति । यथा 'अवेः क'इति अविशब्दात्के निष्पन्नादविकशब्दादेव समूहार्थेऽण्प्रत्यये आविकमित्येव भवति, न तु केवलादविशब्दादपि सामूहिकप्रत्ययेन आवमिति, इतिवाचोयुक्तिः शास्त्रज्ञानाम् । तथेहापि अनेकार्थभिक्षाशब्दादेवाण् न त्वेकशेषनिष्पन्नभिक्षाशब्दादपीति वाचोयुक्तेर्लक्षणचक्षुष्कैर्दुर्ज्ञेयत्वमिति भावः । अत्र 'अव्यविकन्यायेन' इति पाठो दृश्यते क्वचित्पुस्तकान्तरे ।

प्र० ( २ ) अत एव 'अश्विमानण्' इति सङ्गच्छते इति । अत्र अश्विन्शब्दे नान्तलक्षणोपधादीर्घस्य प्रातिपदिकसम्बन्धिवर्णाश्रयत्वेऽपि तत्सम्बन्धिवर्णनिमित्तकत्वाभावात् ।

अथोच्येत युगपदधिकरणवचनतायां द्विवचनबहुवचनान्तानामेकशेषः। द्वन्द्वोऽप्येवम्। तथा हि—अजहत्स्वार्थायां वृत्तौ एकैकमनेकार्थाभिधायि परस्परसमभिव्याहारात्। तथा च अलौकिके द्वन्द्वैकशेषयोः प्रक्रियावाक्ये द्विवचनबहुवचनयोरेव प्रवेशाद् विभक्त्यन्तानामेकशेष इति पक्षो निर्बाध एवेति। तदपि न। जहत्स्वार्थायां वृत्तौ तदयोगात्। पक्षान्तरेऽपि प्रथमप्रवृत्तस्यैक-

शब्दरत्न।

प्रत्ययविधिस्तस्यैकशेष इत्यर्थात्तदाश्रयणमिति भावः। "अचः परस्मिन्" (पा० सू० १।१।५७) इति स्थानिवत्त्वं तु न। लोकसिद्धतन्त्रानुवादकत्वादस्य शास्त्रस्यानुवादसामर्थ्यादेव द्वन्द्वनिवर्तकस्य शास्त्रीयविधित्वाभावात्। अनयाऽपि रीत्या ऽन्तवद्भावाप्रवृत्तीत्यन्यत्। यदि त्वेकदेशविकृतन्यायेन "प्राग्दीव्यतोऽण्" (पा० सू० ४।१।८३) इति सूत्रस्थभाष्यप्रामाण्यात्स्थानषष्ठ्यबोधितविकारस्यापि ग्रहणमशास्त्रीयस्य च तेनातिदेशस्तदा मान्तस्य तेन न्यायेन तत्प्रकृतितया औ इत्यस्य च प्रत्ययत्वेनादोषः। अत एव तस्य पदत्वसिद्धिः। अत एव आयसावित्यत्रैकादेशे कृते नुममाशङ्क्य "अचः परस्मिन्" (पा०सू० १।१।५७) इति स्थानिवत्त्वेन परिहृतं भाष्ये इत्युच्यते तर्हि वैरूप्यादेकशेषो न स्यात्। "विरूपाणाम्" इत्यनेन तत्साधने तु न दोष इत्यलम्।

युगपदधिकरणेति। युगपदधिकरणानां द्रव्याणां वचनं यैः पदैस्तद्भाव इत्यर्थस्तदाह—एकैकमित्यादि। अलौकिके इति। तत्रैव द्वन्द्वादिप्रवृत्तिसत्त्वात्। तत्रापि तत्कल्पनादिति भावः। रामकृष्णावित्यादौ "विरूपाणामपि" (का०वा० २०७) इत्येकशेषस्तु न। द्वन्द्वविधानसामर्थ्येन तत्प्राक्कालिकस्यैव समानार्थत्वस्य तत्र निमित्तत्वात्। एवं चैकस्य विभक्त्यन्तस्य निवृत्तावपरस्य तद्विशिष्टस्य श्रवणमिति भावः। पक्षान्तरे ऽपीति।

ज्योत्स्ना।

पदिकसम्बन्धिवर्णमात्राश्रयात् तत्सम्बन्धिवर्णनिमित्तककार्येतरकार्यस्य ग्रहणे नान्तलक्षणोपधादीर्घस्य प्रातिपदिकसम्बन्धिवर्णाश्रयत्वेऽपि यत्सम्बन्धिवर्णनिमित्तकत्वाभावादिति दिक्। अत एवेति। एकदेशविकृतन्यायेनाशास्त्रीयस्य कार्यस्यातिदेशो भवतीति स्वीकारादेवेत्यर्थः। अत एवेति। उक्त एवार्थः।

इत्यर्थ इति। राजपुरुष इत्यादौ राजपदस्य राजत्वावच्छिन्ने शक्तिः। पुरुषपदस्य पुरुषत्वावच्छिन्ने शक्तिः। राजसम्बन्धिपुरुषत्वावच्छिन्ने च विनिगमनाविरहात्। राजपदस्य पुरुषपदस्य राजपुरुषपदस्य च शक्तिरिति तदभावः। युगपदधिकरणतानां-तत्प्राक्कालिकस्यैवेति वृत्तिप्राक्कालिकस्यैवेति तदर्थः। अन्यथा द्वन्द्वस्थले घटपटाविति लक्ष्ये घटपटयोरुभयोरपि उभयोः शक्तत्वेन "विरूपाणाम्" इत्येकशेषः। इतरेतरयोगस्यैव व्यवच्छेदः स्यादिति द्वन्द्वादिप्राक्कालिकत्वमेव समासार्थत्वम्। "विरूपाणाम्"इत्येकशेषप्रवृत्तौ निमित्तं युगपदधिकरणतावादिमते अस्यैवेति दिक्।

वचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषाद्युच्छेदापत्तेः । तत्रापि पूर्वपदस्य उत्तरपदार्थे उपसंक्रमेण षष्ठ्याद्ययोगात् । तथा च भाष्यम् 'सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च' इति ।

यदपि व्याचख्युः—व्यक्तिपक्षे यावद्व्यक्ति तत्तच्छब्दप्रयोगे प्राप्ते एकस्यैव प्रयोगो यथा स्यादिति सूत्रम् । आकृतिपक्षे तु एकेनैवाकृत्यविनाभूतानेकव्यक्तिलाभादनर्थकमिति । तन्न । व्यक्तिपक्षे ऽपि 'न ब्राह्मणं हन्यात्' इत्यत्र ब्राह्मणशब्देनैवैकेनापि अनेकस्य तन्त्रेण सुवचत्वात् ।

शब्दरत्न ।

अयं भावः—अलौकिके तत्कल्पनेऽपि प्रत्येकं सुबुत्पत्त्यनन्तरमेव तत्कल्पना, तदनन्तरमेव तत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः । एवं चान्तरङ्गत्वादुत्पन्नैकवचनत्यागेन द्विवचनाद्युत्पत्तौ मानाभाव इति । उत्तरपदार्थे उपसंक्रमेणेति । उपसंक्रमश्च तदालिङ्गितस्यैव स्वार्थस्योपस्थितिः । सा च विभक्त्यर्थसम्बन्धाद्यन्तर्भावेणैवेति तस्योक्ततया तदनापत्तौ तदुच्छेद इति भावः । दुःखा चेति । वृद्धव्यवहारस्य शब्दार्थनिश्चयहेतुत्वम् । न च प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं वृद्धव्यवहारे दृश्यते । न्यग्रोधशब्देन तल्लाभाच्च न लक्षणा ऽपि । प्लक्षन्यग्रोधावित्यादौ बोधावृत्त्यननुभवाच्च । दुरुपपादा चेति । न च द्विवचनाद्यनुपपत्तिस्तदुपपादिका । समासस्योद्भूतावयवभेदसमुदायाभिधानशक्तिमत्त्वाद् द्विवचनादिसिद्ध्या तदनुपपत्तेस्तदुपपादकत्वाभावात् । समुच्चयान्वाचययोः समासस्यासामर्थ्येनैव वारयिष्यमाणतया न तदापत्तिरेतदुपपादिका । न चान्यत्रोपपादयितुमशक्यत्वेऽपि एकशेषे कस्य शेष इत्यत्र विनिगमकाभावात्सर्वेषां सर्वार्थत्वमावश्यकम् । तथा सत्येकशेषस्यैव वैयर्थ्यापत्तेः । तस्मादेकशेषज्ञानोत्तरं शास्त्रवासनावतां तच्छक्तिज्ञानं, न तु ततः प्रागपीति न दोषः ।

आकृत्यविना भूतेति । नियमेनाकृतिसम्बद्धेत्यर्थः । ब्राह्मणशब्देनेवेति भावः । नहि तत्रैकशेषः । तावद्ब्राह्मणशब्दज्ञानासम्भवात् । तस्मात्तत्र जातिपक्षेण तन्त्रेण वा यथा निर्वाहस्तथान्यत्रापीति भावः । न ब्राह्मणमित्येकवचनं त्वार्षम् । तन्त्रेण सुवचत्वादिति ।

अयं भावः—भाष्ये ऽर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेवेति उक्तम् । एवं च एकेनानेकार्थबोधनमपि प्रत्यर्थमेवेति एकेनैव ब्राह्मणपदेनानेकार्थबोधनं तत्र । अन्यथाऽविद्यमानायाः शक्तेरेकशेषशास्त्रसहस्रेणापि उपपादयितुमशक्यतया बोधानुपप-

ज्योत्स्ना ।

तदालिङ्गितस्यैवेति । तदा लिङ्गितत्वं तदन्वितत्वं, तथाच—राजपुरुष इत्यादौ राजपदस्यापि राजसम्बन्धीपुरुषत्वावच्छिन्ने शक्तिः । एवं पुरुषपदस्यापीति भावः । उद्भूतावयवभेदसमुदायस्यापीति । अवयवगतसंख्यातात्पर्येणेत्यर्थः ।

तन्त्रेणेति । प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधजनकत्वरू-

अन्यथा जातीपक्षेऽपि 'वासेन सम्यक्त्तमयोश्च तस्मिन्' इत्यादिनानार्थानुरोधेन सूत्रं विना ऽनिर्वाहात्। तस्माज्जातिव्यक्तिपक्षयोरुभयोरपि तन्त्रेण प्रयोगान्निर्वाहेऽपि सर्वत्र तन्त्रेणैव बोधनीयमिति नियामकाभावात्पाक्षिको द्वन्द्वः सूत्रं विना दुर्वारः। घटोऽयं घटोऽयमिति नानाशब्दप्रयोगदर्शनात्, तद्वत् घटघटाविति द्वन्द्वस्य न्यायप्राप्तत्वात्। न चैवमपि घटकलशाविति द्वन्द्वापत्तिः। "विरूपाणामपि समानार्थानाम्" (वा० २०७) इति वार्तिकात्। रूप्यते बोद्ध्यत इति व्युत्पत्त्या रूपशब्दस्य अर्थपरत्वमाश्रित्य वार्तिकार्थस्यापि सूत्रेणैव क्रोडीकाराच्च। तस्मात् घटघटौ घटकलशावित्यादिपाक्षिकानिष्टवारणाय पक्षद्वयेऽपि सूत्रमावश्यकमित्यवधेयम्।

---

शब्दरत्न।

त्तिरेव स्यात्। तन्त्रं(१) चात्रार्थतन्त्रम्। एकत्रैव शब्देऽनेकार्थानां सत्त्वात्। शब्दस्य पर्यायपरिवृत्तिसहतया(२) ऽर्थतन्त्रमेवैतत्। अक्षा इत्यादौ तु तदसहतया शब्दतन्त्रमेव। अन्यथा—तन्त्रानङ्गीकारे। क्षमाशब्दः क्षान्तिभूम्योर्वाचकः। नानार्थानुरोधेनेति। सूत्रमावश्यकं तन्त्रेति शेषः। न्यायप्राप्तत्वादिति। अनभिधानमाश्रित्य तु भाष्ये पक्षद्वये सूत्रं प्रत्याख्यातमित्यन्यत्। अनेकघटादिपदानां चार्थे वृत्तिरेव नानभिधानादिति द्वन्द्वाप्राप्तिरेवेति तदाशयः। आवश्यकमिति। अनभिधानाज्ञाने इति शेषः।

ज्योत्स्ना।

पार्थतन्त्रेण प्रवृत्तिनिमित्तनिष्ठकविशेष्यतानिरूपितनानाप्रकारताकबोधजनकरूपशब्दतन्त्रेण चेत्यर्थः। समानार्थानामिति। समानप्रवृत्तिनिमित्तिकानामित्यर्थः।

---

प्र० (१) नानाफलकसमानाकारकानेकव्यापाराणां मध्येऽनेकफलोद्देशेनैकव्यापारकरणं तन्त्रम्। यत्र प्रवृत्तनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधो भवति तत्रार्थतन्त्रम्। यथा घटा इत्यादौ। अत्र हि घटत्वनिष्ठकप्रकारतानिरूपितनानाघटनिष्ठविशेष्यताकबोधसम्भवादर्थतन्त्रम्। एवं प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधो यत्र, तत्र शब्दतन्त्रम्। यथा अक्षा इत्यादौ नानार्थस्थले शकटाक्षत्व—देवनाक्षत्व—विभीतकाक्षत्वरूपप्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपिततत्तदक्षनिष्ठनानाविशेष्यताको बोध इति तच्छब्दतन्त्रमेव। एवं चन्द्रपदस्य कर्पूरेन्दूभयबोधकत्वाच्छब्दतन्त्रमेव तादृशस्थले बोध्यम्। शब्दपरिवृत्त्यसहत्वादिलक्षणं तु न युक्तं। प्रोक्तस्थले "घनसारश्चन्द्रसंज्ञः" इति कोशेन चन्द्रपदस्थाने इन्दुपदन्यासेऽपि कर्पूरेन्दुरूपार्थबोधोदयेन शब्दपरिवृत्तिसहत्वेऽपीष्टस्य शब्दतन्त्रत्वस्यानापत्तेः।

वि० (२) प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधजनकत्वमर्थतन्त्रस्य लक्षणं बोध्यम्।

एवं स्थिते सूत्रवैयर्थ्यमेव हृदि निधाय यदिह व्याचख्युः—नानेनैकशेषो विधीयते इत्यादि । यच्च समुदायादेकस्यां विभक्ताविति पक्षं प्रत्याख्याय पुनराहुः । राम राम औ इति स्थिते इति । अलौकिकमेतत्प्रक्रियावाक्यमूह्यते, न तु लौकिकम् । अलौकिके च विभक्त्येकादेशादिकार्यं न प्रवर्तते । प्रयुक्तानामेवान्वाख्यानादित्यादि । तत्सर्वं सन्दर्भविरुद्धं न्यायविरुद्धं च । प्रयुक्तानामेव ह्यन्वाख्यातुमलौकिकमुत्प्रेक्ष्यते । शास्त्रीयकार्यं च सर्वमलौकिकेष्वेव प्रवर्तते; न तु परिनिष्ठिते । "प्रथमयोः पूर्वसवर्णः" (पा० सू० ६।१।१०२) इत्यादीनां प्रवृत्तिं विना परिनिष्ठितरूपालाभात् । परिनिष्ठिते तत्प्रवृत्तेर्दुरुपपादत्वाच्चेत्यास्तान्तावत् ।

"अमि पूर्वः" ॥ (पा० सू० ६।१।१०७) अम्यचीति । अमि योऽच् तस्मिन् । अमो ऽवयवे ऽचीति यावत् । तेन मकारसहितस्य न(१) पूर्वरूपम् ।

शब्दरत्न ।

नानेनैकशेषो विधीयते इति । किंतु न्यायसिद्ध एवानूद्यते इति एतच्छेषस्तद्ग्रन्थे । प्रयुक्तानामिति । अयं भावः—वृद्ध्यादिप्रवृत्तावेकशेषशास्त्राप्रवृत्त्या नित्यविद्ध्युद्देश्यतावच्छेदकानाक्रान्तत्वेन तदेव परिनिष्ठितं स्यात्तच्च न लोके प्रयुज्यते, प्रयुक्तानां चेदमन्वाख्यानमिति न तत्प्रक्रियावाक्ये वृद्ध्यादिप्राप्तिरिति । सन्दर्भविरुद्धमिति । एकस्यैव प्रयोगो यथा स्यादिति सूत्रमिति, समुदायादेकविभक्ताविति पक्षः प्रत्याख्यात इति च सन्दर्भ इत्यर्थः । न्यायविरोधमाह—प्रयुक्तानामेवेति । न च यद्येतादृशशास्त्रीयकार्यप्रवृत्त्या परिनिष्ठितं सल्लोके प्रयोगार्हं कल्पिते तदीयालौकिके तच्छास्त्रप्रवृत्तावपि अत्र वृद्ध्यादिप्रवृत्तिर्नोचिता वैषम्यादिति वाच्यम् । कृतद्वन्द्वानामेकशेष इति पक्षे नावौ अनड्वाहावित्यादौ परत्वादिना आवादौ कृते एकशेषानापत्तेरिति दूषणदानपरभाष्यवार्तिकासङ्गत्यापत्तेरित्यलम् ।

अमि योऽजिति । अवयविन अधारत्वविवक्षायां वृक्षे शाखेतिवत्सप्तमी तदाह—अमो ऽवयवे ऽचीति । "पूर्वपरयोः" (पा० सू० ६।१।८४) इत्यधिकृतपरशब्देन विशेष्यत्वा-

ज्योत्स्ना ।

तावदिति । वस्तुतस्तु अकोऽजादावमि परतः पूर्वरूपमित्युच्यमानेऽपि "आदेः परस्य" इति परिभाषयाऽऽदेरेव भविष्यतीति वैयधिकरण्येनान्वयः ।

विशेषत्वाच्चेति । वस्तुतस्त्वनुवृत्तौ अनुवृत्तस्य विशेषणत्वेऽपि न दोष इत्युक्तदि-

प्र० (१) प्रत्ययग्रहणपरिभाषया तदादेरित्यस्योपस्थित्याऽदन्ततदादेः परिभूतो योऽमृघटकोऽच् तस्मिन् परे पूर्वपरयोः स्थाने पूर्वरूपमित्यर्थः । तेन वासुदेववाचकस्य अशब्दस्य द्वितीयैकवचने 'हे राम अम्' इत्यादौ न तदापत्तिः ।

एवं "अक्षादूहिन्याम्" इत्यादावपि ऊहिन्यां योऽच् तस्मिन्नित्यादि(१) बोध्यम्। "इको यणचि" इत्यज्ग्रहणस्यानुवृत्तेर्निर्विवादत्वात्। "पदास्वैरिवाह्या-(पा० सू० ३।१।११९)" इत्यादिनिर्देशाश्चेह लिङ्गम्।

"तस्माच्छसः" ॥ (पा० सू० ६।१।१०३) तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते। शस इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते। पूर्वसवर्णदीर्घात्(२) परस्य शसो ऽवयवस्येति। तदेतदाह–परो यः शसः सकार इति। परो यः शस् इति तु नोक्तम्, असम्भवात्। न हि कृते पूर्वसवर्णदीर्घे परः शस् सम्भवति।

"अट्कुप्वाङ्" ॥ (पा० सू० ८।४।२) रषाभ्यामिति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम्। अत्र सर्वैर्व्यवायोऽसम्भवी, एकैकमात्रव्यवाय इत्यपि नार्थः। क्षुभ्नादिषु क्षुभ्नशब्दपाठसामर्थ्यात्, "सरूपाणाम्"

शब्दरत्न

दजेव गृह्यते इति बोद्धव्यम्। निर्विवादत्वादिति। उत्तरत्रानुवृत्तेः सत्त्वादिति भावः। लिङ्गमिति। अनुवृत्तावनुवृत्तस्य विशेष्यत्वे चेत्यर्थः। स्पष्टं चेदम् "औतोऽम् शसोः" (पा० सू० ६।१।९३) इत्युपक्रम्य प्रत्ययलक्षणसूत्रे भाष्ये।

अवयवषष्ठीति। अवयवावयविभावसम्बन्धबोधिका षष्ठीत्यर्थः।

ज्योत्स्ना।

शेति बोध्यम्।

अजेव गृह्यत इति। वस्तुतस्तु–पूर्वपरशब्देन आदेर्ग्रहणेऽपि "अलोऽन्त्यस्य" "आदेः परस्य" इतिपरिभाषाभ्यां न दोष इत्यवोचाम।

निर्देशाश्चेति। अन्यथा पदास्वैरीत्यादौ सम्पूर्णस्वशब्दस्य ईरीशब्दस्थाने परेऽनेनवृद्धिः स्यादिति भावः।

वस्तुतस्तु—'अलोऽन्त्यस्य' 'आदेः परस्य' इति परिभाषाभ्याम् अवर्णान्तात्स्वशब्दादजादौ इरिन्शब्दे परत इत्यर्थेऽपि दोषाभावेन सम्भवति सामानाधिकरण्ये वैयधिकरणस्यान्याय्यत्वाच्च। वैयधिकरण्येन अन्वये पदास्वैरीति न लिङ्गमिति बोध्यम्।

---

प्र० (१) न चैवमपि "पूर्वपरयोः" इति पूर्वशब्देन "अक्षादूहिन्याम्" इति निर्दिष्टस्य अक्षशब्दस्य स्थानित्वेन ग्रहणे सम्पूर्णस्थाने वृद्ध्यापत्तिरिति वाच्यम्। अक्षस्य अः अक्षः। शकन्ध्वादित्वात्पररूपम्, तथा चाऽक्षशब्दावयवकारादूहिन्यवयवेऽचि परे पूर्वपरयोः स्थाने वृद्धिरित्यर्थकरणाच्च दोष इति बोध्यम्।

प्र० (२) तेन इमान् गाः पश्य इत्यादौ न तदापत्तिः।

( पा० सू० १।२।६४ ) इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह—व्यस्तैर्यथासम्भवं मिलितैश्चेति ।

नन्वेवम् आदर्शेनेत्यादौ अतिप्रसङ्गः । न च अडादिभिरेव व्यवधाने इति नियमः । अप्राप्ते विधिरयमित्युक्तत्वात् । सत्यम् । योगविभागोऽत्र बोद्धव्यः । "व्यवाये ऽपि" इत्येको योगो विध्यर्थः । "अट्कुप्वाङ्नुम्" ( पा० सू० ८।४।२) इत्यन्यो(१) नियमार्थः। छान्दसो भिसो लुक्। निषेधं बाधितुमिति।

शब्दरत्न ।

निर्देशाच्चेति । नुम्ग्रहणाच्चेत्यपि बोद्धव्यम् । नियमार्थ इति । स च साजात्याद्वाक्षर-

ज्योत्स्ना ।

अतिप्रसङ्ग इति । अजादिव्यवायसत्वेनादर्शेनेत्यादा लक्षणस्यातिप्रसङ्ग इति भावः । विध्यर्थ इति । "रषाभ्याम्" इत्यनेन रेफषकाराव्यवहितोत्तरत्वविशिष्टस्यैव णत्वविधानेन "व्यवाये" इति योगो विध्यर्थ इति भावः ।

अन्यो नियमार्थ इति । "रषाभ्याम्" इत्यनेन एभिरेव व्यवाये णत्वं भवतीति नि-

प्र० ( १ ) वस्तुतस्तु चिन्त्यमेतत् । सर्वत्र नियमस्थले नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचं कृत्वा नियामकशास्त्राणां विधायकत्वमित्येकः पक्षः । तेषां निषेधमुखेन प्रवृत्तिरिति चापरः पक्षः । तदा हि पूर्वोक्तरूपावच्छिन्ने नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचं कृत्वा नञोऽध्याहारेण तदरिक्तस्य न भवतीत्यर्थः सम्पद्यते । तथा च प्रकृते प्रथमपक्षे "व्यवायेऽपि" इत्यस्मिन् नियम्यशास्त्रं पूर्वोक्तरीत्या संकोचं विधाय "अट्कुप्वाङ्नुम्" इत्यस्य विधायकत्वे आदर्शेनेत्यादौ अडादिव्यवधानसत्त्वादापत्तिस्तदवस्थैव । एवं द्वितीयपक्षेऽपि "अट्कुप्वाङ्" इत्यस्याऽडादिकर्तृकव्यवधानावच्छिन्नो य आक्षरसमाम्नायिकर्तृकव्यवधानवान् तस्य नस्य णत्वं न भवतीत्यर्थेन आदर्शेनेत्यत्राऽडादिकर्तृकं व्यवधानवच्छिन्नस्य नस्याऽभावेन निषेधाप्राप्त्या "व्यवायेऽपि" इत्यनेन णत्वापत्तिस्तदवस्थैव । अत एव "रषाभ्याम्" इति सूत्रे भाष्ये मातॄणामित्याद्यर्थं णत्वे 'ऋकारग्रहणं कर्तव्यम्' इति वार्तिकस्य "अट्कुप्वाङ्" इति नियमेन प्रत्याख्यानं कृत्वा, "अट्कुप्वाङ्" इत्यत्र आदर्शेनेत्यादौ णत्ववारणाय "अटा व्यवाये णत्वे अन्यव्यवाये प्रतिषेधो वक्तव्यः" इति वार्तिकमुक्तम् । अन्यथा "रषाभ्याम्" इति सूत्रोक्तनियमेनैवात्राऽपि णत्ववारणे वार्तिकोत्थानमेव न स्यात् । ततश्च भाष्ये उक्तम् "व्यवायेऽपि" इति योगो विभज्यते । "अट्कुप्वाङ्" इति नियमार्थमित्यादि । अग्ने च अटैव व्यवधाने भवति। किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते, अड्ग्रहणसामर्थ्यात् । यदि हि अटा चान्येन च व्यवाये स्यात्, व्यवाये नो णो भवतीत्येव ब्रूयात् । अस्ति चान्यदड्ग्रहणस्य प्रयोजनम् । किम्?

तेन पर्याणद्धमित्यत्र "उपसर्गादसमासे ऽपि" ( पा० सू० ८।४।१४ ) इति

शब्दरत्न ।

समाम्नायिकविषयकः । अतो नृणामित्यादावुत्तराज्भागेन व्यवधानेऽपि णत्वसिद्ध्या

ज्योत्स्ना ।

यमार्थं इति भाव इत्यभिमानः ।

वस्तुतस्तु—नियमस्थले सर्वत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे सङ्कोचो भवतीतिसिद्धान्तेन प्रकृते नियामकशास्त्रीयोद्देश्यतावच्छेदक अडादित्वव्यापकम्। नियम्यव्यवायेऽपि इति शास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यदाक्षरसमाम्नायिकवर्णत्वं तदवच्छिन्नातिरिक्तत्वे व्यवायेऽपि इत्यत्र सङ्कोचेन नञमध्याहृत्य तदतिरिक्तस्य न भवतीत्यर्थः सम्पद्यते। विधिमुखेन प्रवृत्तौ तु व्यवायेऽपि इत्यस्थितनियम्यशास्त्रे पूर्वोक्तरीत्या सङ्कोचं विधाय "अट्कुप्वाङ्" इत्यस्य विधायकत्वे आदर्शनेत्यादौ अडादिव्यवधानसत्वादापत्तिस्तदवस्थैव। एवं निषेधपक्षेऽपि "अट्कुप्वाङ्" इत्यस्य अडादिकर्तृकव्यवधानवद्भिन्न य अक्षरसमाम्नायिकर्तृकव्यवधानवान्, तस्य नस्य णत्वं न भवतीत्यर्थेन आदर्शनेत्यत्र अडादिकर्तृकव्यवधानवद्भिन्नस्य नस्य अभावेन निषेधाऽप्राप्त्या "व्यवायेऽपि" इत्यनेन णत्वस्य प्राप्तिस्तदवस्थैव।

अत एव "रषाभ्याम्" इति सूत्रे मातॄणां इत्याद्यर्थं णत्वे "ऋकारग्रहणं कर्तव्यम्" इति वार्त्तिकस्य "अट्कुप्वाङ्नुम्" इति सूत्रस्य विषये प्रत्याख्यानं कृत्वा "अट्कुप्वाङ्" इत्यत्र आदर्शनेत्यादौ णत्ववारणाय अडव्यवाये णत्वे "अन्यव्यवाये प्रतिषेधो वक्तव्यः"। अन्यथा "रषाभ्याम्" इति सूत्रविषयेनैव अत्रापि णत्ववारणे वार्त्तिकोत्थानमेव न स्यात्। ततश्च भाष्ये उक्तम् "व्यवायेऽपि" इति योगो विभज्यते "अट्कुप्वाङ्" इतिविषयार्थमित्यादि। अग्रे च "अटैव व्यवधाने भवति किं वक्तव्यमेतत् नहि कथं अनुच्य मानं गंस्यते अड्ग्रहणसामर्थ्यात्। यदि हि अडा चान्येन च व्यवाये स्यात् अट्ग्रहणमनर्थकं स्यात्। व्यवाये यो णो भवति इत्येव ब्रूयात्। अस्ति चात्र अट्ग्रहणस्य प्रयोजनम्, किम् योऽनिर्दिष्टैरेव व्यवायः तत्र माभूत्। कृत्स्नम् मृत्स्नेति यद्येवं प्रयोजनम् स्यात् "शर्व्यवाये न" इत्येव ब्रूयात्"इति समाहितम्। अत्र "शर्व्यवाये न" इत्युपलक्षणं "तुशर्व्यवाये" इत्यस्यापि। अन्यथा आर्घ्नोत् इत्यादौ निषेधानापत्तिः। एवञ्च तु "शर्व्यवाये न" इति न्यासेनैव सिद्धे गुरुभूतन्यासस्य "अट्कुप्वाङ्" इत्यादेः

योऽनिर्दिष्टैरेव व्यवायस्तत्र माभूत्—कृत्स्नम् मृत्स्नेति यद्येवं प्रयोजनं स्यात् "शर्व्यवाये नेत्येवं ब्रूयात्"इति समाहितम्। अत्र 'शर्व्यवाये न'इत्युपलक्षणं'तु शर्व्यवाये न' इत्यस्य, अन्यथा आर्घ्नोत्यादौ निषेधानापत्तिः। एवं च तुशर्व्यवाये नेति न्यासेनैव सिद्धे गुरुभूतस्य "अट्कुप्वाङ्" इत्यादेर्न्यासस्य सामर्थ्यात् अट्कुप्वाङ्नुम्भिरेव व्यवाये णत्वं भवतीत्यर्थादादर्शनेत्यादौ वारणं बोध्यम्।

णत्वं सिद्ध्यतीति भावः । नुम्ग्रहणमिति । तत्स्थानिकस्य स्वाभाविकस्य

शब्दरत्न ।

"ऋवर्णान्नस्य" ( का० वा० ६७ ) इति वचनं न कार्यमिति भावः । इदं प्रत्याहाराह्निके प्रकृतसूत्रे च भाष्ये स्पष्टम् । यद्यपि "रषाभ्याम्" ( पा० सू० ८।४।१ ) इति पञ्चम्योपस्थितनिर्दिष्टपदस्य—"व्यवाये" इत्यनेनाविरोधायाडाद्यतिरिक्ताव्यवहितपरतयाऽऽदर्शेनेत्यादौ णत्वं(१) सुशकवारणम् । ध्वनितं चेदं प्रकृतसूत्रे वार्तिककृता, तथाऽपि तत्र नृणामित्यर्थं वचनारम्भे गौरवमितीदमेवादृतं मूलकृता । स्वाभाविकस्येति । तद्भिन्नस्थानिकस्य पाणिन्युच्चारितस्येर्थः । तृंहू (धा० १३९१) इत्यादेरपि "नकारजावनुस्वार" इति वृद्धोक्तेर्नुम्स्थानिकत्वात्, अत एव तृंहू इत्यस्य नलोपे तृढ

ज्योत्स्ना ।

सामर्थ्यात् "अट्कुप्वाङ्नुम्भिरेव व्यवाये णत्वं भवतीत्यर्थेनादर्शेनेत्यादौ णत्ववारणं बोध्यम् ।

छान्दसो भिसो लुगिति । 'छन्दोवत्सूत्राणि भवन्ति' इत्युक्त्या "सुपां सुलुग्" इति भिसो लुक् इति भावः ।

णत्वं सिध्यतीति । "स्तोः श्चुना श्चुः" इत्यतः प्राग् "अट्कुप्वाङ् नुम् व्यवायेऽपि" इत्यधिकारादिति भावः ।

नियमस्य सजातीयविषयकत्वान्नियमशरीरमाह—स चेति । आत इति । आक्षरसमाम्नायातिरिक्तत्वेन व्यवाये इत्यत्र सङ्कोचादिति भावः । नियम्यव्यवाय इति शास्त्रस्य फलमाह—नृणाम् इत्यारभ्य इतिभाव इत्येतत्पर्यन्तम् । प्रकृतसूत्रे चेति । "रषाभ्याम्" इति सूत्रे चेत्यर्थः शङ्कते—यद्यपीति ।

इदमेवादृतं मूलकृतेति । नियमेनादर्शेनेत्यादौ णत्ववारणं न सम्भवतीति मूलव्याख्यायामवोचाम । नच "अट्कुप्वाङ्"इत्यत्रोपस्थितनिर्दिष्टमित्यर्थेऽडादीतरत्र सङ्कोचात् रेफषकारावधिकोत्तरत्वविशिष्टस्याडादीतरघटकव्यवधानशून्यस्य नस्य ण इत्यर्थेनादर्शनेत्यादौ णत्वस्य प्राप्तिरेव नेति वाच्यम् । व्यावाये इत्युक्त्या विरोधात् निर्दिष्टइत्यस्योपस्थिताविवासम्भवाच्चेति यथा प्रत्ययविधावुत्तरांशविकला परिभाषोपतिष्ठते । अन्यथा "अकः सवर्णे" इत्याद्यपवादविषयेऽपि निर्दिष्टांशविकला परिभाषोपतिष्ठते । इत्युक्त्या चारितार्थ्यसम्भवेनापवादविषयत्वमेव भज्येत । "श्रुतानुमितयोः" इतिपरिभाषया निर्दिष्टपदार्थे ऽडादीनामन्वयासम्भवाच्च । अडादिपदम् अडादीतरपरमिति लक्षणायां मानाभावाच्च । अटाऽन्येन च व्यवधानात् आदर्शेनेत्यादौ णत्वं प्राप्नोतीति प्रकृतसूत्रस्थभाष्यविरोधाच्चेति ।

प्र० ( १ ) वस्तुतस्तु "व्यवाये ऽपि" इत्युक्त्वा अव्यहितत्वांशं विहायैव निर्दिष्टपरिभाषाया इहोपस्थानमिति चिन्त्येयमुक्तिः ।

चानुस्वारमात्रस्योपलक्षणमित्यर्थः। तेन "बृहि वृद्धौ" इदित्वान्नुम्। तस्यानुस्वारः। "तृहू हिंसायां" स्वाभाविकोऽत्रानुस्वारः। बृंहणम्, तृंहणम्। उभयत्रापि णत्वं सिद्धम्। "इवि प्रीणने" प्रेन्वनम्। इह "कृत्यचः" (पा०सू० ८।४।२९) "इजादेः सनुमः" (पा०सू० ७।४।३२) इति णत्वं न। यथा "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति विधौ नक्षत्रदर्शनस्य कालविशेषोपलक्षणत्वात्सत्यपि दिवा नक्षत्रदर्शने वाङ् न विसृज्यते उपलक्षितस्य कालविशेषस्याभावात्। रात्रौ असत्यपि नक्षत्रदर्शने विसृज्यते तस्य सत्त्वात्। तथेहापि बोद्धव्यम्।

नन्वेवं नुम्ग्रहणं व्यर्थम्। अनुस्वारस्याट्त्वेनैव संग्रहात्। उरःकेणेत्यादौ विसर्गजिह्वामूलीयादिव्यवधाने ह्येवं गतिरिति चेत्सत्यमित्याह—तच्चेति। स्यादेतत्। उक्तरीत्या "नुम्विसर्जनीय–" (पा० सू० ८।३।५८) इति सूत्रेऽपि नुम्ग्रहणं त्याज्यं स्यात्। तत्राप्यनुस्वारस्य लक्षणीयत्वात्। अन्यथा ऽसम्भवात्। न हि षत्वप्रवृत्तिवेलायां सर्पींषीत्यादौ नुम् लभ्यते। षत्वस्यासिद्धत्वेन ततः प्रागेवानुस्वारप्रवृत्तेः। यद्यपि सुहिन्सु इत्यत्र सम्भवत्येव, तथाऽपि तत्रैवातिव्याप्तिं वारयितुं लक्ष्यानुरोधान्नुम्स्थानिकेऽनुस्वारे लक्षणा ऽऽश्रयणीयैव व्याख्यानात्। तस्य च शर्त्वेन तद्व्यवाये षत्वस्य सिद्धत्वादिति चेत्। मैवम्। उक्तरीत्या तत्रत्यविसर्गग्रहणस्य

---

शब्दरत्न।

इत्यस्य सिद्धिः। इवि प्रीणने इति। हिविदिवीतिदण्डकपठितस्येदं निष्कृष्य ग्रहणम्।

ज्योत्स्ना।

तेनेति। नुम्स्थानिकमकारस्थानिकानुस्वारमात्रस्य च श्चुग्रहणेनेत्यर्थः। स्वाभाविक इति। नुमितरस्थानिकानुस्वारमात्रं स्वाभाविकेत्युच्यते। णत्वं नेति। प्रेन्वनमित्यादावनुस्वारव्यवधानेऽपि अनुस्वारव्यवधानाभावादिति भावः।

ननु नुमित्यनेनानुस्वारमात्रस्य ग्रहणे किं प्रमाणमित्याह—यथेत्यादिना मूले। "अट्कुप्वाङ्" इत्यत्रेव "नुम्विसर्जनीय" इत्यत्रापि अनुस्वारमात्रं कस्मान्नोपलक्ष्यत! इत्याशङ्कते—यद्यपीत्यादिना। 'नुम्विसर्जनीय' इत्यत्रापि नुम्पदेनानुस्वारमात्रमुपलक्ष्यत इत्यत्र प्रमाणमाह।

ननु केवलनुम्व्यवधानेऽपि स्यादित्याह—यद्यपीति। मध्ये शङ्कां समाधत्ते—तथापीति। तत्रैवेति। सुहिन्सु इत्यादौ संयोगान्तलोपस्यासिद्धत्वात् अनुस्वाराभावे तेन व्यवधाने सुहिन्स्वित्यत्रैव णत्वातिव्याप्तिवारणार्थमित्यर्थः। नुम्स्थानिकेऽनुस्वार इति।

प्रत्याख्यानसम्भवेऽपि नियमार्थं नुम्ग्रहणम् । तथा हि—अनुस्वारेण व्यवधाने चेत् षत्वं तर्हि नुम्स्थानिकेनैवेति नियम्यते । तेन पुंस्वित्यादौ षत्वं नेति दिक् ।

"यस्मात्प्रत्ययविधिः" ॥ ( पा० सू० १।४।१३ ) अत्र प्राचोक्तम्—यस्माद्धातोः प्रातिपदिकाद्वेति । तन्न । तिङन्तादीनामपि तरबादिकं प्रत्यङ्गत्वात् । सङ्कोचस्य निर्मूलत्वात् । आमुष्यायण इत्यादौ वृद्ध्यभावापत्तेश्च । न हि प्रातिपदिकादयं तद्धितः किं तु सुबन्तादिति दिक् ।

"अतो भिस् ऐस्" ॥ ( पा० सू० ७।१।९ ) नन्वेस् इत्येवास्तु; न च "अतो गुणे" ( पा० सू०।६।१।९७ ) इति पररूपापत्तिः । एकारोच्चारणवैयर्थ्यापत्तेः । अन्यथा इसमेव विदध्यादिति चेत्सत्यम्—एदैतोर्द्विमात्रत्वविशेषेण गौरवाभावादैस् कृतः । एवं च पररूपशङ्कैव नास्तीति महल्लाघवम् ।

---

शब्दरत्न ।

प्रेन्वनमित्यादौ नुमो नस्य क्षुभ्नादित्वाण्णत्वाभावः । इति दिगिति । तद्वदत्र तु न वक्तुं शक्यं, तृंहू इत्यस्य तृंहणमित्यसिद्धेः स्पष्टं चेदं भाष्ये ।

अङ्गत्वादिति । तदनङ्गीकारे ह्यपाचितरामित्यादौ चिणो लुगापादनादिपरभाष्यविरोधः । चिणः परस्याङ्गसंज्ञानिमित्तस्य प्रत्ययस्य लुगित्यर्थात् । दिगिति । दिगर्थस्तु याथाकाथार्चमित्यादौ "यथाकथाचहस्ताभ्यां णयतौ" इत्यनेन वचनसामर्थ्यंन निपातसमुदायात्प्रत्ययेऽङ्गत्वानापत्तौ वृद्ध्यनापत्तेरित्यलम् ।

ऐस्कृत इति । नद्यैरित्यादिसिद्ध्ये उत्तरार्थं तदित्यन्ये ।

ज्योत्स्ना ।

नुम्स्थानिकत्वविशिष्टोऽनुस्वार इत्यर्थः । समाधत्ते—मेवमित्यादिना । नियमार्थमिति । व्याख्यानादिति भावः । नियमशरीरमाह—अनुस्वारेणेत्यादिना । नियमफलमाह—तेनेति ।

ऐस्कृतइति । स्यादेतत् । 'बहुवचनेझलीक' इत्येव सूत्र्यताम् । रामेभ्य इत्यादाविकि आद्गुणे रूपासिद्धेः । न च ज्ञानयोरित्यादाविकि अन्तरङ्गत्वाद्गुणं बाधित्वा इगन्तत्वेन "इकोऽचि" इति न स्यादिति वाच्यम् । वार्णशास्त्रीयस्थानितावच्छेकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताकत्वरूपसमानस्थानिताकत्वस्य नुम् आगमत्वेन अभावात् । वार्णपरिभाषाया अप्राप्त्या अन्तरङ्गत्वात्सवर्णदीर्घे इगन्ताभावात् "नुमोऽचि" प्राप्तेरितिचेन्मैवम् । ज्ञानशब्देन अशब्दे न च समासे तस्मात् आचारे क्विबन्तात् कर्तरि क्विप् नपुंसकह्रस्वे वा परमशब्देन च समासे परमज्ञानमित्यादौ "ओसि च" इत्यनेन इयङि निरुक्तसमानस्थानितासत्वेन सवर्णदीर्घं बाधित्वा

यत्त्वाहुः—ऐस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति। तद्भाष्यविरुद्धम्। सन्निपातपरिभाषया जरसादेशाप्रवृत्तेर्निजरैरित्येव भाष्ये सिद्धान्तितत्वात्।

"नामि" (पा०सू० ६।४।६)॥ परिभाषाविरोधादिति। एतच्च "रुधादिभ्यः श्नम्" (पा० सू०३।१।७८) इति सूत्रे "श्नान्नलोपः" (पा०सू०६।४।२३) इति सूत्रे च भाष्यकैयटयोः स्पष्टम्। आरम्भसामर्थ्यादिति। "सुपि च"

---

शब्दरत्न।

स्पष्टमिति। "सुपि च" (पा० सू० ७।३।१०२) इत्यपेक्षया "नामि" (पा० सू० ६।४।३) इति तत्र नित्यमित्यपि ध्वनितम्।

ज्योत्स्ना।

तस्यापत्तेः। नच इयङं बाधित्वा "एरनेकाच" इति यणि निरुक्तरूपं सिद्धतीति वाच्यम्। स्वपूर्वकस्य चेत् भवति तर्हि गतिकारकपूर्वकस्यैवेति नियमपर "गतिकारकेतरपूर्वपदस्यैव यण् नेष्यते" इति वार्तिकेन प्रकृते यणोऽप्राप्तेः "गतिकारकेतरपूर्वपदस्य" इति तु चरितार्थकथमपरमपीति बोध्यम्। नच सन्निपातपरिभाषया इति दीर्घो न स्यादिति। नच सन्धिकार्ये सन्निपातपरिभाषाया अप्राप्तेः। गंगेत्यादौ गुणात् प्राक् ह्रस्वान्तत्वप्रयुक्तो गुण इङन्तत्वप्रयुक्तो वा सम्बुद्धिलोपः स्यादिति बहुवचने सतीगीति न्यासे गंगेत्यादावपि न दोषः। एतेन झलादिबहुवचनस्यैव बहुवचने झलि इट इति न्यासं कृत्वा इडागमो विधीयतामित्यपास्तम्। न च गुणे हे कुल इत्यादावेव एङन्ततदाद्यव्यवहितोत्तरत्वविशिष्टसम्बुध्ययवकहलः सत्वेन गङ्गे इत्यादौ सम्बुद्धिलोपः स्यादिति "बहुवचने झलीड्" इति न्यासेऽपि न दोष इति वाच्यम्। कतरत् इत्यादौ ह्रस्वान्ततदाद्यवहितोत्तरत्वविशिष्टसम्बुध्यवयवहलः सत्वेन सम्बुद्धिलोपस्य दुर्वारत्वसत्वात्। तद्दोषवारणाय उकारसाहचर्यात् ह्रस्वइकारः सम्बुद्ध्यवयवो गृह्यत इत्येवमवश्यं वक्तव्येन गङ्गे इत्यादौ संम्बुद्धिलोपस्यानापत्तेः।

यत्तु गङ्गाशब्दादाचारक्विबन्तात् कर्तरि क्विपि 'इमं मे गङ्गे' इत्यादौ वैदिके छन्दसि "उभयसञ्ज्ञानि अपि छन्दांसि दृश्यन्त" इतिभसंज्ञायाः सत्वेन हे गङ्गे इत्यादौ "आतो धातोः" इति लोपः स्यादिति चेन्न "आतोऽनापः" इत्युक्त्या तत्र लोपस्यानिष्टत्वात्। आबन्तादाचारक्विपो ऽनभिधानाच्च। "छन्दसि दृष्टानुविधिः" इति परिभाषया छन्दस्यापाद्यमानरूपाभावाच्च। यदि तु आक्षेपेण कतरदित्यादौ दोषो वार्यते तदा "बहुवचने झलीड्" इति न्यासे दूषणार्थमिति दिक्।

भाष्यकैटयोः स्पष्टमिति। तत्र हि नान्नलोप इत्येवोच्यतां किमर्थं "श्नान्नलोप" इति। एवं तर्हि यज्ञानां यत्नानामित्यत्र प्राप्नोति दीर्घत्वं तत्र बाधकं भविष्यति इदमत्र सम्प्रधार्य्यं दीर्घत्वं क्रियतान्न लोप इति। परत्वान्नलोप इत्युक्तम्। यदि सन्निपातप-

(पा० सू० ७।३।१०२) इत्यस्य तु न सामर्थ्यम्। रामाभ्यामित्यादौ सावकाशत्वादिति भावः। एवं च रामशब्दे "नामि" (पा०सू० ६।४।३) इत्यस्योपन्यासो लेखकप्रमादादिति यदूचुस्तच्चिन्त्यम्।

"आदेशप्रत्यययोः"॥ (पा०सू० ८।३।५९) एका ऽपि षष्ठी विषयभेदाद्भिद्यते इत्याशयेन व्याचष्टे—आदेशः प्रत्ययावयवश्चेति। यदि तु आदेशावयवो गृह्येत, तर्हि तिसृणामित्यादौ दोषः। यदि च प्रत्ययो यः सकार इति तर्हि रामेष्वित्यादौ न स्यात्। यद्यप्येवं वैरूप्येण व्याख्याने सहविवक्षाविरहात् द्वन्द्वो न युज्यते, तथाऽपि सौत्रत्वाद् बोद्धव्यः। विवृताघोषस्येति। यत्तु वदन्ति—सकारस्य सोष्मणोऽघोषस्यान्तरतमः ष एष मूर्धन्य इति तन्न्यूनम्। ठकारे ऽतिप्रसङ्गात्। तथा च प्रातिशाख्यम्—

शब्दरत्न

विषयभेदादिति। तन्त्रेण षष्ठीद्वयोच्चारणाद् आदेशरूपसस्य स्थाने प्रत्ययावयवसस्य स्थाने च षो भवतीत्येवं रूपः षष्ठीभेद इत्यर्थः। ओस्सम्बन्धद्वयार्थक इत्यभिमानः। तिसृणामिति। तिस्रादेशे सकारोच्चारणन्तु तिस्र इत्यत्र "न रपर" इति षत्वनिषेधे चरितार्थमिति भावः। ठकारे ऽतिप्रसङ्गादिति। "सोष्मणः सोष्माण इति द्वितीया"

ज्योत्स्ना।

रिभाषया दीर्घो नाभविष्यत्तर्हीदं भाष्यमसङ्गतं स्यादिति "नामि" इत्येद्दीर्घविषये आरम्भसार्थ्यात् बाध्येतेत्यवश्यं वक्तव्यमिति भावः।

विषयभेदादिति। एकयैव षष्ठ्या सम्बन्धत्वेन रूपेणावयवावयविभावस्याभेदस्य च बोधो भविष्यतीति भावः।

वस्तुतस्तु—सम्बन्धत्वेनापि रूपेण एकसम्बन्धावगाहि बोध एव जायते; न तु सम्बन्धद्वयावगाहि, व्युत्पत्तिवैचित्र्यात्। अत एव यस्मिन् पुरुषे राज्ञः स्वत्वं जन्यत्वं च वर्तते तादृशविषये राज्ञः पुरुष इति वाक्यात् सम्बन्धत्वेन रूपेण स्वस्वामिभावजन्यजनकभावोभयसम्बन्धावगाहिबोधो जायत इति दिक्।

सहविवक्षाविरहादिति। उद्देश्यभेदेन प्रत्ययस्य चावयवावयविभावसम्बन्धेन सकारेऽन्वयादेकरूपावच्छिन्नसंसर्गेणान्वयाभावेनैकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणान्वयबोधेच्छारूपसहविविक्षाया अभावादित्यर्थः। यद्यपीति पूर्वपक्षं समाधत्ते-तथापीति।

अतिप्रसङ्गादिति। तथाच सोष्मत्वविशिष्टाघोषत्वस्य यकारेऽपि सत्वेन स्वेतरसोष्मत्वादेशावृत्तित्वस्याभावादिति स्ववृतित्व स्वेतरयावदादेशावृत्तित्व स्वदलभिन्नदलीयवृत्तित्व एतत्त्रितयसम्बन्धेन स्ववैशिष्ट्यसोष्मत्वविशिष्टाघोषत्वेन सम्भवतीति भावः।

"वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्यः" इति। ननु दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तः। ततश्चेहापि "सात्पदाद्योः" इति निषेधः स्यादिति चेत्। मैवम्। "स्वादिषु" इति या पदसंज्ञा तामाश्रित्योक्तनिषेधो न

शब्दरत्न।

इति "स्थाने ऽन्तरतम–" (पा० सू० १।१।५०) सूत्रस्थभाष्येण तस्यापि सोष्मत्वबोधनात्। सोष्मण इत्यस्योष्मत्वसहितस्येत्यर्थः। अत्रार्थे ऋष्यन्तरसम्वादमप्याह–तथा चेति। प्राक् सुबुत्पत्तेरिति। सोपपदात्सिचेर्विजिति भावः। केवलात्सिचेर्विचि दध्नः सेचाविति समासे तु "उत्तरपदत्वे च" (प०) इत्यस्य "अपदादिविधौ" (प०) इति निषेधेन प्रत्ययलक्षणेन पदत्वसत्त्वात्पदस्यादि पक्षेऽपि सिद्धिरिति भावः। यद्यपि कैयटेन सोपपदात्सिचेर्विजेव नानभिधानादित्युक्तं, तथा ऽपि "यचि भम्" (पा० सू० १।४।१८) इत्यत्र "सुप्तिङन्तम्" (पा० सू० १।४।१४) इत्यतः "सुब्" इत्यनुवर्त्य यजादौ सर्वनामस्थाने तत्प्रकृतेर्भसंज्ञा भवति, यजाद्यसर्वनामस्थानपरं सुबन्तं यद्यस्ति तदपि भसंज्ञं, तेन सुवाचेत्यादौ न कुत्वम्। अत्र तत्प्रकृतेः संज्ञा प्रधानशिष्टा अवयवसुबन्तस्य त्वन्वाचयशिष्टा। एवं "स्वादिषु" (पा० सू० १।४।१७) इति योगं विभज्य स्वादिषु पूर्वस्य पदत्वं विधाय "असर्वनामस्थाने" (पा० सू० १।४।१७) इत्यत्र सुबन्तमित्यनुवर्त्य "यचि" इत्यपकृष्य प्रसज्यप्रतिषेधमाश्रित्य यजादौ सर्वनामस्थाने परतः पूर्वं पदं न, तत्परं यदि सुबन्तमस्ति तदपि पदं नेत्यर्थः। सुबन्तं च यजादिप्रत्ययाव्यवहितमेवातो राजपुरुषादौ पूर्वपदे नलोपादिसिद्धिः। तत्र समुदायस्य "स्वादिषु" (पा० सू० १।७।१४) इति प्राप्ता, अवयवस्य सुबन्तमिति प्राप्ता, श्रूयमाणे सौ पूर्वपदस्य संज्ञैव, तेन सुवाचावित्यादिसिद्धिरित्येवम् "उत्तरपदत्वे च" (प०) इत्यस्य प्रत्याख्याने दध्नः सेचाविति षष्ठीतत्पुरुषे ऽपि षत्वनिषेधाय पञ्चमीसमास आवश्यक इत्यनभिधाने न मानमिति तात्पर्यम्। प्रत्याख्याने पञ्चमीसमासे बहुसेचावित्याद्यर्थं बहुच्पूर्वस्य षत्वं नेति वचनं कार्यं, वार्त्तिकारम्भे तत्रैव कुत्ववारणाय "बहुच्पूर्वस्य चापदादिविधौ न" इतिवत्। इदमपि योगविभागस्येष्टसिद्ध्यर्थतया यत्रोत्तरपदस्य कार्यित्वं तद्विषय एव पदान्तत्वप्रयुक्तकार्य एव च बोद्ध्यमित्यन्यत्र विस्तरः। या पदसंज्ञेति। न च राजपुरुषेष्वित्यत्र दोषः, अन्तर्वर्त्तिविभक्त्या सुबन्त-

ज्योत्स्ना।

ननु ठकारे सोष्मत्वस्य सत्वे किम्मानमित्याह—तथाचेति। इहापीति। रामेष्वित्यादावपीति भावः।

निषेधः स्यादिति। रामेषु इत्यादौ रामे इत्यस्य "स्वादिषु" इति पदत्वेन पदावधिकाव्यवहितोत्तरत्वविशिष्टादिभूतसकारस्य सत्वादिति भावः।

प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात् ।

यत्त्वाहुः—प्रत्ययविषये नायं निषेध इति ज्ञाप्यत इति । तन्न । व्यतिसे इत्यादौ षत्वापत्तेः । ननु पदस्यादिरिति पक्षे व्यतिस इत्यत्र षत्वं दुर्वारम् । न च व्यपदेशिवद्भावेन से इत्यस्यापि तिङन्तत्वात्पदत्वं शङ्क्यम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । अन्यथा रामेष्वित्यादावपि षत्वनिषेधापत्तिरिति चेत्सत्यम् । न वयं प्रत्ययमात्रस्य तदन्ततां ब्रूमः, किं तु प्रकृतिप्रत्ययसमुदाये प्रवृत्तां पदसंज्ञामेकदेशविकृतन्यायेन लुप्तप्रकृतिके

शब्दरत्न ।

मिति पदत्वमाश्रित्य निषेधापत्तेरिति वाच्यम् । सातिग्रहणेन "स्वादिषु" इति (पा० सू० १।४।१७) इति यस्य पदसंज्ञा तदुत्तरस्य षत्वनिषेधो नेति ज्ञाप्यत इति तात्पर्यात् । प्र(१)त्याख्यानरीत्या तस्यापि "स्वादिषु" (पा० सू० १।४।१७) इति पदत्वाच्च । सर्वं चेदं "न लुमता–" (पा० सु०१।१।६३) इति सूत्रे भाष्ये स्पष्टम् । व्यतिसे इति । यद्यपि व्यतिहारस्यानेकर्तृकक्रियाविषयत्वादेकवचनस्य तत्रासम्भवस्तथाऽपि विश्वामित्राश्रमे मारीचं प्रति किमर्थं ब्रह्मवधं करोषीति पृष्टे ममायं धर्म इति तेनोत्तरिते

ज्योत्स्ना ।

न प्रवतत इति । "सात्पदाद्योः" इत्यत्र पदपदेन सुबन्ततिङन्तान्यतरस्यैव ग्रहणादिति भावः । न च क्नूलुबन्तहरिशब्दात् सप्तमीबहुवचने हरिष्वित्यादौ प्रत्ययलक्षणेन सुबन्तात् "सात्पदाद्योः" इति पञ्चमीसमासपक्षे निषेधो दुर्वार इति वाच्यम् । "स्वादिषु" इति पदत्वानाश्रयसुबन्ततिङन्तान्यतरस्यैव ग्रहणेनादोषात् । प्रत्ययविषय इति । प्रत्ययावयवसकारस्य नापि निषेध इति भावः । व्यतिसे इत्यादौ से इत्यस्य प्रत्ययत्वेन तदवयवसकारे भवद्रीत्या निषेधाप्राप्तिरिति भावः ।

ग्रहणादिति । व्यपदेशिवद्भावेन स्वस्मिन् स्वघटितत्वं स्वघटकत्वमेव आयातीति नान्यो धर्म इति सिद्धान्तेन व्यतिसे इत्यादौ से इत्यस्य व्यपदेशिवद्भावेन तिङ्निष्ठचरमावयवतानिरूपकत्वस्य सत्त्वेऽपि तिङ्निष्ठविधेयतानिरूपितोद्देश्यतावयवत्वस्य व्यपदेशिवद्भावेनाप्यतिदेष्टुमशक्यतया तिङन्ततदादित्वस्याभावादिति भावः ।

अन्यथेति । व्यपदेशिवद्भावेन स्ववृत्तित्वस्वघटितत्वस्वघटकत्वातिरिक्तधर्माणामतिदेशस्वीकारे इत्यर्थः ।

---

वि० (१) अत्र प्रत्याख्यानरीत्येति कथनेन वार्तिकारम्भपक्षस्य युक्तत्वं सूचितम् । अत एव भाष्ये उक्तरीत्या प्रत्याख्यानम्प्रदर्श्य पुनर्नञ्घटितस्य तस्य वचनस्य पाठेन तस्य सत्त्वं ध्वनितमिति भावः ।

ज्योत्स्ना ।

(१)तदन्ततामिति । प्रत्ययान्ततदादिनामित्यर्थः । एकदेशविकृतन्यायेनेति । स्थानिवद्भावेनेत्यर्थः । लुप्तप्रकृतिके प्रत्यये इति । केवलसे इत्यत्रेत्यर्थः ।

ननु तिस्रादेशे शकारोच्चारणसामर्थ्यादेव षत्वन्न भविष्यतीति आदेशावयवःप्रत्ययावयवश्च यः सकार इत्येकरूपेणैव कथनान्नान्वय इत्याशंक्य समाधत्ते-तिस्रादेश इत्यादिना ।

न रपर इति षत्वनिषेधे इति । रेफपरस्य सकारस्य सृपि सृजि स्पृशिस्पृहिसवनादीनां चावयवस्य सस्य षो न भवतीति भावः । कमरपरसृपिसृजिस्पृशिस्पृहिसवनादीनामिति निषेध इत्यर्थः ।

वस्तुतस्तु—श्रेयांसौ इत्यादावनुस्वारस्य ञिणत्वेन तदुत्तरस्य सकारस्य षत्ववारणाय आदेशरूपो यः सकार इति व्याख्यानमावश्यकमिति भावः ।

तस्यापीति । उकारस्यापीत्यर्थः । ननु दधिसेचौ इत्यादौ दधीत्यस्य उपपदत्वं कथमित्याह—सोपपदात्सिचेर्विजिति भावः । ननु केवलात्सिचेर्विचि षष्ठीसमासे तत्र "उत्तरपदत्वे" इति निषेधात् प्रत्ययलक्षणाभावेन पदत्वाभावात् पदस्यादिरिति कल्पे निरूपपदकसिजिति दधिसेचौ इत्यादौ दोषत्वनिषेधो न स्यादिति समाधत्ते—निषेधेनेति । अपदादिविधाविति पर्युदासेनेत्यर्थः ।

पक्षेऽपीति । अपिना पञ्चमीसमासकल्पेनैव शंकेति सूच्यते। ननु पदस्यादिरिति कल्पे पदादादिरिति कल्पे च सोष्मपदात् सिचेर्विज्नेति दधिसेचावित्यादौ फलभेदादनभिधानमेव कस्मान्नेत्याशङ्क्य समाधत्ते—यद्यपीत्यादिना तथापीत्यादिना च ।

सुबित्यनुवर्त्येति । वाक्यभेदेनेति भावः । यद्यपि सर्वनामस्थानपरमिति यचीत्यस्यासर्वनामइत्यस्य चावृत्या यजाद्यव्यवहितपूर्वत्वविशिष्टं तदादिभसंज्ञकं भवतीत्यर्थस्वीकारादिति भावः । नन्वेवं रीत्या सुवाचेत्यादौ दोषवारणेऽपि सुवाचावित्यादौ कुत्वं दुर्वारं स्यादित्याशङ्कते, समाधत्ते च-एवमित्यादिना । "स्वादिषु" इति सूत्रार्थमुक्त्वा सर्वनामस्थाने यचीतिसूत्रविभक्तस्यार्थमाह—असर्वनाम इत्यादिना ।

अपकृष्येति । वस्तुतस्तु स्वादिषु असर्वनामस्थाने यचि सुबितिचानुवर्तते । तथाच-"स्वादिषु" इति पदस्य सामान्यस्वाद्यव्यवहितपूर्वत्वविशिष्टं पदसंज्ञं स्यादित्यर्थः ।

असर्वनामस्थाने इत्यत्र अ इति निषेधार्थकं भिन्नं पदम् , तथाच यजादिअसर्वनामस्थानाव्यवहितपूर्वत्वविशिष्टं यत् तत्पदसंज्ञकं न भवतीति । एवमजादिसर्वनामस्थानाव्यवहितपूर्वत्त्वविशिष्टं तदादिघटकं च यत्सुबन्ततदादितत्पदसंज्ञकं न स्यादित्यर्थः । एवमजादिसर्वनामाव्यवहितपूर्वत्वविशिष्टं तदादिघटकं च यत्सुबन्ततदादितत्पदसंज्ञं न स्यादिति सुवाचेत्यादौ न दोषः । ततो 'यचि' 'असर्वनामस्थाने' "स्वादिषु" "सुब्"इति चानुवर्तते । तथाचावृत्या अजाद्यसर्वनामस्थानाव्यवहितपूर्वत्वविशिष्टतदादिभसंज्ञं

विं० ( १ ) (सू०) पृ० २४० पृ० २४१ तत्रस्थशब्दरत्नस्य प्रतीका एते इत्यवगन्तव्यम् ।

ज्योत्स्ना ।

स्यादिति । एवमसर्वनामस्थानयजादिस्वाद्यव्यवहितपूर्वत्वविशिष्टं तदादिघटकं यत्सुबन्ततदादि तन्नसंज्ञं स्यात् । तथाच सुवाचेत्यादौ न दोषः । तथाच "उत्तरपदत्व" इति वार्त्तिकं न कर्तव्यम् । अयमेव प्रत्याख्यानप्रकारो ज्यायन् यचीत्यस्यापकर्षाकल्पनेन लाघवात् । नन्वेवं प्रत्याख्यानपक्षे सुवागित्यस्य उत्तरपदे पदत्वं स्यात्, आरम्भकल्पे फलभेदः स्यादित्याह—इष्टैवेति(१) ।

एवमिति । एवं रीत्यैवेत्यर्थः । प्रत्याख्यानेति । प्रत्याख्यानेऽपीत्यर्थः । अनभिधान इति । सोपपदात् सिचेर्विजिति शेषः ।

वचनं कार्यमिति । ननु–बहुवाचेत्यादौ प्रत्याख्यानकल्पे बहुचः प्रत्ययत्वात्से इत्यस्य पूर्वोक्तदिशा भत्वात् "सात्पदाद्योः" इति निषेधाप्राप्त्या णत्वं न प्राप्नोतीति तद्वारणाय बहुच्पूर्वस्य णत्वं नेति वचनं कर्तव्यमिति आरम्भपक्षे चापदादिविधावित्युक्त्या प्रत्ययलक्षणेन पदत्वात् "सात्पदाद्योः" इति निषेधो भवत्येवेति बहुच्पूर्वस्य णत्वं नेति वचनं कर्तव्यं भवतीति लाघवमित्याशङ्क्य समाधत्ते–वार्तिकारम्भे इत्यादिना । तत्रैवेति । बहुसेचौ इत्यादावेवेत्यर्थः । इति वदिति । तथाच प्रत्याख्यानपक्षे बहुच्पूर्वस्य णत्वं नेति वचनं कर्तव्यम् । आरम्भपक्षे बहुच्पूर्वस्य चापदादिविधौ नेति वचनं कर्तव्यमिति नास्ति लाघवमिति भावः ।

वस्तुतस्तु—अत्रयः भृगवः इत्यादौ प्रत्ययलक्षणेन सुबन्तत्वात् पदत्वेन "एङः पदान्तात्" इति पूर्वरूपवारणाय पञ्चगवधनः इत्यादौ गोइत्यस्य पूर्वरूपवारणाय च पूर्वदण्डिप्रिय इत्यादौ नलोपवारणाय दण्डिन्नित्यत्र नलोपवारणाय दण्डिन्नित्यस्य पदत्वाय च परमलोम्निशयः परमलोम्निचर इत्यत्र लोमन्इत्यस्य पदत्वाय तिङ्भिन्नपदत्वं यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञाचिकीर्षितस्वघटकत्व स्वघटकार्थवदव्यवहितपूर्वत्व एतदुभयसम्बन्धेन स्वविशिष्टत्वरूपपरिष्कृतं ग्राह्यमिति निरुक्तोत्तरपदत्वेन बहुसेचौ इत्यादौ सेच् इत्यस्य पदत्वसत्वेन कुत्वं प्राप्नोतीति बहुच्पूर्वस्यापदादिविधौ वचनस्य नोपयोगः । यद्वृत्त्येत्यादीत्युक्त्या परमलोम्निशयः परमलोम्निचरः इत्यत्र लोमन्नित्यस्योत्तरपदत्वं सिद्ध्यति । लोमन्नित्यस्य परम सु लोमन् सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तिकायाः पदसंज्ञायाश्चिकीर्षितत्वेन तद्वृत्तिघटकत्वस्य तद्वृत्तिकार्थवदव्यवहितपूर्वत्वाभाववत्वस्य च लोमन्नित्यत्र सत्वात् । अर्थवदित्युक्त्या पञ्चगवधन इत्यादौ गोइत्यस्य पदत्वं सिद्ध्यति । पञ्चन् जस् गो जस् धन सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षितत्वेन तद्वृत्तिघटकटचोऽनर्थकत्वेन धन इत्यस्यार्थवत्वेनापि तदव्यवहितपूर्वत्वस्य च गोइत्यत्राभावात् । अत्रयो भृगव इत्यादावपि अत्रि सु ढक् भृगु जस् अण् इत्येतद्वृत्त्यारम्भकपदसंज्ञायाश्चिकीर्षितत्वेन व्यपदेशि-

वि० (१) (सू०) पृ० २४१ तत्रस्थशब्दरत्नस्य प्रतीका एते इत्यवगन्तव्यम् ।

ज्योत्स्ना।

वद्भावेन घटकःचस्य तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वस्य च अग्निभूगुशब्दयोः सत्वेनोत्तरपदत्वस्याक्षतेः। अत्रेदमवधेयम्—आरम्भपक्ष एव ज्यायान्। बहुच्पूर्वस्य षत्वं नेति वार्तिककरणे लाघवाभावात्। लेढीति लिट्, दोग्धीति धुक् तस्य परमशब्देन समासे तस्मादाचारक्विबन्तात्क्विपि परमलिड्वा परमदुग्वा इत्यादौ ढत्वघत्वयोर्दुर्वारत्वात्। आरम्भपक्षे च 'उत्तरपदत्वेन' इति निषेधेन प्रत्ययलक्षणाभावेन पदत्वाभावान्न दोष इति दिक्।

(१)तद्विषय एवेति। अत एव माषकुम्भवापेनेत्यादौ "यचि भम्" इत्यनेन भसंज्ञा न भवति। अन्यथा "पदव्यवायेऽपि" इत्यनेन निषेधो न स्यात्। वस्तुतस्तु आरम्भपक्षे यत्रोत्तरपदस्य कार्यित्वमिति निषेधस्य नोपयोगः। "यचि भम्" इत्यनेन यजादिसर्वनामाव्यवहितपूर्वत्वविशिष्टस्यैव तदादेः तदादिघटकसुबन्तस्य च भसंज्ञाविधानेन माषकुम्भवापेनेत्यत्र भसंज्ञाया अप्राप्त्या प्रत्ययलक्षणेन पदत्वेन "पदव्यवायेऽपि" इति निषेधसिद्धेः। किञ्च "अद्धित इति वाच्यम्" इति वार्तिकप्रत्याख्यानायात्र पदे यो व्यवाय इति सप्तमीसमासकल्पे पदेन व्यवाय इति तृतीयासमासकल्पे च माषकुम्भवापेन क्षीरपकुम्भेनेत्यादौ "गतिकारक" इति सुबुत्पत्तेः प्रागेव समासेन पदे परतो व्यवायस्यासत्त्वेन फलभेदात् प्रत्याख्यानासङ्गत्यापत्त्या तद्वारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्तव्यत्वेन माषकुम्भवापेनेत्यादौ दोषाभावात्। न च परमलिह्–परमदुह्–शब्दाभ्याम् आचारक्विबन्ताभ्याम् वनिपि परमलिड्वा परमदुग्वा इत्यादौ घत्वढत्वयोः वारणायासर्वनामस्थाने यचीत्यस्य च यचि सर्वनामस्थाने इत्यनेन हलादिस्वाद्यतिरिक्तप्रत्ययमात्रोपलक्षणमित्यवश्यं वक्तव्यत्वेन परमाट्शब्दादाचारक्विबन्तात् क्विचि परमाट्तिरित्यादौ "न पदान्ताद्" इति निषेधप्रवृत्त्यर्थं पदसंज्ञानिषेधाभावाय कार्यित्वनिवेश आवश्यक इति वाच्यम्। परमाट्तिरित्येव भवति परमाट्टिरित्येव वेत्यत्र नियामकाभावेन परमाट्टिरित्येवेतीष्टापत्तेः कर्तुं शक्यत्वात्। आरम्भप्रत्याख्यानयोः फलभेदेन परमलिड्वा परमदुग्वा परमाट्टिरित्यादीनामनभिधानस्यैव युक्तत्वेन सर्वनामस्थाने यचि इत्यस्य निरुक्तार्थे उपलक्षणमित्यत्र नियामकाभावात्। उपलक्षणत्वे सुवाचेत्यादावपि दोषाभावेन भमितियोगविभागस्य वैयर्थ्यापत्तेश्चेति दिक्।

सम्बन्धद्वयार्थक इति॥ सम्बन्धत्वरूपसामान्यरूपेण तद्रूपेण वा सम्बन्धद्वयार्थक इत्यर्थः। अभिमान इति। सम्बन्धत्वेन वा तत्तत्सम्बन्धवृत्तितत्तद्रूपेण वा सम्बन्धद्वयावगाहिबोधस्याव्युत्पन्नत्वादिति भावः।

इति वाच्यमिति। पदादादिरिति पञ्चमीसमासपक्षे राजपुरुषेष्विति लक्ष्ये पुरुष इत्य-

---

वि० (१) (सू०) पृ० २४१ पृ० २४२ तत्रस्थशब्दरत्नस्य प्रतीका एते इत्यवसेयम्।

प्रत्यये ऽप्यानयामः । रामौ रामा इत्यादावपि हि एकदेशविकृतन्यायेनैव पदत्वम् । एकादेशात्प्रागेव पदसंज्ञाप्रवृत्तेः । न त्वेकादेशेकृते "सुप्तिङन्तम्" ( पा० सू० १।४।१४ ) इत्यस्य प्राप्तिरस्ति । 'उभयत आश्रयणे-

शब्दरत्न ।

"धर्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन"—(१)

इति भट्टिकाव्यस्थरामवाक्ये तव धर्मेण ममान्यो धर्मस्तपोरूपो व्यत्यासेन भवति येन धर्मेण त्वत्सम्बन्धिनो निहन्मीत्यर्थके एकवचनदर्शनान्न दोषः । अद्यारभ्य त्वद्धर्मः क्रौर्यं मयि भवति, मद्धर्मोऽक्रौर्यं च त्वयि । वर्त्तमानसामीप्ये लट् । रामबाणपातेन समुद्रसमीपे पतितो मारीचस्तपश्चचारेति रामायणे प्रसिद्धम् । अन्यसम्बन्धिक्रियामितरः करोति, इतरसम्बन्धिनीमन्य इति कर्मव्यतिहारसम्भवादिति जयमङ्गला । व्यतिसे इत्यस्य हे चैत्र मैत्रेण सह व्यत्यस्तो भवसीत्यर्थः । यद्देशे मैत्रसत्ता तद्देशे चैत्रस्य सा, यद्देशे चैत्रस्य सा तद्देशे मैत्रस्य सेति फलति । यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशो वक्तुं शक्यः । रामेष्वित्यादौ त्वसहायत्वाभावान्न तत्प्रवृत्तिस्तथाऽपि पूर्वपक्ष्युक्तमभ्युपेत्यापि समाधातुमुपक्रमते—न वयमित्यादिना ।

ज्योत्स्ना ।

स्य प्रत्ययलक्षणेन पदत्वात् "स्वादिषु" इति पदत्वानाश्रयत्वाच्च । "स्वादिषु" इति पदत्वानाश्रयपदाव्यवहितोत्तरत्वविशिष्टस्यादिभूतसकारस्य च सत्त्वेन "सात्पदाद्योः" इति पूर्वापरस्यादिति भावः ।

ज्ञाप्यत इति । "सात्पदाद्योः" इति पदपदेन "स्वादिषु" इति पदत्वानाश्रयघटकस्य ग्रहणेनादोषात् । न च दधिसेक्भ्यामित्यादौ निषेधो न स्यादिति वाच्यम् । "स्वादिषु" इति पदत्वानाश्रयघटकत्वाद् व्यवहितपूर्वत्वविशिष्टत्वं च तदतिरिक्तपदस्यैव पदपदेन ग्रहणेन दोषादिति दिक् ।

पदत्वाच्चेति । यजादिसर्वनामाव्यवहितपूर्वत्वस्याभावेन भमित्यनेन भसंज्ञाप्राप्तेश्चेति भावः । शङ्कते—यद्यपीत्यादिना । समाधत्ते—तथापीत्यादिना । क्रौर्यमयि भवतीति । अग्रे सर्वेषां दुष्टानां राक्षसानां वधस्य कार्यित्वादिति भावः । रामचन्द्रधर्मः क्रौर्यं मारीचे वर्तत इत्यर्थे किं मानमित्याह—रामबाणपातेनेत्यादिना । शङ्कते—यद्यपीत्यादिना । अपीति । तिङन्ततदादित्वस्यापीत्यर्थः । व्यपदेशिवद्भावेन स्वस्मिन् स्वघटितत्वं स्वघटकत्वमेवायाति नान्यो धर्म इति सिद्धान्तमबुद्ध्वा यम् अपूर्व इति ।

अभ्युपेत्यापि । वस्तुतस्तु नायमभ्युपेत्यवादः । स्वस्मिन् स्वघटितत्वं स्वघटकत्वं

प्र० ( १ ) प्रथमे प्रकीर्णकाण्डे द्वितीयवर्गेऽयं श्लोकः । अस्य चतुर्थपादस्तु—
राजन्यवृत्तिर्धृतकार्मुकेषुः ॥ ३५ ॥ इति ।

नान्तादिवत्'इति सिद्धान्तात्।

यत्तु वदन्ति—प्रकृतिसन्निधाने प्रत्ययस्य पदत्वं नास्ति। "मन्त्रेषु" (पा० सू० ६।४।१४१) "सर्वेषाम्" (पा० सू० ७।३।२२) इत्यादिनिर्देशादिति। तन्मन्दम्। उक्तरीत्या पदत्वाभावे न्यायसिद्धे ज्ञापनस्यासम्भवादनुपयोगाच्च।

"सर्वादीनि सर्वनामानि"॥ (पा० सू० १।१।२७) "सर्वादीनि" इति तद्गुणसम्विज्ञानो बहुव्रीहिः। "हलि सर्वेषाम्" (पा० सू० ८।३।२२) इति निर्देशात्। द्वन्द्वे चेतीति। स हि समुदायस्य निषेधो न त्ववयवानामिति वक्ष्यते। न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः॥

शब्दरत्न।

सिद्धान्तादिति। "सुप्तिङन्तम्" (पा० सू० १।४।१४) इत्यत्र "यस्मात्प्रत्ययविधिः" (पा० सू० १।४।१३) इत्यनुवृत्तेरिति भावः। अत्र कृतेऽप्येकादेशे एकदेशविकृतन्यायेनोक्तरीत्या मान्तस्य प्रकृतित्वात् औ इत्यस्य परादित्वं(१) साधितम्।

अनुपयोगाच्चेति। चेन ससहाये व्यपदेशिवद्भावाप्रवृत्त्या तत्संनिधाने तेषां पदत्वं नास्तीति सूचितम्। "आद्यन्तवत्—" सूत्रस्थभाष्योक्तैकपुत्रादिदृष्टान्तबलेन तथैव लाभादिति दिक्।

तद्गुणसंविज्ञान इति। तस्य अन्यपदार्थस्य गुणा विशेषणानि संविज्ञायन्ते कार्य-

ज्योत्स्ना।

विहायान्येषां धर्माणां व्यपदेशिवद्भावेनातिदेशादित्यन्यत्र विस्तरः।

सर्वादीनीति। तद्गुणसंविज्ञानबहुव्रीहौ प्रमाणमाह—निर्देशादिति। अन्यथा सर्वेषामित्यादौ सुट् न स्यादिति भावः। इति भाव इति। न च अश्व इतरश्च एतरं तस्मै एतराय इत्यादौ एतरइत्यस्य परादिवद्भावेन सर्वादित्वात् संज्ञां वारयितुं "द्वन्द्वे च" इति निषेधः सार्थक इति वाच्यम्। 'पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न' इति परिभाषया दोषाभावात्। न च "द्वन्द्वे च" इति निषेधस्य पूर्वोत्तरपदनिमित्तकार्यत्वाभावात् नास्याः प्रवृत्तिरिति वाच्यम्। पूर्वोत्तरपदनिमित्तादित्यस्य वस्तुतः पूर्वोत्तरपदनिमित्तककार्यादित्यर्थकरणेनादोषात्। नचैवमपि एतरायेत्यादौ गुणादिप्रवृत्तेः प्राक् तदन्तविध्यभावेन सर्वनामसंज्ञाया अप्राप्त्या गुणोत्तरं गुणो नेति भुक्तवन्तमिति न्यायेन विकल्पत्वापत्तेः। "द्वन्द्वे च" इति निषेधस्य सन्ध्युत्तरं निराबा-

प्र० (१) (औ इत्यस्य परादिवद्भावेन सुप्त्वात्तदन्तत्वेन पदत्वसिद्धिरिति सिद्धान्तान्तरमपि सूचितम्। इदं च "ङ्न्तादिवत्" सूत्रे भाष्ये स्पष्टम्। तत्र वृक्षे इत्यादौ परादिवत्त्वेन एकारस्य सुप्त्वमाश्रित्य पदत्वं साधितम्)। इतिपुस्तकान्तरे पाठः।

ननु तदन्तसञ्ज्ञायाः किं फलम् । न च परमसर्वस्मायित्यादौ स्मायादयः फलम् । अङ्गाधिकारे तदन्तविधिनैव तत्सिद्धेरित्यत आह—तेनेति । न चेहापि "प्रातिपदिकात्" ( पा० सू० ४।१।१ ) इत्यनुवृत्तेः सर्वनाम्ना तद्विशेषेण तदन्तविधिर्भवतीति वाच्यम् । "समासप्रत्ययविधौ प्रतिषेधः"(वा०८) इत्युक्तेरिति भावः । अकच्चेति । चकारात्परमसर्वत इत्यत्र तसिल् ।

शब्दरत्न ।

वादिना यत्रेत्यर्थः । (१)प्रायः संयोगसमवायान्यतरसम्बन्धेन सम्बन्धी यत्रान्यपदार्थस्तत्र तद्गुणत्वम् । तदतिरिक्तस्वस्वामिभावादिसम्बन्धेन सम्बन्धिनस्तत्त्वेऽतद्गुणत्वम् । नागयज्ञोपवीती भोज्यतामित्यादौ यज्ञोपवीतस्य कार्यित्वाभावेऽपि तत्संनिहितत्वमस्त्येवेति तद्गुणत्वमेवेति हरिग्रन्थे स्पष्टम् । तत्सिद्धेरिति । न च सर्वनाम्नो विहितत्वाभावः । तदन्तसंज्ञाभावे "द्वन्द्वे च" ( पा० सू० १।१।३१ ) इत्यादीनामवयवसंज्ञानिषेधकत्वेन विहितविशेषणे फलाभावादिति भावः । तसिलिति । अवयवसर्वना-

ज्योत्स्ना ।

धत्वाच्चेति वाच्यम् । पूर्वोत्तरपदनिमित्तकार्यात् पूर्वप्रवृत्तिमपि सन्धिकार्यं सिद्धं न भवति, किन्त्वसिद्धमित्यत्रकरणेनादोषात् । अत एव सुबन्तानामेकशेषः इति कल्पे प्रातिपदिकैकशेष इति कल्पे च परिनिष्ठितविभक्त्यन्तानामेकशेष इति कल्पे च विभक्तौ परतः प्रातिपदिकानामेकशेष इति कल्पे च न फलभेदः । अन्यथा राम औ इति स्थिते उत्तरतः वृद्धौ फलभेदः स्पष्ट एव । ममत्वनया परिभाषया वृद्धेरसिद्धत्वान्न दोष इति दिक् ।

प्रायः संयोगसमवायेति । ननु तेषां गुणानां वृत्तिघटकपदार्थानां संविज्ञानं अन्यपदार्थेन सह कार्यान्वयो यत्र, तत्र तद्गुणत्वम् इति स्वीकारे नागयज्ञोपवीती भोज्यताम् इत्यादौ नागयज्ञोपवीतस्य भोजनक्रियायामन्वयासम्भवात् तद्गुणत्वं न स्यादत आह—प्रायः संयोगसमवायेति । तथाच संयोगसमवायान्यतरसम्बन्धेन वृत्तिघटकप-

प्र० ( १ ) ननु तेषां गुणानां वृत्तिघटकपदार्थानां सम्विज्ञानं—अन्यपदार्थेन सह कार्यान्वयो यत्र तत्र तद्गुणत्वमितिस्वीकारे नागयज्ञोपवीती भोज्यतामित्यादौ नागरूपयज्ञोपवीतस्य भोजनक्रियायामन्वयासम्भवात्तद्गुणत्वं न स्यादत आह—प्रायःसंयोगसमवायेति । तथा च संयोगसमवायान्यतरसम्बन्धेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणत्वमित्येव लक्षणं वाच्यम् । कार्यान्वयो न विवक्षणीय इत्यर्थः । दृष्टसागरमानयेत्यादौ प्रयोगकालेऽन्यपदार्थस्य सागरस्य च संयोगसत्त्वेऽपि तत्र तद्गुणत्ववारणाय वाचकत्वेति । तथा च संयोगसम्बन्धेन सागरविशिष्टाऽन्यपदार्थस्य समासावाच्यत्वान्न दोषः । प्रकृते च "सर्वादीनि" इत्यत्र समवायसम्बन्धेन सर्वशब्दविशिष्टस्य समुदायरूपान्यपदार्थस्य समासप्रतिपाद्यत्वाल्लक्षणसमन्वयो बोध्यः ।

"जसः शी" (पा०सू० ७।१।४७)। अनेकाल्त्वादिति। न तु शित्त्वादिति भावः। अवर्णान्तादिति। अवर्णान्तादङ्गात्परस्येत्यर्थः। अतो येषां केषां तेषामित्यादौ नाव्याप्तिः। सर्वनाम्नो विहितस्याम इति। सर्वनाम्नः परस्येति तु नोक्तम्। दक्षिणोत्तरपूर्वाणामित्यत्र सुट्प्रसङ्गात् "द्वन्द्वे च"(पा० सू० १।१।३१)इति निषेधो हि समुदायस्य न त्ववयवस्य। न च तस्मादयमाम् विहितः, किं तु समुदायादेवेति न सुट्। विहितविशेषणत्वस्याश्रयणे प्रमाणं तु "दक्षिणोत्तरपूर्वाणाम्" इति भाष्यप्रयोग एव।

पञ्चत्रिंशदिति। पञ्च च त्रिंशच्चेति द्वन्द्वः। पञ्चाधिकास्त्रिंशदिति तत्पुरुषो वा।

यत्तु प्रत्याहारा एकचत्वारिंशदिति प्राचो ग्रन्थं व्याचक्षाणैरुक्तम्। नायं मध्यमपदलोपी तत्पुरुषः। तथा सति "राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु" (पा० सू० ६।३।३४) "संख्या" (पा० सू० ६।२।३५) इति विधीयमानः पूर्वपदप्रकृतिस्वरो न स्यात्। तस्मात्समाहारद्वन्द्व एवायम्। एकविंशतिरि-

---

शब्दरत्न।

मत्वेन तु न निर्वाहः। सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वाभावादिति भावः।

भाष्यप्रयोग इति। "दिङ्नामान्यन्तराले" (पा० सू० २।२।२६) "दक्षिणोत्तराभ्याम्" (पा० सू० ५।३।२८) इतिसूत्रस्थ इति शेषः। एवं नित्यद्विवचनान्तत्वे "स्वाङ्गसिटाम्" (फि० २९) इत्याद्युदात्तत्वं च न फलम्। उभे भद्रे एत्यादावन्तोदात्तपाठेन गणेऽन्तोदात्तनिपातनात्। वृषादित्वेन तत्सिद्धेश्चेति भावः।

ज्योत्स्ना।

दार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणत्वमित्येव लक्षणं वाच्यम्। कार्यान्वयो न विवक्षणीय इत्यर्थः। दृष्टसागरमानयेत्यादौ प्रयोगकालेऽन्यपदार्थस्य सागरस्य संयोगत्त्वेऽपि तत्र तद्गुणत्ववारणाय वाचकत्वेति। तथा च संयोगसम्बन्धेन सागरविशिष्टान्यपदार्थस्य समासावाच्यत्वान्न दोषः। प्रकृते च "सर्वादीनि" इत्यत्र समवायसम्बन्धे सर्वशब्दविशिष्टस्य समुदायरूपान्यपदार्थस्य समासप्रतिपाद्यत्वाल्लक्षणसमन्वयो बोध्यः।

परे तु—यत्रान्यपदार्थस्य समभिव्याहृतपदार्थेऽन्वयवर्तिपदार्थान्वयश्च नान्तरीयकः तत्र तद्गुणसंविज्ञानमन्यत्रातद्गुणसंविज्ञानमित्याहुः।

विहितविशेषणत्वस्याश्रयण इति। "जसः शी" "सर्वनाम्नः स्मै" "ङसिङ्योः स्मात्स्मिनौ" आमि सर्वनाम्नः सुट्" इत्येतेषु अनुवृत्तस्याङ्गस्य प्रत्ययग्रहणोपस्थिततदादी-

त्यादौ नपुंसकत्वं तु न भवति। लोकाश्रयत्वाल्लिङ्गस्येति। तच्चिन्त्यम्। समासभेदेन स्वरभेदे इष्टापत्तेः। तथा च "बहुव्रीहौ सङ्ख्येये" (पा० सू० ५।४।७३) इति सूत्रे "संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थमन्यत्राधिकलोपात्" (वा०) इति वार्तिकं व्याचक्षाणो भाष्यकार आह—एकाधिका विंशतिरेकविंशतिः, द्वाविंशतिरिति। अत एवेति। द्वयोर्द्विवचनस्यैव न्याय्यत्वादिति भावः।

नन्वेवं सर्वादिषु पाठो व्यर्थः। सर्वनामकार्याणां स्मायादीनां द्विवचने ऽभावात्। न च उभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यत्र "सर्वनाम्नस्तृतीया च" (पा० सू० २।३।२७) इति पाक्षिकतृतीयातत्फलमिति युक्तम्। "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" (वा०) इति वार्तिकेन गतार्थत्वात्। न च वृत्तिकृता "सर्वनाम्नस्तृतीया च" (पा० सू० २।३।२७) इति सूत्रे पठित्वादिदं वार्तिकं सर्वनामसंज्ञासापेक्षमिति वाच्यम्। भाष्ये "हेतौ" (पा० सू० १।३।२२) इति सूत्रे तस्य पठितत्वात्। अत एवान्नेन कारणेन वसति, अन्नस्य कारणस्येत्युदाहृतं हरदत्तेनेत्याशङ्कयाह—तस्येह पाठस्त्विति। अयच्प्रसङ्गादिति। अयं भावः—"उभादुदात्तो नित्यम्" (पा० सू० ५।२।४४) इत्यत्र "उभादुदात्त" (पा० सू० ५।२।४४) इति योगो विभज्यते। अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे ऽयच् स्यात्। उभयो मणिः। ततो "नित्यम्"। उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे। तेन 'उभयपक्षविनीतनिद्रा' इत्यादौ अयज् यथा नित्यः, एवं

शब्दरत्न।

प्रायदर्शनमिति। प्रायग्रहणादुभातिरिक्तासर्वनाम्नः प्रथमाद्वितीये न स्त इत्यर्थकल्पनसम्भवान्नासर्वनामत्वे स दोषः। अयच् स्यादिति। अत्रापि स्थानिवत्सूत्रस्थभा-

ज्योत्स्ना।

त्यस्य वा विशेषणत्वं स्वीकृत्याङ्गाभिन्नं यत्सर्वनामतदाद्यभिन्नं वा ततः परेषां जसादीनां स्थाने श्यादयो भवन्ति इत्यर्थेनेति भावः। संख्यावाचि पूर्वपदं प्रकृत्या द्विद्वे, इत्येतदर्थकसंख्येयेतिशास्त्रेणेत्यर्थः। "राजन्यबहुवचन" इति सूत्रोपन्यसनं तु "संख्या" इति सूत्रे "द्वन्द्वे" इति अस्यानुवृत्तिसूचनायेति बोध्यम्।

पाठ इति। उभयशब्दस्येति शेषः। योगो विभज्यत इति। नित्यग्रहणसामर्थ्यादिति भावः। स्वार्थ इति। अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यभियुक्तोक्तेरिति भावः।

कप्रत्ययेऽपि स्यादिति ।

नन्वेवं अकचि कृतेऽपि अयज् दुर्वार इति चेन्मैवम् । योगविभागस्येष्टसिद्ध्यर्थतया "उभौ साभ्यासस्य" ( पा० सू० ८।४।२० ) इति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यानात् । तथा च वार्तिकम् । "अन्याभावो द्विवचनटाब्विषयत्वात्" ( वा० ) इति । अकचि हि सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेनोभशब्दस्य द्विवचनविषयत्वं न विहन्यते कप्रत्यये तु विहन्येतैव । तदुक्तमिति । वार्तिककृतेति शेषः ।

यद्यपि पूर्ववार्तिके टावप्युक्तस्तथाऽपि नासौ विवक्षितः । टाब्विषयत्वमपि द्विवचनपरत्व एव बोद्धव्यमिति कैयटादिभिर्व्याख्यातत्वादित्याशयेन व्याचष्टे–द्विवचनपरत्वाभावे इति । टावेकादेशस्यापि पूर्वान्तत्वेन ग्रहणात् द्विवचनपरत्वमस्तीति भावः । यद्यप्युभावित्यादौ द्विवचनपरत्वं दुरुपपादमुभयत आश्रयणे ऽन्तादिवद्भावविरहात्, तथाप्युभशब्दादुत्पन्नं द्विवचनं

---

शब्दरत्न

ष्यरीत्या प्रत्ययान्तरत्वमिति भावः । निर्देशेन चेति । वृत्तिविषये इत्यनुक्त्या इदमेव वक्तव्यमिति भावः । अन्याभाव इति । अन्येषां सर्वनामकार्याणामभाव इत्यर्थः ।

पूर्वपक्षिणान्तवद्भावविरहादिति वदतैकदेशविकृतन्यायोऽशास्त्रीयविकारविषयोऽपीति नाभ्युपेतमिति तदनुसारेणैव समाधिं वक्तुमुपक्रमते–तथापीत्यादि । उभशब्दादिति । अत्य-

ज्योत्स्ना ।

तेनेति । नित्यमिति योगविभागेन स्वार्थे ष्वज्विधानेनेत्यर्थः । कप्रत्ययेऽपि स्यादिति । वृत्तिविषयत्वस्य सत्त्वेन क ननु क इवा कच्यमि वृत्तिविषयत्वस्यापि सत्वात् अयच् दुर्वार इति काकचोर्नविशेष इति शङ्कते—नन्वेत्यादिना । इष्टसिध्यर्थतयेति । यत्र विभक्तिद्वयमध्येऽन्यतरस्य वैय्यर्थ्यं तत्रैव प्रवर्तते । यथा "आत" इतिविभक्तसूत्रं सर्वत्र प्रवर्तते; तर्हि "धातोः" इति सूत्रार्थे व्यर्थं स्यादिति योगविभागेनेष्टमेवापादनीयम् । नत्वनिष्टापादनमिति प्रकृते "उभादुदात्त" इतिशास्त्रेणावयविन्ययज्विधानात् । नित्यमित्यनेन स्वार्थेऽयज्विधानात् । उभयोरेकविषयत्वस्यैवाभावेनान्यतरेणान्यतरवैयर्थ्याभावात् । योगविभागादिष्टसिद्धिरितिपरिभाषाया अप्रवृत्त्या चिन्त्यमेतत् । निर्देशेनेति । अन्यथा उभयौ इत्यपेक्षितमिति भावः ।

ननु नित्यमिति शास्त्रेऽस्य वृत्तिविषये नित्यमयच् भवतीत्यर्थस्योक्तत्वेन "उभौसाभ्यासस्य" इति निर्देशोऽनुपपन्न इत्याशङ्कामभिप्रेत्य समाधत्ते—वृत्तिविषये इत्यनुक्तेति । इत्याशयेनेति । वस्तुतस्तु—उभयभद्रे इत्यादावपि अन्तवद्भावेन उभयशब्दत्वात् द्विवचनपरकत्वमस्त्येवेति बोध्यम् । तत्प्रत्ययन्नाह—एकादेशस्यादीत्यादिना ।

लुका नापहृतं यत्र ततोऽन्यत्रायच् इतीह विवक्षितोऽर्थः । यद्यपि भाष्ये कप्रत्ययस्यापि स्वार्थिकत्वेनोभशब्दात् परस्य द्विवचनत्वमस्तीत्याश्रित्योभशब्दपाठः प्रत्याख्यातः । तथाऽपि प्रौढिवादमात्रं तत् । कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वात् । अन्यथा त्रतसिलादावतिप्रसक्तत्वात् । ननु कारकविभक्त्यन्ताद्विहितौ त्रतसिलौ स्वार्थिकत्वेऽपि द्विमात्रं नाभिधत्त इति चेद् न । कप्रत्ययस्याप्यज्ञातादयर्थबोधकत्वात्, पञ्चकपक्षेऽधिकबोधकत्वध्रौव्याच्चेति दिक् ।

शब्दरत्न ।

न्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवान्तरङ्गत्वादुत्पत्तेरुभघटिताच्छब्दादुभयशब्दादित्यर्थः । यत्र लुकाऽपहृतं तत्रायजिति तु नोक्तं प्रातिपदिकप्रकृतिकाचारक्विबन्ते यद्ययजिष्यते तदा तस्यानापत्तेस्तत्रोत्पत्तेरभावेन विशिष्टाभावाक्षतेः । लुका नापहृतमिति । लुक्कृतापहारसम्भावनाभाववदित्यर्थः । एतेनोभशब्दस्य पाठाभावेऽसर्वनामत्वेन ततस्तसिलादिविवक्षायाः कर्तुमशक्यत्वेन द्विवचनस्य लुकाऽनपहारस्यैव सत्त्वेन ततोऽयजनापत्तावुभयत्रेत्यसिद्धिरित्यपास्तम् । यद्ययच् स्यात्तदा त्रलादिः स्यात्तस्मिंश्च लुगपि स्यादिति लुकाऽपहारसम्भावनासत्त्वेन लुक्कृतापहारसम्भावनाभाववतोऽन्यत्वात् । यद्यपि भाष्ये इति । स्वार्थिकत्वेनोभशब्दात्परस्य कप्रत्ययस्यापि द्विवचनत्वमस्तीत्यन्वयः । अधिकेति । संख्यापेक्षयाऽधिकलिङ्गकारकेत्यर्थः । दिगिति । दिगर्थस्तु भाष्यस्याप्रौढिवादत्वमपि समर्थयितुं शक्यमिति । तथा हि—कप्रत्ययस्य स्वार्थिकत्वेन द्व्यर्थाभिधानसमर्थत्वेन वार्तिके द्विवचनशब्देन तस्यापि ग्रहणम् । द्विवचनत्वं द्वित्वसंख्याप्रकारकसङ्ख्येयविशेष्यकबोधविषयार्थानुवाद(१)कत्वम् । त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहितौ इति

ज्योत्स्ना

अनुवादकत्वमिति । अत्रानुवादकत्वपदेन बोधकत्वमात्रं विवक्ष्यते । अत एव उभयोः

प्र० (१) अनुवादकत्वमिति—अत्रानुवादकत्वपदेन बोधकमात्रं विवक्ष्यते । अत एव 'उभयोरुभावुभोभावित्यादौ नायच्' इति शेखरग्रन्थः सङ्गच्छते । तथाच भाष्यम्—"केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति । कथम् ? स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति" इति । इति—हेतोः प्रकृतेः कादिप्रकृतेरुभशब्दस्य ग्रहणेन ग्राहकेण द्विवचन शब्देन स्वार्थिकानामपि ग्रहणमित्यर्थः ।

वस्तुतस्तु स्वार्थिकाः प्रत्यया प्रकृतितोऽविशिष्टा भवन्ति" इति भाष्यस्य स्वार्थिकप्रत्ययप्रकृतिपर्यासधर्माः स्वार्थिकप्रत्ययान्ते तदादावतिदिश्यन्ते इति यदागमपरिभाषावदर्थः । प्रकृतिग्रहणेन स्वार्थिकप्रत्ययविशिष्टस्य ग्रहणमिति यावत् । वैशिष्ट्यं च स्वघटितत्वं—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वं—स्वविशिष्टाघटितत्वमेतत्त्रितयसम्बन्धेन । स्ववैशिष्ट्यं च स्वेतरत्वम्—स्वीयविधेयतानिरूपितोद्देश्यताश्रयेतरत्वमित्युभयसम्बन्धेन । तथाचोभशब्दग्रहणेनोभकशब्दस्यापि ग्रहणात्केऽप्युभ-

नास्तीति। अनभिधानादिति भावः। तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तिकत्वेनाव्ययत्वे प्राप्ते "तद्धितश्चासर्वविभक्तिः" (पा० सू० १।१।३८) इति सूत्रे "कृत्तद्धितानां ग्रहणं च पाठे" इति भाष्यं कैयटेनावतारितम्। अस्तीति। पचतिकल्पं पचतिरूपमित्यादिकारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः। तयप्प्रत्ययान्ततयेति। उभयश-

शब्दरत्न।

तत्तत्कारकशक्तिप्रधानावेवातो न तयोरुक्तं द्विवचनत्वम्। कस्य तु अज्ञाताद्यर्थविशिष्टोभार्थे विधानेन तत्त्वमक्षतमेवेति भाष्याशयः। कल्पाद्यन्तेऽयज्नैव भवति। तत्रोभयो मणिरित्यादौ अप्रवृत्तये अस्य "लिट्यभ्यासस्योभयेषाम्" (पा० सू० ६।१।१७) इति निर्देशेनानित्यत्वावश्यकत्वात्। कल्पबादेस्तस्मादनभिधानमेवेत्यलम्।

कैयटेनावतारितमिति। "उभयोऽन्यत्र" (वा०) इति वार्तिके उभयो मणिरुभये देवमनुष्या इति भाष्यकृतोदाहरणात् स्वार्थिकोपक्रमेण तत्प्रवृत्तेश्चोभयोरपि ग्रहणमिति तस्य द्विवचनाभावोऽनभिधानादावश्यक इति तद्भावः। इति भाव इति। इत्यभिमान

ज्योत्स्ना।

उभौ उभोभौ इति शेखरग्रन्थः सङ्गच्छते। तथा च भाष्यं केऽप्यन्तरेण वचनं द्विवचनमते भविष्यति। कथं? स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति इति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवतीति हेतोः प्रकृतेः कादिप्रकृतेः उभशब्दस्य ग्रहणेन ग्राहकेण द्विवचनशब्देन स्वार्थिकानामपि ग्रहणमित्यर्थः।

यस्तुतस्तु—स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति भाष्यस्य स्वार्थिकप्रकृतिपर्य्याप्तधर्माः स्वार्थिकप्रत्ययान्ते तदादावतिदिश्यन्ते इति यदागमपरिभाषावदर्थः। प्रकृतिग्रहणेन स्वार्थिकप्रत्ययविशिष्टस्य ग्रहणमिति यावत्। वैशिष्ट्यं च—स्वघटितत्वं स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वं स्वविशिष्टाघटितत्वम्। इति त्रितयसम्बन्धेन। स्ववैशिष्ट्यं च स्वेतरत्वम् स्वीयविधेयतानिरूपितोद्देश्यताश्रयेतरत्वमित्युभयसम्बन्धेन। तेनोभशब्दग्रहणेनोभकशब्दग्रहणात् केत्युभशब्दस्य द्विवचनपरत्वमेवेत्युभशब्दपाठो व्यर्थः। अत एव प्रकृतितोऽभिन्ना इत्येतदर्थकं प्रकृतितोऽविशिष्टा इति भाष्यं सङ्गच्छते। जराशब्दात् कप्रत्यये जरसादेशस्तु निर्दिश्यमानत्वाभावान्न। श्वशुरशब्दात् "राजश्वशुराद्यत्" इति यदादेरतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति बोध्यम्।

शब्दस्य द्विवचनपरत्वमेवेत्युभशब्दपाठो व्यर्थः। अत एव प्रकृतितोऽभिन्ना इत्यर्थकं "प्रकृतितोऽविशिष्टा" इति भाष्यं सङ्गच्छते। जराशब्दात्कप्रत्यये जरसादेशस्तु निर्दिश्यमानत्वाभावान्न। श्वशुरकशब्दात् "राजश्वशुराद्यत्"इति यदादेरतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति बोध्यम्।

ब्दस्येति भावः। नित्यैवेति। "परेऽवरेऽभया अमित्रा" इति तु च्छान्दसत्वाद् बोद्धव्यम्। अव्युत्पन्नाविति। एतच्च पस्पशायां कैयटे स्पष्टम्।

एके—काशिकाकाराः। 'एतन्त्वं मन्ये' इत्युदात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च दर्शनादिति भावः। एकः—प्रथमः संहितया पाठे तान्तत्वस्यास्फुटत्वेऽपि तान्तश्छेत्तव्योऽन्यथा एकश्रुत्या सकृदेव पठेत्। न च तान्ते विप्रतिपत्तव्यम्। "त्वत्त्वसमसिमेत्यनुच्चानि" (फि० सू० ७८) इति फिट्सूत्रात्। तथा च ऋङ्मन्त्रः। "स्तरीरुत्वद्भवति, सूत उत्वत्" इति। वेदभाष्याकाराश्चेत्थं व्याचख्युः—त्वदिति। सर्वनामसु पठितोऽनुदात्तोऽयमन्यपर्याय इति। जयदेवोऽपि प्रायुङ्क्त। 'त्वदधरमधुरमधूनि पिबन्तम्' इति। त्वतोऽन्यस्या अधर इति विग्रहः। न तु तवाधर इति। 'पश्यति दिशि दिशि रहसि भवन्तम्' इति पूर्ववाक्येन सहानन्वयापत्तेः। नेम इति। श्रूयते च—"प्र नेमस्मिम् ददृशे सोम" इति। सम इति। तथा च श्रूयते—'नभन्तामन्यके समे'। 'मानो वृकाय वृक्ये समस्मै'। 'उरुष्याणो अघायतः समस्मात्'। 'उतो समस्मिन्ना' इत्यादि। 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः'॥ श्रूयते च—"आद्रात्री वासस्तनुते सिमस्मै"। 'उच्छुक्रमत्कमजते सिमस्मात्'। उभयत्रापि सिमशब्दः सर्वपर्याय इति वेदभाष्यम्।

गणसूत्र इति। यद्यपि भाष्ये अष्टाध्यायीस्थे सूत्रे "अपुरि इति वक्तव्यम्" (ग० वा०) इति वार्त्तिकं पठितं, तथापि तद्गणसूत्रस्य शेषः नतु जसि

शब्दरत्न।

इत्यर्थः। तद्बीजं तूक्तम्।

अनन्वयापत्तेरिति। तेन हि वाक्यशेषेण कृष्णस्य सम्बोध्यत्यावगत्या सम्बोध्यस्य च युष्मदर्थत्वेनानन्वयः पिबन्तं भवन्तमिति चानन्वितमिति बोद्धव्यम्। अत्र पक्षे त्वम् इत्येकश्रुत्योदात्तानुदात्तयोर्निर्देश इति बोद्धव्यम्।

ज्योत्स्ना।

कृष्णस्येति। कृष्णं प्रति सखीवाक्यमेतत्। अत एव भवन्तम् इत्यनेन कृष्ण एव भवन्तमित्यनेन प्रतिपाद्यत्वेन विवक्षितः। अत एव। तद्वाक्यात्पूर्वपठितेन।

'अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा'।
'तच्चरितं गोविन्दो मनसि जपन् सखी प्राह'।

इत्यनेनैव वाक्यं भवति।

युष्मदर्थत्वे इति। तवाधर इति शेषः। अनन्वितमिति। यदि युष्मदर्थ एव विवक्षितः

विभाषाविधायकस्य। "अत" इत्यधिकृत्य जसः शीविधानात् टाबन्तात्प्राप्त्यभावात्। अन्तरायामिति। प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेत्यर्थः। लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिर्बोध्या। त्यद्, तद्, एतौ उक्तपरामर्शकौ। तत्राद्यश्छान्दस इति गणरत्नकारः। तन्न। "स्यश्छन्दसि बहुलम्" ( पा० सू० ६।१।१३३ ) इति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते॥

स्वाभिधेयेति। स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः। 'दिशः सपत्नी भव दक्षिणस्या' इत्यादावपि व्यवस्थाऽस्त्येव प्रसिद्धत्वात्तु नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः। आधुनिकसङ्केतो

शब्दरत्न।

प्राप्त्यभावादिति। पुंःशब्देन स्त्रीत्वविशिष्टस्यैव बोधनेन तादृशार्थस्य विशेष्यत्वे एव तत्प्रवृत्तेः। अत एव भाष्ये "अन्तरायाम्" इति स्त्रियां सप्तम्यामेवोदाहृतमिति भावः। केवल इति। असहाय इत्यर्थः।

स्वाभिधेयापेक्षावधीति समस्तपाठं व्याचष्टे—स्वस्येत्यादि। अपेक्षेति कर्मणि घञ्। व्यवस्था ऽस्त्येवेति। पूर्वादिशब्दैरेकस्या एव दिश उपाधिकृतभेदस्य प्रतिपादनम्। उपाधिश्च पृथ्वीमध्यं, तत्प्रान्तवर्त्तिनश्चत्वारः पर्वताश्च। रामायणे किष्किन्धायां सुग्रीवेण मध्यदेशावधिकस्यैव दिग्विभागस्योक्तेः। पृथ्वीमध्यं च मध्याह्नसूर्यसंयोगिदेशः। एवं च तन्मध्यभागावधिकोदयाचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि पूर्वादिशब्दानां तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरित्युपाध्यन्तर्गततया व्यवस्था ऽस्त्येव। उदयाचलपर्यन्तरूपोपाधेस्तदभिधेयस्य तदाकाङ्क्षत्वञ्चास्त्येव। मध्याह्नसूर्यसंयोगिदेशात्तत्सन्मुखदेश उदक्। तत्पृष्ठस्थदेशश्च दक्षिणा। मध्याह्ने सूर्यस्योदङ्मुखत्वात्। स्पष्टं चेदं हेलाराजीये। व्यवस्थायामिति च विषयसप्तमीति भावस्तदाह—प्रसिद्धत्वादिति। देशवृत्तीनां तत्तदवधिकोदयाचलसंनिहितत्वादिप्रवृत्तिनिमित्तमित्यादि बोध्यम्। आधुनिकसङ्केतो हीति। असंज्ञापदसामर्थ्यादन्यथा

ज्योत्स्ना।

स्यात्तदा भवन्तमित्यत्र यो भवच्छब्दः तत्प्रतिपाद्योऽपि कृष्ण एवेति स्वीयाधरपानं स्वकर्तृकं बाधितमित्यनन्वय इति भावः। एतेन कृष्णस्य शठनायकत्वं सूचितम्।

अन्येतु—राधिकाऽत्यन्तविरहोत्कण्ठिततया स्वाधरे कृष्णाधरत्वभ्रमेण मधुपानं कुर्वतीति बोधयितुं त्वदधर मधुरमित्यत्र त्वच्छब्दो युष्मच्छब्द एवेत्याहुः।

हिं संज्ञा । न च दिक्षु साऽस्ति इति अस्तातिप्रकरणे कैयटहरदत्तादयः । अत्र दिक्षु चिरन्तनः, कुरुषु तु आधुनिकः सङ्केत इत्यत्र व्याख्यातृवचनमेव प्रमाणम् । एतेन "विश्वेषां देवानाम्" इति व्याख्यातम् । वेदप्रसिद्धत्वात् । देवगणविशेषे विश्वशब्दस्याधुनिकसङ्केताभावात् । दक्षिणा गाथका इति । इहामुकस्मात् कुशला इति अवध्यन्वयसम्भवेऽपि तन्नियमो नास्तीति भावः । अधरे ताम्बूलरागः । उत्तरे प्रत्युत्तरे च शक्त इत्यपि प्रत्युदाहर्तव्यम् । कथं तर्हि 'तथा परेषां युधि च' इति कालिदासः, 'अपरे प्रत्यवतिष्ठन्ते' इत्यादि च । अत्राहुः—देशवाचितया व्यवस्थाविषययोरेव परापरशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः । न चैवमुपसर्जनता । न हि लाक्षणिकत्वमुपसर्जनत्वम् । किं तु स्वार्थविशिष्टार्थान्तरसंक्रमः । स च समासादिवृत्तावेव । अत एव भूवादिसूत्रे "एतान्यपीति—एतत्प्रतिपाद्यानि वस्तूनीत्यर्थ" इति कैयटोक्तिः सङ्गच्छते ।

---

शब्दरत्न ।

सर्वादीनां केवलरूढत्वेनेन्द्रादिपदानामिव रूढत्वरूपसंज्ञात्वस्य सर्वत्र सत्त्वात्तदसङ्गतिः स्पष्टैवेति भावः । व्याख्यातृिति । कैयटादीत्यर्थः । आधुनिकसङ्केताभावादिति । किं त्वैश्वरएवेति भावः । यदि तत्रोत्कर्षस्यावधिसापेक्षत्वाद्व्यवस्थास्तीत्यग्रहस्तदा प्रत्युदाहरणान्तरमाह—अधरे इत्यादि । अत्रापि संज्ञात्वं मत्वा ऽऽह—उत्तरे इत्यादि । उपचारादिति । तत्त्वारोपादिति भावः । अर्थान्तरसंक्रम इति । स्वार्थविशिष्टार्थान्तरबोधकत्वमित्यर्थः । इदं च "ञितश्च तत्प्रत्ययात्" ( पा०सू० ४ । ३ । १५५ ) इति सूत्रे भाष्ये ध्वनितम् ।

ज्योत्स्ना ।

किन्तु स्वार्थविशिष्टार्थान्तरसंक्रम इति । पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वम् उपसर्जनत्वमिति यावत् ।

परे तु—पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वम् उपसर्जनत्वम् । अत एव द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते इति भाष्यं सङ्गच्छते । अन्यथा उपसर्जनत्वात्सत्वाप्राप्त्या तदसङ्गतिः स्पष्टैव । नच 'यथा लक्षणमप्रयुक्ते" इत्यत्रालक्षणमिति छेदः । लक्षणयार्हे लक्षणप्रवृत्तिपरमुपचारात् । तथा चाप्रयुक्ते लक्षणा प्रवृत्यभावयोग्यतेत्यर्थ इति । एतस्यानभिधानमिति वाच्यम् । प्रवृत्तौ लक्षणास्वीकारे गौरवात् । अलक्षणमितिच्छेदे मानाभावाच्च । पदार्थानतिवृत्तावव्ययीभावं स्वीकृत्य अप्रयुक्तविषये लक्षणमनतिक्रम्य प्रयोगः कर्तव्य इत्यर्थस्य 'यथा लक्षणमप्रयुक्ते' इति भाष्यस्य न्याय्यत्वादित्याहुः ।

वस्तुतस्तु परापरशब्दयोर्देशान्तरनिष्ठत्वादिकमेवार्थः । शत्रुत्वादिकं तु आर्थिकोऽर्थः। असंज्ञायां किम् ? उत्तराः कुरवः, सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्त्तते इत्यस्तीह व्यवस्था । किं तु आधुनिकसङ्केतोऽयमित्याहुः ।

"स्वमज्ञातिधनाख्यायाम्"। (पा०सू० १।१।३५) आत्मात्मीयज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासात् आत्मात्मीयौ परिशिष्टावित्याशयेन व्याचष्टे—आत्मीया इत्यर्थः, आत्मान इति वेति ।

यत्त्वाहुः—आत्मनि स्वशब्दो नपुंसकः । तेन स्वे, स्व इत्युदाहरणं तत्र न सम्भवतीति । तच्चिन्त्यम् । आत्मन्यपि स्वशब्दस्य पुंस्त्वात् । "विभाषा जसि ( पा० सू० १।१।३२ ) इति प्रकरणं 'स्वमात्मीये' इत्येव वक्तव्ये गुरुनिर्देशं कुर्वतः सूत्रकारस्यैवात्र प्रमाणत्वात् ।

यदपि स्वोक्तेऽर्थे उपष्टम्भार्थं—

स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ॥

इति अमरसिंहोक्तिमाहुः । तदपि चिन्त्यम् । कोशे हि आत्मनीति पूर्वान्वयि । स्वमिति तु उत्तरान्वयि । तथा च हेमचन्द्रः—

द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने ॥ इति ।

मेदिनीकारोऽपि—

स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये ऽस्त्रियां धने ॥ इति ।

---

शब्दरत्न ।

मेवार्थ इति । देशवद्यमपि तच्छक्य इत्यर्थः । तुल्यन्यायादेतच्छब्दस्यापि कैयटोक्तार्थः शक्य इति ध्वनितम् । सुमेरुमिति । हिमवानवधिरिति तु 'ये केचन परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा' इति ऐतरेयब्राह्मणे श्रूयते । उत्तरा इत्यस्य तन्नामान इत्यर्थस्तदा ऽऽह—आधुनिकेति । 'उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा उच्यन्ते' इति तु कपिञ्जलाधिकरणे शाबरभाष्ये उक्तम् ।

हेमचन्द्र इति । कोशयोरविरोधे सम्भवति विरोधो न न्याय्य इति भावः । यदि तु एवमन्वये—

स्वो ज्ञातावात्मनि धने त्वस्त्री आत्मीयके त्रिषु ॥

इति पाठेनैव सिद्धे त्रिः स्वग्रहणवैयर्थ्यापत्तेः ।

(१)बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहाना ॥
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा ॥ १ ॥

---

प्र० ( १ ) नैषधीयचरिते सप्तमसर्गे सप्तत्रिंशत्तमो दमयन्त्या अधरोष्ठवर्णनात्मकोऽयं श्लो-

तस्मात् स्वे स्वा इत्यस्यात्मान इति विवरणं सम्यगेवेति स्थितम् ।

ज्ञातिधानवाचिनस्त्विति । ताच्छिल्ये णिनिना ज्ञातिधनयोरपि आत्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामता ऽस्त्येवेति ध्वनयति । एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम् ।

"अन्तरबहिर्योगोपसंव्यानयोः"(पा० सू० १।१।३६)।। बहिरित्यनावृत्तो देशो बाह्यं चोच्यते । तत्राद्यमर्थं गृहीत्वा ऽऽह—बाह्या इत्यर्थं इति । द्वितीये तु आभ्यतरा इत्यर्थो बोद्धव्यः । बाह्येन हि आभ्यन्तरस्य योगोऽस्ति । अर्थद्वयमप्याकरे स्थितम् । उपसंव्यानशब्दोऽपि करणव्युत्पत्त्योत्तरीयपरः कर्मव्युत्पत्त्या त्वन्तरीयपरः ।

"पूर्वादिभ्यो नवभ्यो वा" (पा० सू० ७।१।१६)।। अत्रेदवधेयम् । एतत्सूत्रं "जसः शी" इत्यत्रानुवर्त्य वाक्यभेदेन व्याख्येयम् । "वा च्छन्दसि" ( पा०सू० ६।१।१०७ ) इत्येतत् "अमिपूर्वः" इत्यत्र यथा । एवं चाष्टाध्याय्यां "पूर्वपर–" ( पा० सू० १।१।३४ ) इत्यादित्रिसूत्री गतार्थेति महल्लाघवम् । एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह—सङ्ख्यायामिति । अन्येषु सप्तसु तु वचनान्तरमपि स्यादेव । एके, एकेषामिति यथेति भावः ।

शब्दरत्न ।

इति श्रीहर्षश्लोके आत्मानमित्यर्थकस्वमित्यत्य बन्धूकबन्धूभवदिति विशेषणेन च नपुंसकत्वमस्तीत्युच्यते तर्ह्यस्तु, मेदिन्यादिप्रामाण्यात्पुंलिङ्गोऽप्यस्त्येवेति स्वे, स्वा इत्युदाहरणं न सम्भवतीति प्राचीनोक्तिरसङ्गतैवेति ध्वनयन्नाह—विवरणं सम्यगेवेति । एतदर्थमेवेति । एतदर्थमपीत्यर्थः । धनत्वेनात्मीयस्य बोधो मा भूदित्यर्थं चेत्यपि बोद्धव्यम् । आत्मात्मीयाख्यायामिति तु नोक्तं लाघवाभावात् ।

बाह्यं चेति । उक्तबहिर्देशस्थमित्यर्थः । उपसंव्यानशब्दोऽपीति । एवं च तद्ग्रहणं बहिर्योगस्य गृहेष्वेव प्रसिद्धिमाश्रित्य सूत्रे कृतमिति भावः ।

महल्लाघवमिति । त्रिसूत्र्या जसाधारे शीभावे एव विकल्पविधानात् । "व्यवस्थायाम्" इत्यादि गणे एव पाठविशेषणमिति भावः ।

---

कः । अनेन पुरोदृश्यमानेन मुखेन्दुना सहैवोज्जिहाना उत्पद्यमाना अस्या अधरोष्ठलेखा लेखाकृतिरधरोष्ठ एतत्प्रत्यक्षदृश्यं रागधिया तारुण्यप्रयुक्तलोहितिमकान्त्या बन्धूकस्य मध्यान्हविकासिपुष्पविशेषस्य बन्धूभवत् अतिरक्ततया समानमित्यर्थः । स्वमात्मानं शैशवयौवनीयां बाल्यावसानतारुण्यारम्भासम्बन्धिनीं सन्ध्यां संधिभ्रामाह । प्रसिद्धं हि किल संन्ध्यापि दिनरात्र्योः सन्धौ भवति, चन्द्रेण सहोदेति, रक्ता च भवतीति । इति तदर्थः ।

"न बहुव्रीहौ"(पा०सू० १।१।२९)॥ कृते बहुव्रीहौ निषेधो व्यर्थः। "उपसर्जनीभूता न सर्वादय" इति वक्ष्यमाणत्वादत आह—चिकीर्षिते इति। समासात्प्रागेवेति च। प्रक्रियेति। अलौकिके विग्रहवाक्ये इत्यर्थः। नन्वस्तु तत्राकज् अत आह—स चेति। न च निमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वात्प्रागेव संज्ञा न भविष्यतीति वाच्यम्। अकृतव्यूहपरिभाषाया अनित्यत्वात्। तत्र चैतत्सूत्रस्यैव ज्ञापकत्वात्। अतिभवकानिति। एतदेव ज्ञापनफलमिति भावः। इष्टापत्तिं कृत्वेति। "च्छ्वोः शूठ्" (पा० सू० ६।४।१९) इति सतुक्कग्रहणं, प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे ज्ञापकम्। लक्ष्या-

शब्दरत्न।

वक्ष्यमाणत्वादिति। (१)एकद्वा इति बहुव्रीहेरभिधानेऽपि तत्रैकद्वयन्यतरा इत्यर्थादुपसर्जनत्वमेव। समासान्ते कृते विशिष्टस्य सर्वाद्यन्तत्वाभावाच्च। समासान्तानामुत्तरपदावयवत्वं तु नेत्युक्तम्। चिकीर्षित इतीति। अध्याहारलभ्यमेतत्। एतदर्थमेव 'न बहुव्रीहिः' इति वक्तव्ये "बहुव्रीहौ" इति गुरुनिर्देश इति भावः। विनाशोन्मुखत्वादिति। यद्यप्यलौकिके एवैकार्थीभावस्यारोपोऽस्ति तथाऽपि तत्र स्वार्थविशिष्टार्थान्तरबोधकत्वरूपो(२)पसर्जनत्वाभावादेवमुक्तम्। अनित्यत्वादिति। अत एवातिभवकानित्यादिसिद्धिः। वस्तुतः सा भाष्यानुक्त(३)त्वान्नास्त्येवेति बोध्यम्। सतुक्कग्रहणमिति। "च्छ्वोःशूठ्" (पा० सू० ६।४।१९) इति सूत्रे प्रष्टेत्यादावन्तरङ्गत्वाज्जातस्य तुको निवृत्तये तत्क्रियते। सतुक्कनिर्देशसामर्थ्याच्च नान्त्यस्य शः। वाञ्छादिप्रकृतिकक्विबन्तादेस्तु अप्रयुक्तत्वेन लक्षणविषयतैव नेत्यादि (४) भाष्ये स्पष्टम्। तत्परिभाषासत्त्वे हि शादेशे निमित्तविनाशेन पूर्वं तदप्रवृत्तिरेवेति स व्यर्थ एव स्यादिति भावः। प्रकृतिप्रत्यापत्तीति।

ज्योत्स्ना।

वस्तुतस्सा भाष्यानुक्तत्वादिति। वस्तुतोऽस्याभाष्यानुक्तत्वेऽपि घटसेद्दुषोः इति फलसत्वात्। एषा परिभाषा आश्रयणीयैवेति बोध्यम्।

भाष्ये स्पष्टमिति। "छ्वोः" इति सूत्रस्थभाष्ये इत्यर्थः। इत्थं हि तत्र भाष्यम्—'अव-

वि० (१) ननु "संख्ययाव्यय" इति सूत्रविहितबहुव्रीहौ निरुक्तोपसर्जनत्वाभावेन तत्र निषेधार्थं सूत्रमस्त्वित्यत आह एकद्वेति।

वि० (२) यद्यपि आरोपोऽस्ति, तथापि तस्यार्थबोधनाय न कस्यापि प्रयोग इति वस्तुगत्या तन्नास्तीति भावः।

प्र० (३) वस्तुतस्तु अस्य भाष्यानुक्तत्वेऽपि घटसेदुषोरित्यादिफलसत्वादेषा परिभाषाश्रयणीयैवेति बोध्यम्।

प्र० (४) च्छ्वोरितिसूत्रस्थभाष्ये इत्यर्थः। एवं हि तत्रोक्तम्—अवश्यमत्र तुगभावार्थो यत्नः

नुरोधाद्व्यवस्थेति भावः । यथोत्तरमिति । तथा चाद्यत्वे भाष्यकारोक्त्यैव व्यवस्थेति भावः ।

यत्तु प्राचोक्तम्—बहुव्रीहौ सर्वादेः सर्वनामता न स्यात् । प्रियसर्वाय । सूत्रकारमते बहुव्रीहौ न सर्वनामता । भाष्यकारमते गौणत्वमात्रे । त्वत्कपितृको मत्कपितृक इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्कार्य-

शब्दरत्न ।

कंसं घातयतीत्यादौ कृल्लुकि तन्निमित्तकादेशनिवृत्तये क्रियमाणं "आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिश्च" ( वा० ) इति वचनमित्यर्थः ।

अत्रेदं चिन्त्यम् । लुक्यपि प्रत्ययलक्षणसत्त्वाद्राजा, ऐनेय इत्यादावविकृतपरिभाषाया अत्राप्राप्तिः । "न लुमता" ( पा०सू० १।१।६३ ) इति निषेधस्तु प्रत्यये परतो जायमानपूर्वकार्ये एवेति स्पष्टमेव । तस्मात्पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके "पुष्ययोगे ज्ञि" इति वचने (१)भाष्यकृतकृत्प्रत्यापत्त्यनुवृत्तिर्ज्ञापिका । तत्र हि "चजोः" ( पा०सू०७।३।५२ ) इति घिति परतः कुत्वमिति । भाष्यकारोक्त्येति ।

"अकच्स्वरौ तु कर्त्तव्यौ (२)प्रत्यङ्गं मुक्तसंशयौ" ।

इति च तदुक्तिः । एतदेवाभिप्रेत्य "धिन्विकृण्व्योर च" ( पा० सू० ३।१ । ८० ) इति सूत्रे किमर्थमत्वं विधीयते वलोप एवास्त्वित्याशङ्क्यात्वे ऽल्लोपः तस्य स्थानिवत्त्वेन गुणाभावाय तत् । न च वलोपेऽपि "न धातु—" ( पा० सू० १।१।४ ) इति गुणनिषेधः सिद्ध इति वाच्यम् । तत्प्रत्याख्यानपक्षे गुणप्राप्तेरित्युक्तम् । अनेन सूत्रम-

ज्योत्स्ना ।

श्यमत्र तुगभावार्थो यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति । "छ्वोः" इति तुका सह सन्निपातग्रहणं विज्ञायते । न चैवमपि अन्यस्य प्राप्नोति । सन्निपातग्रहणसामर्थ्यात् सर्वस्य भविष्यति । एवमङ्गस्य प्राप्नोति । निर्दिश्यमानस्यादेशा भवन्तीत्य-

---

कर्तव्यः, अन्तरङ्गत्वाद्धि तुक् प्राप्नोति, छ्वोरिति तुका सह सन्निपातग्रहणं विज्ञायते । ननु चैवमपि अन्यस्य प्राप्नोति, सन्निपातग्रहणसामर्थ्यात्सर्वस्य भविष्यति । एवमङ्गस्य प्राप्नोति, निर्दिश्यमानस्यादेशा भवन्तीत्यङ्गस्य न भविष्यति । यद्येवं उत्पुच्छयतेरप्रत्यये उत्पुडिति प्राप्नोति उत्पुदिति चेष्यते, तथा वान्छतेरप्रत्ययः वान् वांशौ, वांश इति न सिध्यति । यथालक्षणमप्रयुक्ते इति ।

प्र० ( १ )"हेतुमति च" इति सूत्रे हि "नक्षत्रयोगे ज्ञि" इति वर्तिकं पठ्यते, नक्षत्रयोगे जानात्यर्थे कृदन्ताद् णिज् वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति तदर्थः । पुष्ययोगं जानाति पुष्येण योजयति' मघाभिर्योजयति, इत्युदाहरणम् ॥

वि० ( २ ) प्रत्यवयवमित्यर्थः । स्वरः "स्वाङ्गिशटाम्" इति विहितः ।

त्वेनाकच् स्यात् स मा भूत्, कप्रत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मतमिति । अत्रेदं वक्तव्यम् । किं बहुव्रीहौ संज्ञा नेति विवक्षितम् ? उत तदवयवानां सर्वादीनामिति । नाद्यः । समासावयवयोर्युष्मदस्मदोरित्युत्तरग्रन्थविरोधात् । समुदाये प्राप्तिविरहाच्च । न च तदन्तविधिना प्राप्तिः । बहुव्रीह्यवयवानां उपसर्जनतया सर्वादिबहिर्भावेन तदन्ते प्राप्तेर्दूरापास्तत्वात् । अत एव न द्वितीयोऽपि । न चोपसर्जनानां पाठात् पर्युदासो वार्तिककृतोक्तो न तु सूत्रारूढमिति वाच्यम् । अन्वर्थसंज्ञाबलेन सूत्राक्षरैरेव तल्लाभात् । एतेन सूत्रकारमते बहुव्रीहौ न सर्वनामतेत्यपि परास्तम् । बहुव्रीहावेवेति तस्यार्थः । भाष्यकारमते इत्याद्यपि न । विशेषोपादानेन हि सूत्रकारवार्त्तिककारयोर्मतमन्यादृशमिति प्रतीयते । देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्ते दक्षिणेन न पश्यतीतिवत् । तच्च न । सूत्रवार्त्तिकमतेऽपि गौणपर्युदासस्येष्टत्वात् ।

यत्तु त्वत्कपितृक इत्यादि तदित्थं प्राचा व्याख्यातम् । त्वं पिता यस्य, अहं पिता यस्येति विगृह्य बहुव्रीहिसमासे कृते समासावयवयोः समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेन सर्वनामसंज्ञकत्वादज्ञाताद्यर्थविवक्षायाम्

शब्दरत्न ।

तात् प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसंमतलक्ष्यमेव कथंचित्सूत्रमतेऽपि साध्यं न तु विपरीतं संभवे । अन्यथा सूत्रमप्रमाणमेवेति च, प्रत्याख्यानं सूत्रसंमतमिति च ध्वनितम् । सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत्सूत्रकारवचःखण्डनप्रवृत्तभाष्यवार्त्तिकवचनैस्तदंशे सूत्रकारवचसो ऽप्यप्रामाण्यकल्पनैवोचितेति दिक् ।

किमिति । बहुव्रीहौ नेत्यस्य द्वेधा व्याख्यानसंभवादिति भावः । उत्तरग्रन्थेति । न्यासकारस्यापि सूत्रलभ्यार्थप्रतिपादने एव तात्पर्यादिति भावः । प्राप्तेरिति । प्राप्तेरभावे निषेधो व्यर्थ एवेति भावः । अत एवेति । अवयवानामुपसर्जनत्वेन सर्वादिबहिर्भावादेवेत्यर्थः । अन्वर्थेति । सर्वेषां नामेत्येवंरूपेत्यर्थः । तस्यार्थ इति । सोऽनुचितोऽन्वर्थसंज्ञया गौणमात्रे तदप्रवृत्तेस्तत्संमतत्वादिति शेषः । सूत्रेत्यादि । तन्मते ऽन्वर्थत्वेन, वार्त्तिकमते तु वचनेनेत्यर्थः ।

ज्योत्स्ना

ह्रस्य न भविष्यति । यद्येवमुत्पुच्छयतेरप्रत्यये उत्पुडिति प्राप्नोति । उत्पुदितिचेच्यते तथा वाञ्छयतेरप्रत्यये वान् वांशौ वांशः इति न सिद्धयति "यथा लक्षणमप्रयुक्ते" इति ।

"अव्ययसर्वनाम्नाम्" (पा०सू० ५।३।७१) इत्यकच् प्रसज्येत । तस्य स्मै-प्रभृतिनामिवाङ्गाधिकारविहितत्वाभावेनाङ्गसंज्ञानपेक्षत्वात् । ततश्च त्वकत्पितृक इत्याद्यनिष्टं प्रसज्येतेति । न्यासकृता ऽपि अन्वर्थसंज्ञाबलादेव संज्ञा-निरासे कृते ऽकज् न भविष्यतीत्याशङ्क्य समुदायो हि विशेषे वर्तते पूर्व-पदन्तु सर्वार्थताया अनपेतमेवेत्युक्तम् । तदेतत्सर्वं प्रामादिकमेव । तथा हि— जहत्स्वार्थायां वृत्तौ समासावयवयोरर्थ एव नास्ति । अजहत्स्वार्थायामपि स्वार्थविशिष्टान्यपदार्थवृत्तित्वेनोपसर्जनत्वं स्पष्टमेव । एवं च समासान्तःपा-तिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेनेत्यादिग्रन्थः समुदायो हीत्यादिन्यासग्र-न्थश्च पक्षद्वयेऽपि व्याहतः । किं चैवं अतिसर्वायेत्यत्र स्मायादेशो दुर्वारः । अङ्गाधिकारे तदन्तग्रहणात् । त्वदुक्तरीत्या सर्वशब्दस्य सर्वार्थतानपायात् । नहि पूर्वपदे सर्वार्थता उत्तरपदे तु नेति युक्तिमत् । अपि चैवं गौणत्वे सर्वा-दीनां सर्वार्थवाचकत्वं नास्तीति स्वोक्त्या सह विरोधः स्यादिति यत्किंचिदेतत् ।

शब्दरत्न ।

स्वोक्तार्थे न्यासकृद्ग्रन्थसंवादमाह—न्यासकृतापीति । अनपेतमेवेति । समुदाये एकार्थीभावाङ्गीकारेण समुदायस्यान्यपदार्थोपसर्जनत्वेऽप्यवयवस्य तत्त्वे माना-भाव इत्यभिमानः । व्याहत इति । अजहत्स्वार्थायामपि अवयवार्थस्यान्य-पदार्थविशेषणतयैवोपस्थित्योपसर्जनत्वाक्षतेरितरार्थविशेषणत्वेनोपस्थितिविषयत्वस्यै-वोपसर्जनत्वपदार्थत्वादिति भावः । सर्वशब्दस्येति । उत्तरपदभूतस्यापीत्यर्थः । युक्तिम-दिति । न चोत्तरपदे लक्षणा पूर्वपदं तात्पर्यग्राहकमिति मते तद्युक्तिमदिति वाच्यम् । तत्र मते हि पूर्वपदं निरर्थकं, स्वार्थप्रतिपादकं वा । नाद्यः । नैरर्थक्येन सर्वार्थकत्वाभा-वादेवाप्राप्तेः । नान्त्यः । पूर्वपदार्थे विशेषणान्वयापत्तेः । विनिगमनाविरहेण पदद्वये-ऽपि लक्षणौचित्याच्च(१) । एकार्थी(२)भाववादिभिस्तथा वक्तुमशक्यत्वाच्च । एवं च तद्घटकावयवानां सर्वनामत्वाभाव एवोचित इति दिक् । स्वोक्त्येति । एतत्प्रकरण-स्थयेत्यर्थः ।

ज्योत्स्ना ।

औचित्यादिति । अन्यथा समुदायोत्तरविभक्तेः पूर्वपदप्रकृतित्वाभावे तल्लक्षितार्थस्य विभक्त्यर्थेऽनन्वयापत्तिरित्यर्थः ।

---

प्र० (१) औचित्यादिति—अन्यथा समुदायोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावेन तल्लक्षिता-र्थस्य विभक्त्यर्थेऽनन्वयापत्तिरिति भावः ।

वि० (२) तन्मते समुदायेन शक्त्यैव भवत्सम्मतलक्ष्यार्थस्यप्रतिपादनादिति भावः ॥

यदपि व्याचख्युः—त्वं पिता यस्येत्यादौ विग्रहवाक्ये प्राप्ता संज्ञा निषिद्धयते इति। तदपि न। विग्रहवाक्यं हि लौकिकमलौकिकं वा विवक्षितम्। नाद्यः। प्रक्रियावाक्येऽयं निषेधो न तु लौकिक इति कैयटग्रन्थविरोधात्। प्रकृतसन्दर्भगतपूर्वापरस्वग्रन्थविरोधाच्च। न द्वितीयः। तस्य युष्मत् सु पितृ सु इत्याकारकत्वेन त्वं पितेत्याकारकत्वायोगात्।

यदपि व्याचख्युः—नन्वतिसर्वादौ संज्ञा न प्रवर्तते त्वत्कपितृकादौ तु प्रवर्तत इत्यत्र किं विनिगमकन्तत्राह—अनङ्गकार्यत्वेनेति। अङ्गशब्दः समुदायपरः। तेनातिसर्व इत्यत्राङ्गस्य संज्ञापेक्षिता सर्वनाम्नोऽङ्गात् स्मायादिविधानादवयवमात्रस्य सत्यपि सर्वनामत्वे दोषाभावात्। समुदाये च समुदायार्थं प्रति सर्वादेरुपसर्जनत्वात् तदन्तस्य संज्ञा न भवतीति युक्तम्। इह तु अवयवमात्रस्य सा चिकीर्षिता न समुदायस्य, अवयवश्च स्वार्थमात्रप्रधान इति स्यात् प्रसङ्ग इति वैषम्यमस्तीत्याशय इति। तदपि न। अङ्गाधिकारे तदन्तविधेः सर्वसम्मतत्वेनावयवमात्रे सत्यपि सर्वनामत्वे दोषो नास्तीत्युक्तेर्व्याहतत्वात्। अङ्गाधिकारपरिभाषया स्मै स्याद् इति स्वग्रन्थविरोधाच्च। अथायमाशयः। प्राक् प्रवृत्तापि संज्ञा अर्थान्तरोपसंक्रमे सति गतेति। तर्हि अकजपि गच्छतु। ननु कार्यकालपक्षे स्मायाद्यर्थं पुनः संज्ञा ऽपेक्षिता, सा च दुर्लभेत्याशय इति चेद् अस्त्वेवं नत्वसौ प्रकृतग्रंथार्थः। न्यासग्रन्थविसम्वादेन इति न्यासकृन्मतमिति वाक्यशेषविरोधात्। न्यासग्रन्थस्त्वनुपदमेवोदाहरिष्यते।

यदपि व्याचख्युः—अङ्गमप्रधानं बाध्यं तद्विरुद्धमनङ्गं बाधकमित्यर्थः। तथा च कप्रत्ययापवादत्वादकच् स्यादित्यर्थ इति। तदपि क्लिष्टं व्यर्थं च। न्या-

---

शब्दरत्न।

स्वग्रन्थेति। तैरप्यलौकिक एव निषेधस्योक्तेरिति भावः।

अर्थान्तरोपसंक्रमे सति गतेति। तेनातिसर्वायेत्यादौ न दोषः। पुनः संज्ञा तु दुर्लभा, संज्ञोपसर्जनानां निषेधात्। पाठात्पर्युदासेन तदन्तग्रहणेनापि न संज्ञा। अर्थान्तरसंक्रमात्पूर्वन्तु स्मैभावस्य न प्रवृत्तिः। अकच्प्रवृत्तिस्तु ततः प्रागस्त्येवेति तन्निवृत्तये इदं सूत्रमित्यभिमानः। गच्छत्विति। निमित्तापायपरिभाषयेति भावः। दुर्लभेति। उपसर्जननिषेधादिति भावः।

इत्यर्थ इति। अनङ्गकार्यत्वेनेत्यस्यार्थ इति भावः। क्लिष्टमिति। तत्त्वं तु स्पष्टमेव।

सग्रन्थासंमतं च । तथाहि । त्वत्कपितृक मत्कपितृक इति वृत्तिग्रन्थं व्याख्याय न्यासकार उज्जग्राह—ननु च अन्वर्थसंज्ञाकरणादेवात्र संज्ञानिरासे कृतेऽकज् न भविष्यति । न ह्यत्र सर्वार्थता सम्भवति विशेषविषयत्वात् । नैतदस्ति । समुदायो हि विशेषे वर्तते पूर्वपदं तु सर्वार्थताया अनपेतमेव । भवतु, तर्हि अनयोरनन्तरयोरेतत्सूत्रविषयता । प्रियविश्वायेत्यादेस्तु नोपपद्यते । न हि प्रियविश्वादयः सर्वेषां नामानि । नापि तदवयवभूतानां विश्वादिशब्दानां किंचित्सर्वनामकार्यमुपपद्यते । स्मैप्रभृतीनामङ्गकार्यत्वात् । विश्वादिशब्दानामनङ्गत्वात् । एवं मन्यते—त्वत्कपितृको मत्कपितृक इत्यत्राकज्माभूद् इत्येतदर्थं तावदेतदारब्धव्यम् । प्रियविश्वायेत्यादावपि विस्पष्टार्थं भविष्यतीति । अनेन हि न्यासग्रन्थेनाङ्गसंज्ञानपेक्षत्वमेवार्थो लभ्यते, स च स्वोत्प्रेक्षितव्याख्यायां दूरोत्सारित एव ।

यदपि व्याचख्युः । यद्यपि सूत्रवार्त्तिककृतोरप्येतन्मतं, तथाऽपि न्यासकृता विवृतत्वाद् न्यासकृन्मतमित्युक्तमिति । तदपि स्थवीयः । वार्त्तिककृताऽस्यार्थस्यास्पृष्टत्वात् । न्यासकृता समासे कृते सतीत्यादि वदता त्वदुक्तार्थस्य दूरत्यक्तत्वेन तद्विशृतत्वाभावाच्च ।

यदप्याहुः । न्यासकृच्छब्देन सूत्रकार एव विवक्षित इत्यादि । तदपि न । सूत्रकारमते बहुव्रीहावित्यादिपूर्वग्रन्थेन सह विरोधात् । भाष्यकारमते त्विति ग्रन्थेन तस्य विच्छिन्नत्वाच्च । तस्मादिह प्राचः प्रक्रियाग्रन्थास्तद्व्याख्यातृग्रन्थाश्चापातरमणीया एवेत्यास्तां तावत् ।

यदि तु प्रक्रियाग्रन्थोऽपि कथं चिद्भाष्याविरोधेन व्याख्येय इत्याग्रहस्तर्हीत्थं व्याख्यायताम्—ननु प्रियविश्वायेति गौणतया गतार्थम् । अतो निष्कर्षमाह—सूत्रकारमत इति । बहुव्रीहाविति । चिकीर्षिते सतीति शेषः ।

शब्दरत्न ।

न्यासग्रन्थासंमतिमुपपादयन्ननङ्गकार्यत्वेनेत्यस्य वैयर्थ्यमुपपादयति—तथाहीति । विशेषविषयत्वादिति । अन्यपदार्थविशेषणत्वादित्यर्थः । समुदायो हीति । तस्यैव तद्विशेषणत्वमित्यभिमानः । अनन्तरयोरिति । त्वत्कपितृकमत्कपितृकयोरित्यर्थः । अङ्गसंज्ञानपेक्षत्वमेवार्थ इति । एवं चानुपदोक्ते यदपीति पक्षे कप्रत्ययापवादत्वस्य क्वचि प्रसिद्धत्वादेवोक्तरीत्या तदुक्तिर्व्यर्थेति बोध्यम् ।

इत्यादिवदतेति । वृत्तिग्रन्थव्याख्यावसरे इति शेषः ।

गौणत्वमात्र इति। मात्रशब्दोऽवधारणे गौणत्वे एव न तु ततः प्राक्। तथा च सूत्रं प्रत्याख्यातमिति भावः। न्यासकृन्मतस्य तु अतिफल्गुत्वात् स्वरूपव्याक्रियैव पराक्रियेत्याशयेनाह—त्वत्कपितृक इत्यादि। एतच्च प्राचीनतत्तद्ग्रन्थपरिशीलनशालिभिर्विभावनीयम्। प्रकृतमनुसरामः। संज्ञाकार्यमिति। सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः। अन्तर्गणकार्यमिति। "अद्ड्डतरादिभ्यः" (पा० सू० ७।१।२५) "त्यदादीनामः" (पा० सू० ७।२।१२०) "तदोः सस्सौ" (पा० सू० ७।२।१०६) इत्यादिकमित्यर्थः। तृतीयासमासार्थेति। इह "पूर्वसदृश" इतिविहितः समासो गृह्यते प्रतिपदोक्तत्वात्। न तु "कर्तृकरणे कृता" (पा० सू० २।१।३२) इति। तेन त्वयका कृतमित्यत्र निषेधो न।

समुदायस्येति। तत्रैव द्वन्द्वशब्दस्य मुख्यत्वान्न तु द्वन्द्वे यानि सर्वादीनीति सम्बन्धः। कारकाणां क्रिययैवान्वयात्। न च द्वन्द्वे विद्यमानानि यानीति सम्बन्धः। विद्यतिक्रियाध्याहारे गौरवात्। निषेद्ध्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्च। किं च त्यदादीनां द्वन्द्वो नास्ति एकशेषेण बाधितत्वात्। ततः प्राचीनास्त्वदन्तास्तत्र काकचोर्न विशेषः। न च दक्षिणोत्तरपूर्वाणामित्यत्रेष्टमपि पुवद्भावं निषेद्धुमिदं किं न स्यादिति वाच्यम्। "सर्वनाम्नो वृत्तिमात्र" (वा०) इति मात्रग्रहणं हि क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रति संज्ञाभावेऽपि पुंवद्भावार्थम्। अत एव द-

शब्दरत्न।

प्रतिपदोक्तत्वादिति। यदन्तत्वमादाय सर्वनामत्वप्राप्तिस्तमुच्चार्य विहितत्वाद्। वाक्यमपि तत्सम्बन्ध्येव प्रत्यासत्तेरिति भावः। तेन करोतिद्वारा सामर्थ्ये मासेन कृताय पूर्वस्मै मासपूर्वस्मै इति समासे तत्सम्बन्धिनि वाक्ये च न। तत्र वाक्यस्य प्रतिपदोक्तसमाससम्बन्धिन एव ग्रहणे फलान्तरमप्याह—त्वयकेति। तृतीयासमासमात्रस्य ग्रहणे हि तदर्थे वाक्ये यत्र क्वापि स्थितस्य सर्वादेः संज्ञा नेत्यर्थेऽत्रापि स्यादिति भावः।

न्याय्यत्वाच्चेति। किं चावयवमात्रनिषेधे 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति "येन विधिः" (पा०सू०१।१।७२) इतिसूत्रस्थभाष्यप्रामाण्येन तदन्तस्य संज्ञायाम् वर्णाश्रमेतराणामिति भाष्यप्रयोगानुपपत्तिः। न ह्यत्र सर्वार्थवाचकत्वं नास्तीति वक्तुं शक्यं, माना(१)भावात्। लोकव्युत्पत्तिसिद्धस्य तस्यानेन निषेद्धुमशक्यत्वात्। नापि

वि० (१) संज्ञानिषेधेऽपि स्वीयसर्वार्थवाचकसर्वादित्वानपायादिति भावः॥

त्तिणपूर्यायै इत्यत्र संज्ञाभावेऽपि पुंवद्भावः । तस्माद् न्यायबलात् फलबलाच्च समुदायग्रहणमेवोचितम् । यद्यपि त्वच्छब्दस्तान्त इति पक्षे ऽवयवनिषेधेऽपि फलं सुवचम् । तथा ऽपि शास्त्रस्याल्पविषयता स्याद्, न्यायश्च विरुद्धश्चेति

शब्दरत्न ।

तस्य सर्वादिपाठो निषिद्ध्यत इति युक्तम् । तस्या ऽप्रक्रान्तत्वादविधेयत्वाच्च । न च निषेधवैयर्थ्यम् । अवयवकुत्साबोधकाकज्व्यावृत्त्या चारितार्थ्यात् । तदेव ध्वनयन्नाह–फलबलाच्चेति । फलं सुवचमिति । तथा दक्षिणोत्तरपूर्वकाणामित्यादावयवनिषेधेन कप्रत्यये समुदायसंज्ञाभावोऽपि फलम् । द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावः । समुदाये तद्विवक्षायान्तु समुदायोत्तरप्रत्ययेन तदुक्तेर्नावयवात्तदुत्पत्तिरिति चिन्त्यमेतत् । समुदायनिषेधे तु द्वन्द्वस्य संज्ञिनोऽधिकरणत्वविवक्षया सप्तमी बोद्धया । यद्वा इयं सप्तमी प्रथमार्थे(१) ।

"अकचस्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ"

ज्योत्स्ना ।

प्रथमार्थे सप्तमीति । तथा च द्वन्द्वसंज्ञकं सर्वनामपदाभिन्नेनेत्यर्थः । शब्दार्थयोस्तादात्म्यङ्गीकारेण वाच्यवाचकयोरभेदान्वयस्य विवक्षितत्वात् । अत एव "वृद्धिरादैच्" "अदेङ् गुणः" "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ च वाच्यवाचकयोः सामानाधिकरण्येन प्रयोगोपपत्तिः ।

वस्तुतस्तु—सामानाधिकरण्यप्रयोगस्थले तथा कल्पनेऽपि न "बहुव्रीहौ" "द्वन्द्वे च" इत्यादौ वाचकत्वमेव सम्यगर्थः ।

'आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ।
'पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ॥

इत्यादिषु वाचकत्वार्थाभिप्रायेण सप्तमीप्रयोगप्रायेण दर्शनात् । तथाच द्वन्द्ववाचकं सर्वनामपदं नेत्यर्थः समुत्पद्यते । विकल्पाख्यज्ञानसाहाय्येन शब्दार्थयोस्तादात्म्योपपादनमप्यगतिकगतिरिति दिक् ।

---

प्र० (१) प्रथमार्थे इति । तथा च द्वन्द्वसंज्ञकं सर्वनामपदाभिन्नं नेत्यर्थः । शब्दार्थयोस्तादात्म्यङ्गीकारेण वाच्यवाचकयोरभेदेनैवान्वयस्य विवक्षितत्वात् । अत एव "वृद्धिरादैच्" "अदेङ् गुणः" "रामेतिद्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ च वाच्यवाचकयोः सामानाधिकरण्येन प्रयोगोपपत्तिः ॥ वस्तुतस्तु समानाधिकरणप्रयोगस्थले तथात्वेऽपि "द्वन्द्वे च" "न बहुव्रीहौ" इत्यादौ वाचकत्वमेव सप्तम्यर्थः, "आकाशे त्रिदिवे नाको लोकस्तु भुवने जने ॥ पद्ये यशसि च श्लोकः शरे खड्गे च सायकः ॥"इत्यादिषु वाचकत्वार्थाभिप्रायेण सप्तमीप्रयोगस्य बहुशो दर्शनात्, तथा च द्वन्द्ववाचकं सर्वनामपदं नेत्यादिरर्थलाभः सम्पद्यते । विकल्पाख्यज्ञानसाहाय्येन शब्दार्थयोस्तादात्म्योपपादनमप्यगतिकगतिरिति दिक् ॥

भावः। सुन्‌प्रसङ्ग इति। वर्णाश्रमेतराणामित्यादाविति भावः। न च निषे-

शब्दरत्न।

इति भाष्योक्तैतत्प्रकरणविषयस्मृत्यन्तरेण तद्विषये "न बहुव्रीहौ" (पा० सू० १।१।२९) इत्येतत्साहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानां तदर्थकत्वौचित्यात्। किं च "विभाषा जसि" (पा०सू० १।१।३२) इत्यनेन फलाभावादवयवनिषेधाभावे तत्साहचर्येणार्थाधिकारानुरोधेन च "द्वन्द्वे च" (पा०सू०१।१।३१) इत्यस्याप्यवयवनिषेधकत्वाभावः। एनेन सप्तमीनिर्देशसामर्थ्यात् बहुलक्ष्यसंस्कारानुरोधाच्च विद्यमानानीत्यध्याहारेण समुदायस्यावयवानां चायं निषेधः। तत्र समुदायस्य व्यपदेशिवद्भावेन निषेधः। आधाराधेयभावेऽपि व्यपदेशिवद्भावस्य "अनद्यतने लङ्" (पा० सू० ३।३।१११) "तुल्यास्य" (पा०सू० १।१।९) "प्रत्ययस्थात्" (पा० सू० ७।३।४४)

ज्योत्स्ना।

"न बहुव्रीहौ" इति। अयम्भावः—"चार्थे द्वन्द्वः" इत्यनेन इतरेतरयोगसमाहारयोर्द्वन्द्वो विधेयः। तत्र घटपटौ घटपटम् इत्युभयत्रापि घटपटोभयप्रकारकसमुदायविशेष्यकबोधस्यैव जननात् परस्परान्वयोपपत्तये घटत्वावच्छिन्नप्रकारतानिरूपिता या पटनिष्ठा समुदायत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना या पटत्वावच्छिन्नप्रकारतानिरूपितसमुदायत्वावच्छिन्ना घटनिष्ठा विशेष्यता तादृशविशेष्यताकबोधस्यौचित्येन समुदायत्वावच्छिन्नविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वस्य वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यादौ इतरशब्दे सत्वेन निरुक्तोपसर्जनत्वस्य सत्वेन द्वन्द्वघटकानामुपसर्जनत्वादेव पाठात्पर्युदासे सिद्धे "द्वन्द्वे च" इति सूत्रमपि "न बहुव्रीहौ" इतिवन्न कर्तव्यमेव। एवञ्च द्वन्द्वस्थलेऽवयवगतसंख्या यदा विवक्ष्यते तदा इतरेतरयोगः समुदायपरं समुदायत्वगतं वा यच्चैकत्वं विवक्ष्यते तदा समाहारद्वन्द्वः। उभयत्रापि द्वन्द्वविषये समुदायविशेष्यकावयवप्रकारकबोध इति साहचर्याश्रयणमिति सुधियो विभावयन्तु। ननु भष्भावादौ अवयवावयवीभावस्थले एव व्यपदेशिवद्भावस्याश्रयणात्कथमत्र व्यपदेशिवद्भाव इत्याह—आधाराधेयेति। अनद्यतने लङ इति। अत्र हि अद्यह्योऽमुक्ष्महि इत्यत्र व्यामिश्रे लुङेव यथा स्यादित्येवमर्थम् "अनद्यने लङ्" इत्यत्र बहुव्रीहिनिर्देशः कर्तव्यः। अविद्यमानाद्यतनोऽनद्यतन इत्यभिधाय यद्येवमद्यतनेऽपि लङ् प्राप्नोति नह्यद्यतनेतनो विद्यते इति पूर्वपक्षे अद्यतनेऽपि अघटने विद्यते कथम् व्यपदेशिवद्भावेनेत्युक्तम्। तुल्यास्येति। आस्यशब्दस्य मुखमात्रोपलक्षकत्वोपक्रमे किमास्योपादाने प्रयोजनमिति पूर्वपक्षः। सिद्धान्तस्त्वास्ये तुल्यदेशप्रयत्ने सवर्णमिति न्यासपक्षे कृतः। प्रयत्नविशेषणमास्योपादानं सन्ति हि आस्याद्बाह्या प्रयत्नास्तेनेहापि ता भवन्ति, इति समाहिते सर्वमपि व्यपदेशो न प्रकल्पते। आस्ये येषां तुल्यो देश इति व्यपदेशिवद्भावेन व्यपदेशो भविष्यतीत्युक्तम्।

प्रत्ययस्थादिति सूत्रस्थभाष्यम्। कादित्यत्र वर्णग्रहणे संघातग्रहणमिति विचारे

थसामर्थ्यम् । अनाङ्गस्य त्रतसिलादेर्व्यावृत्या चरितार्थत्वात् ।

जसाधारमिति । यद्यपि शोभावेन जस् अपह्रियते, तथाऽपि औपचारिकमाधारात्वं बोद्धव्यम् । यद्वा जसः, इः जसिः तस्मिन् । सौत्रः सप्तम्या लुक्, इत्यर्थतो व्याचष्टे—जसाधारमिति ।

"जराया जरसन्यतरस्याम्"(पा० सू० ७।१।१०१)॥ विभक्ताविति । एतच्च "अष्टन आ विभक्तौ" ( पा० सू० ७।२।८४ ) इत्यतोऽनुवर्तते । तेन जराया इदं जारमित्यादौ नातिव्याप्तिरिति भावः । पदेति । पदमङ्गं च विशेष्यम् विशेषणेन च तदन्तविधिरिति भावः । तदनुसारिभिरिति । इनातोः पूर्वविप्रतिषेधे एकसूत्रोपात्तत्वात् स्यादेशोऽपि ग्रहीतुमुचित इति तेषामाशयः । अत एव—

वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम् ॥

इति भारविप्रयोगमसमञ्जसमिति मत्वा वीतजन्मरजस इति पठनीयमिति तैरुक्तम् । एतच्चेति ।भाष्यकृता हि "टाङसि" (पा०सू० ७।१।१२)

---

शब्दरत्न ।

इत्यादिसूत्रस्थभाष्यादौ स्पष्टत्वात् । तत्फलं च वर्णाश्रमेतराणामित्यादावयवसर्वनामत्वप्रयुक्तोऽपि नाकजित्यपास्तम् । इतरकशब्देन समासे ऽतिभवकानित्यादाविव तच्छ्रवणस्य दुर्वारत्वेन तन्निषेधे फलाभावाच्चेति(१) दिक् । व्यावृत्येति । समुदायात्प्राप्तस्येति शेषः ।

यद्यपीति। जसीत्याधा(२)रसप्तमीति भावः। जस इरिति। इकारेण ईकारग्रहणं बोध्यम् ।

ज्योत्स्ना ।

संघातग्रहणपक्षे एतिका इति न सिद्ध्यतीति पूर्वपक्षे वचनसामर्थ्याद्भविष्यतीति परेणोक्ते अस्ति वचने प्रयोजनं किम् , कारिकेति तत्रापि एकादेशे व्यपवर्गाभावान्न अन्तादिवद्भावेन व्यपवर्ग इत्युक्तम् । तत्फलमिति । प्रत्याख्यानस्य प्रयोजनमित्यर्थः ।

दिगिति । "न बहुव्रीहौ"इतिवत् "द्वन्द्वे च" इति सूत्रमपि उपसर्जनप्रतिषेधानुवादकम् । इतरेतरयोगद्वन्द्वेऽप्युद्भूतावयवभेदसमूहस्य विशेष्यत्वसिद्धान्तादित्यचोचाम ।

---

वि० (१) दिगर्थस्तु "न बहुव्रीहौ" इति सूत्रवत् "द्वन्द्वे च" इति सूत्रमप्युपसर्जन प्रतिषेधानुवादकमेव । इतरेतरयोगद्वन्द्वेऽपि उद्भूतावयवभेदसमूहस्य विशेष्यत्वसिद्धान्तादिति ॥

वि० ( २ ) आधारवाचकसप्तमीत्यर्थः । तथाच विद्यमानयोरेव पदार्थयोराधाराधेयभावस्य प्रसिद्धतया जसाधारमित्यनुपपन्नमिति भावः ॥

इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं योगविभागेन साधितम्। "बहुवचने झल्येत्" (पा० सू० ७।३।१०७) "ओसि च" (पा० सू० ७।३।१०४) तत "आङि" (पा० सू० ७।३।१०५) आङि च परेऽत एत्वं स्यात्। रामेण। तत "आपः सम्बुद्धौ च" एकारः स्यात् सम्बुद्धौ आङि ओसि च। न चैवमनेनेत्यत्र हलि लोपः स्यादिति वाच्यम्। अनादेशस्य नकारे परे विशिष्य विधानात्। तथा हि। "अनापि" नकारे आपि च परेऽन् स्यादित्यर्थः। सूत्रे अ, इति नान्तस्य नपुंसकनिर्देशः। न च ङसेरदादेशे कृते पररूपं स्यादिति वाच्यम्। अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति। तथा च "जराया जरसन्यतरस्याम्" (पा० सू० ७।२।१०१) इति सूत्रे उक्तं गोनर्दीयस्त्वाह—अतिजरैरिति भवितव्यं सन्निपातपरिभाषयेति। एवं च पूर्वविप्रतिषेधेनेत्यादि सर्वं भाष्यविरुद्धमित्यर्थः।

'पद्दन्नो' (पा० सू० ६।१।६३)॥ अत्र शस्प्रभृतयो निमित्ततयोपात्ताः। ते च पदाद्यादेशानुरूपवान् प्रकृतिविशेषानाक्षिपन्तीत्याह—पादन्तेति। यद्यपि "शीर्षश्छन्दसि" (पा० सू० ६।१।६०) इत्यतोऽत्र छन्दसि इत्यनुवर्तते, तथापि भाषायामपि क्वचिद्भवति "मासश्छन्दसि"इति वार्तिके छन्दोग्रहणाज्ज्ञापकादिति वक्ष्यते। प्रामादिकमिति। तथा हि—"आस्नो

शब्दरत्न।

प्रत्याख्यायेति। प्रत्याख्यानेन चेदं ध्वन्यते—वक्ष्य(१)माणक्लेशपरिहारार्थ एवैकारो न तु फलान्तरेऽभिनिवेष्टव्यमिति। आदादेशे त्वदिति च्छेद एव सूत्रतात्पर्यमिति।

न चेति। ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थः। अनुरूपानिति। स्वार्थबोधनसमर्थान्स्वसदृशवर्णवतश्चेत्यर्थः। वस्तुतो "वा शोकष्यञ्" (पा०सू० ६।३।५) इतिवद् व्यवस्थार्थमेवेति बोध्यम्। अनुवर्तत इति। अस्येति प्राच्च इति शेषः। ज्ञापकादिति। तन्निवृत्तेरिति भावः। अत एव भाष्ये तदनुवृत्तिर्नोक्ता।

ज्योत्स्ना।

अनुरूपानिति। तत्वञ्च स्वबोध्यार्थबोधकत्वम् स्वघटकव्यञ्जनघटितत्वम् एतदुभयसम्बन्धेन पदादिविशिष्टत्वम्। आद्यसम्बन्धदानेन आसनशब्दस्य सकारादिघटितत्वेऽपि नादेशः द्वितीयसम्बन्धदानेन चरणशब्दस्य न पदादेश इति तस्य

टि० (१) योगविभागादिरूपः, एतेन "यथोत्तरमुनीनाम्प्रमाण्याद्भाष्यकारसम्मतलक्ष्यातिरिक्तस्य रूपस्यासाधुत्वमिति ध्वनितम्॥

वृकस्य वर्तिकामभीके" इति मन्त्रे मुखादित्यर्थः औचित्यात्। "वृकस्य चिद्वर्तिकामन्तरास्यात्" इति मन्त्रान्तरसंवादाच्च। एवं हव्या जुह्वान आसनि। आसन्यं प्राणमूचुरित्यादावपि। व्याख्यातं च तथैव वेदभाष्येषु। अत एव हरदत्तेनापि काशिकायाः प्रामादिकत्वमाविष्कृतमिति ध्येयम्॥

"अल्लोपोऽनः" (पा० सू० ६।४।१३४)॥ अत्र प्राञ्चः—अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति। तथा सति तक्ष्णा इत्यादौ तकाराकारस्यापि लोपः स्यात्। भस्याङ्गस्यानोऽकारस्य इति व्याख्याने तु अनसा, मनसा इत्यादौ स्यात्। तन्त्रावृत्त्यादिनाऽन्नन्तस्य भस्यानोऽकारस्येति व्याख्यानेऽपि अनस्तक्ष्णेत्यादौ अतिव्याप्तिरेवातो व्याचष्टे—अङ्गावयव इत्यादि। भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशेषणम्। अन् तु अकारस्य अतो नोक्तदोष इति भावः। एतच्च "ष्यङः सम्प्रसारणम्" (पा० सू० ६।१।१३) इति सूत्रे भाष्ये स्पष्टम्।

---

शब्दरत्न।

तथा सतीति। प्राचीनसम्मतव्याख्यादरे इत्यर्थः। भस्येत्यनेनेति। अङ्गस्येत्येतत्सहितेनेत्यर्थः। एतेन भत्वस्य वृषणोऽप्रत्ययवस्वशब्दयोरपि विधानात्तेन न प्रत्ययाक्षेप इत्यपास्तम्। अङ्गं चेति। अधिकारलब्धमिति भावः। ननु भत्वस्य तत्सूत्रे "यस्मात्प्रत्ययविधिः" (पा० सू० १।४।१३) इत्यनुवृत्त्याऽङ्गनिष्ठत्वेन तेनाङ्गनिष्ठयजादिपरत्वाक्षेपेण तदवयवस्य तत्त्वालाभः। किं चानो विशेषणेऽपि 'विधौ परिभाषोपतिष्ठते नानुवादे' इति निर्दिष्टपरिभाषानुपस्थितेरनस्तक्ष्णेत्यादौ दोषो दुर्वार इति चेत्तत्राह—एतच्चेति। तथा च भाष्यम्—"एवं तर्हि 'कार्यकालं संज्ञापरिभाषं' यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यं "भस्य" (पा० सू० ६।४।१२९) इत्युपस्थितमिदं भवति "यचि भम्" (पा० सू० १।४।१८) इति तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः अना चाकारम्। यजादिस्वादिपरस्यानोऽकारस्येति"। तस्यायं भावः—कार्यकालपक्षे "भस्य" इति श्रुतेर्भपदार्थजिज्ञासायां "यचि भम्" (पा० सू० १।४।१८) इत्युपस्थितेन शक्तिग्रहे वृत्ते एतद्वाक्यार्थबोधकाले लक्ष्यानुरोधेन तन्त्रादिन्यायाश्रयणाद् यचीत्यस्यान्विशेषणताऽपि। 'विधौ परिभाषा'इति न्यायस्तु "इको गुणवृद्धी" (पा०सू० १।१।३) "अचश्च" (पा० सू० १।२।२८) इति व्यतिरिक्ते नास्त्येव "उदात्तस्वरितयोर्यणः" (पा० सू० ८।

ज्योत्स्ना।

क्लीबत्वात् पन्दि इति न। एवं रात्रिशब्दस्य न निशादेश इति इदमहर्निशागतम्. इत्यादौ न "रूपरात्रि" इति रुत्वमिति बोध्यम्।

"रषाभ्याम्" ( पा० सू० ८।४।१ )॥ पद इतीयतैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेव अखण्डमिति यावत्। तत्र यथा स्यात्तेन समासे न भवति। रामनाम। यूष्ण इति। यूषो मण्डः।

**शब्दरत्न**

२१४ ) इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादिति। एतच्च स्त्रीप्रत्यये इत्वप्रकरणे निरूपयिष्यामः।

यदि तु अदमुयङित्यर्थम् 'अनन्त्यविकार' इति परिभाषाऽऽवश्यकी तयैवानस्तक्षणेत्यादौ व्यावृत्तिः। अत्र "सान्तमहत" (पा०सू०)इत्यादौ चानेकक्लिष्टकल्पनापेक्षया परिभाषास्वीकार एवोचितः। भाष्यन्तु वार्त्तिकोक्तफलानां अन्यथासिद्धिप्रदर्शनमात्रपरम्। अत एव यान्येतस्याः परिभाषयाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्येति भाष्ये उपसंहृतम्। यत्तु "न सम्प्रसारणे" (पा०सू० ६।१।३७) इति सूत्रे "नैतस्याः परिभाषायाः सन्ति प्रयोजनानि" इति भाष्यं, तत्तु "न सम्प्रसारणे" (पा० सू० ६।१।३७) इत्यादेरेव ज्ञापकात्प्रयोजनाल्पत्वसूचकमित्युच्यते। तदाऽस्तु अङ्गविशेषणमेव तदित्याहुः।

सामर्थ्यादिति। निमित्तनिमित्तिनोरपदस्थयोरसम्भवादिति भावः। अखण्डमिति। तत्त्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम्(१)। तेन मातृभोगीण इत्यत्र णत्वसिद्धिः। केवलभोगीनेत्यस्य वा तत्त्वाभावात्। अत एव "आत्मन्विश्वजन" (पा० सू० ५।१।९ ) इति सूत्रस्थम् "आचार्यादणत्वं च" ( वा० ) इति चरितार्थम्। सुपर्वणेत्यादिसिद्धये निमित्तानधिकरणेति। पदं चात्र लोके विभक्तीतरानपेक्षतयाऽर्थबोध-(२)कत्वेन दृष्टम्। तेन गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्राक् समासेऽपि णत्वं न। क्षुम्नादिषु नृनमनशब्दस्तु संज्ञाभूतोऽखण्ड इति तस्य ऋवर्णात्परस्य णत्वे ज्ञापकता भाष्योक्ता नासङ्गतेत्याहुः।

**ज्योत्स्ना।**

निमित्तानधिकरणेति। नन्वेवमपि सर्वनरेण परमाग्नीध्रेणेत्यादौ निमित्तानधिकरणनिमित्तिमत्पदघटितत्वरूपसमानपदत्वसत्वात् नरशब्दावयवनकारस्यापि णत्वापत्ति-

---

प्र० ( १ ) नन्वेवमपि सर्वनरेण, परमाग्नीध्रेणेत्यादौ निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वरूपसमानपदत्वसत्त्वान्नरशब्दावयवनकारस्य णत्वापत्तिस्तदवस्थेति चेन्न। निमित्तविशिष्टनकारस्य णत्वं भवतीत्यर्थेनादोषात्। वैशिष्ट्यं च स्वोत्तरत्व—स्वाघटितपदाघटकत्वरूपसम्बन्धद्वयेन, तथाच प्रकृते सर्व—परमशब्दघटकरेफरूपनिमित्तोपादाने द्वितीयसम्बन्धाभावान्न तदापत्तिः। नर-आग्नीध्र शब्दावयवरेफस्य निमित्तत्वेनोपादने पूर्वसम्बन्धाभावान्न दोषः।

वि० ( २ ) अर्थबोधजनकसमुदायघटकत्वम्। तच्च। विभक्तिसहकारेण यस्य बोधकता तद्घटके खप्रत्ययेऽप्यस्तीति मातृभोगीण इत्यत्र णत्वाप्राप्तिरतोऽभावद्वयनिवेशः।

मुद्गामलकयूषस्तु भेदी दीपनपाचनः ॥

इति दर्शनात्। इति पक्षे स्विति। एतेन पञ्चमीसमासस्य पाक्षिकतां ध्वनयति। तथा हि—भाष्ये बेभिदिता, माथितिकः, अपीपचन्निति प्रयोजनत्रयमुक्तम्। तच्चान्यथा सिद्धम्। "एकाच उपदेशे" इत्यत्र विहितविशेषणादेव बेभिदितेत्यत्र इण्निषेधो न। मथितं पण्यमस्येति विग्रहे ठकि ठस्येकादेशे "यस्येति च" इत्यल्लोपे "इसुसुक्तान्तात्कः" (पा० सू० ७।३।५१) इति कादेशस्तु न भविष्यति। ठस्याभावात्। न च स्थानिवद्भावेन ठत्वम्? अल्विधित्वात्। "ठस्येकः" (पा० सू० ७।३।५०) इत्यत्र हि स्थान्यादेशयोरकार उच्चारणार्थः। अपीपचन्नित्यपि णिलोपस्य चङन्त्यकारयोरेकादेशस्य च स्थानिवद्भावं विनापि सिद्धम्। विदिसाहचर्याद्भ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचा साहचर्याद् लुङ एव किं न स्यादिति वाच्यम्। पूर्व-

---

शब्दरत्न।

मण्ड इति। तद्विशेष इत्यर्थः। बेभिदितेति। बेभिद्यतेर्यङन्तात्तृचि अल्लोपयलोपयोः "एकाच उपदेश" (पा० सू० ७।२।१०) इति निषेधादिण् न स्यात्। पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्निषेधाप्रवृत्तिरिति भावः। एवमितरयोः कादेशजुसोरभावो बोध्यः। विहितविशेषणेति। एवं च स्थानिवत्त्वं विनाऽपि तदप्रवृत्तिः सिद्धेति भावः। विहितविशेषणत्वं चास्य "एकाचो द्वे" (पा० सू० ६।१।१) इत्यत्र भाष्ये ध्वनितम्। तत्र हि यङ्लोपे बेभिदितेत्यत्र यङन्तात्तृचि इट्प्रतिषेधमाशङ्क्यैकाचोऽङ्गादिति व्याख्यानेन परिहृतम्। तद्भाष्यस्य यथाश्रुतत्वे बिभित्सतीत्यादौ दोषवारणायोपदेशग्रहणस्यैकाजंशेऽपि सम्बन्धे बेभिदितेत्यादावपि परिहारासम्भवेन तस्य विहितविशेषणत्वे तात्पर्यमावश्यकम्। प्रत्ययविधानावधेरेव प्रायेणाङ्गत्वादङ्गादित्यनेनेदं सूचितम्। विहितविशेषणे च बिभित्सतीत्यादावदोषेणैकाजंशे उपदेशग्रहणासम्बन्ध इति न भविष्यतीति। स्थानिवत्त्वं विनापीति शेषः। अल्विधित्वादिति। "ठस्येकः" (पा० सू० ७।३।५) इत्यत्र स्थानिनि प्रत्ययेषु च सर्वत्राकारो न विवक्षितः। आदेश एव तु विवक्षितः। अन्यथा निषादकर्षूशब्दात् "ओर्देशे" (पा० सू० ४।२।११९) इति ठञि व्यञ्जनमात्रस्य व्यञ्जनरूपकादेशे कशब्दस्य लाक्षणिकत्वात् "केऽणः" (पा० सू० ७।४।१३) इति ह्रस्वानापत्तिरिति भावः। स्थान्यादेशयोरिति। इकादेशस्थानिभूतप्रत्यये आदेशवि-

ज्योत्स्ना।

स्तदवस्थैवेति चेन्न। निमित्तविशिष्टस्य नकारस्य णत्वं भवतीत्यर्थेनादोषात्। वै० स्वोत्तरत्व स्वघटकरेफरूपनिमित्तोपादाने द्वितीयसम्बन्धाभावान्नतदापत्तिः। नरअभीध्रशब्दावयवरेफस्य निमित्तत्वेनोपादाने पूर्वसम्बन्धाभावान्न दोषः।

साहचर्यात्परसाहचर्यस्य बलीयस्त्वादिति दिक्।

"पूर्वत्रासिद्धिये न" इति। एतच्च न्यायसिद्धमित्यवोचाम। त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्ये कर्तव्ये "अचः परस्मिन्" (पा० सू० १।१।५७) इत्यतिदेशस्याप्रवृत्तेः। तस्येति। तस्य 'पूर्वत्रासिद्धे' इत्यस्य, तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः। संयोगादिलोपे चक्रयत्र। लत्वे निगा-

शब्दरत्न।

धायके सूत्रे चेत्यर्थः। स्पष्टं चेदं "ठस्येकः" (पा० सू० ७।३।५०) इत्यत्र भाष्यकैयटयोः। इदमुपलक्षणम्। सन्निपातपरिभाषयापि कादेशवारणं बोध्यम्। स्पष्टं चेदं "ठक्छसोश्च" (का० वा०) इति वार्त्तिकं भाष्ये। बलीयस्त्वादिति। एतच्च "यस्य विभाषा" (पा० सू० ७।२।१५) "वित्तो भोग—" (पा० सू० ८।२।५८) इति सूत्रस्थकैयटे स्पष्टम्। एतत्सर्वं "अपरविधाविति तु वक्तव्यम्" (का० वा०) इति वार्त्तिकस्थकैयटानुरोधेन।

दिगिति। दिगर्थस्तु एतदर्थं पञ्चमीसमासस्यावश्यकत्वम्। तथा हि परसाहचर्यस्य बलवत्त्वे मानाभावः। विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमौचित्येनात्र तदप्रासेः।

"नित्यः परयणादेशः परश्चासौ व्यवस्थया।
युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यति"। इति॥

"अचः परस्मिन्" (पा० सू० १।१।५७) इति सूत्रस्थभाष्योक्तरीत्या पूर्वसाहस्यान्तरङ्गत्वेन तस्यैव ग्रहीतुमौचित्याच्च। "विभाषा गमहनविदविशाम्" (पा० सू०) इत्यत्र लुग्विकरणपरिभाषानुग्रहाय परसाहचर्याश्रयणं "नुदविदोंदत्रा"(पा० सू० ८।२।५६) इत्यत्राप्यन्तरङ्गपरिभाषानियत्वाद्व्याख्यानेन परसाहचर्याश्रयणमिति बोध्यम्। प्रत्यैषिषन्नित्यादौ लङि "उभे अभ्यस्तम्" (पा० सू० ६।१।५) इति सूत्रस्थभाष्यसम्मते एवमपि दोषाच्च। पूर्वोत्तरसाहचर्येण भावरूपादेशानपहृतविकरणकाभ्यस्तस्यैव ग्रहणमित्यप्यतिक्लिष्टं ततो वरं पञ्चमीसमास एव। "अपरविधाविति तु वक्तव्यम्" इति न्यासान्तरेऽपि पञ्चमीसमासो वक्तुं शक्यः। न्यासान्तरन्तु स्वविधेरपि सङ्ग्रहायेति स्पष्टमेव। अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीय इति।

चक्रयत्रेति। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि लोपाभावोऽपि फलम्। निगाल्यते इति। न चात्र णिलोपात्पूर्वं लत्वम्। सपादसप्ताध्यायीस्थकार्यस्य प्रवृत्तियोग्यतया तदप्रवृत्तेः। न च स्थानिवत्वमल्विधित्वात्। प्रत्ययलक्षणं तु नियमार्थमिति भावः। अत्र बहिरङ्गासिद्धत्वं न 'नाजानन्तर्ये' इति तन्निषेधात्। त्रिपाद्यां तदप्रवृत्तेरेव विसर्जनीयसूत्रस्थभाष्यसम्मतत्वादित्यन्यत्र प्रपञ्चितम्। एवं प्लायतइत्यप्ययतावित्य-

ल्यते । णत्वे माषवपनी । इह "यस्येति च" ( पा० सू० ६।४।१४८ ) इति अल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावाद् णत्वं न ।

यत्त्वाहुः—कथंचित्स्थानिवत्त्वाभावेऽपि यूष्ण इत्यादौ "रषाभ्याम्" ( पा० सू० ८।४।१ ) इत्यस्य नोपयोगः । ष्टुत्वेन सिद्धेः । तथा च षग्रहण-मुत्तरार्थमिति आकरे स्थितम् । ततश्च रभसवादेनैतदुपन्यस्तमिति । स एवायं रभसवादः । तथा हि उत्तरार्थतयाऽपीह षग्रहणं स्थितम् । ततश्च यूष्णः, पुष्णातीत्यादौ "रषाभ्याम्" ( पा० सू० ८।४।१ ) इति णत्वस्य प्रवृत्तिः केन वार्यताम् । ष्टुत्वेनेति चेन्न । तस्यासिद्धत्वात् । न च वचनप्रामा-ण्यात् सिद्धत्वम् । पुष्टिरित्यादौ चरितार्थत्वात् । तस्य षयोगे ण इत्यंशोऽ-चरितार्थ इति चेन्न । तस्य पृथगनुक्तेः । इह षात्परस्येत्युक्तिरचरितार्थेत्यस्यापि तुल्यत्वाच्च । आकरे हि इह षग्रहणं विना लक्ष्यासिद्धिर्नास्ति इत्येवाभिप्रेतं न तु पुष्णातीत्यादौ "रषाभ्याम्" ( पा० सू० ८।२।७ ) इत्यस्याप्रवृत्तिरि-ति दिक् ।

"नलोपःप्रातिपदिकान्तस्य" (पा० सू०८।२।७) ॥ लुप्तषष्ठीके इति । सौत्रत्वान्न सुः । षष्ठीतत्पुरुषयोः पूर्वपदेन सापेक्षत्वेन समासासम्भवात् । प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः । तदन्तस्येति षष्ठीतत्पुरुषः । तस्या-न्तो यो नकारस्तस्येत्यर्थः । उक्तं च हरदत्तेन—विशेष्यमन्तस्येत्यस्य नेत्येतद-विभक्तिकम् । तथैव प्रातिपदिकेत्येतत्पदविशेषणमिति ।

यत्तु प्राचोक्तम्—प्रातिपदिकान्तस्य पदान्तस्य नस्येति । यच्च व्या-ख्यातम् । अनन्तस्येत्युभाभ्यां सम्बध्यते इति तद्गौरवग्रस्तम् । अन्तस्ये-त्यस्यावृत्तिप्रसङ्गात् । व्यधिकरणषष्ठीद्वयापत्तेश्च ।

---

शब्दरत्न ।

स्योपसर्गविशेषणत्वे फलम् । माषवपनीति । इह ङीबुत्पत्तेः प्राक् समासे ङीपि अल्लोपे समासरूपप्रातिपदिकान्तत्वाण्णत्वं प्राप्तम् । पूर्वपदाक्षिप्तसमासरूपप्रातिपदिका-न्तस्य तेन णत्वविधानात्तस्यापि पूर्वपरोभयसापेक्षत्वेन समासत्वज्ञानसापेक्षत्वेन च समानत्वात्, त्रिपादीस्थत्वाच्च बहिरङ्गासिद्धत्वाशङ्का नान्नेति बोध्यम् ।

अप्रवृत्तिरिति । अभिप्रेतेति शेषः ।

सापेक्षत्वेनेति । नलोप इत्येतद्विषयमिदम् । अन्त्ये आह—पदविशेषणत्वाच्चेति । व्यधि-करणषष्ठीति । प्रातिपदिकस्य पदस्येत्यनयोः परस्परानन्वितयोरन्तेनान्वयादिति भावः ।

यदि तु अभेदेनैव सम्बन्धेन प्रातिपदिकेनेव नेत्यनेनापि पदं विशेष्यते, तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्तुम् ।

"विभाषा ङिश्योः"। (पा० सू० ६।४।१३६) शीति "नपुंसकाच्च" (पा० सू० ७।१।१९) इति विहितो न तु जश्शसोः शिः, तस्मिन् भत्वासम्भवात्। "भस्य" (पा० सू० ६।४।१२९) इत्यनेनासर्वनामस्थानस्यैव यजादेराक्षेपात्तदेतदाह—असर्वनामस्थानेति । अत एवेति । दोषणी इति प्रयोगात् । यद्यपि समाहारद्वन्द्वस्य एकशेषे कृतेऽपि भाष्यं सुयोजं, तथापि ककुदित्यस्य पृथक्पदत्वं न्याय्यम् । अन्यथा ककुद एकत्वं वाह्वोर्द्वित्वं च न लभ्येतेति भावः ।

'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः'

इति रघुः । तत्र दक्षिणं दोरिति उद्यम्येत्यनेन कर्मतया सम्बध्यते। दोषं तस्येति—

'दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणम्' ।

इति श्रीहर्षप्रयोगः । तत्र दोषं हस्तं दूषणं च भजतश्चापस्य गुणं मौर्वीमतिशयं च गृह्णन् इति सम्बन्धः । अमरव्याख्यातारस्तु—दोषशब्दं स्त्रियामपि स्वीकृत्य भागुरिमतेन टापि दोषेत्युक्त्वा—

'दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथा' ॥

इति धनञ्जयनिघण्टुमुदाजह्रुः ।

द्वयोरह्वोर्भव इति । "तद्धितार्थ" (पा० सू० २।१।५१) इति समा-

शब्दरत्न ।

अभेदेनैवेति । सम्बन्धान्तरासत्त्वेऽपि विशेष्यविशेषणभावसम्बन्धेनेत्यर्थः । शक्यमकर्तुमिति । पदस्येत्यस्य क्वचिद्वैयधिकरण्येनान्वयेऽस्य तात्पर्यग्राहकत्वं भाष्ये उक्तम् । (१)तत्तु लक्ष्यानुसारिव्याख्यानादेव ज्ञापकं विनापि सिद्धमित्यभिमानः ।

भत्वासम्भवादिति । सर्वनामस्थानत्वेनेति भावः । समाहारद्वन्द्वस्येति । प्राण्यङ्गत्वात्कृतसमाहारद्वन्द्वस्य ककुद्दोःशब्दस्येत्यर्थः। सुयोजम्—दोःशब्दस्य पुंस्त्वेऽपि सुनिर्वाहम् । न्याय्यम् । अल्पाच्तरत्वेन दोःशब्दस्य द्वन्द्वे पूर्वनिपातापत्तेः । किं च तदन्ते आदेशो दुर्लभः । विशेष्यासन्निधानादिति भावः । ककुद एकत्वमिति । प्रकरणात् श्रुतौ तथार्थकमेवेदमिति भावः। दक्षिणं तमुद्यम्य दोर्नामा निशाचर इत्यन्वयभ्रमवारणायाह-तत्रेति ।

वि० (१) वैयधिकरण्येन समाधानन्तु ।

सः । "कालाट्ठञ्" । "द्विगोर्लुगनपत्ये" ( पा० सू० ४।१।८८ ) इति लुक् । "राजाहःसखिभ्यः" ( पा० सू० ५।४।८८ ) इति टच् । "अह्नोऽह्न एतेभ्यः" ( पा० सू० ५।४।९१ ) इत्यह्नादेशः । अह्नः साय इति । स्यतेर्घञि अवसानवचनः सायशब्दः । "संख्याविसाय—" ( पा० सू० ७।३।११० ) इति ज्ञापकादेकदेशिसमासः । इत्यदन्ताः ॥

हाहानिति । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् । कौमारास्तु—जहातीति हाहा इति क्रियाशब्दं वदन्तो विश्वपावद्रूपमाहुः । तन्मते प्रत्युदाहरणं तु 'अकारो वासुदेवः स्यात्' तेन सह वर्तन्त इति साः तान् सान् इति बोध्यम् ॥ इत्यादन्ताः ॥

"आङो ना ऽस्त्रियाम्" ॥ ( पा०सू० ७।३।१२० ) पुंसीति तु नोक्तम् । अमुना कुलेनेत्यत्र यथा स्यात् । न च नुमा रूपसिद्धिः । मुत्वस्यासिद्धत्वात् "इकोऽचि" ( पा० सू० ७।१।७३ ) इति नुमोऽप्राप्तेः । नादेशे तु नासिद्धत्वं "न मु ने" ( पा० सू० ७।२।३) इति निषेधात् ।

न च "न मु ने" ( पा० सू० ७।३।२ ) इति निषेधो नुम्येव अस्तु, ने इत्यकारस्योच्चारणार्थत्वादिति वाच्यम् । अमुष्मै कुलायेत्याद्यसिद्ध्यापत्तेः ।

"अच्च घेः" ( पा० सू० ७।३।११९ ) ॥ "इदुद्भ्याम्" ( पा० सू० ७।३।११७ ) इति 'ङेः' इति "औत्" इति च पदत्रयमनुवर्तते इत्याशयेन

शब्दरत्न ।

एकदेशिसमास इति । तत्प्रत्याख्याने तु कर्मधारय इति बोध्यम् ।

जहातीति । हा इति शोकव्यञ्जकशब्दमित्यादिः ।

नुम्येवास्त्विति । अयं भावः—तन्त्रेण नाभावे नकारे च कार्यं तं प्रति अन्यं प्रति च कृते च कार्यांतरं प्रति मुभावो नासिद्ध इति तदर्थः । एतेन मुत्वस्यासिद्धत्वेनेनादेशे गुणे नुमादेरप्राप्तिरिति परास्तम् । नुम्येवास्त्विति पाठे एवकारोऽप्यर्थः । उच्चारणार्थत्वादिति । तंत्रेणोच्चरिते द्वितीये नेशब्दे इत्यर्थः । अमुष्मै इति । "न मु ने" ( पा० सू० ८।२।३ ) इति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्याप्रवृत्तौ मुत्वे तस्य नकारविषये कमपि प्रत्यसिद्धत्वाभावेन विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वास्य स्मैभावात्परत्वेन नुमापत्तेः । आदिना अमू कुले अमुयोरिति तयोरेत्व(१)स्याप्रवृत्तौ मुत्वे नुमि

वि० ( १ ) अमू इत्यत्र "नपुंसकाच्च" इति शीभावे सति "आद्गुणः" इत्येकादेशसम्पाद्यस्य एत्वस्यामुयोरित्यत्र "ओसि च" इत्येत्वस्य चाप्रवृत्त्येत्यर्थः ।

व्याचष्टे—इदुद्भ्यामुत्तरस्येत्यादिना। घेरुत्तरस्येति तु नोक्तम्। सूत्रे "घेः" इत्यस्य षष्ठ्यन्तत्वात्। तन्त्रावृत्त्यादौ च प्रमाणाभावात्। "औत्" (पा० सू० ७।३।११७) इति पूर्वसूत्रे इदुद्भ्यामुत्तरस्य ङेरिति क्लृप्तसम्बन्धस्य त्यागायोगाच्च। औत्स्यादिति।

अत्र व्याचख्युः—औतस्तित्त्वं स्वरितार्थम्। "न विभक्तौ" (पा० सू० १।३।४) इतीत्त्वनिषेधस्तु न भवति अनित्यत्वात्। अनित्यत्वं च "इदमस्थमुः" इति थमो मकारस्येत्संज्ञापरित्राणार्थादुदित्करणाल्लभ्यत इति तत्रैवोक्तमिति। तच्चिन्त्यम्। "न विभक्तौ" (पा० सू० १।३।४) इति सूत्रे ङेरौतस्तकार उच्चारणार्थः नेत्संज्ञ इति स्वयमेवोक्तत्वेन पूर्वापरविरोधात्। युक्तं चोच्चारणार्थत्वं न तु स्वरितार्थत्वम्। 'स्तीर्णे बर्हिषि समिधाने अग्नौ' इत्यादौ स्वरितत्वादर्शनात्। 'अत्' इति तपरत्वं तु वृद्धावित्यादावत्वे कृते

शब्दरत्न।

चानिष्टं स्पष्टमेव। "न मु टादेश" इति वार्तिकस्वारस्येन नादेश इत्येव तदर्थ उचित इत्यपि बोध्यम्।

नेत्संज्ञ इति। इयमपि तदुक्तिश्चिन्त्या "तस्य लोप" (पा० सू० १।३।९) इति सूत्रभाष्ये(१) उच्चारणार्थानामपीत्संज्ञकत्वस्य स्पष्टमुक्तत्वात्। स्वरितत्वादर्शनादिति। नन्वौतः स्वरितत्वेऽपि नाग्नावित्यत्र स्वरितश्रवणमग्निशब्दस्यान्तोदात्तत्वेन "एकादेश

ज्योत्स्ना।

उच्चारणार्थानामपीत्संज्ञकत्वस्येति। "तस्य लोप" इति सूत्रभाष्येऽनुबन्धानामेकान्तत्वपक्षे "दिव औत्"इत्यादौ आदेशानामनेकाल्त्वात्सर्वादेशत्वमाशङ्कितम्। तत्र यदि त-

प्र० (१) 'तस्य लोपः' इति सूत्रे भाष्येऽनुबन्धानामेकान्तत्वपक्षे 'दिव औत्' इत्यादिषु आदेशानामनेकाल्त्वात्सर्वादेशत्वमाशङ्कितम्। तत्र यदि तकारस्योच्चारणार्थत्वेनेत्संज्ञा न स्यात्तर्हि अनेकाल्त्वात्सर्वादेशत्वाशङ्काऽसङ्गता स्यादिति भावः॥ उच्चारणार्थेष्वपि इत्संज्ञाप्रवृत्तेरेव 'अद्ड्डतरादिभ्य' इतिसूत्रभाष्ये डित्वाभावेऽदादेशे कतर अद् इत्यवस्थायां पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितं नतूच्चारणार्थत्वाश्रयणेनेति दिक्।

वस्तुतस्तु उच्चारणार्थ इत्यस्य वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो न त्वन्यफलार्थ इत्यर्थस्य वक्ष्यमाणत्वेन 'दिव औत्' इति सूत्रे तकारस्यानेकाल्त्वसंपादनेन सर्वादेशताफलकत्वेनोच्चारणमात्रार्थकत्वाभावान्न तत्सूत्रस्थभाष्येणोच्चारणार्थेष्वित्संज्ञाप्रवृत्तिर्लभ्यते। एवं 'अद्ड्डतर' इति सूत्रभाष्येऽपि अदादेशे डित्वाभावेऽकारस्य पूर्वसवर्णदीर्घसंपादनेनोच्चारणार्थत्वाभावादनुनासिकोपधत्वेन समाधानं युक्तमेवेति न तदपि भाष्यं प्रोक्तार्थे प्रमाणमिति बोध्यम्।

स्त्रियां टाब् मा भूद् इत्येतदर्थमित्याहुः । तदपि चिन्त्यम् । तपरग्रहणाद्धि टापा सह दीर्घों मा भूत् टाप् तु स्यादेव । लक्षणद्वयबाधे मानाभावात् । अत एव "कृन्मेजन्तः" ( पा० सू० १।१।३९ ) इति सूत्रभाष्यवार्त्तिकयोर्विवरणे च सन्निपातपरिभाषया टाब् नेत्युक्तम् । टापा व्यवधाने हि आनन्तर्यविघातः

शब्दरत्न ।

उदात्तेन" ( पा०सू० ८।२।६ ) इत्यनेनोदात्तत्वादिति चेन्न । वृत्तौ 'अनुदात्तस्य' इत्यस्य तत्रानुवर्त्तितत्वात् । शेषनिघातेनौकारस्वरितत्वमादायाग्निशब्दस्य सर्वानुदात्तत्वाच्च । स्वरितस्य तु नोदात्तपदेन ग्रहणं "उदात्तस्वरितयोः" ( पा०सू० ८।२।४ ) इत्यादौ स्वरितग्रहणात् । उच्चारणार्थानामित्संज्ञकत्वेऽपि 'प्रत्ययाप्रत्यययोः' ( प० ) इत्येव सिद्धे पुनः "तिति प्रत्ययग्रहणं कर्तव्यम्" ( का० वा० ) इति वार्त्तिकेनौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्त्या नात्र स्वरितत्वप्रवृत्तिरिति तत्त्वम् । आदेशेषु दकारस्थानिकचर्त्वनिष्पन्नतकारस्य सत्त्वेन तित्त्वात्तदप्राप्तेः । उच्चारणार्थ इत्यस्य च वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो नत्वन्यफलार्थ इत्यर्थः । अत एव भाष्ये औकारं डित्तमाश्रित्यादिति प्रत्याख्यातम् । न हि तदा तित्त्वमस्ति । न च डित्त्वे विंशतौ तिलोपापत्तिः । भाष्यप्रामाण्येन तस्य सप्तम्यामनभिधानादिति(१)दिक् । अदिति । अस्य यदपीत्यादिः । दीर्घो माभूदिति । भिन्नकालव्यावृत्त्यर्थत्वात्तपरत्वस्येति भावः ।

ज्योत्स्ना ।

कारस्योच्चारणार्थत्वेनेत्संज्ञा न स्यात्, तदा अनेकाल्त्वात्सर्वादेशत्वाऽऽशङ्कासङ्गता स्यादिति भावः । उच्चारणार्थेष्वपि इत्संज्ञाप्रवृत्तेरेव "अद्ड्डतरादिभ्य" इति सूत्रेभाष्ये डित्वाभावे अदादेशे कतर अद् इत्यवस्थायां पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितम्, नतूच्चारणार्थत्वादिति दिक् ।

वस्तुतस्तु—उच्चारणार्थ इत्यस्य वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो नत्वन्यफलार्थ इत्यर्थस्य वक्ष्यमाणत्वेन "दिव औत्" इत्यत्र तकारोच्चारणस्यानेकाल्त्वसम्पादनेन सर्वादेशताफलकत्वेनोच्चारणमात्रफलकत्वाभावान्न तत्सूत्रस्थभाष्ये प्रथमोच्चारणार्थेष्वित्संज्ञाप्रवृत्तिर्लभ्यते । एवं "अद्ड्डतरादिभ्य" इति सूत्रस्थभाष्येणापि अदादेशे डित्वाभावे अकारस्य पूर्वसवर्णदीर्घसम्पादनेनोच्चारणार्थत्वाभावादनुनासिकोपधात्वे समाधानं युक्तमेवेति न तद्भाष्यं प्रोक्तार्थे प्रमाणमिति बोध्यम् ।

दिगिति । तदर्थस्तु "टेर्डिति तिविंशतेस्तद्धितेन" इति सूत्रन्यासेन अथवा "तिविं-

प्र० ( १ ) दिगिति । दिगर्थस्तु 'टेर्डिति, तिर्विंशतेस्तद्धिते, नः, इति सूत्रन्यासेन, अथवा 'तिर्विंशतेर्डिति' इत्यस्मिन् डिति इत्यत्र कर्मधारयाश्रयणेन 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया डकारादौ प्रत्यये इत्यर्थेन तत्र दोषवारणसम्भवेनानभिधाने न मानमिति ।

स्यादिति। तस्माद् औत इव अतोऽपि तपरकरणमुच्चारणार्थमेवेत्यवधेयम्।

"अनङ् सौ" ( पा० सू० ७।१।९३ ) सोर्डेत्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम्। तेन उशनसः सम्बुद्धौ अनङ् सिद्धयतीति प्राञ्चः। तच्चिन्त्यम्। सोर्डेत्युक्ते हि "ऋदुशनस्" ( पा० सू० ७।१।९४ ) इत्युत्तरसूत्रेणापि डां स्यात्। ततश्च उशनेत्यत्र "सर्वनामस्थाने चासम्बुद्धौ" ( पा० सू० ६।४।८ ) इति दीर्घः स्यात्। पुरुदंसेत्यत्र "सान्तमहत" ( पा० सू० ६।४।१० ) इति दीर्घः स्यात्।

यद्वा 'संज्ञापूर्वको विधिरनित्य' इति वा अङ्गवृत्तपरिभाषया वा समाधानं बोध्यम्।

"हल्ङ्याब्भ्यो" ( पा० सू० ६।१।६८ )। दीर्घादित्येतन्ङ्यापोरेव विशेषणं न तु हलोऽसम्भवात् इत्याह—दीर्घाविति। परमिति। न त्विदं विहितविशेषणं या, सा, का इत्यादावव्याप्तेः। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः। यः, स इत्यादावतिव्याप्तेः कर्तेत्यादावव्याप्तेश्चेति भावः। हलिति। तस्य च सुतिसीत्येवं रूपत्वमेकदेशविकृतन्यायेन बोध्यम्। लुप्यत इति।

शब्दरत्न।

न च "ज्ञोऽविदर्थस्य" ( पा० सू० २।३।५१ ) इति प्रकरणेन समासबाध इवानेन टापोऽपि बाध इति वाच्यम्। "प्रतिपदविधाना षष्ठी न समस्यते" ( का० वा० ) इति वार्त्तिकानुरोधेन तत्र तथा कल्पनेऽपीह तथा कल्पने मानाभावात्।

अनङ् सिद्ध्यतीति। वैकल्पिकत्वमात्रं तु वाचनिकमिति तद्भावः। 'संज्ञापूर्वक'इत्यस्य भाष्यास्पृष्टत्वादाह—अङ्गवृत्तेति। इयमगतिकगतिः। सोर्डेति न्यासे लाघ(१)वाभावश्च। डित्त्वसामर्थ्याट्टिलोपकल्पने गौरवं च। तस्मादुशनसोऽनङ् तद्वैकल्पिकत्वं च चिन्त्यमेव भाष्यानुक्तत्वादिति प्रामाणिकाः।

चेतीति। "तस्मादित्युत्तरस्य" ( पा० सू० १।१।६७ ) इति जाग्रति विहितविशेषणासम्भवश्चशब्दार्थः। एकदेशविकृतन्यायेनेति। स्थानिवत्त्वस्योपलक्षणमिदम्। (२)अर्द्धा-

ज्योत्स्ना।

शतेर्डिति" इत्यत्र डितीतिकर्मधारयाश्रयणेन 'यस्मिन् विधिस्तदादावल्ग्रहणे' इतिप-

वि० (१) पदलाघवाभावः। सोरिति रेफमादाय मात्रालाघवाभाव इत्यपि बोध्यम्।

वि० (२) अर्द्धश्चाधिकश्चार्द्धाधिकौ तयोर्विकार इति विग्रहः। एवञ्च वर्णगणनायामर्द्धस्य मात्राया गणने तु तदर्द्धस्य विकारसत्वेन जातिव्यञ्जकभूयोऽवयवसंस्थानाभावेन नात्रैकदेशविकृतन्यायस्य प्रवृत्तिरिति ध्येयम्॥

यद्यपीह "लोपो व्योः" (पा० सू० ६।१।६६) इत्यतो लोप इत्यनुवर्तते। तच्च तत्र भावसाधनं तथाऽपीह कर्मसाधनं हलिति प्रथमान्तेन सामानाधिकरण्यादिति भावः। दीर्घग्रहणं किम्? अतिखट्वः, निष्कौशाम्बिः। ननु इह समस्तस्य ङ्यावन्तत्वं नास्ति। न च 'स्त्रीप्रत्यये तदादिनियमो नास्ति' इति वाच्यम्। अनुपसर्जने हि तथा। इह तूपसर्जनत्वात् तदादिनियमोऽस्त्येव। सत्यम्। तथाऽपि उत्तरपदस्य ङ्यावन्तत्वेन सोऽस्ततः परत्वानपायात्। न हीदं विहितविशेषणमित्यवोचाम। अत एव बहुश्रेयसीत्यत्र सुलोपः।

शब्दरत्न।

धिकविकारेण प्रत्यभिज्ञाभावाच्छिन्नपुच्छश्वदृष्टान्तमूलकन्यायस्यात्राप्राप्तिरिति(१) बोध्यम्। प्रथमान्तेनेति। यद्यपि "तस्मादित्युत्तरस्य" (पा० सू० १।१।६७) इत्युक्तेः पञ्चम्यन्ततापि सम्भवति, तथाऽपि बहुषु पदेषु विभक्तिपरिणामकल्पनापेक्षयाऽऽगन्तुकलोपशब्दे एवार्थान्तरकल्पनमुचितमिति भावः। ननु सुतिसीतिप्रत्ययैः 'यस्मात्स विहितस्तदादेः' (प०सू०) इत्युपस्थित्या तस्य हल्ङ्याब्भ्य इति विशेषणमिति हल्ङ्यावन्तात्तदादेः परस्येत्यर्थेन प्रकृत्याक्षेपादुपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वाच्च प्रकृतेर्ङ्याबन्तत्वाभावेन नात्र दोष इत्यत आह—अत एवेति। एतत्सिद्ध्यर्थं "येन विधिः" (पा० सू० १।१।७२) इति परिभाषया शब्दरूपं विशेष्यमादाय तदन्तविधौ ततःप्रत्ययग्रहणपरिभाषयोक्तं विशेष्यमादाय पुनस्तदन्तविधौ "टिड्ढाणञ्" (पा० सू०४।१।१५) इति सूत्रेऽणन्तान्तादितिवद् ङ्यावन्तान्तादित्यर्थस्यावश्यकत्वेनात्र(२) दोषः। मालेत्यादौ तु व्यपदेशिवद्भावेन सिद्धिरिति भावः। श्रविष्ठासु जातः श्रविष्ठ इत्यादौ

ज्योत्स्ना।

रिभाषया इकारादौ प्रत्यये इत्यर्थाश्रयणेन दोषवारणेनानभिधानाश्रयणे न मानमिति।

न्यायस्यात्राप्राप्तिरिति बोध्यमिति। वस्तुतस्त्वत्र तयोर्विषये इकारलोपेऽपि तकारसकाररूपावयवयोः 'अभवत्, अभवः' इत्यादावर्थबोधकत्वेन दृष्टत्वात् प्राधान्यसत्त्वेनार्धाधिकविकारेऽपि प्रधानावयवोपलब्ध्या तन्न्यायाप्रवृत्तिः सुलभैव। नन्वेवं सति मालेत्यादौ तदन्तविधिद्वयलभ्यार्थाभावेन सुलोपानापत्तिरत आह—मालेत्यादाविति। तस्येति तु व्यपदेशिवद्भावानाश्रयणपक्षे इति भावः। न च 'व्यपदेशिवद्भावोऽ-

प्र० (१) वस्तुतस्त्वत्र तिस्योर्विषय इकारलोपेऽपि तकारसकाररूपावयवयोः अभवत्, अभवः इत्यादावर्थबोधकत्वेन दृष्टत्वात्प्राधान्यसत्त्वेनार्धाधिकविकारेऽपि प्रधानावयवोपलब्ध्या तन्न्यायप्रवृत्तिः सुलभैव॥

वि० (२) अतिखट्वः, निष्कौषाम्बिरित्यत्र सुलोपस्य प्राप्तिरूपो दोषः। स च दीर्घग्रहणेन परिहरणीय इति शेषो बोध्यः।

स्यादेतत् । गङ्गीयतेः क्विप् । गङ्गीः । इहेकारस्य स्थानिवद्भावेनाप्त्वाद्दीर्घत्वाच्चातिव्याप्तिरिति चेत् । सत्यम् । ङी ई, आ आप्, इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानान्न कश्चिद्दोषः । सुतिसीति किम् ? भेत्ता; तासेस्तकारस्य लोपो मा भूत् । न चैवमपि अभैत्सीत् इत्यादौ सिचो लोपापत्तिः । सुतिभ्यां साहचर्येण विभक्तेरेव ग्रहणात् । अपृक्तं किम् ? भिनत्ति छिनत्तीति प्रत्युदाहरन्ति । तच्चिन्त्यम् । विशिष्टस्याहल्त्वात् । सुतिसीनां हलिति क्लिष्टं व्याख्यायातिप्रसङ्गापादनस्यानुचितत्वात् ।

यदप्याहुः—सुरां सुनोतीति सुरासुत् तमाचष्टे सुरासयति ततः क्विप् सुराः सुरासौ सुरासः । इह सुनोतेरवयवस्य सस्य लोपं व्यावर्तयितुं अपृक्तग्रहणमिति । तदपि न । परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रहणात् । अन्यथा सिचो लोपापत्तेरुक्तत्वात् । प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च । हल् किम् ? विभेद ।

---

शब्दरत्न ।

तद्धितलुकि स्त्रीप्रत्ययलुकि च प्रत्ययलक्षणेन टावन्तत्वादतिव्याप्तिवारणार्थं दीर्घग्रहणमित्यपि बोध्यम् ।

अतिव्याप्तिरिति । अस्य स्त्री ई देवदत्तस्य ई देवदत्तेरित्यादावपि सेति बोध्यम् । प्रत्याख्यानादिति । दीर्घग्रहणेनोपस्थितत्वादीकाररूपस्यैव दीर्घस्य ग्रहणाच्चेत्यपि बोध्यम् । सुरासयतीति । न च "णौ चङि" (पा०सू० ७।४।१) इति सूत्रस्थभाष्यप्रामाण्येन इदुदुपधेभ्यो णिज्नास्तीति सिद्धान्तात्कथमत्र णिजिति वाच्यम् । तद्भाष्यस्य तेषां लुङि प्रयोगाभावकल्पनेनोपपत्तेः, सर्वथा तदभावकल्पनमप्रामाणिकमित्यभिमानात् । ग्रहणाच्चेति । सावनुनासिकोकारपाठाच्चेत्यपि बोध्यम् । एवं चापृक्तग्रहणं चिन्त्यप्रयोजनम् । वस्तुतो गङ्गीः सुरा इत्यादेरभिधाने दृढं मानं चिन्त्यम् ।

ज्योत्स्ना ।

प्रातिपदिकेन'इति निषेधो भविष्यतीति वाच्यम् । तस्य प्रत्ययविधिविषयत्वात् । एतच्च "ङ्याब्ग्रहणेऽदीर्घ" इति वार्तिकव्याख्यावसरे 'निष्कौशाम्बिः' 'अतिखट्वः' इत्यादौ सुलोपापत्तिवारणार्थं तद्वार्तिकमित्यभिधाय 'ननु दीर्घाद्दिच्युते, तन्न वक्तव्यम्' इत्युक्तम् । भाष्यकृता तदभिप्रायेण व्याख्यातम् । तदनाविष्यभावेऽपि दीर्घग्रहणमावश्यकमित्याशयेनाह–श्रविष्ठासु इति । श्रविष्ठा ज्येष्ठा तद्धितलुकि "श्रविष्ठाफाल्गुनि" इति सूत्रविहिते लुकि स्त्रीप्रत्ययस्य लुक् "लुक्तद्धितलुकि" इत्यनेन, प्रत्ययलक्षणेन स्थानिवद्भावेन दीर्घग्रहणे तु न स्थानिवत्त्वम्, अल्विधित्वात् । प्रत्ययलक्षणसूत्रं तु नियमार्थम् ।

ननु प्रथमहल्ग्रहणं व्यर्थम् । हलन्तात्परेषां संयोगान्तलोपसम्भवात् । अत्राहुः—

संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते ॥

तथा हि—सखेत्यत्र नलोपो न स्यात् । संयोगान्तलोपस्यासिद्धत्वात् । स्यादेतत् । संयोगान्तलोपो नासिद्धः । "न ङिसम्बुद्ध्योः" ( पा० सू० ८।२।८ ) इति सूत्रे सम्बुद्धिग्रहणाज्ज्ञापकात् । न चैवं गोमानित्यादावपि नलोपापत्तिः । ज्ञापकस्य विशेषविषयत्वात् । यत्र हि नकारविभक्त्योरानन्तर्यन्तत्रैव सिद्धत्वं व्याख्यानात् ।

यत्त्वाहुः—हे ब्रह्मन्निति नपुंसकार्थत्वाद् नैतज्ज्ञापकमिति । तन्न । लुका लुप्ते प्रत्ययलक्षणाभावेन 'सम्बुद्धौ वा नपुंसकानाम्—' इत्यस्यावश्यकतया च

शब्दरत्न ।

विभक्त्योरानन्तर्यमिति । एवं च विभक्तिसंयोगान्तलोपस्य सिद्धत्वं ज्ञाप्यत इति तात्पर्यम् । गोमानित्यादौ लक्ष्यभेदाद्वारं वारं संयोगान्तलोपः । नपुंसकार्थत्वादिति । "स्वमोः" ( पा० सू० ७।१।२३ ) इति हि तत्र लुगिति तत्र नलोपनिषेधायावश्यकत्वादिति भावः । लुका लुप्ते इति । "ङिसंबुद्ध्योः" इति सप्तमीति भावः । आवश्यकतया चेति । "ङिसम्बुद्ध्योः" ( पा० सू० ८।२।८ ) इत्यस्य षष्ठ्यन्तत्वपक्षेऽपि विकल्पार्थमावश्यकतया चेत्यर्थः । यद्यपि 'वा नपुंसकानाम्' इत्येव भाष्ये पठितं सम्बुद्धिग्रहणं तु सूत्रादेव सम्बध्यत इति तदर्थं तच्चरितार्थं तथाऽप्यत्र पाठेनोक्तार्थज्ञापकताऽपि । सम्बुद्धिग्रहणं भाष्ये प्रत्याख्यातमिति तु न भ्रमितव्यम् । सूत्रस्थङिग्रहणस्य(१) "ङिसम्बुद्ध्योरनुत्तर" ( का० वा० ) इति वार्त्तिकस्थसम्बुद्धिग्रहणस्य च प्रत्याख्यानेऽपि सूत्रस्थस्याप्रत्याख्यानादिति भावः ।

ज्योत्स्ना ।

ङिसम्बुध्योरनुत्तर इति । तत्र हि भाष्ये चर्मणि तिला अस्येति चर्मतिलः इत्यादौ तथा हे राजन् वृन्दारक इति विग्रहे सम्बुध्यन्तयोरेव समासे राजवृन्दारक इत्यादौ च निषेधो माभूदिति "ङिसम्बुध्योरनुत्तरपदे" इति वार्तिकमवतारितम् । एतद्वार्तिक-

प्र० ( १ ) ङिसम्बुद्ध्योरनुत्तरेति । तत्र हि भाष्ये चर्मणि तिला अस्य चर्मतिलः इत्यादौ तथा हे राजन् वृन्दारक इति विग्रहे सम्बुद्ध्यन्तयोरेव समासे राजवृन्दारक इत्यादौ च निषेधो मा भूदिति 'ङिसम्बुध्योरनुत्तरपदे' इति वार्तिकमवतारितम् । एतद्वार्तिकस्थङिग्रहणस्य, भत्वात्तु ङिग्रहणानर्थक्यम्' इत्यनेन प्रत्याख्यानं कृतम् । 'उभयसंज्ञान्यपि छन्दांसि दृश्यन्त' इति प्रकृतेर्भत्वमिति तदाशयः ।

सम्बुद्धिग्रहणस्य नपुंसकविषयत्वासम्भवेनोक्तज्ञापकस्य सुस्थत्वात्। तस्मान्नलोपो न प्रयोजनमिति चेत्। इह तर्हि अभिनोऽत्रेत्यत्र रोरुत्वं न स्यात्। तदिदमुक्तं नलोपादिरिति। तथा अबिभर्भवान् इत्यत्र तिलोपो न स्यात्। "रात्सस्य" (पा० सू० ७।२।१४) इति नियमात्।

अत्रेदमवधेयम्—ङ्याब्ग्रहणं सोरेव विशेषणम्, न तु तिस्योः व्याख्यानात्। अस्मिन्नेव सूत्रे 'द्विहल्पृक्तग्रहणं तिस्योश्च ग्रहणं न कर्त्तव्यं भवति' इति भाष्यं चेह प्रमाणम्। यदि हि ङ्याब्ग्रहणं तिस्योरपि विशेषणं स्यात् तर्हि कथं तिस्योर्ग्रहणस्याकर्तव्यतां ब्रूयात्।

यत्तु ङ्याब्भ्यां तिस्योरसम्भव एवेति। तत्र ङ्यन्तादसम्भव इति सत्यम्। आबन्तात्तु आचारक्विबन्ताल्लङः तिप्सिपौ स्त एव। अगङ्गात् अगङ्गाः। इति यथा। न च शपा व्यवधानम्। एकादेशस्य पूर्वान्तत्वेन ग्रहणात्। न च स्थानिवद्भावः। अपूर्वविधित्वात्।

अत्रायं निष्कर्षः। ङ्यापः सोरित्येव सूत्रमुचितम्। न च सुराः सुरासौ इत्यादौ धातोः सकारे ऽतिप्रसङ्गः। ङ्याब्भ्यां साहचर्यात्, 'प्रत्ययाप्रत्यययोः' (प०) इति परिभाषया च प्रत्ययस्यैव सोर्ग्रहणाद्। राजेत्यादौ नलोपस्तु "न ङिसम्बुद्ध्योः" (पा० सू० ८।२।८) इति ज्ञापकेन साधित

---

शब्दरत्न।

भाष्यमिति। 'यदि पुनरयमपृक्तलोपो संयोगान्तलोपो विज्ञायेत' इत्युपक्रम्य तद्भाष्यं प्रवृत्तम्। पूर्वान्तत्वेनेति। न चैवं बुद्धावित्यादौ सन्निपातपरिभाषया टाबेनेति भाष्यविरोध इति वाच्यम्। दीर्घप्रवृत्त्युत्तरमन्तादिवद्भावप्रवृत्तावपि टाबुत्पत्तिकालिकानन्तर्यविघातस्य तेन वारयितुमशक्यत्वात्। अशास्त्रीयत्वात्सन्निपातस्यान्तवद्भावेनातिदेष्टुमशक्यत्वाच्च। अत्राबन्तास्त्विति तुनाऽरुचिर्बोधिता। पञ्चमीसमासाश्रयणे स्थानिवद्भावोऽस्ति। अस्याभिधाने च न दृढं मानम्। आबन्तेभ्य आचारक्विबेव नास्ति "आतो धातोः" (पा० सू० ६।४।१४०) इति सूत्रस्थभाष्यप्रामाण्यात्। तत्र वार्त्तिककृता 'आतोऽनापः' (का० वा०) इत्युक्तमिति तद्बीजम्। आचारक्विबन्ताद्यङ्लुक्तु नास्त्येव। तेन कस्य स्त्री का कीशब्दादिभ्य आचारक्विबन्तेभ्यो यङ्लुकि लङि अचेकेदित्यादौ ङ्यन्तादपि सम्भव इत्यपास्तम्। ईकाररूपत्वाभावाच्च।

ज्योत्स्ना।

स्थङिग्रहणन्तु "भत्वात्तु ङिग्रहणानर्थक्यम्" इतिवार्तिकेन प्रत्याख्यातम्। "उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते" इति प्रकृते भत्वमिति तदाशयः।

एत्र । किं चाभिनोऽत्रेति उत्वमपि सूत्रपादम् । 'संयोगान्तलोपो रोरुत्वे' इति सिद्धकाण्डे पाठात् । हरिवो मेनिनं त्वेति यथा । अविभर्भवान् इत्यत्रापि न दोषः । "रात्सस्य" ( पा० सू० ७।२।२४ ) इत्यत्र तकारस्यापि प्रश्लेषेण त्सस्येति च्छेदात् ।

ननु उखास्रदित्यादौ संयोगादिलोपः स्यादिति चेत् । न । दत्वे कृते तदप्राप्तेः । असिद्धं दत्वमिति चेन्न । सिद्धकाण्डे 'वस्वादिषु दत्वम्' इति पाठात् । नन्वपदान्तत्वाद् दत्वं न स्यादिति चेन्न । सावपि पदं भवतीति पक्षाश्रयणात् । तद्बीजन्तु 'असर्वनामस्थाने यचि' इति च्छित्वा यजादौ सर्वनामस्थाने पदं नेति व्याख्यानम् ।

न चैवं राजेत्यादौ नलोपे कृते सो रुत्वविसर्गौ स्यातामिति वाच्यम् । "इतोऽत्" ( पा० सू० ७।१।८६ ) इति सिद्धे "पथिमथि" ( पा० सू० ७।१।८५ ) इत्याकारविधानेन प्रथमं सुलोपस्य ज्ञापनात् ।

ननु नैतज्ज्ञापकं सम्बुद्धौ चरितार्थत्वात् हे पन्थाः मन्थाः ऋभुक्षाः । तत्र हि दीर्घो असम्बुद्धौ इति पर्युदस्तः नलोपश्च निषिद्ध इति चेत् । एवं तर्हि नलोपात् प्राक् संयोगान्तलोप इत्यर्थे "न ङिसम्बुद्ध्योः" ( पा० सू० ८।२।८ )

शब्दरत्न ।

उत्वमपीति । अपिना पूर्वरूपम् । रोरुत्वे इति । कर्त्तव्ये कृते चेति शेषः । "न मु ने" ( पा० सू० ८।२।३ ) इतिवत् । हरिव इति । हरिशब्दान्मतुपि "छन्दसीरः" ( पा० सू० ८।२।१५ ) इति वत्वे नुमि संयोगान्तलोपे "मतुवसोः" ( पा० सू० ८।३।१ ) इति रुत्वे उत्वे गुणः । छेदादिति । कीर्त्तयतेः क्विब्विचावेव न स्तः, वृतेर्यङ्लुकि लङि ईडभावे तिप्सिपोः प्रयोग एव नास्ति । 'यथालक्षणमप्रयुक्ते'(प०) इत्यत्रैव भाष्योक्तेः । अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यतेत्यर्थः(१) । प्रयुक्तानामिदमन्वाख्यानमिति सिद्धान्तात् । नेति व्याख्यानमिति । उपपादितं चेदं रामशब्दान्ते ।

नलोपे कृते इति । संयोगान्तलोपस्यासिद्धत्वादिति भावः । नलोपात्प्रागिति । विभ-

ज्योत्स्ना ।

योग्यतेत्यर्थ इति । लक्षणस्याभावोऽलक्षणम् अर्थाभावेऽव्ययीभावः । ततो लक्षणाभावस्य योग्यता 'यथालक्षणम्' इतियोग्यतासूत्रे यथार्थेऽव्ययीभावस्तेन निरुक्तार्थलाभ इति भावः ।

---

प्र० (१) लक्षणस्याभावोऽलक्षणं अर्थाभावेऽव्ययीभावः, ततः लक्षणाभावस्य योग्यता यथालक्षणमिति योग्यतारूपयथार्थेऽव्ययीभावस्तेन निरुक्तार्थलाभ इति भावः ।

इति सूत्रमेव ज्ञापकमस्तु। तथा हि—'ङिसम्बुद्ध्योः' इति षष्ठी न तु सप्तमी ङेर्लुका लुप्ततया प्रत्ययलक्षणाभावात्, ङ्यन्तस्य च प्रातिपदिकस्येति सामानाधिकरण्येनान्वयः, न च प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तं प्रातिपदिकं लभ्यते। तस्मान्ङ्याप: सोरिति न्यासे न किंचिद् बाधकम्। यदि तु 'वस्त्रादिषु दत्वम्' इति वार्तिकं प्रत्याख्यायते। अधातुग्रहणेनैवोखास्रदित्यादौ दीर्घाभावसिद्धेः। तर्हि हल्ङ्याप: सोरित्येव सूत्रमस्तु।

शब्दरत्न।

क्तिसंयोगान्तलोपविषयेऽसिद्धत्वाभावज्ञापनद्वारेति शेषः। एतेन राजैधते चक्रयत्र राजच्छत्रमित्यादौ वृद्धियण्तुगादिकं न स्यात्संयोगान्तलोपस्यासिद्धत्वात्। किं च कर्त्र्येत्यादावेकमेव यण्शास्त्रं पूर्वपरविषयभेदाद्भिन्नमिति शब्दपरविप्रतिषेधात्परयणादेश इति "अचः परस्मिन्" (पा० सू० १।१।७९) इत्यत्र भाष्यकैयटयोः स्पष्टम्। विषयगतपौर्वापर्यस्य लक्षणे आरोप इति तदाशयस्तेन धीमानित्यादौ सुविषयसंयोगान्तलोपशास्त्रस्य तलोपविषये तत्र पूर्वस्मिन्नसिद्धत्वेन तलोपो न स्यादित्यपास्तम्। सावपि पदमिति पक्षे तु अदो(१)षाच्च। आरोपे मानाभावाच्च। षष्ठीति। अत एव ङौ नलोपनिषेधः सार्थकस्तदाह—ङेरिति। न च "न लुमता" इति निषेधानित्यत्वान्न (पा० सू० १।१।६३) दोषः। तदपेक्षया षष्ठ्यन्ततया व्याख्यानस्यैव लघुत्वात्। संबुद्ध्यन्तेति। संबुद्ध्यन्तप्रातिपदिकान्तनस्य लोपो नेत्यर्थः। इति सूत्रमस्त्विति। अत एव सुपीरित्यादिसिद्धिः। अन्यथा पदान्ते संयोगादिलोपस्य संयोगान्तलोपापवादत्वात्तत्प्रवृत्तौ "र्वोः" (पा० सू० ९।२।७६) इति दीर्घो न स्यात्। "तिप्यनस्तेः" (पा० सू० ९।२।७३) "सिपि धातोः" (पा० सू० ८।२।७४) इति सूत्राभ्यां धातुसम्बन्धिपदान्तसस्य दत्वरुत्वविधायकाभ्यां, कसाहचर्येण च प्रकृतिप्रत्ययसंबन्धिवर्णसंयोगमाश्रित्य सस्य पदान्ते संयोगादिलोपाप्रवृत्तिकल्पने तु न किंचिल्लाघवम्। किं च "न ङिसंबुद्ध्योः" (पा०सू० ८।२।८) इति सप्तम्येव युक्ता। ङिग्रहणाच्च "न लुमता" (पा०सू० १।१।६३) इत्यस्यैतद्विषयेऽनित्यत्वम्। एतन्मूलकमेव "वा नपुंसकानाम्" (का० वा०) इति वार्त्तिकम्। एवं च ब्रह्मन्नाद्यर्थं सम्बुद्धिग्रहणस्यावश्यकत्वेन ज्ञापकासम्भवः। अपूर्ववचनकरणेन सिद्धप्रत्याख्यानन्तु न युक्तम्। इदमेवाभिप्रेत्य सूत्रशेषे भाष्ये 'तस्माद-

वि० (१) सुब्विषयकसंयोगान्तलोपस्यासिद्धत्वे परस्मिन्सौ तान्तस्य पदत्वमिति संयोगान्तलोपस्य सिद्धेर्दोषाभावादित्यर्थः। नचैवं सौ पदत्वमाश्रित्य नलोपोऽपि स्यादिति वाच्यम्? तस्मिन् कर्तव्ये तलोपस्यासिद्धत्वादिति दिक्।

यत्तु यथाश्रुतं सूत्रं प्राचा व्याख्यातम्, ङ्यन्तादाबन्ताद् दीर्घाच्चेति । तन्न । ङ्यापौ हि दीर्घौ न तु तदन्तमपि । नच दीर्घाद्ङ्यन्तादित्यादेर्दीर्घो यो ङी तदन्तादित्यादिरर्थो लभ्यते । दीर्घादिति पञ्चम्या अनन्वयात् । समासे उपसर्जनयोर्ङ्यापोर्विशेषणायोगात् । उक्तं हि भाष्ये—'सविशेषणानां वृत्तिर्न' 'वृत्तस्य वा विशेषणयोगो न' इति । एतेन अनदीसंज्ञं ह्रस्वं इउवर्णान्तमित्यपि प्राचो वृत्तिः प्रत्युक्ता । ✓

"सख्युरसंबुद्धौ" ( पा० सू० ७।१।९२ ) ॥ इह "इतोऽत्सर्वनामस्थाने" ( पा० सू० ७।१।८६ ) इत्यतः 'सर्वनामस्थाने' इत्यनुवर्तते, तत् 'असंबुद्धौ' इत्यनेन विशेष्यते । "गोतो णित्" ( पा०सू० ७।१।९० ) इति सूत्राद् 'णित्'इत्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह—सम्बुद्धिवर्जं सर्वनामस्थानमिति । 'सख्युरसंबुद्धिः'इत्येव तु सूत्रं युक्तम् ।

"ख्यत्यात्परस्य" ( पा०-सू० ६।१।११२ ) ॥ कृतयणादेशयोः खिखीशब्दयोरनुकरणम् 'ख्य' इति । एवं तितीशब्दयोः 'त्य' इति । उभयत्राप्यकार उच्चारणार्थः । न तु मुख्यापत्यादिशब्दैकदेशानुकरणमिदम् । "सख्युर्यः" "पत्युर्नः" । "संख्यायाः संवत्सरसंख्यस्य च" ( पा० सू० ७।३।१५ ) । "आपत्यस्य च तद्धिते" ( पा० सू० ६।४।१५१ ) इत्यादिनिर्देशात् इत्यभिप्रेत्याह—खितिशब्दाभ्यामित्यादि । परस्येतिग्रहणं "एकः पूर्वपरयोः" इत्यधिकारनिवृत्त्यर्थम् ।

---

शब्दरत्न ।

शक्यो हलपृक्तलोपः संयोगान्तलोपो विज्ञातुम् । न चेद्विज्ञायते द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं कर्त्तव्यम्' इत्युक्तम् । इति सूत्रमित्युपलक्षणम् । हल्ङ्यापः सुतिसि इलिति सूत्रमस्त्वित्याशयात् । अत एवाबिभा राज्यमित्यादौ "ढ्रलोप" ( पा० सू० ६।३।१११ ) इति दीर्घसिद्धिरिति दिक् ।

दीर्घाच्चेति । हलन्तादित्यपेक्षश्चकार इति तद्व्याख्यातारः । न तु तदन्तमपीति । तस्याज्झल्समुदायरूपत्वादिति भावः । प्रत्युक्तेति । इउवर्णान्तस्य ह्रस्वत्वासम्भवादिउवर्णयोरेकदेशत्वेन तद्विशेषणासम्भवाच्चेति भावः ।

युक्तमिति । "अनङ् सौ" ( पा० सू० ७।१।९३ ) इत्यत्र विभक्तिविपरिणामः कार्यः । "सर्वनामस्थाने" ( पा० सू० ६।४।८ ) इत्यस्य "गोतो णित्" ( पा० सू० ७।१।९४ )

"औत्" । ( पा०सू० १।१।१५ )॥ एतच्च नदीसंज्ञकेषु "इदुद्भ्याम्" ( पा० सू० ७।३।११७ ) इति पूर्वसूत्रेण बाध्यते । घिसंज्ञकेषु "अच्च घेः" ( पा० सू० ७।३।११९ ) इत्युत्तरसूत्रेण । तस्मात्संज्ञाद्वयशून्योऽस्य विषयः । नच तादृश उकारोऽस्ति । अत आह–उकारेति ।

यत्तु प्राचा घिनदीसंज्ञावर्जिताभ्यामिदुद्भ्यां परस्येत्युक्तम् । तन्न । तादृशोकारस्याप्रसिद्धेः । समुदायस्येति । न च .पर्युदासेऽपि पर्युदस्यमानसमर्पके सखिशब्दे तदन्तग्राहकत्वं शङ्कयम् । विशेष्यासन्निधानात् ।

यत्त्विह ग्रहणवतेत्याद्युपन्यस्तं हरदत्तेन, यच्च "ख्यत्यात्" ( पा० सू० ६।१।११२ ) सूत्रे कैयटेन, तन्न । तस्य प्रत्ययविधिविषयत्वात् ।

गौणत्वेऽपीति । अस्थ्याद्यनङ्वदिति भावः । तथा च "येन विधिः" ( पा० सू० १।१।७२ ) इति सूत्रे परमसखायाविति बहुव्रीहिः । तत्पुरुषे हि टचा भाव्यमिति कैयटः । तथा "द्वितीया श्रित" ( पा० सू० २।१।२४ ) इति सूत्र सोमसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति कैयटः । "मिद्चोऽन्त्यात्" ( पा० सू० ७।१।४७ ) इति सूत्रे "तृज्वत्क्रोष्टुः" ( पा०

शब्दरत्न ।

इत्यत्र प्रथमान्ततायाः क्लृप्तत्वान्न तन्निवृत्तिरित्यभिमानः(१) ।

विशेष्यासन्निधानादिति । शब्दस्वरूपं विशेष्यं त्वव्यावर्त्तकम् । किं च सत्यपि विशेष्ये सखिशब्दभिन्नान्तस्येत्येव (२)स्यान्न तु सख्यन्तभिन्नस्येति । नत्रैकार्थीभावापन्नस्यान्यत्रान्वयायोगादिति (३)भावः । तस्य प्रत्ययविधीति । एवं च हरदत्तानुरोधेनेदं सर्वमितिभावः। तथा द्वितीयेति। तत्पुरुषविषये बहुव्रीहिर्नेति उपक्रम्योभयं खल्वपीष्यते सोम-

वि० (१) अत्रारुचिबीजन्तु यद्यसम्बुद्धिरिति पठ्येत, तदा भिन्नविभक्तिकत्वात् "णलुत्तमो वा"इत्यनेन विच्छेदाच्च 'सर्वनामस्थान' इत्यस्य निवृत्तिः स्यादिति यथान्यासमेवोचितमिति दिक् ॥

वि० ( २ ) प्रतियोगिबोधकस्य सखिशब्दस्य तदन्तबोधकतया एवमेव स्यादित्यर्थः ॥

वि० ( ३ ) वस्तुतस्तु सखिशब्दस्य तदवयवलक्षणया सखिशब्दावयवभिन्नयोरिदुतोरित्येवार्थः, यथा "अत्वसन्तस्य" इति सूत्रे धातुशब्दस्य तदवयवे लक्षणा भवति । अत एव पिण्डग्रः इत्यत्र न दीर्घः।एवंच सुसखिशब्दावयवस्यापि न घिसंज्ञा सखिशब्दस्य तदवयवलक्षणायाम्मानन्तु "यस्येति च"इति सूत्रस्थभाष्यमेव। तत्र हि इवर्णस्येति, किमुदाहरणम् ? अतिसखेरागतेत्युक्तम् । अत्र "सख्यशिश्वीति" स्त्रीप्रत्यये सखिशब्दान्त्यस्य लोपेन निवृत्तौ श्रूयमाण इकारो नसखिशब्दावयव इति घिसंज्ञायाम् "घेर्ङिति" इति गुणः सिद्धो भवति। लोपाभावे तु सवर्णदीर्घे अन्तवद्भावेनासखिशब्दावयव एवेति घिसंज्ञा न स्यादिति तात्पर्यम् ।

सू० ७।१।१५ ) "स्त्रियां च" ( पा० सू० ७।१।९६ ) इति सूत्रे च भाष्य-कैयटयोः ख्याधातौ साधवग्रन्थे च स्फुटमेतत् । 'अनुद्युत्तो वरुण इन्द्रसखा' 'आग्नेया हि मरुत्सखा' 'तीव्रं सोमं पिबति गोसखायं' इत्यादिप्रयोगाश्चैवमेव सङ्गच्छन्ते । तत्र बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात् । एतेन घिसंज्ञासूत्रे शोभनः सखा यस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यास-कारौ तदनुगामिनश्चान्ये उपेक्ष्याः ।

"पतिः समास एव" ( पा० सू० १।४।८ ) ।। एवकार इष्टतोऽवधा-रणार्थः । अन्यथा हि समासे पतिरेवेति सम्भाव्येत । "धात्वादेः" ( पा० सू० ६।१।६४ ) इत्यादिज्ञापकानुसरणे च प्रतिपत्तिगौरवं स्यात् । अथ कथं सीतायाः पतये नमः ।। पराशरश्च—

"नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ" इति ।

उच्यते । पतिरित्याख्यातः पतिः णौ टिलोपे "अच इः" (उ० सू० ५८) इत्यौणादिकः इः । अयं पतिशब्दः "पतिः समास एव" (पा० सू० १।४।८) इत्यत्र न गृह्यते, लाक्षणिकत्वात् । एतेन 'कृष्णस्य सखिरर्जुनः' इति भारतं 'सखिना वानरेन्द्रेण' इति रामायणं च व्याख्यातम् ।

"बहुगण" (पा० सू० १।१।२३)।। बहुगणौ प्रातिपदिके संख्यावाचके गृ-ह्येते । न तु संघवैपुल्यवाचके अपि संख्यायते अनयेति अन्वर्थसंज्ञाविधानात् । अत एव डतिरपि तद्धित एव गृह्यते । वतुना साहचर्याच्च । न तु पातेर्डतिः ।

"षड्भ्यो लुक्" (पा० सू० ७।१।२२)।। षड्भ्यः परयोरिति । बहुव-चननिर्देशोऽर्थप्राधान्यसूचनार्थः । षडर्थगतसङ्ख्याभिधायिनोरिति फलितोऽर्थः।

शब्दरत्न ।

सखा गवांसख इति भाष्यम् । अन्त्ये "षष्ठ्या आक्रोशे" (पा०सू०६।३।२१)इत्युलुक् ।

संख्यावाचके इति । त्र्यादिसंख्याव्यापकधर्मविशेषवाचके इत्यर्थः । न तु बहुत्वं संख्यानियतविषयपरिच्छेदहेतुत्वरूपसंख्यात्वस्य तत्राभावात् । अत एव भाष्ये 'यद-समसंख्यां संख्येत्याह' इत्युक्तम् । संख्यायतेऽनयेति । साक्षाद्, व्याप्यसंख्याद्वारा वेत्य-र्थः । अत एव । बहुगणसाहचर्येण संख्यासम्बन्ध्यर्थप्रतिपादकस्य ग्रहणादेव ।

बहुवचनेति । अन्यथा षष इत्येव वदेत् । अर्थप्राधान्येति । (१)षट्शब्देन षट्संज्ञकः शब्द-

---

वि० ( १ ) अयम्भावः—सूत्रे 'षड्भ्य' इत्यत्र तन्त्रेण निर्देशः । एकः षड्शब्दः शब्दयुक्ता-र्थपरः, अपरोऽर्थयुक्तशब्दपरश्चेति शब्दादर्थाच्च परत्वं विवक्षितमिति ।

"प्रत्ययलोपे" ( पा० सू० १।१।६२ )॥ स्थानिवत्सूत्रेण सिद्धे नियम-

शब्दरत्न ।

स्तदर्थसंख्याश्रयश्चेत्युभयमपि विवक्षितम्, तेषां बहुत्वादिदं बहुवचनम् । तत्रार्थात्परत्वं स्वगतसंख्यानुवादकत्वरूपं गौणं तदाह–षडर्थेति । तेन गौणे न । इदं प्राचामनुरोधेन । 'षड्भ्य' इति बहुवचनं 'तिसृभ्य' इतिवत् । षट्संज्ञकानां बहुत्वाच्च । न हि सर्वत्र जातिनिर्देश एवोचितः । आचार्यशैली वा । षष्शब्दस्य बहुवचनान्तस्यैव संज्ञात्वाच्च । तस्मादिदं विहितविशेषणम् । परमपञ्चादीनामपि (१)संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येव । लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानम् । उपसर्जने तु अतिक्रान्ताद्यर्थप्राधान्यं नतु संख्याया इति न दोषः । स्पष्टं चेदं "सर्वादीनि" ( पा० सू० १।१।२७ ) इति सूत्रे भाष्ये इति तत्त्वम् ।

सिद्धे इति । "तृणह" ( पा० सू० ७।३।९२ ) इति सूत्रे 'अचि' 'न' इत्यनुवृत्त्या

ज्योत्स्ना ।

संख्याप्रकारकसंख्येयविशेष्यकेति । न च राजान इत्यादौ राजन्शब्दस्य बहुत्वप्रकारकबहुत्वविशिष्टविशेष्यकबोधजनकत्वेन षट्संज्ञापत्तिरिति वाच्यम् । संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वं संख्यावाचकत्वमिति विवक्षणेनादोषात् । न चैवमपि दण्डिनः इव त्रय इत्यादौ "उपमितम्" इति समासे दण्डिन्शब्दस्य तादृशमुख्यविशेष्यकोपस्थितिजनकत्वेन तत्त्वं स्यादिति वाच्यम् । यस्य संख्यावाचकत्वं विवक्षितं तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तन्निरूपितप्रकारताऽसामानाधिकरणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तत्प्रयोजकतापर्याप्त्यधिकरणत्वं संख्यावाचकत्वमिति स्वीकारेणादोषात् । तथाच त्रिदण्डिन् इत्यत्र तादृशसंख्येयनिष्ठविशेष्यताप्रयोजकत्वं पर्याप्त्या त्रिशब्दे एव, न तु दण्डिन्शब्दे इति न दोषः ।

स्थानिवत्सूत्रेणेति । स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं नियमार्थम् । प्रत्ययलोपे प्रत्य-

---

प्र० ( १ ) संख्याप्रकारकेति । न च राजान इत्यादौ राजन्शब्दस्य बहुत्वप्रकारकबहुत्वविशिष्टविशेष्यकबोधजनकत्वेन षट्संज्ञापत्तिरिति वाच्यम् । संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वं संख्यावाचकत्वमिति विवक्षणेनादोषात् । नचैवं दण्डिन इव त्रयः इत्युपमितसमासे त्रिदण्डिन्शब्दस्य तादृशमुख्यविशेष्यकोपस्थितिजनकत्वेन तत्त्वं स्यादिति वाच्यम् । यस्य संख्यावाचकत्वं वक्तव्यं तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तन्निरूपितप्रकारताऽसमानाधिकरणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तत्प्रयोजकतापर्याप्त्यधिकरणत्वं संख्यावाचकत्वमिति स्वीकारेणादोषात् । तथाच त्रिदण्डिन् इत्यत्र तादृशसंख्येयनिष्ठविशेष्यताप्रयोजकत्वं पर्याप्त्या त्रिशब्दे एव न तु त्रिदण्डिन्शब्दे इति न दोषः ।

ज्योत्स्ना ।

यलक्षणमेव न तु स्थानिवत् । तथाच स्थानिवत्सूत्रे आदेशपदार्थे प्रत्ययलोपातिरिक्तत्वे सङ्कोच इति सुदृषत्प्रासाद इत्यादौ स्थानिवद्भावेन असन्तत्वमादाय न "अत्वसन्तस्य" इति दीर्घः । न चातुसाहचर्यात् सकारप्रश्लेपाद्वासन्तमपि श्रूयमाणासन्तमेव गृह्यते इति निर्दिश्यमानपरिभाषया वा सुदृषत्प्रासाद इत्यादौ श्रूयमाणस्यासोऽभावेन निर्दिश्यमानस्यासोऽभावाद्वा न दीर्घप्राप्तिरिति उक्तं निष्फलमिति वाच्यम् । यवमच्छब्दाण्णिजन्तात्क्विपि णिलोपटिलोपयोः ततः सुविभक्तौ अत्र अतोरपि अश्रूयमाणस्य सम्भवेन श्रूयमाणत्वेनातुसाहचर्यस्य ग्रहीतुमशक्यत्वात् । साहचार्यपरिभाषाया अनित्यत्वाच्च । सुदृषच्छब्दात् प्रत्ययलक्षणेन स्थानिवत्त्वेन वाऽसन्तत्वमादाय "अस्मायामेधा" इति विनेरापत्तेश्च । किञ्च शोभनादृषत् अस्यां सा सुदृषत् नगरी इत्यत्र सुलुकः स्थानिवद्भावेनोगित्वमाश्रित्य "उगितश्च" इति ङीवापत्तेः । अजायाः क्षीरम् अजक्षीरम् असः स्थानिवत्वेन स्यादेशापत्तेश्च । नियमे तु प्रत्ययलोपसत्वेन स्थानिवत्वाप्रवृत्त्या प्रत्ययलक्षणस्य चाप्राप्त्या न दोषः । "अत्वसन्तस्य" इत्यत्रास्पदोत्तरषष्ठ्या अभावेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेश्च ।

न चैवमपि अर्थवद्ग्रहणे 'लक्षणप्रतिपदोक्त' 'प्रत्ययाप्रत्यय' 'निरवनुबन्धक' इति परिभाषाचतुष्टयस्य अनिनस्मन्ग्रहणेषु अप्रवृत्तये 'अनिनस्मन्' इति परिभाषया अन्त्वादिषु वर्णत्वव्याप्यत्वारोपस्यावश्यकत्वेन "अनल्विधौ" इति निषेधादेव न स्थानिवद्भावः नापि प्रत्ययलक्षणमिति सुदृषत्प्रासाद इत्यादौ नोक्तदोषावतार इति वाच्यम् । रमाशब्दाण्ण्यन्तात् क्त्वाप्रत्यये प्रादिना समासे "समासेऽनञ्" इति ल्यबादेशे प्ररम्येत्यादौ 'प्रत्ययाप्रत्यययोः' इतिपरिभाषया इदानीमापः प्रत्ययस्यैव ग्रहणापत्या तत्परिभाषानङ्गीकारेऽपि प्रत्ययस्यापि आपो ग्रहणापत्या प्रत्ययलक्षणेन स्थानिवद्भावेन वाऽऽप्त्वमादाय "विभाषापः" इत्यनेन णेरयादेशापत्तेः । नियमे तु प्रत्ययलोपसत्वेन स्थानिवद्भावाप्रवृत्त्या प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति आप्त्वस्याल्त्वव्याप्तौ धातावपि सत्वेनाप्त्वं प्रत्ययाप्रत्ययसाधारणमिति प्रत्ययलक्षणस्याप्रवृत्त्या आप्लृधातोरेव "विभाषापद" इत्यत्र ग्रहणमिति न दोषः ।

न च मित्रशीः आतृणेट् इत्यादौ "शासइदङ्हलोः" "तृणह इम्" इत्यादि न स्यात् । प्रत्ययलोपसूत्रस्य स्थानिवत्सूत्रनियामकत्वसिद्धयर्थं नियम्यस्थानिवत्सूत्रमात्रविषयकत्वावश्यकतयात्र सूत्रे "अनल्विधौ" इत्यनुवृत्तेः सत्वेन हलादित्वस्याल्त्वव्याप्यधर्मघटितत्वात् प्रत्ययलक्षणाप्रवृत्तेरिति वाच्यम् । "शास इदङ्हलोः" इति सूत्रे हलीति न क्रियते शासइत् अङि च इति योगो विभज्यते, अजादौ चेन्ङ्येवेतिनियमेन "तृणह इम्" इत्यत्र हलीति पदमननुवर्त्य "नाभ्यस्तस्याचि" इति नेति अच तिचानुवर्त्य अजादौ न भवतीति निषेधेन च इदादेशेमागमयोर्नैमित्तिकत्वेन तत्र प्रत्ययलक्षणानावश्यकत्वेन दोषाभावात् ।

मार्थमिदम्। प्रत्ययस्यासाधारणं यत्र रूपं प्रयोजकं, तदेव कार्यं प्रत्ययलोपे सति भवति। न तु प्रत्ययाप्रत्ययसाधारणमिति। तेन शोभना दृषदोऽस्य सुदृषत् प्रासाद इत्यत्र "अत्वसन्तस्य" (पा० सू० ६।४।१४) इति दीर्घो न।

यद्वा यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधित्वेऽपि विद्ध्यर्थमिदम्।

---

**शब्दरत्न**

तृणहानीत्यादिव्यावृत्तौ 'हलि' इत्यननुवृत्त्या अतृणेडित्यस्य सिद्धिः। 'शास इत् अङि'। अजादौ ङ्किति चेदङ्येवेति नियमेनाजादिव्यावृत्तौ तत्र हल्ग्रहणाकरणेन मित्रशीरित्यस्य सिद्धिरेवमन्यत्रापीति भावः। प्रत्ययस्यासाधारणमिति। इदं द्वितीयप्रत्यय-(१)ग्रहणेन लभ्यते। यत्र प्रत्ययस्य विशेष्यत्वं तत्रैवेति नियमस्तु न। राजेत्यादौ पदत्वानापत्तेः। दीर्घो नेति। असो लुकः स्थानिवत्त्वेनासन्तत्वेऽपीति शेषः। न चातु-साहचर्याच्छ्रूयमाणासन्त एव दीर्घ इति वाच्यम्। तदनित्यत्वस्याप्यनेन (२)ज्ञापनात्। प्राधान्येनेति। तत्त्वं च वर्णाविशेषणत्वरूपम्। एतच्च 'स्थानिवत्' इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणमित्येतत्सामर्थ्याल्लब्धम्। इदमिति। मित्रशीरित्यादौ हलादौ ङ्किति

**ज्योत्स्ना**

इदं द्वितीयप्रत्ययग्रहणेनेति। "प्रत्ययलोपे तद्वत्" इति न्यासेन सिद्धे द्वितीयप्रत्यय-ग्रहणेन प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्ये एव प्रत्ययलक्षणमिति लभ्यते। तेन 'सुदृषत्प्रासाद' इत्यत्र दीर्घे कर्तव्ये प्रत्ययलक्षणं न भवति। "प्रत्ययस्य लुक्"इति सूत्रात् प्रत्ययग्रहणानुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणेन प्रत्ययपर्याप्तस्थानिताकलोपे सती-त्यर्थो लभ्यते। तेनाघ्नीय इत्यत्र सीयुटः सकारलोपे तस्य प्रत्ययलक्षणेन "अनुदात्तो-पदेश" इत्यनुनासिकलोपो न भवति। इदमेव प्रथमप्रत्ययग्रहणं प्रत्ययावयवेऽपि प्रत्य-यत्वव्यवहारस्य ज्ञापकम्। तेन "आदेशप्रत्यययोः" इत्यादौ न द्वन्द्वानुपपत्तिः।

तदनित्यत्वस्याप्यनेन ज्ञापनादिति। अत्र यद्वक्तव्यं तदुक्तं प्राक्, इति तत एवावधार्यम्।

---

प्र० (१) 'प्रत्ययलोपे तद्वत्' इति न्यासेनैव सिद्धे द्वितीयप्रत्ययग्रहणेन प्रत्ययत्वव्याप्यध-र्मावच्छिन्ननिमित्तताककार्ये एव प्रत्ययलक्षणमिति लभ्यते। तेन सुदृषत् प्रासाद इत्यत्र दीर्घे कर्तव्ये प्रत्ययलक्षणं न भवति। एवं 'प्रत्ययस्य लुक्' इति सूत्रात्प्रत्ययग्रहणानुवृत्त्या सिद्धे आद्यप्र-त्ययग्रहणेन प्रत्ययपर्याप्तस्थानिताकलोपे सतीत्यर्थो लभ्यते। तेन आघ्नीयेत्यत्र सीयुटः सकारलोपे तस्य प्रत्ययलक्षणेन 'अनुदात्तोपदेश' इत्यनुनासिकलोपो न भवति। इदमेवाद्यप्रत्ययग्रहणं ज्ञापकं प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्य। तेन 'आदेशप्रत्यययोः' इत्यादौ न द्वन्द्वाद्यनुपपत्तिः।

प्र० (२) अनेन ज्ञापनादिति। वस्तुतस्तु यवमच्छन्द्राण्णिजन्तात् क्विपि णिलोपटिलोप-योस्ततः प्रथमैकवचने सौ परे तत्र अतोरपि अश्रूयमाणस्य सम्भवेन श्रूयमाणत्वधर्मेणातुसाहचर्यस्य ग्रहीतुमशक्यत्वमिति तत्परिभाषानित्यत्वस्यानेन ज्ञापनासम्भव इति दिक्।

ज्योत्स्ना ।

इदमत्रोक्तं यद्यपि सर्वत्र नियमस्थले नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचो भवति । यथा, "समासाश्च" इति शास्त्रीयोद्देश्यतावच्छेदकं समासत्वं, तद्व्यापकम् "अर्थवत्" इतिशास्त्रीयोद्देश्यतावच्छेदकं अर्थवत्वं तद्व्याप्यं च यत् पदसंज्ञकपूर्वभागकप्रत्ययान्तरभागकसमुदायत्वं तदवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकार्थवत्वावच्छिन्ने सङ्कोचः । तेन गामानय इत्यत्र तथा समुदायसत्वेन पूर्वसूत्रेण न प्रातिपदिकसंज्ञा । तथापि नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपमात्रावच्छिन्नातिरिक्तत्वेन संकोचे समासातिरिक्तस्य अर्थवत्समुदायस्य प्रातिपदिकसंज्ञेति नियम्यशास्त्रस्यार्थे जाते राजपुरुष इत्यादौ न पूर्वसूत्राप्रवृत्तिपूर्वकस्वप्रवृत्तिव्यतिरिक्तं फलमिति स्नुषाश्वश्रून्यायप्रसङ्गो यत्र तत्र सर्वत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपावच्छिन्नातिरिक्तत्वेन संकोचः । यत्र तु स नास्ति तत्र व्यापकरूपेण संकोचे प्रमाणा भावात् उपात्तरूपातिरिक्तत्वेनैव सङ्कोचः । तथाच प्रकृते स्थानिवत्सूत्रीयोद्देश्यतायां प्रत्ययलोपातिरिक्तत्वेन संकोचेऽपि यशश्शब्दाण्णिजन्तात्क्विपि टिलोपणिलोपयोः असः प्रत्ययत्वाभावेन नियमाप्राप्त्या स्थानिवद्भावेनासन्तत्वात् "अस्मायामेधास्रजो विनिः" इति विनिप्रत्यये पट्वि इति फलसत्वेन तन्न्यायाप्राप्त्या उपात्तरूपातिरिक्तत्वेनैव संकोचः । प्रत्युत लोपस्यातिरिक्तत्वेनैव सङ्कोचे यकीत्यस्यासिद्ध्यापत्तिः । प्रत्ययलक्षणं तु न भवति । प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके एव तत्प्रवृत्तेर्निरुक्ततया अस्त्वस्य प्रत्ययत्वव्याप्यत्वाभावेन तदप्रवृत्तेः ।

नन्वत्र मते प्रत्ययलक्षणस्य नियमपरत्वेन व्याख्यानात् । स्थानिवत्सूत्रमात्रविषयतया अत्रानल्विधावित्यनुवृत्तेः सत्वेन आघ्नीय इत्यत्र झलादित्वनिमित्तकेऽनुनासिकलोपे कर्त्तव्ये "अनल्विधौ" इति निषेधेनैव प्रत्ययलक्षणप्रवृत्तेः सिद्धत्वात् प्रथमप्रत्ययग्रहणं व्यर्थम् । न च तस्य षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियते इतिज्ञापनार्थतया साफल्यमिति वाच्यम् । ज्ञापनोत्तरमपि वैयर्थ्यस्य तादवस्थ्यादिति चेन्न । प्रथिमानमाचष्टे इति प्रथिमयति ततः क्विपि णिलोपटिलोपयोः तस्य उपेत्यव्ययेन अव्ययीभावसमासे उपप्रथिमम् इत्यत्र टिलोपस्य स्थानिवद्भावेन "अनश्च" इति टजर्थं वाग्मिनम् आचष्ट इति वाग्मयति ततः क्विपि बहवो वाग्मो यस्यां सा बहुवाग्मका इत्यत्र स्थानिद्भावेन इन्नत्वमाश्रित्य "इनः स्त्रियाम्" इति कप्रत्ययार्थं सर्वतः आचष्टे इति सर्वतयति ततः क्विपि सर्वात् इत्यत्र स्थानिद्भावेनासन्तत्वमाश्रित्य "अत्वसन्तस्य" इति दीर्घार्थम् । सर्वाद् विद्यते यस्यासौ ययोर्वा सर्वत्वी सर्वत्विनौ इत्यादौ "अस्मायामेधास्रजोवि-

तेन अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति। "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" (प०) इति तु वर्णप्राधान्यविषयकम्। तेन गवे हितं गोहितमित्यत्र अव् न।

---

शब्दरत्न।

विधीयमानमित्वं च सिध्यतीत्यपि बोध्यम्। वर्णप्राधान्येति। वर्णस्य तत्त्वं च प्रत्ययनिरूपितविशेष्यत्वमितराविशेषणत्वं च। अण् योऽकार इत्याद्यर्थके "टिड्ढाणञ" (पा० सू० ४।१।१५) इत्यादौ "इको यणचि" (पा० सू० ६।१।७७) इत्यादौ च। तत्रान्त्यमुदाहरति—तेनेति। आद्योदाहरणं तु चित्रायां जाता चित्रेत्यादावण् योऽकारस्तदन्तादिति विहितो ङीव् नेति बोध्यम्। न च गोहितमित्यत्र "न लुमता" (पा०

ज्योत्स्ना।

नि:" इत्यनेन स्थानिवद्भावेनासन्तत्वमादाय विनिः स्यादिति च हेतोः स्थानिवत्सूत्रे प्रत्ययपर्याप्तस्थानिताकलोपातिरिक्तत्वेनैव संकोचो यथा स्यात्, न तु प्रत्ययावयवलोपातिरिक्तत्वेनापि इत्येतदर्थं तस्यावश्यकत्वात्। अन्यथा उक्तोदाहरणेषु प्रत्ययावयवलोपसत्वेन स्थानिवत्वाप्रवृत्तौ अन्त्वादीनां प्रत्ययत्वव्याप्यत्त्वाभावेन प्रत्ययलक्षणाप्रवृत्तेश्च तदसिद्धयापत्तिरिति दिक्। एतद्भाष्यकृन्मतम्।

वार्तिककारस्तु अल्त्वविधावपि प्रत्ययलक्षणार्थं सूत्रमिदमङ्गीकरोति। अत एव मित्रशीः अतृणेट् इत्यादौ न दोषः। अत्र मतेऽपि द्वितीयप्रत्ययग्रहणात् गवे हितम् गोहितम् इत्यत्र चतुर्थ्येकवचनस्य "सुपो धातुप्रातिपदिकयोः" इत्यनेन लुकि "एचोऽयवायावः" इत्येतच्छास्त्रनिमित्ततायां प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाभावेन प्रत्ययलक्षणादवादेशापत्तेः। न च "न लुमताङ्गस्य" इति निषेधेनावादेशो नेति वाच्यम्। तस्य लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तोद्देश्यताके एव प्रवृत्त्या अवादेशस्यौकारमात्रोद्देश्यकत्वेन तस्य चाङ्गत्वाभावेन तदप्रवृत्तेः। नचैवं परमत्रिपुत्रः इत्यत्र प्रत्ययलक्षणेन त्रिशब्दस्य त्रयादेशः स्यात्। न ह्यत्र त्रयादेशस्यामूप्रत्ययनिमित्तकाङ्गसंज्ञावदुद्देश्यकत्वमस्ति परमात्रिशब्दस्यादत्वात् केवलत्रिशब्दस्येवोङ्गद्देश्यत्वात्। एवं परमजरापुत्रः इत्यत्र जरसादेशापत्तिश्चेति वाच्यम्। लुप्तप्रत्ययविशिष्टविषयताके प्रत्ययलक्षणं नेति सूत्रार्थकरणेनादोषात्। वैशिष्ट्यं च साक्षात् स्वाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नत्वं स्वनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात् परम्परायां वावच्छिन्नत्वम् इत्युभयसम्बन्धेन। तथाच त्रयादेशस्याङ्गाधिकारीयत्वेन त्रिशब्दान्ताङ्गावयवनिर्दिश्यमानस्य त्रयादेश इत्यर्थेन अङ्गसंज्ञातत्पर्याप्तताद्दशाङ्गत्वरूपधर्मेण परम्परयावच्छिन्नोद्देश्यतायाः सत्वान्न दोषः। एवं परमजरापुत्र इत्यादावपि बोध्यम्।

अस्मदिति । अत्र प्राचा अव्ययेत्यपि पठितं, तत्तु अव्ययानां प्रायेण निर्लिङ्गत्वाद् अव्ययीभावस्य क्लीबत्वेऽपि लिङ्गान्तराभावाच्चोपेक्षितम् । वस्तुतस्त्विवति । अर्थप्राधान्यबोधकस्य बहुवचनस्याभावात् गौणत्वेऽपि त्रयादेशो न्याय्यः, अस्थ्याद्यनङ्वदिति भावः ।

"अकारो वक्तव्य" इति । तथा च बहुत्वाभावे औडुलोमिशब्द इकारान्तः । बहुत्वे तु अकारान्त उडुलोमशब्दो ऽन्य एव । तस्य च इकारान्तेषु व्युत्पादनं प्रासङ्गिकमिति भावः । तथा चौडुलोमिशब्दस्य इदन्तस्य बहुत्वे अदन्तत्वमिति न भ्रमितव्यम् ॥ इति इदन्ताः ॥

---

शब्दरत्न ।

सू० १।१।६३ ) इति निषेधः । लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्य(१)ककार्ये एव तेन निषेधात् । अत एवोत्क्रामेत्यादौ "क्रमः परस्मैपदेषु" ( पा० सू० ७।३।७६ ) इति दीर्घसिद्धिः । परस्मैपदपरशिन्निरूपिताङ्गस्य तेन दीर्घविधानात् । "तस्मिन्" इति न्यासे ऽपि लुक्स्थानिभूतप्रत्ययाव्यवहितप्रकृत्युद्देश्यककार्ये एव प्रवृत्तिरिति बोध्यम् । यद्वेत्यादिनोक्तो वार्त्तिककृत्सम्मतः पक्षस्तत्फलानामन्यथासिद्ध्या भाष्यकृता दूषयित्वा नियमार्थत्वपक्ष उक्त इति दिक्

प्रायेणेति । विभक्तिप्रतिरूपकाणां लिङ्गयोगेऽपि त्रिषु सारूप्याभाव इत्याशयः । अर्थप्राधान्यबोधकस्येति । अर्थप्राधान्य एव प्रवृत्तिबोधकस्येत्यर्थः । बहुवचनस्येत्युपलक्षणम् । तद्बोधका(२)भावादित्यत्र तात्पर्यम् । गौणमुख्यन्यायस्तु पदकार्ये एव न प्रातिपदिककार्ये । किं चाप्रसिद्धत्वरूपस्य वा गौणलाक्षणिकत्वस्य वा गौणत्वस्य तत्र ग्रहणम् । न चायं तथा । इतरविशेषणत्वेन उपसर्जनत्वं तु न गौणत्वम् । अत एव प्रियतिसेत्यादौ तिस्रादयो भाष्यकृतोदाहृताः । गौणत्वेऽपीति । उपसर्जनत्वेऽपीत्यर्थः ।

न भ्रमितव्यमिति । एतद्भ्रमनिवृत्त्यर्थमेवात्रास्य व्युत्पादनमिति भावः ॥ इतीदन्ताः ॥

---

प्र० ( १ ) नचैवं परमत्रिपुत्र इत्यत्र आमः प्रत्ययलक्षणेन त्रिशब्दस्य त्रयादेशः स्यात्, नह्यत्र त्रयादेशस्य आम्प्रत्ययनिमित्तकाङ्गसंज्ञावदुद्देश्यकत्वमस्ति परमत्रिशब्दस्याङ्गत्वात्, केवलत्रिशब्दस्य चोद्देश्यत्वात् । एवं परमजरापुत्र इत्यादौ जरसादेशापत्तिश्चेति वाच्यम्—लुप्तप्रत्ययविशिष्टविषयताके प्रत्ययलक्षणं नेति सूत्रार्थस्य विवक्षणात् । वैशिष्ट्यं च साक्षात्स्वाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नत्वं—स्वनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वाऽवच्छिन्नत्वमित्युभयसम्बन्धेन । तथा च त्रयादेशस्याङ्गाधिकारीयत्वेन त्रिशब्दान्ताङ्गावयवनिर्दिश्यमानस्य त्रयादेश इत्यर्थे अङ्गसंज्ञावत्पर्याप्ततादृशाङ्गरूपधर्मेण परम्परयावच्छिन्नोद्देश्यतायाः सत्त्वान्न दोष एवम्परमजरापुत्रः । इत्यादावपि न दोषः ।

वि० ( २ ) तद्बोधकस्य विहितविशेषणस्याभावादिति बोध्यम् ।

क्विदिति। तेन "आतो लोप इटि च" (पा० सू० ६।४।६४) इत्यालोप इति भावः। ययीपप्यादय इति।

यत्तु प्राचोक्तम्—एवं देवयज्यतिलक्ष्म्यादय इति। तन्न। देवान् यजत इति विग्रहे "इन्" (उ० सू०) इत्यौणादिकसूत्रेण ह्रस्वान्तस्यैव देवयजिशब्दस्योज्ज्वलदत्तादिभिः साधितत्वात्। 'अह्नो द्विजान्देवयजीन्निहन्म' इति भट्टिप्रयोगस्य ह्रस्वविषयकतयैव व्याख्याततत्वात्।

न च यजेर्दीर्घे ईप्रत्ययः प्रतिपदोक्तोऽस्ति। बहुलग्रहणात्कल्प्यत इति चेद् भवेदेवं यद्यनन्यथासिद्धं कल्पकमुपलभ्येत। वेदेऽपि ह्रस्व एव प्रयुज्यते। 'आयजिं त्वा मनवे जातवेदसे' इति। अतिलक्ष्मीशब्दस्य तु नदीत्वाद् ह्रस्वे आडागमे नुटि आमि च कृते महदेव वैलक्षण्यमिति न वातप्रमीसाम्यम्। एतच्च मूले एव स्पष्टीभविष्यति। क्विबन्तेति। एतच्च 'माङ् माने शब्दे च' इति धातौ माधवग्रन्थे स्पष्टम्। बहुश्रेयसीति। "ईयसश्च" (पा० सू० ५।४।१५६) इति न कप्। नाप्युपसर्जनह्रस्वः। 'ईयसो बहुव्रीहेर्न' (का० वा०) इति निषेधात्।

---

शब्दरत्न।

ह्रस्वविषयकतयैवेति। जयमङ्गलायामिति शेषः। माङ् माने इति। "घुमास्था" (पा० सू० ६।४।६६) इतीत्वविधायकसूत्रस्थं "अवकारदौ" (का० वा०) इतिवार्तिकं भाष्ये(१) प्रत्याख्यातमिति ईत्वं सुलभम्। शंस्थाशब्दे तु भाष्यप्रयोगादेवेत्वाभावः। ततो विजेवेत्यन्ये। न च तेनेत्वेऽपि तस्यासिद्धत्वात्कथं यणिति वाच्यम्। क्वौ ईत्वं, विभक्तौ यणादेश इति (२)व्याश्रयत्वादिति बोध्यम्। न कबिति। समासान्तविधौ लिङ्गविशिष्टपरिभाषाभावस्य "ङ्याप्प्रातिपदिकात्" (पा० सू० ४।१।१) इति सूत्रे

---

वि० (१) "घृतं घृतपावानः पिबत" "वसां वसापावानः पिबत" इत्यादिषु इत्ववारणाय "ईत्वमवकारादाविति वाच्यम्" इतीदं वार्तिकं भाष्यकारेण 'पावानः' इत्यादि वनिपा संसाध्य प्रत्याख्यातमित्यर्थः। न च वार्तिकाभावे 'विश्वपाः' 'शंस्थाः' इत्यादावीत्वं स्यात्। तत्सत्त्वे चेत्वं नेति फलभेदः, "अवकारादौ" श्रूयमाणवकारादावीत्वं नेत्यर्थेनादोषात्। नचैवं 'पावानः' इत्यस्य वनिपा सिद्धावपि क्वनिपि ईत्वं दुर्वारम्, तत्रेत्वस्येष्टत्वात्, 'यथोत्तरं मुनीनां प्रामाण्यम्' इति सिद्धान्तात्॥

वि० (२) नचोभयोरप्यङ्गसम्बन्धित्वमिति नास्ति व्याश्रयत्वमिति वाच्यम्। प्रत्यासत्त्यैकनिमित्ताङ्गसञ्ज्ञासम्बन्धित्वमेवोभयोस्तत्र व्याश्रयत्वाभावः, इह तु तथा नास्तीत्याशयात्।

"यू स्त्र्याख्यौ" ( पा० सू० १।४।३ ) ॥ ईदूदन्ताविति । इह वर्णयोरेव संज्ञेत्यपि पक्षोऽस्ति । "आच्छीनद्योः" ( पा० सू० ७।१।८ ) इति सूत्रस्वरसात् । तयोस्त्र्याख्यत्वं तु ङ्यादिषु स्वतः क्वचित् स्त्रीवाचकवर्णसमुदायघटकत्वेन प्रवेशात् । शक्तिपर्याप्त्यधिकरणत्वस्याविवक्षितत्वात् । तेन नद्यन्तादित्यादिव्यवहारो न विरुध्यते । एवं घिसंज्ञायामपि इउवर्णौ तदन्तं वा घिसंज्ञि इति पक्षद्वयं बोध्यम् । वर्णसंज्ञापक्षे "असखि" इत्यस्य सखिभिन्नस्यावयव इत्यर्थः । न तु सखिशब्दावयवं वर्जयित्वेति । तेनातिसखिनेत्यादि निर्बाधमित्यवधेयम् । पूर्वमिति । वृत्तेः प्रागित्यर्थः । वक्तव्यमिति । संज्ञाया यथोद्देशप्रवृत्तौ न्यायसिद्धमिदं कार्यकालत्वे तु वाचनिकम् ।

शब्दरत्न ।

भाष्ये उक्तावप्यस्य तन्निषेधकत्वेनात्र प्रवृत्तिरस्त्येव । "गोस्त्रियोः" ( पा० सू० १।२।४८ ) इति सूत्रे बहुश्रेयसीति भाष्योदाहरणादनन्तरस्येति न्यायं बाधित्वा "नद्यृतश्च" ( पा० सू० ५।४।१५३ ) इत्यस्याप्ययं निषेध इति भावः ।

ङ्यादिष्विति । बहुवचनं प्रयोगभेदाभिप्रायेण । शक्तीति । स्त्रीत्वनिरूपितशक्तीत्यर्थः । तेन लक्ष्म्यादिशब्दसङ्ग्रहः । तदन्तसंज्ञापक्षे तु "शीनद्योः" इत्यादौ नदीशब्दस्य तदवयवे लक्षणा । नद्यन्तादित्याद्यप्यतिलक्ष्म्याद्यर्थमावश्यकं लक्ष्मीशब्दे व्यपदेशिवद्भावेन तत्त्वं बोध्यम् । इउवर्णाविति । अत एव 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' (का० वा०) इति (१)सङ्गच्छते । न त्वित्यादि । इदं हरदत्तानुरोधेन । न्यायसिद्धमिति । अन्तरङ्गत्वात्पूर्वं प्रवृत्तनद्यन्ततयैव समुदाये तत्संज्ञत्वात्कार्यसिद्धिरिति भावः । वाचनिकमिति । स्त्रीत्वविशिष्टार्थमात्रबोधकस्यैव संज्ञेत्यभिमानेनेदम् । जहत्स्वार्थावृत्तित्वभिमानेन वा । भाष्यकृता त्वजहत्स्वार्थायामवयवस्य नित्यस्त्रीत्वविशिष्टार्थबोधजनकत्वेन तस्य संज्ञायां कुमार्यै ब्राह्मणाय खरकुट्यै ब्राह्मणायेत्यादौ क्विलुब्विषये आनुपूर्व्यैक्येन भेदाग्रहात्समासे नद्यन्तत्वात्कार्यसिद्धिमाश्रित्य प्रत्याख्यातमिदम् । 'अवयव-

ज्योत्स्ना ।

नित्यस्त्रीलिङ्गार्थबोधकत्वादिति । नित्यस्त्रीत्वञ्च—प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् । प्रवृत्तिनिमित्तवैशिष्ट्यं च—स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम् स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वम् स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वम्, एतत्त्रितयसम्बन्धेन । शक्तिवैशि-

वि० ( १ ) अयमाशयः—यद्यत्र घीसंज्ञायां वर्णसंज्ञापक्षो नाश्रीयेत, तदा "घ्यन्तादजादि०" इत्यत्रान्तग्रहणं विरुध्येतेति विभाव्यम् ।

"अचि श्नु" ( पा० सू० ६।४।७७ ) । इह श्नोरिति धातोरेव विशेषणं,

शब्दरत्न ।

स्त्रीविषयत्वासिद्धम्' इति तन्मात्रबोधकत्वनिवेशे न मानम् । यौगिकेषूत्तरपदे जहत्स्वार्थत्वाभावश्चेति तदाशयः । अवयवशब्देनात्र वृत्तिप्रकृतिभूतशब्दग्रहणम् । अत एव क्यजाद्यन्ते न दोषः । तत्रापीच्छाविशेषणतया कुमारीशब्दादेर्नित्यस्त्रीलिङ्गार्थबोधकत्वात् ।

ज्योत्स्ना ।

इत्थं च । स्वपर्याप्त्यधिकरणत्वं, स्वज्ञानाधिनोपस्थितिप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वम् एतदुभयसम्बन्धेन । तात्पर्यविशेष्यतावैशिष्ट्यं च । स्वावच्छेदकतद्व्यक्तित्वव्यापकानुपूर्वीव्याप्यधर्मावच्छिन्नत्व स्वसामानाधिकरण्य उभयसम्बन्धेन । प्रवृत्तिनिमित्तवैशिष्ट्यघटकप्रथमसम्बन्धोपादानेन सेनानीशब्दस्य न नित्यस्त्रीत्वम् । अन्यथा सेनास्वरूपप्रवृत्तिनिमित्तमादाय स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्वेन दोषो दुरुद्धरः स्यात् । प्रथमसम्बन्धोपादाने तु सेनात्वावच्छिन्नमुख्यविशेष्यताप्रयोज्यकत्वस्योक्तशक्त्यभावान्न दोषः । द्वितीयसम्बन्धोपादानेन जिह्वेतीति ह्रीइत्यादौ धातुवाच्यतावच्छेदकसाध्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः । अन्यथा साध्यत्वस्य कस्यापि लिङ्गस्यान्वयितानवच्छेदकतया स्वावच्छिन्नमुख्यविशेष्यताप्रयोज्यकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वस्यापि साध्यत्वावच्छिन्ननिरूपितशक्तौ सत्वेन दोषो दुरुद्धरः स्यात् । तृतीयसम्बन्धोपादानेन स्त्रीलिङ्गविषयकबोधतात्पर्येणोच्चारितसेनानीशब्दे सेनाकर्मकनयनकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः । अन्यथा सेनाकर्मकनयनकर्तृत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोज्यत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुर्वारः स्यात् । तस्योपादाने तु सेनाकर्मकनयनकर्तृत्वावच्छिन्नविशेष्यतानिरूनितस्त्रीत्वेतरपुन्नपुंसकलिङ्गनिष्ठप्रकारताप्रयोजकत्वस्यैव निरुक्तशक्तौ सत्वेन न दोषः । शक्तिवैशिष्ट्ये घटकप्रथमसम्बन्धानुपादाने सेनानीशब्दे एव सेनात्वं प्रवृत्तिनिमित्तमादाय स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य सेनात्वावच्छिन्ननिरूपितशक्तौ च सत्वेन तज्ज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्य ।सेनानीशब्दे सत्वेन दोषो दुर्वारः स्यात् । शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानेन वात्स्याः आयः वात्स्या-

न तु श्नुभ्रुवोरव्यभिचाराद् इत्याह—इवर्णोवर्णा तयातोरिति । श्नुप्रभृतीनामिवर्णोवर्णयोरिति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थं वैयधिकरण्यं च दोषः । चिपति अचुतत् दिदिवतुः ऊयतुः इत्यादौ चातिव्याप्तिः । तद्वारणाय इवर्णोवर्णयोरच्परत्वेन विशेषणे तु क्लिष्टतेति भावः । आन्तरतम्यादिति । स्थानत इति भावः ।

"एरनेकाचः" ( पा० सू० ६।४।८२ ) ॥ "अचि श्नुधातु" ( पा० सू० ६।४।७७ ) इति सूत्रे द्वन्द्वनिर्देशे ऽपि धातुरेवेह सम्बध्यते । न तु श्नुभ्रुवौ । तयोरिवर्णासम्भवात् । धातुग्रहणं चावृत्त्या उभयोर्विशेषणं संयोगस्य चाङ्गस्य चेति व्याचष्टे—धात्ववयवसंयोगेत्यादि । तत्र धातुना संयोगस्य विशेषणादिह यण् उन्न्यौ उन्न्यः । अङ्गविशेषणन्तु

शब्दरत्न ।

श्नुप्रभृतीनामिति । तदन्ताङ्गानामित्यर्थः । दोष इति । सामानाधिकरण्ये विशेषणविशेष्यभावमात्रम् । वैयधिकरण्ये तु (१)भेदसम्बन्धः स चेति गौरवं दोष इत्यर्थः । दिदिवतुरिति । अत्र यणापत्तिस्तत्रापि तद्रीत्या वैयधिकरण्यात् यदि यण्विधौ सामानाधिकरण्यमेव तदयङ् एवापत्तिः । न चैपु लोपेन निर्वाहः । प्रत्ययनिमित्तेयङादेरसिद्धत्वात् । अनित्यात्वात्तदभावेऽप्याह—उयतुरिति । क्लिष्टतेति । अजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वादिति भावः ।

उभयोर्विशेषणमिति । व्याख्यानाल्लक्ष्यानुरोधाच्चैकदेशान्वयेऽपि सौत्रत्वाद् वृत्तिरिति भावः । उन्नयाविति । अत एव स्वरपूर्वापदपूर्वा चोपधा यस्येवर्णस्य तस्य

ज्योत्स्ना ।

यः तं नयतीति वात्स्यायनी इत्यादौ वात्स्यीसम्बध्यायकर्मकनयनकर्तृत्वावच्छिन्नविषयकबोधतात्पर्येणोच्चारितेत्सम्बन्धिस्त्रीत्वविशिष्टानयनत्वरूपप्रवृत्तिनिमित्तमादाय नदोषः । अन्यथा स्त्रीत्वविशिष्टवत्सायपत्यत्वरूपप्रवृत्तिनिमित्तत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितमुख्यविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वाभाववत्वस्य च स्त्रीत्वविशिष्टनदपत्यत्वावच्छिन्ननिरूपितशक्तौ सत्वेनैतादृशशक्तिपर्याप्त्यधिकरणत्वस्य निरुक्तवात्स्यायनीशब्दे सत्वाद्दोषो दुरुद्धरः स्यात् । बोधजनकत्वप्रकारतात्पर्यविशेष्यतावैशिष्ट्यस्य दानेन बोधविषयत्वादिप्रकारकतात्पर्येणो-

टि० ( १ ) विशेषणविशेष्यभावनियामकः कश्चन सम्बन्धः । स च विशेषणविशेष्यभावश्च । एवं चावयवावयविभावाद्यनपेक्षत्वेन सामानाधिकरण्येनार्थबोधकसामग्र्यास्तत्संसर्गप्रकारत्वघटिततात्पर्यज्ञानानक्षत्वेन भिन्नविषयकप्रत्यक्षप्रतिबन्धकतायां लाघवमिति ध्वनितम् ।

हरिम् हरी हरीन् इत्यादिसिद्धये । यदि हि धातुना ऽङ्गं न विशेष्येत, तर्हि इहापि प्रद्धचं प्रद्धच इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्यात् । धात्ववयवसंयोगपूर्वको न भवति य इवर्णस्तदन्तत्वादङ्गस्य । वृश्चिकशब्दस्येति । भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य "भीत्रार्थानाम्" ( पा० सू० १।४।२५ ) इति सूत्रं प्रत्याख्यातं, ततश्च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति भावः । सूत्रमतेऽप्याह । वृश्चिकसम्बन्धिनोति । अल्लोपयलोपाविति । न च परत्वात् "वेरपृक्तस्य" ( पा० सू० ६।१। ६७) इति स्यादिति वाच्यम् । "वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन"

---

शब्दरत्न ।

यणित्यर्थकं "स्वरपदपूर्वोपधस्य" ( का० वा० ) इति वार्त्तिकं लङ्घ्छते । उक्तोपायेन प्रत्याख्यातमित्यन्यत् । तदन्तत्वादिति । न च धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवेकार एव सम्भवेन संयोगवद्विप्रयोगस्यापि विशेपावगतिहेतुत्वेन तद्भिन्नस्यापि धात्ववयवस्यैव ग्रहणान्न दोष इति वाच्यम् । तन्त्रीरित्यादौ धात्ववयवसंयोगपूर्वस्याधात्ववयवस्यापि सम्भवात् "परिमाणाख्यायाम्" (पा० सू० ३।३।२०) इति सूत्रे भाष्ये 'अजपावपि संज्ञायामेव यथाजातीयक उत्सर्गस्तज्जातीयकेनापवादेनापि भवितव्यम्' इत्युक्ते तन्मूलकेन 'उत्सर्गसमानदेशा अपवादा' इति न्यायेन तु न निर्वाहः । अङ्गांशे तदसम्बन्धे हरिभिरित्यादावपि तत्प्राप्त्या तेन येन नाप्राप्त्यभावेन तदपवादत्वस्यैवाभावात् । यद्यपि प्रत्यासत्त्या "इको गुणवृद्धी" ( पा० सू० १।१।४) इति निर्देशोपष्टब्धया धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवस्यैव ग्रहणमिति हरिमित्यादौ न दोपस्तथा ऽपि स्पष्टप्रतिपत्तये आवृत्तिरेवाश्रितेति दिक्(१) ।

सूत्रमतेऽपीति । "भीत्रा" (पा०सू०१।४।२६) इति सूत्रं षष्ठीबाधनार्थमिति वैतण्डिकतया ये वदन्ति तत्सिद्धसूत्रमते ऽपीत्यर्थः । वस्तुतो भयहेतुरित्युक्त्या ऽस्य तृतीयाबाधकत्वं बोध्यम् । न च परत्वादिति । एवं च यलोपो दुर्लभ इति भावः ।

ज्योत्स्ना ।

चारितस्थले न दोष इत्यग्रे निरूपयिष्यामः विस्तरेणेति दिक् ।

वेरपृक्तलोपादिति । वेरपृक्तलोपात् पूर्वं वलि लोपो यथा स्यात्तथा कर्तव्यमित्यर्थः ।

---

वि० ( १ ) दिगर्थस्तु धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवस्यानुमानेन कल्पनायामपि उदियावित्यादौ यणापत्तिर्दुर्वारैव । यदि चानुमानेन धात्वयवसंयोगपूर्वभिन्नस्य धात्ववयवपूर्वस्य ग्रहणमित्युच्यते । तथापि लिडियावित्यादौ दोष एव । मम तु आवृत्तधातुपदाभ्यां तदर्थस्योपस्थितौ प्रत्यासत्त्या तद्धात्ववयवसंयोगपूर्वभिन्नस्य तद्धात्ववयवपूर्वस्य ग्रहणमिति नातिप्रसङ्गः ।

( का० वा० ) इति वार्त्तिककारोक्तेः । क्वौ लुप्तमिति । नपुंसके भावे क्तः । क्वौ लोप इत्यर्थः । इदं सर्वं कुमारीमिच्छन् कुमारीत्यत्रापि बोध्यम् । अनन्यतयेति । गौणत्वेऽपि अनङ्णित्त्वयोः प्रवृत्तेरुक्तत्वाच्चेति बोध्यम् । दीर्घस्यापीति । एतदर्थं कृतयणादेशनिर्देश इति भावः । नन्वतिसखेः भूपतेः इति गुणविषये व्यावर्तयितुं यणा निर्देश इति चेत् । अस्त्वेवम् । तथाऽपि दीर्घे प्रवृत्तेर्दुर्वारत्वात् । न हि ह्रस्वेषु भाव्यं न दीर्घेष्वित्यत्र प्रमाणमस्ति । सौत्रस्य विकृतनिर्देशस्याव्याप्त्यतिव्याप्त्युभयवारकत्वेन तत्सारवत्त्वलाभेन तथैवौचित्यात् । भाष्यारूढत्वाच्च ।

---

शब्दरत्न ।

वार्त्तिककारोक्तेरिति । "लोपो व्योः" (पा०सू०६।१।६६) इति सूत्रे "क्वावुपसंख्यानम्" ( का०वा० ) इतिवार्त्तिकम् । तस्यापूर्वत्वापेक्षया क्वौ यथा लोपे दुर्लभइष्टसिद्धिर्भवति तथा वक्तव्यमित्यर्थः । सा च पूर्वविप्रतिषेधेनेत्याशयेनैवमुक्तमिति बोध्यम् । गौणत्वेऽपीति । इच्छा कर्तृरूपार्थे प्रत्युपसर्जनत्वेऽपीति । कृतयणेति । अन्यथा खितेः परस्येत्येव वदेदिति भावः । गुणविषये इति । प्रकृतिप्रत्ययापेक्षगुणपेक्षया तदवयवमात्रापेक्षस्यान्तरङ्गत्वेन ततः पूर्वं प्रवृत्तिः स्यादिति भावः । विकृतनिर्देशस्येति । यकारान्तानुकरणनिर्देश-

ज्योत्स्ना ।

एतेन वेरपृक्तलोपात् प्राक् वलि लोपे ऽपि अतो लोपात् प्राक् "वेरपृक्तस्य", इति लोपाप्रवृत्तौ मानाभावादन्तरङ्गत्वात् प्राक् वेरपृक्तलोपे ततो ऽल्लोपेऽपि "लोपो व्योर्वलि" इत्यस्य प्राप्त्यभावात् लोपो न स्यादित्यपास्तम् । पूर्वोक्तार्थस्वीकारे तु अतो लोपस्य वलिलोपस्य न वेरपृक्तलोपात् पूर्वमेव प्रवृत्तेः ।

क्वौ लोप इत्यर्थ इति । गोमत्यतेरप्रत्यये गोमान् इति भाष्योक्तेरस्यार्थस्य कल्पनादिति भावः । क्वौ विधिं प्रति न स्थानिवदिति तु न सार्वत्रिकम् । ननु—सख्युर्गोमान् पदस्त्वं च क्वौ लुप्तस्य निदर्शनमित्यभियुक्तोक्तेः क्वौ लुप्तं न स्थानिवदित्यस्य फलचतुष्टयमेव बोध्यते । तत्रैकमपि न सम्भवति । यथा सखीयतेः क्विपि सखीः इत्यादौ यलोपस्य बहिरङ्गासिद्धत्वादेव न यणः प्राप्तिः । "नाजानन्तर्ये" इति निषेधस्तु न प्रवर्तते तस्यासत्त्वात्, सत्वे तु तदनित्यत्वाङ्गीकाराच्च । एवं गोमान् इत्यपि न तत्फलम् । गोमत्यतेः क्विपि अतो लोपयलोपयोः कृतयोः अल्लोपस्य स्थानिवद्भावात् नुमो ऽप्राप्तावपि दीर्घे स्थानिवत्वनिषेधात्पूर्वं "अत्वसन्तस्य" इति दीर्घे तद्विशिष्टे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्याभावात् स्थानिवत्वाप्राप्त्या ततो नुमि रूपसिद्धेः । एवं पदः इत्यपि न फलम् । पादयतेः क्विपि शसि पदः इत्यादौ यद्यतो लोपस्य स्थानिवद्भावात् पदादेशो न स्यात्, तर्हि पादस्य पादित्येव सिद्धेः सामान्यग्रहणार्थेन पा-

यत्तु प्राचा वेति केचिदित्युक्त्वा सख्युः इत्याद्युक्तम्। यच्च तद्व्या-ख्यातृभिरुभयमप्येतद्भाष्ये स्थितमित्युक्तम्। यच्चात्रोपष्टम्भार्थं प्रसादकृता—

सख्युः पत्युः प्रसिद्ध्ये यत् ख्यत्यादित्याह पाणिनिः।
साधारणं तन्मन्वानाः सुख्युः सुत्युः सुखीः सुतीः॥
सुखीयतिसुतीयत्योर्यौ क्विन्तौ तयोर्विदुः।
निष्ठादेशस्य पूर्वत्रासिद्धत्वाल्लुन्युरादिकम्॥
सुख्य इत्यादि साध्वेतदुभयं भाष्यगौरवात्।

इति विचारचिन्तामणिस्थश्लोकोपन्यसनं कृतं तदेतत्सकलं भाष्यकैय-टापर्यालोचनमूलकमिति कृतबुद्धय एव विदांकुर्वन्तु। शुष्किय इति।

यत्तु शुष्क्यः, पक्व्यः, शुष्क्युः, पक्व्यु, इत्युदाजह्रुः। भाष्ये स्थितमि-ति चोपसंजह्रुः। तदति रभसात्॥ इति ईदन्ताः॥

"तृज्वत् क्रोष्टुः" ( पा० सू० ७।१।९५ )॥ क्रुश आह्वाने। अस्मात् "सितनि"(उ०सू०) इति तुन्प्रत्यये क्रोष्टुशब्दः, तृचि तु क्रोष्टृशब्दः। द्वावपि सृगालवाचिनौ। तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव। तृतीयादावप्युभयम्, अन्यत्र तु तुन्नन्त एवेति नियमार्थं त्रिसूत्री

---

शब्दरत्न।

स्येत्यर्थः। अकारस्तूच्चारणार्थ इति भावः। साधारणमिति। ह्रस्वदीर्घसाधारणमि-त्यर्थः। विदांकुर्वन्त्विति। भाष्ये ऽस्यार्थस्यास्पृष्टत्वादिति भावः।

अतिरभसादिति। संयोगपूर्वकत्वेन यणो दुर्लभत्वादिति भावः। इयङ्यतो लोप-स्याभीयासिद्धत्वं तु न व्याश्रयत्वात्॥ इतीदन्ताः।

ज्योत्स्ना।

दस्य लोपकरणेन प्रकृते.स्थानिवद्भावो न भवतीति वक्तुं शक्यत्वात्। एवं त्वम् इत्यपि न फलम्। प्रथयतेः क्विपि त्वमित्यादिरूपाणामनभिधानस्योक्तत्वादिति चेन्न। क्यजन्तभिन्नानां गोमान् इत्यादिरूपाणामसिद्ध्यापत्तेः। तथाहि—सिद्धान्ते परं नित्यं च नुमं बाधित्वा आदौ दीर्घो भवति। त्वद्रीत्या तु क्यजन्तगोमान् इत्यादौ दीर्घस्य चारितार्थेन पूर्वोक्तवचनसामर्थ्यरूपबाधनिमित्ताभावात्पूर्वं नित्यत्वान्नुमि तद्विशिष्टे निर्दिश्यमानत्वाभावाद्दीर्घानापत्तिः। एवं त्वमित्याद्यपि फलमस्त्येवा, अनभिधानकल्पनापेक्षया फलवत्वस्यैव न्याय्यत्वात्। 'क्वौ लुप्तम्'इत्यस्य त्वमित्यपि फलमिति कैयटेन स्पष्टमुक्तत्वादिति दिक्।

त्रिसूत्री आरभ्यत इति। लाघवादेकस्यैव सूत्रस्य नियामकत्वेन सिद्धे सूत्रत्रयस्य

आरभ्यते। क्रोष्टुरिति तुन्नन्तात् प्रथमा। तृज्वदिति तृतीयान्ताद्वतिः। निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयकत्वेनातिदेशस्य षड्विधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते। तच्च न पचादेर्यस्य कस्यचित्। किं तु क्रुशेरेव उपस्थितत्वादर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह—क्रोष्टुशब्दस्थाने इति। नियमार्थमिति। अन्येषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः। क्रोष्टेति। अनङ्। हल्ङ्यादिलोपात्परत्वादुपधादीर्घः। स च "सर्वनामस्थाने च" (पा० सू० ६।४।८) इत्यनेन यद्यपि लभ्यते तथापि परत्वात्

शब्दरत्न।

नियमार्थमिति। फलतः प्रयोगनियमार्थमित्यर्थः। तृतीयान्तादिति। तृजन्तेन तुल्यं रूपं लभत इत्यर्थः। निमित्तेत्यादि। "पूर्ववत्सनः" (पा० सू० १।३।६२) "आद्यन्तवत्" (पा०सू० १।१।२७) 'सुबामन्त्रिते पराङ्गवत्' (पा० सू० २।१।२) इत्याद्यत्र यस्योदारणं तत्र तृजन्तत्वरूपनिमित्तस्य तद्व्यवहारस्य वाऽतिदेशे आहत्य तृच्छब्दं समुच्चार्य विहितकार्यस्यैवापत्तौ जसि गुणावादेशयोस्तृजन्तोद्देश्यको "अप्तृन्" (पा० सू० ६।४।११) इति दीर्घ एव स्यात्। स्वौजसादिषु चानङ्गुणौ न स्याताम्। न चोत्तरसूत्रद्वयेन साम(१)र्थ्यात् "अप्तृन्" (पा०सू०६।४।११) इत्यत्र क्रोष्टुग्रहणेनैव सिद्धावाद्येनापि सामर्थ्यात्कार्यमात्रप्रवृत्तिरिति वाच्यम्। तत्सामर्थ्येन रूपातिदेशस्यैव ज्ञापयितुं युक्तत्वात्। तादात्म्यातिदेशस्त्वसम्भवी सह प्रयोगाभावात्। शास्त्रकार्यातिदेशावपि न तुन्नन्तस्याद्युदात्ततया तृज्वद्भावेनोकारस्य रेफरूपयणादेशेऽपि तस्योदात्तस्यानिकयणोऽभावेन "उदात्तयणो हल्पूर्वात्" (पा० सू० ६।१।१७४) इति स्वरानापत्तेः। अर्थातिदेशस्त्वसम्भवी तयोरैक्यस्य स्वत एव सत्त्वाच्च। षड्विधत्वेऽपीति। अर्थातिदेशासम्भवं मत्वेदम्। युक्त्यन्तरमाह—प्राधान्यादिति। रूपमिति। तच्च "तृज्वत्" (पा० सू० ७।१।९५) इत्यत्र ऋकारस्योपस्थित्या तद्विशिष्टं क्रोष्टृ इति। तच्च तृज्वदिति चकारोच्चारणसामर्थ्यादन्तोदात्तस्वरविशिष्टमिति ऋकारस्योदात्तत्वात् "उदात्तयण" इत्यादिस्वरसिद्धिरिति बोध्यम्। संज्ञाशब्दानामिति। उणादिव्युत्पन्नानामिति शेषः। अतो धातृशब्दस्य दीर्घो भवत्येव। परत्वादिति। इदम(२)ग्रिमं च कार्यैक्येऽसम्भवा-

वि० (१) स्त्रियाम्, तृतीयादिषु च तृच्शब्दमुच्चार्य कार्याभावेन "विभाषा तृतीयादिष्वचि" "स्त्रियाञ्च" इति सूत्रद्वयेन तृज्वत्विधानसामर्थ्यात्, "तृज्वत् क्रोष्टुः" इति तृज्वद्भावस्य दीर्घमात्रफलकत्वे "अप्तृन्' इति सूत्रे क्रोष्टुग्रहणेनैव सिद्धे "तृज्वत्क्रोष्टुः" इति सूत्रारम्भसामर्थ्याच्चेत्यर्थः।

वि० (२) हे रमे इत्यत्र हल्ङ्यादिलोपात्परत्वात्सम्बुद्धिलोप इत्यत्रोक्तमित्यर्थः।

"अप्तृन्" (पा० सू० ६।४।११)इत्येव न्याय्यः । कृते ऽप्यनङि एकदेशविकृत-स्यानन्यत्वेन तृच्त्वात् । अन्यथा गुणे कृतेऽपि दीर्घो न स्यादिति भावः ।

"रात्सस्य" ( पा० सू० ८।४।२४ ) ।। इह तकारोऽपि प्रश्लिष्यत इति पक्षान्तरम् । तेन हल्ङ्यादिसूत्रस्थाने ङ्यापः सोरिति निष्कर्षे अविभर्भवा-नित्यादि सिद्ध्यति । अजर्घर्त् इत्यत्र तु चर्त्वस्यासिद्धत्वात् तलोपो न । ननु कीर्तयतेः क्विपि कीर्त् इह स्यादिति चेन्न । 'यथालक्षणमप्रयुक्ते' इति भाष्यम् । एतेनाववर्त् इति व्याख्यातम् । परत्वादिति । न च नुण्नित्य इति वाच्यम् । तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वादिति भावः । नुमचिरेति । ननु रेण स्वविषये प्राप्तं सर्वं बाध्यम् । बाद्धचसामान्यचिन्ता-श्रयणात् । तथा च वक्ष्यते । 'गुणदीर्घोत्वानामपवाद' इति । एवं चाविंशे-षाद् नुडप्यनेन बाध्यः । तत्कथं विप्रतिषेधः । उत्सर्गापवादयोस्तदयोगादिति चेत्सत्यम् । अत एव तदंशे विप्रतिषेधं दूषयित्वा "न तिसृचतसृ" ( पा०सू०६।४।४ ) इति ज्ञापकाद् नुडिति भाष्यकृतोक्तमिति सन्तोष्टव्यम् ।। इत्युदन्ताः ।।

---

शब्दरत्न ।

भावे विप्रतिषेध इत्यभिमानेन । यद्वा परत्वादुत्कृष्टत्वात् विशेषविहितत्वेन शीघ्रोप-स्थितिकत्वादित्यर्थः ।

निष्कर्षेति । अस्य पूर्वपक्षिण इति शेषः । यथालक्षणमिति । अप्रयुक्ते लक्षणाभावस्य योग्यतेत्यर्थः । बाध्यसामान्यचिन्तेति । सा च तृज्वत्सूत्रे भाष्ये स्पष्टा । एवं च "अचि र" ( पा० सू ७।२।१०० ) इति सूत्रस्थं 'अचि रादेशे जस्युपसंख्यानं गुणपरत्वात्' (का० वा०) इति वार्तिकं बाध्यविशेषचिन्ताभिमानेन प्रवृत्तमिति भावः । एतेन तद्वार्त्तिक-बलाज्जसोऽन्यत्र प्रियतिसरमित्यादौ गुणं कल्पयन्तः परास्ताः । तृज्वत्सूत्रस्थभाष्य-विरोधात् । "मपर्यन्तस्य" (पा०सू० ७।२।९१) इति सूत्रस्थप्रियतिस्रावित्यादिभाष्य-विरोधाच्च । अनेन—रेण । विप्रतिषेध इति । अचिरेणेत्यर्थः । दूषयित्वेति । यद्यपि "न-तिसृ" ( पा० सू० ६।४।४ ) इति ज्ञापकेन तदपवादत्वाभावकल्पनया विप्रतिषेध उपपद्यते । तथापि ज्ञापकानुसरणस्यावश्यकत्वेनैव तं दूषयित्वेत्यर्थः । इदं तृज्वत्सूत्रे भाष्ये । सन्तोष्टव्यमिति । अतिक्षोदस्तदंशे वार्त्तिकेन कार्यं इति भावः ।

ज्योत्स्ना ।

नियामकत्वेन गौरवात् । नियमशरीरन्तु उणादिव्युत्पन्नानां तृन्तृजन्तानां दीर्घो भवतिचेन् नप्त्रादीनामेवेति ।

अतिक्षोदः इति । अतिविचार इति तदर्थः । तादृशे—रांशे नुमागमोऽनुस्वारश्चेति ।

हूहूरिति । अव्युत्पन्ना संज्ञेयम् । अतिचमूशब्दे त्विति । "प्रथमलिङ्गग्रहणं च" ( का० वा० ) इत्युक्तेः । तथा च एवमतिचम्वादय इति प्राचो ग्रन्थो भाष्यविरुद्ध इति भावः ।

"वर्षाभ्वश्च" ( पा० सू० ६।४।८४ ) ॥ वर्षाभूशब्दस्य नित्यस्त्रीत्वात् स्त्रीलिङ्गप्रकरण एव एतत्सूत्रं वक्तुं युक्तम् । पुंल्लिङ्गे तु क्रियाशब्दाभिप्रायेण कथं चिद्योज्यमिति व्याचख्युः । तद्भ्रमात् । दर्दुरे हि पुंल्लिङ्गोऽयम्—

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

इत्यमरोक्तेः । भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात् ।

भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् ॥

इति यादवकोशाच्च । दर्दुरे षणीति पाठान्तरम् । षणीति पुंल्लिङ्गस्य प्राचां संज्ञा । दृभतीति । दृभी ग्रन्थे तुदादिः । व्युत्पादित इति । यद्यप्युज्ज्वलदत्तेन दृम्फूरिति पवर्गद्वितीयं पठित्वा दृम्फेर्नलोपाभावो निपात्यते इति व्याख्यातं, तथाऽपि वृत्त्यन्तरेषु दृभी ग्रन्थ इत्यस्मात् ढूप्रत्यये नुमागमो निपात्यते । इत्युक्तम् । एतच्च माधवग्रन्थे स्पष्टम् । दशपादीवृत्तौ तु दर्भणं दृम्भूः । नुमागमोऽनुस्वारश्च निपात्यते इत्युक्तम् । अयमूकारो न धातोरित्युवङो ऽप्रसङ्गात् । "इको यणचि" ( पा० सू० ६।१।७७ ) इति यण् । स च "अमि पूर्वः" ( पा० सू० ६।१।१०७ ) "प्रथमयोः पूर्वसवर्णः" इत्याभ्यां बाध्यत इत्याशयेनोदाहरति—दृम्भूमित्यादि । न चेह "दृन्कर" ( का० वा० )

---

शब्दरत्न।

दशपादीति । अत्रारुचिबीजं तु नुम्निपातनं व्यर्थम् । न च परसवर्णाभावार्थमुभयनिपातनम् । नुम्येव निपात्ये ऽनुस्वारनिपातनसामर्थ्येनैव तदभावसिद्धेरिति । एवं चायमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणा भाव्यमिति दृन्पूर्वकभूप्रकृतिकदृन्भूशब्देन सह न रूपविशेष इति माधवश्चिन्त्यः(१) । निपात्यत इति। एकादेशस्य पूर्वान्तत्वेन भूत्व-

ज्योत्स्ना।

परसवर्णार्थमिति शेष इत्यजन्ता पुंल्लिङ्गा इति । अत्र कुत्वं न्याय्यम् । परेतु-"अल्पा-

---

वि० ( १ ) तत्रोवङादेशस्य प्रवृत्तेरत्र तदभावस्येति रूपे विशेषस्य स्पष्टत्वादिति ।

इति यण् शङ्क्यः । तत्र अर्थवत एव ग्रहणात् । अस्य तु दृन्शब्दस्य भूश-ब्दस्य च अनर्थकत्वादिति भावः । एवं चायं हूहूवदिति फलितम् । श्रीपति-मतेनाह—दृन्निति । माधवस्तु—"अन्दूदृम्भू" ( उ० सू० ) इत्यादिसू-त्रेण दृढशब्दे उपपदे कूप्रत्ययः । उपपदस्य दृन्नादेशश्च निपात्यत इत्याह । दृन्भूरिति तरुः सर्पजातिभेद इति केचित् । कपिरित्यन्ये । दृन्करेति । अत्र दृन्निति नान्तपाठो मुख्यः । मान्तपाठोऽपि केषांचित् । वक्तव्य इति । "वर्षाभ्वश्च" ( पा० सू० ६।४।८४ ) इति चकारोऽनुक्तसमुच्चयार्थः । अनुक्तं च भाष्यवार्त्तिकबलान्निर्णेयमिति भावः । तथा च "वर्षाभ्वश्च"( पा० सू० ६।४।८४ ) इति वार्त्तिकं व्याख्याय भाष्यकार आह—अत्यल्पमिद-मुच्यते, वर्षादृन्करपुनः पूर्वस्य भुव इति वक्तव्यमिति । वामनेन तु दृन्शब्दो न पठित एव । एवं स्थिते यत्प्राचा दृक्कारेति पठितं, यच्च तत्पौत्रेण महा-भाष्यकारवचनमर्थतोऽनुवदति इत्युक्तम् । यच्चान्यैर्वार्त्तिकेन पूरितमर्थमुदाहर-तीत्यवतारितं तत्सर्वं रभसकृतमेव । न च भाष्येऽपि दृगित्येव पाठ इति भ्र-मितव्यम् । "अन्दूदृन्भू" ( उ० सू० ९६ ) इति निपातित इति माधव-ग्रन्थेन कैयटादिग्रन्थैश्च विरोधापत्तेरिति यत्किञ्चिदेतत् । दीर्घपाठे इति । अयं च भाष्यवृत्त्यादिबहुग्रन्थसम्मतः पाठः । अनुस्मृतौ तु ह्रस्वः पद्यते ।

यत्तु तद्विवृतावुक्तम् । एकदेशविकृतस्यानन्यत्वात् कारपूर्वस्यापि सिद्ध-मिति । तन्न । तथाप्यन्प्रत्ययविशिष्टस्यान्यत्वात् । न ह्यण्प्रत्ययोऽपि विका-रः । तस्माद्ध्रस्वपाठे कारपूर्वकस्य उवङेव । तथा दीर्घपाठे करपूर्वस्य उवङि-ति विवेकः । स्वयम्भूशब्दवदिति । प्राचा तु दृग्भूकाराभूशब्दौ वर्षा-भूशब्दवदुदाहृतौ । तन्निर्मूलत्वादुपेक्ष्यमिति भावः ।। इत्यूदन्ताः ।।

"न्तृ च" ( पा० सू० ३।४।६ ) ।। इह "छन्दस्युभयथा" ( पा० सू०

---

शब्दरत्न ।

मिति भावः । वार्त्तिकमिति । एतेन भाष्ये पूर्वग्रहणं व्यवहितेऽपि प्रवृत्त्यर्थमिति वर्षा-दृभूरित्यादावपि यणिति परास्तम् । सूत्रवार्त्तिकानुरोधेन पूर्वग्रहणस्य परिभाषाप्राप्ता-र्थानुवादत्वौचित्यात् ।

उपेक्ष्यमिति । काराभूरित्यत्र काराशब्दः करोतेर्ण्यन्ताद्भिदाद्यङि निष्पन्नो बन्धन-गृहवाचकस्तस्य टापासहैकादेशस्य पूर्वान्तत्वेऽपि वार्तिके ग्रहणं न, प्रसिद्धत्वेन ह्रस्व-पाठैकवाक्यतया च ह्रस्ववाचकस्यैव ग्रहणादिति भावः ।

६।४।५ ) इति सूत्रात् 'उभयथा' इत्यनुवर्तते। 'छन्दसि' इति तु निवृत्तम्। तेन 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा' 'नृणामेको गम्यस्त्वमसि' इत्यादि प्रयोगाः सङ्गच्छन्ते।

केचित्तु 'छन्दसि' इत्यनुवर्त्तयन्ति। तदयुक्तम्। पूर्वसूत्रेणैव सिद्धे "नृ च" ( पा० सू० ६।४।६ ) इति सूत्रस्य वैयर्थ्यापत्तेः। यदपि पूर्वसूत्रे 'तिसृचतसृ' इत्यनुवर्तयन्ति। तदप्ययुक्तम्। अविशेषेण विकल्पदर्शनात्, तथा च धाता धातृणामिति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते। बह्वृचैस्तु दीर्घ इति दिक्॥ इत्यृदन्ताः॥

"ओता णिदिति वाच्यम्" ( का० वा० ) इति। गोत इत्यपहाय ओत इति वाच्यमित्यर्थः। तथा च गामित्यत्र परत्वाद्वृद्धौ सत्यामात्वं न स्यादित्याशङ्क्य निरवकाशतया आत्वेन वृद्धिर्बाध्यत इति "औतोऽम्शसोः" ( पा० सू० ६।१।८३ ) इति सूत्रे भाष्यकृतोक्तम्। कैयटोऽपि तत्रेत्थमाह— "ओत" ( पा० सू० १।१।१५ ) इति सूत्रे पाठ्यम्। 'गोत' इत्योकारोपलक्षणतया वा व्याख्येयमिति। वृत्त्यादिग्रन्थेष्वप्येवमेव स्थितम्। स्मृतौरिति।

यत्त्वाहुः—गोशब्देन औणादिकेन सादृश्याद् द्योशब्द एव लक्ष्यते। न त्वोकारान्तमात्रम्। तेन स्मृतोः स्मृतवौ स्मृतव इत्येव भवतीति। तद्भाष्यविरुद्धम्। गोद्योभ्यामेव परस्य णित्त्वाभ्युपगमे हि 'औतोऽम्शसोः' ( पा० सू० ६।१।८३ ) इत्यात्वस्य स्मृतामित्यादिरवकाशः स्यात्। तथा च गामित्यत्र परत्वाद्वृद्धेर्दुर्वारतया उदाहृतभाष्योक्तमात्वस्य निरवकाशत्वं च बाधकत्वं न सङ्गच्छेतेति दिक्॥ इत्योदन्ताः॥

"रायो हलि" ( पा० सू० ७।२।८५ )॥ 'अर्थरैविभवा अपि' इत्यमरात्पुंस्त्वम्। सं राया भूयसा सृजेत्यादिप्रयोगाच्च। 'रा यि छान्दस' इति

---

शब्दरत्न।

इत्यपहायेति। एतदवयवगकारमहायेत्यर्थः। इत्योकारोपलक्षणतयेति। तपरकरणेन गस्याविवक्षितत्वलाभादिति भावः।

निरवकाशत्वं चेति। चो हेतौ। यतो निरवकाशत्वमतो बाधकत्वमित्युक्तं न सङ्गच्छेतेत्यर्थः। अमरात्पुंस्त्वमिति। भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषणादिति भावः।

भाष्यम्। तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति "वान्तो यि" (पा०सू० ६।१।६९) इति सूत्रे कैयटः। केवलोऽपि च्छान्दस-इति पक्षान्तरं स एवाह। इत्यैदन्ताः।

'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः। एवं जनानवतीति जनौः। "ज्वर-त्वर" (पा० सू० ६।४।२० ) इत्यूठ्। "एत्येधति" (पा० सू० ६।७।८९ ) इति वृद्धिः। जनावौ जनाव इत्यादि ॥

॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

---

# अथ अजन्तस्त्रीलिङ्गप्रकरणम्।

रमेति। लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वात् स्वादयः। यत्तु—

---

शब्दरत्न।

भाष्यमिति। स्थानेऽन्तरतमसूत्रे इति भावः। क्यजन्तस्येति। राः रैशब्दो यि यकारादिप्रत्ययान्तश्छान्दस इति भाष्याक्षरार्थः। यकारेण यकारादिः प्रत्ययो लक्ष्यते। इकार उच्चारणार्थः। प्रायेण विसर्गरहित एव पाठः। तद्रा यादौ प्रत्यये इत्यर्थं इति भावः। न त्विति। अत एव रायमिच्छतीति विग्रहप्रदर्शनपरभाष्यं संगच्छते। न हि विग्रहश्छन्दः। अत एव रायि आशा राय्याशा इति "अचः परस्मिन्" (पा० सू० १।१।५७ ) इत्यत्र भाष्ये प्रयुक्तमिति भावः। पक्षान्तरमिति। अत्रारुचिबीजं स्पष्टमेव ॥

॥ इत्यजन्ताः पुंल्लिङ्गाः ॥

---

लिङ्गविशिष्टेति। तया परिभाषया प्रातिपादकत्वतद्व्या(१)प्यधर्माणां विशिष्टे बो-

ज्योत्स्ना।

च्तरम्" इति निर्देशात् "आदिरन्त्येन सहेता" इतिसूत्रबोधितसंज्ञासु हल्सन्धिकार्य्यं न प्रवर्तते इति प्रकृते कुत्वं नाशङ्कनीयमिति दिक्।

इत्यजन्तपुंल्लिङ्गे ज्योत्स्ना समाप्ता।

---

रमेतीति। रमतेः पचाद्यच्। नच घञजयः पुंसि इति पुंस्त्वापत्तिरिति वाच्यम्। तत्र सूत्रे भावे इत्यनुवृत्या भावार्थकतदन्तानामेव पुंस्त्वविधानेन कर्त्रर्थकाजन्ते तदप्राप्तेः। अत एव सम्बन्धमनुवर्तिष्यते, शेषं पुंवत् इत्यादौ पुंस्त्वक्लीबत्वमपि सङ्गच्छते। तद्व्याप्य-

---

प्र० ( १ ) तद्व्याप्यधर्मेति। कुम्भशब्दत्वादीनामित्यर्थः। नन्वेवं 'कुमारः श्रमणादिभिः' इति

आबन्तत्वादिति । यच्च व्याचख्युः—प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि पृथक् ङ्याप्योर्ग्रहणात् इत्यर्थ इति । तन्न । ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात् । एङ्ह्रस्वादिति । परत्वात्प्रतिपदोक्तत्वाच्च "सम्बुद्धौ च"

शब्दरत्न ।

धनेन तथा प्रातिपदिकत्वादित्यर्थः । ध्वनितं चेदं "बहुव्रीहेरूधस" ( पा०सू०४।१।२७) इत्यत्र भाष्ये(१) । परत्वादिति । असम्बुद्धौ हल्ङ्यादिलोपश्चरितार्थः । कृते लोपे एत्वं सावकाशमित्यभिमानः । ननु 'सत्यपि सम्भवे बाधनम्' इति न्यायविरोधो ऽत आह–प्रतिप-

ज्योत्स्ना ।

धर्माणामिति । कुम्भशब्दत्वादीनामित्यर्थः । नन्वेवं "कुमारः श्रमणादिभिः" इति ज्ञापकासङ्गतिः, कुमारशब्दत्वस्य कुमार क्रीड़ायामिति धातावपि सत्त्वेन प्रातिपदिकत्वव्याप्यत्वस्य कुमारशब्दत्वे ऽभावात् । नच समर्थकुमारशब्दत्वं प्रातिपदिकत्वव्याप्यं भवत्येवेति वाच्यम् । अदन्तप्रादिपदिकत्वादेरपि प्रातिपदिकत्वव्याप्यत्वेन अनया रमा खट्वा इत्यादावतिदेशेन "अत इञ्" इति इञ् प्रत्ययापत्तेः । इति चेन्न । पदप्रतिपाद्यस्य प्रातिपदिकत्वव्याप्यधर्मस्य ग्रहणेनादोषात् । तथाच अदन्तप्रातिपदिकत्वस्यानेकपदरूपवाक्यप्रतिपाद्यत्वेन कुमारपदस्य समर्थकुमारप्रकृतिकं लक्षणया समर्थकुमारपदत्वस्य च पदप्रतिपाद्यत्वेनादोषादिति दिक् ।

यत्तु लिङ्गविशिष्टपरिभाषया प्रातिपादिकत्ववदिति । तन्न युक्तम् । परिभाषया तद्विशिष्टस्यैव ग्रहणं बोध्यते इति तन्नेत्याशयेनाह—तयेति ।

भाष्ये इति । तत्र हि "नद्यृतश्च" इत्यस्य नद्यन्तबहुव्रीहित्वाभावात्तदसङ्गतिः स्पष्टैव । अस्मादेव भाष्यादेतत्परिभाषायाः प्रातिपदिकत्वव्याप्यधर्मातिदेशकत्वम् । "ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये ऽनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य शङ्कितत्वात्प्रातिपदिकत्वव्याप्यधर्मोऽप्यनया ऽतिदिश्यत इत्यलम् ।

प्रतिपदोक्तत्वाच्चेति । तदप्राप्तियोग्ये ऽचारितार्थ्यरूपबाधबीजस्य "सम्बुद्धौ च" इत्य-

ज्ञापकासङ्गतिः कुमारशब्दत्वस्य कुमारक्रीडायाम् इतिधातावपि सत्त्वेन प्रातिपदिकत्वव्याप्यत्वस्य कुमारशब्दत्वेऽभावात् । नच समर्थकुमारशब्दत्वं प्रातिपदिकत्वव्याप्यं भवत्येवेति वाच्यम् । अदन्तप्रातिपदिकत्वादेरपि प्रातिपदिकत्वव्याप्यत्वेनानया खट्वाशब्देऽतिदेशेन 'अत इञ्' इति इञ्प्रत्ययापत्तेः, इति चेन्न । पदप्रतिपाद्यस्य प्रातिपदिकत्वव्याप्यधर्मस्य ग्रहणात् , तथाच अदन्तप्रातिपदिकत्वस्यानेकपदरूपवाक्यप्रतिपाद्यत्वेन, कुमारपदस्य समर्थकुमारप्रकृतिकं लक्षणया समर्थकुमारत्वस्य च पदप्रतिपाद्यत्वेनादोषात् ।

प्र० ( १ ) भाष्ये इति । तत्रहि 'नद्यृतश्च' इत्यस्य नद्यन्तबहुव्रीहित्वाभावात्तदसङ्गतिः स्पष्टैव ।

इत्येत्वे कृते हल्ङ्यादिलोपो न प्राप्नोति । स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाभावात् । आआवित्याकारं प्रश्लिष्य दीर्घग्रहणप्रत्याख्यानात् । यथाश्रुतेऽपि "एङ्ह्रस्वात्" (पा० सू० ६।१।६९) इति लोपस्यैव परत्वेन न्याय्यत्वादिति भावः ।

"याडापः" (पा०सू० ७।३।११३) यद्यपि यडित्येवोचितं, न च "अतो गुणे" (पा० सू० ६।१।९७) इति पररूपापत्तिः । आकारोच्चारणसामर्थ्येनैव तद्बाधात् । तथाऽप्युच्चारणार्थोऽकार इति सम्भाव्येत । अतः स्पष्टार्थं याट् कृतः । वृद्धिरेचीति ।

यत्तु प्राचा "आटश्च" (पा० सू० ६।१।९०) इत्युदाहृतम् । तन्न । याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात् ।

"सर्वनाम्नः स्याड्ढ्रस्वश्च" (पा० सू० ७।३।११४) दीर्घोच्चारणं प्राग्वत् । अत्र वदन्ति—सर्वनाम्नोऽसुङ् चेत्येव सूत्र्यताम् । एवं च

शब्दरत्न ।

दोक्तत्वाच्चेति । अपवादत्वाच्चेत्यर्थः । यथाश्रुतेऽपीति । अकारप्रश्लेषाभावेऽपीत्यर्थः । परत्वेनेति । यौगपद्यसंभवेऽपि विप्रतिषेध इत्यभिमानेनेदम् ।

आटश्चेत्युदाहृतमिति । समुदायावयवयोः संनिधाने ऽनुबन्ध उभयोपकारकः । न चायमनर्थकः । अटोऽर्थवतः क्वाप्यभावादिति तदाशयः । इहाटोऽभावादिति । अयं भावः—सानुबन्धकनिर्देशेषु प्रायोगिकरूपासम्भवादौपदेशिकरूपग्रहणमिति वसंज्ञासूत्रे भाष्ये स्पष्टम् । उपदेशे च तेषामित्संज्ञकत्वादुपस्थिततद्गुणवतामेव प्रदेशेषु भानमिति टकारेत्संज्ञकाकारस्येत्यादिक्रमेणार्थः । "क्तक्तवतू निष्ठा" (पा० सू० १।१।२६) इति सूत्रे भाष्ये स्फुटमेतत् । पाणिनेश्च तत्र तत्र विशिष्टोपदेशे तात्पर्येण तत्प्रयुक्तेत्संज्ञकेन तस्यैव टित्वादिव्यवहारो नावयवस्य तदुपदेशे तात्पर्याभावात् । (१)एतेनौपदेशिकस्याच्परत्वाभावेन न वृद्धिप्राप्तिः नेष्यते च तत्र वृद्धिः । प्रयोगे तु नाडिति "आटश्च" (पा० सू० ६।१।९०) इत्यसङ्गतमित्यपास्तमिति ।

ज्योत्स्ना ।

त्र सत्वादिति भावः । एतद्ग्रन्थलापनयैव एतद्बाधबीजस्वीकारादितिभावः । वस्तुतस्तु एतद्बाधबीजाकथने ऽपि "हल्ङ्याब्" इति लोपे प्रत्ययलक्षणेनैतदप्रवृत्तौ बाध-

अस्मादेव भाष्यादेतत्परिभाषायाः प्रातिपदिकत्वव्याप्यधर्मातिदेशकत्वम् । 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्ये अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य शङ्कितत्वात्प्रातिपदिकत्वरूपधर्मोऽप्यनयाऽतिदिश्यते इति बोध्यम् ।

वि० (१) टकारेत्संज्ञकेति व्याख्यानेनेत्यर्थः ।

याटि परे ङित्त्वादन्त्यादेशे असुङि सर्वस्या इत्यादि सिद्धम्। स्याट्करणे ह्रस्वविधाने च प्रयोजनं चिन्त्यमिति। अत्रेयं चिन्ता। असुङ् चेत्युक्ते ऽमुष्यै इत्यादि न सिद्ध्येदिति।

वस्तुतस्तु आमि सर्वनाम्नः सुट् याटो ह्रस्वश्चेति सूत्रयितुं युक्तम्। न चैवं याट एव ह्रस्वापत्तिः। दीर्घोच्चारणसामर्थ्यात्। ह्रस्वोच्चारणेऽप्यकारसामर्थ्यादेवातो गुणस्य वारयितुं शक्यत्वादित्यवधेयम्।

---

शब्दरत्न।

याटि परे इति। अन्तरङ्गत्वात्पूर्वं याडिति भावः। न सिद्धेदिति। इत्याद्येव न सिध्येदित्यर्थः। पूर्वमसुङि असन्तत्वाभावेन मुत्वानापत्तिः। पूर्वं मुत्वे त्वसिद्धिः स्पष्टैव। एवं चामुमुयङित्यादिवद् व्याख्याभेदेन रूपद्वयमिहापि स्यात्। मुत्वपक्षे आस्थानिकत्वेनासुङा प्रत्ययतया तदवयवत्वेन षत्वसिद्धिः। एवं च (१)तत्रासान्तस्येत्यर्थं इत्यत्र स्याड्ग्रहणमपि ज्ञापकमिति भावः।

परे तु संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणेन नित्यत्वादसुङि रूपासिद्धिः। न च येन याडपि विधेयो 'असुङ्च' इति न्यासे इति वाच्यम्। "विभाषा द्वितीया" (पा०सू०७। ३।१०) इति सूत्रेण विनिगमकाभावादुभयोरपि विकल्पे द्वितीयायै इत्याद्यसिद्ध्यापत्तेः। किं चासुङो याडपवादत्वेन तद्विषये याट् दुर्लभः। 'अचि रादेशान्नुट् पूर्वविप्रतिषेध' इत्यसङ्गतम्। रादेशस्य बाध्यसामान्यचिन्तया सर्वापवादत्वेन नुडपवादत्वादित्याशङ्क्य "न तिसृचतसृ" (पा० सू० ६।४।४) इति दीर्घत्वनिषेधाद्रादेशो नुटं न बाधत इति भाष्ये उक्तं तृज्वत्सूत्रे। तस्माद्विषयभेदेऽपि येन नाप्राप्तिन्यायेन बाधकत्वमिष्यत एव। यद्यप्यस्याडादेशेन सिद्ध्यति तथाप्यवङ्सूत्रस्थभाष्यरीत्याऽऽन्तरतम्येन कदाचिदन्तस्योदात्तत्वे "एकादेश उदात्तेन" (पा० सू० ७।२।९) इत्यनेन विभक्तेरुदात्तत्वापत्तिरित्याहुः। सामर्थ्यादेवेति। उच्चारणार्थत्वं तु न व्याख्यानादिति भावः। "त्रेस्त्रय" इत्यत्र 'आमि' इत्यस्य मण्डूकानुवृत्तिरिति बोध्यम्।

ज्योत्स्ना।

कम्भावान्नदोष इति परिभाषेन्दुचन्द्रिकायां विस्तरः।

ननु प्रकृतसूत्रवत्त्रेरित्यत्रापि, तर्हि आमीत्यस्य सम्बन्धो न स्यादित्याह—"त्रेस्त्रयः" इत्यादीति। मण्डूकानुवृत्तौ मानन्तु अत्रेव त्रेरिति निर्देशः "त्रेः सम्प्रसारणम्" चेति निर्देशश्च। बहुषु सौत्रकल्पनापेक्षया मण्डूकानुवृत्तिरेव ज्यायसी।

अवधेयमिति। अनेनान्यदपि सूचितम्। तथाहि यदि मण्डूकप्लुतिर्मध्ये सम्ब-

---

वि० (१) "अदसोऽसेः" इति सूत्रेत्यर्थः।

"विभाषा" (पा० सू० १।१।२८)। गौणत्वादप्राप्ते विभाषेयम्। यत्त्वाहुः "न बहुव्रीहौ" (पा० सू० १।१।२९) इति निषेधे प्राप्त इति। तदापातत:। तस्यालौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वात्। अस्य च समासविषयत्वात्। योत्तरेति। यत्त्वाहुः। या पूर्वा सोत्तरा ऽस्या उत्तरपूर्वेति। तद्रभसात्। पूर्वनिपातवैपरीत्यापत्तेः। तीयस्येति। इदं हि पुन्नपुंसकयोरावश्यकम्। अनेनैव सिद्धौ "विभाषा द्वितीयातृतीया" (पा० सू० ७।३।१०५) इति सूत्रं न कर्तव्यमिति भावः।

### शब्दरत्न।

वैपरीत्यापत्तेरिति। अयं भावः—(१)वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थात्। तत्रोत्तरापदस्य ज्ञानविशेष्यपर्यन्तलक्षकतया गुणवाचकत्वेन पूर्वनिपातः। उत्तरस्यां पूर्वात्वप्रकारकज्ञानविशेष्यत्वं तु न विधेयम्। पूर्वापदस्य पूर्वनिपातापत्तेः। (२)'न विधौ परः शब्दार्थः' इति विधेयबोधके लक्षणानौचित्याच्च। त्वदुक्तविग्रहे तु पूर्वापदस्य यच्छब्दसमभिव्याहारेणोद्देश्यसमर्पकतया तस्यैव लाक्षणिकत्वेन गुणवचनतया पूर्वनिपातापत्तिरिति। न कर्तव्यमिति। स्पष्टं चेदं भाष्ये तृतीयाशब्दसाहचर्येण सहायवाचिद्वितीयाशब्दस्य न ग्रहणम्। भागार्थे विधीयमानस्यानो भक्ते विशेष्यत्वेन न स्त्रीत्वमनभिधानात्। एतेन तत्र लाक्षणिकत्वाद्वार्त्तिकाप्रवृत्ता विदमावश्यकम्। अत्र सूत्रे न सा परिभाषा प्रवर्तते, प्रतिपदोक्तस्याभावात्। न च महाविभाषया ऽनभावे वार्त्तिकप्रवृत्त्या रूपद्वयं सिद्धम्। अनो-

### ज्योत्स्ना।

न्धाभावोऽग्रे च सम्बन्धकल्पनायां गुरुभूतेत्याग्रहस्तर्हि "सर्वनाम्नो याटः सुड्ह्रस्वश्च" "आमि" "त्रेस्त्रयः" इति सूत्रत्रयमस्तु आमीत्यत्र "आजसेरसुक्" इति सूत्रादादित्यन्यनुवर्तते। "विभाषा द्वितीयातृतीयाभ्याम्" इति सूत्रमप्यत्रैव पाठ्यम्। तत्राविशेषादुभयोरपि विधेययोर्विभाषेत्यस्य सम्बन्धः। एवञ्च "अश्वक्षीर" इति सूत्रानन्तरं यदा "आमि" इतिसूत्रं तत्रत्यं सर्वनाम इति पदं तदस्तु। "याडापः" इतिसूत्रानन्तरं यत् "सर्वनाम्नः स्याड्" इति सूत्रं तन्न कार्यमिति। एवञ्च या मण्डूकानुवृत्तिरुक्ता

---

वि० (१) समासार्थप्रदर्शकलौकिकविग्रहवाक्ये इत्यर्थः।

वि० (२) जैमिनिशास्त्रप्रसिद्धोऽयन्न्यायः। उपक्रमोपसंहाराभ्यां यदर्थे तात्पर्यग्रहः, तत्रैवैकस्योद्देश्यत्वमपरस्य विधायकत्वम्। यदि विधायकस्यापि लाक्षणिकत्वं, तदा लक्षणाया अनुपपत्त्यादिग्रहणापेक्षत्वेन गुरुतया स्पष्टप्रतिपत्तये विवक्षितार्थबोधकस्य वाचकशब्दस्यैव प्रयोगः कर्तुमुचित इति भावः।

"अम्बार्थनद्योः" (पा०सू० ७।३।१०७)॥ अत्र वार्त्तिकम्—"मातुर्मातच् पुत्रार्थमर्हते" (का० वा०) इति । मातृशब्दस्य सम्बुद्धौ मातजादेशो भवति । मात्रा पुत्रस्य श्लाघ्यत्वे द्योत्ये । गार्गी माता ऽस्य गार्गीमातृकः । तस्य सम्बोधनं हे गार्गीमात । "नद्यृतश्च" (पा०सू० ५।४।१५३) इति समासान्तस्यापवादोऽयम् । यत्र तु श्लाघ्यत्वं न द्योत्यं, किं तु स्वरूपकथनमात्रं तत्र कबेव गार्गीमातृक । आवन्तं यदङ्गमिति । यत्तु "याडापः" ( पा० सू० ७।३।११३ ) इति सूत्रं व्याचक्षाणैरुक्तम् । अतिखट्वायेत्यत्र लाक्षणिकत्वान्न याट् । एवमतिसर्वायेत्यत्र न स्यादिति तद्भ्रमसात् । न ह्यतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषा प्रवर्तते अतिदेशवैयर्थ्यापत्तेः । तेन याट् दुर्वारः । स्याटस्तु प्रसङ्ग एव नास्ति । संज्ञोपसर्जनयोः पाठात् पर्युदासात् । केचित्त्विति । परिशिष्टकारादयः ।

शब्दरत्न ।

नित्यत्वाङ्गीकारात् । आद्युदात्तस्य तथापि रूपद्वयासिद्धेश्चेति परास्तमिति भावः ।

अत्रोपसंख्यानादाह–सम्बुद्धाविति । अर्हन्तं पुत्रमभिधातुं यो मातृशब्दः प्रयुज्यते तस्येत्यर्थः । सापेक्षत्वे ऽप्यत एव निपातनात्समासः । अर्हत्त्वं च पुत्रस्य मातृद्वारकमेव तदाह—मात्रा पुत्रस्येति । अपवाद इति । यदीदं न स्यात्तदा प्राप्नोतीति भावः । वैयर्थ्यापत्तेरिति । नन्वकारोऽयं लाक्षणिक इति तदाशयः, न च खट्वायै इत्यत्रापि याडानापत्तिः, सूत्रं तु निशायै इत्यत्र (१)चरितार्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वान्न चेह तथा एका-

ज्योत्स्ना ।

सा "आसि" इति पृथक्सूत्राकरणपक्षे इति दिक् ।

ननु लाक्षणिकत्वं यदि याडप्रवृत्तिसाधकं तर्हि खट्वायै इत्यादावपि न स्यादित्याशङ्कां निराचष्टे—नचेति ।

निशायै इत्यत्र चरितार्थमिति । "ङ्याप्प्रातिपदिकात्" इतिसूत्रे आवन्तस्थले पूर्वान्तवद्भावेनैव सिद्धे आब्ग्रहणं किमर्थमित्याशंक्य वहुदामेत्यादिडाबन्तम् व्यावर्त्यं प्रदर्शितम् । तत्र हलन्तेभ्यः आप्प्रत्ययेन सिद्धानां निशावाचादिशब्दानां व्यावर्तनीयत्व-

प्र० ( १ ) 'ङ्याप्प्रातिपदिकात्' इति सूत्रे आवन्तस्थले पूर्वान्तवद्भावेनेव सिद्धे आब्ग्रहणं किमर्थमित्याशङ्क्य वहुदामेत्यादिडावन्तं व्यावर्त्यं प्रदर्शितम्, तत्र हलन्तेभ्य आप्प्रत्ययेन सिद्धानां निशावाचादिशब्दानां व्यावर्तनीयत्वसम्भवे डाबन्तपर्यन्तानुधावनसामर्थ्याद्धलन्तादाप्प्रत्ययो नोत्पद्यत इति मते दामायै, सीमायै इत्यादिषु चारितार्थ्यं बोध्यम् ।

"ङिति ह्रस्वश्च" (पा० सू० १।४।६)॥ अप्राप्तविभाषेयम्। ह्रस्वयोरप्राप्तावितरयोस्तु "नेयङुवङ्स्थानौ" (पा०सू० १।४ ४) इति निषेधे प्राप्ते आरम्भात्। इहेयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि ईदूतोर्विशेषणानि ह्रस्वयोस्तु स्त्रिया(१)मित्येव न तु नित्यस्त्रीत्वपर्यन्तम्।

शब्दरत्न।

देशतः प्रागपि तद्रूपसत्त्वादिति चेन्न। वर्णग्रहणे तदप्रवृत्तेस्तैरप्युक्तत्वेन तद्विरोधादित्यभिमानः।

ह्रस्वयोरप्राप्ताविति। अत एव "यू स्त्र्याख्यौ" (पा० सू० १।४।३) इति सूत्रे ह्रस्ववटितवाक्ये (२)'न' इति निवृत्तमित्युक्तं भाष्ये। निषेधे प्राप्ते इति। भावतात्पर्यकता- लाघवानुरोधेनाप्राप्तविभाषात्वमेवोचितमिति भावः। ह्रस्वयोस्तु स्त्रियामित्येवेति। इष्वा-

ज्योत्स्ना।

सम्भवे डावन्तपर्यन्तानुधावनसामर्थ्याद्धलन्ताद्दाप् प्रत्ययो नोत्पद्यत इतिमते दामायै सीमायै इत्यादिषु चारितार्थ्यं बोध्यम्।

अभिमान इति। अनेनारुचिर्ध्वनिता "ओत्" इतिसूत्रे भाष्ये 'अग्नोऽभवत्' इत्यत्र "ओत्" सूत्रेण प्रगृह्यत्वप्राप्तिमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया अप्रवृत्तिस्तर्हि भाष्यविरोधः स्पष्ट एव। अत एव स्थानिवत्सूत्रभाष्ये अतिखट्वायेत्यत्रापः प्रत्ययत्वात्तदन्तस्य लाभे तस्याङ्गविशेषणत्वेन आबन्तान्तं यदङ्गमित्यर्थेन अतिखट्वायेत्यत्र प्राप्तस्यापि याटो "ङ्याब्ग्रहणेऽदीर्घः" इति वार्तिकेन समाधानेऽपि श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वमाश्रित्य पुनरपि याटः शङ्कां कृत्वा लाक्षणिकत्वेन समाधाय आकारप्रश्लेषे वार्तिकप्रत्याख्यानपक्षे समाधानान्तरञ्च कृतमिति लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिरेव समाधानमिति ध्वनितम्। नचाङ्गस्येत्यस्य विशेषणत्वेनाङ्गसंज्ञकं यदाबन्तमित्यर्थ एवोचित इति वाच्यम्। "पदाङ्गाधिकार" इतिवचनेन तस्य विशेष्यताया एवाङ्गीकारात्। अत एवार्धखट्वायै इत्यत्र याटः प्रवृत्तिः। एवञ्चात्र संमूलं परममूलञ्च प्राचीनानुसारेणेति हृदयम्।

स्त्रियामित्येवेति। दीर्घांशे तु आख्यापदविशिष्टस्त्र्याख्यपदं सम्बध्यते। तेन नि-

---

प्र० (१) स्त्रियामिति। दीर्घांशे तु आख्यापदविशिष्टस्त्र्याख्यपदं सम्बध्यते। तेन नित्यस्त्रीलिङ्गौ ईदूतावित्यादिरर्थः। अत एव "यू स्त्र्याख्यौ" इति सूत्रे अस्य दीर्घांशे निषेधविकल्पकत्वमुक्तं भाष्ये। तेन कटप्रुवे ब्राह्मण्यै इत्यादौ लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन नित्यस्त्रीत्वाभावाद्विकल्पो न भवति।

वि० (१) निवृत्तमिति निषेधस्य प्राप्तिपूर्वकत्वेन "यू स्त्र्याख्यौ" इति सूत्रे च दीर्घस्य ग्रहणेन विधेरप्राप्तेर्नेति निवृत्तमित्युचितमेवेति भावः।

अन्यथा इ्ध्वशानिप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां सर्वलिङ्गानां च स्त्रीत्वेऽपि नदीत्वं न स्यात् । कैयटरीत्या नित्यस्त्रीत्वात् । हरदत्तमतेऽपि ह्रस्वांशे नि-

शब्दरत्न ।

दिप्वप्राप्तिमाशङ्क्य "ङिति ह्रस्वश्च" ( पा० सू० १ । ४ । ६ ) इत्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयते इति कैयटोक्तिरुपक्रमानुरोधाद्ध्रस्वांशमात्रविषया। "यू स्त्र्याख्यौ" ( पा० सू० १ । ४ । ३ ) इति सूत्रे ऽन्त्येयङुवङ्स्थानावित्यंशस्य निषेधपरतया भाष्यं व्याख्यानेन निषेधस्य प्राप्तिपूर्वकतया तत्र नित्यस्त्रीलिङ्गावित्यस्यावश्यकत्वाच्चेति भावः । तदाह—अन्यथेति । कैयटरीत्येति स्त्रीविषयावेव यो यू नित्यमिति भाष्यस्वारस्येन लिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपस्य नित्यस्त्रीत्वस्य तेनोक्तेरिति भावः । हरदत्तमते ऽपीति। पूर्वभाष्ये एवो भिन्नक्रमः, नित्यमेव यौ स्त्रीविष-

ज्योत्स्ना ।

त्यस्त्रीलिङ्गौ ईदूतौ इत्यादिरर्थः । अत एव "यूस्त्र्याख्यौ" इति सूत्रे अस्य दीर्घांशे निषेधविकल्पकत्वमुक्तं भाष्ये । तेन कटप्रुवे ब्राह्मण्यै इत्यादौ लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन नित्यस्त्रीत्वाभावाद्विकल्पो न भवति ।

नित्यस्त्रीलिङ्गावित्यस्यावश्यकत्वाच्चेति । सूत्रकृत्प्रवृत्तिनिमित्तविशिष्टत्वं नित्यस्त्रीत्वम् । वैशिष्ट्यं च स्वविशिष्टशक्तिविशिष्टत्वम् स्वावच्छिन्नमुख्यविशेष्यतानिरूपितस्त्रीत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकबोधजनकत्वप्रकारतातात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वम्, एतदुभयसम्बन्धेन। शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यं च । स्वावच्छिन्नविशेष्यताप्रयोजकत्वम् स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वम्, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वम् एतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च—स्वपर्याप्त्यधिकरणत्वं स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेनेति दिक् ।

लिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपस्येति । स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम्, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वम् एतत्त्रितयसम्बन्धेन । प्रवृत्तिनिमित्तविशिष्टा या शक्तिः । स्वपर्य्याप्त्यधिकरणत्वं, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन। तादृशशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वस्येत्यर्थः । तेन—कैयटेन ।

हरदत्तसम्मतार्थस्य लाभोपायमाह—पूर्वभाष्ये इति । स्त्रीविषयावेव यौ नित्यमिति भाष्ये इत्यर्थः । अत्रेदं तत्वं सूत्रकारमते प्रवृत्तिनिमित्तविशिष्टत्वं नित्यस्त्रीत्वम् इति स्वीकारे वैशिष्ट्यसम्बन्धश्च प्रागुक्त एव । तथा च बहुश्रेयस्यै ब्राह्मणाय कुमार्यै

त्यग्रहणव्यावर्त्त्यालाभाच्च। अत एव आख्याग्रहणमपहाय स्त्रीशब्दमात्रं निष्कृष्य सम्बद्ध्यते तदेतदाह—ह्रस्वौ च इउवर्णौ स्त्रियामिति। औत्त्वे प्राप्त इति। परत्वादिति भावः।

यत्तु प्राचा "औत्" (पा० सू० ७।३।११८) इति सूत्रे घिनदीसंज्ञावर्जिताभ्यामिति व्याख्यातं नासावक्षरार्थः। किं तु पूर्वोत्तरसूत्रद्वयलभ्यः। एवं च "इदुद्भ्याम्" (पा० सू० ७।३।११७) इति सूत्रानुपन्यसनं प्राचः प्रामादिकमेव।

"अचि र ऋतः" (पा० सू० ७।२।१००)॥ गुणदीर्घोत्वानामिति। तिस्रस्तिष्ठन्तीत्यत्र "ऋतोङि" (पा० सू० ७।४।११०) इति गुणस्य, तिस्रः

---

शब्दरत्न।

यावित्यन्वयः, नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थं इति वृत्त्याशयं व्याचष्टे। इष्वादीनां च (१)शब्दार्थ एव स्त्रीत्वमिति तेषां पदान्तरं विनापि स्त्रियां वर्तमानत्वेन व्यावर्त्त्याभाव इति भावः। आख्याग्रहणमपहायेति। नित्यत्वार्थकमपहायेत्यर्थः। स्त्रीशब्दमात्रमिति। स्त्र्याख्यपदं स्त्रीबोधकावित्येतन्मात्रार्थकं निष्कृष्य पूर्वोक्तार्थमपहाय सम्बध्यते इत्यर्थः। परत्वादिति। ङेरामपेक्षयेत्यादिः।

तिस्रस्तिष्ठन्तीति। इदं प्रियतिस्रावित्यादेः "मपर्यन्तस्य" (पा० सू० ७।२।९७)

ज्योत्स्ना।

इत्यादावव्याप्तिरिति मत्वा "प्रथमलिङ्गग्रहणं कर्तव्यम्" इतिवदन् वार्तिककारः प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम्। वैशिष्ट्यंचात्र स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम् स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वम् स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वम् एतत्त्रितयसम्बन्धेन। शक्तिवैशिष्ट्यं च—स्वपर्याप्त्यधिकरणान्तत्व स्वज्ञानाधीनोपपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्य्याप्त्यधिकणत्वैतदुभयसम्बन्धेनेति स्वीचकार।

भाष्यकारस्तु अवयवस्त्रीत्वात्सिद्धमित्युक्त्वा "प्रथमलिङ्गग्रहणं कर्तव्यम्" इति वार्तिकं प्रत्याख्यातवान्। तथाच प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् वैशिष्ट्यं च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकार-

---

वि० (१) शब्दवाच्य एव। एवञ्च केवलस्याप्शब्दस्य प्रयोगे यथा स्त्रीत्वस्य प्रतीतिस्तथेष्वादिमात्रप्रयोगेऽपि भवतीति भावः।

पश्येत्यत्र "प्रथमयोः" ( पा० सू० ६।१।१०२ ) इति पूर्वसवर्णदीर्घस्य, प्रियतिस्र आगतः प्रियतिस्रः, स्वमित्यत्र "ऋत उत्" (पा०सू० ६।१।१११) इत्युत्वस्य रत्वमपवाद इत्यर्थः । वाध्यसामान्यचिन्तायां स्वविषये प्राप्तस्य सर्वस्य वाधादिति भावः । विशेषचिन्तायां तु 'मध्येऽपवादा' इति न्यायेन दीर्घोत्त्वयोरेव वाधः स्यान्न तु गुणस्य । सामान्यविशेषपक्षौ च जातिव्यक्तिपक्षवत्लक्ष्यानुरोधात् व्यवस्थितौ इति कैयटादौ स्पष्टम् ।

यत्तु व्याचख्युः—अपवादशब्दो वाधकत्वोपलक्षकः । पूर्वविप्रतिषेधेन गुणमपि वाधत इत्याशय इति । तन्निर्मूलं (१)क्लिष्टं च । यदपि प्रसादकृतोक्तम्—गुणस्य पूर्वविप्रतिषेधेनेतरयोः परविप्रतिषेधेन वाधक इत्यर्थ इति । तन्न । रविधेरचरितार्थत्वात् । न च टौसोश्चरितार्थता । यणा गतार्थत्वात् । त्रिचतुरोर्विशेषणादिति । श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव "स्त्रियाम्" ( पा० सू० ४।१।३ ) इति विशेषणं नाङ्गस्येति भावः ।

शब्दरत्न ।

इतिभाष्योदाहृतस्योपलक्षणम् । वाध्यसामान्येति । इदं च "तृज्वत्क्रोष्टुः" ( पा०सू०७।१।९५ ) इत्यत्र भाष्ये स्पष्टम् । वाध इति । अनन्तरस्येति न्यायाश्रयणे उत्वस्यैव वाधः स्यादिति बोध्यम् । ननु यत्रानेकविधिं प्रति येन नाप्राप्त्याऽपवादत्वं प्राप्तं तत्र व्यवस्थापका मध्येऽपवादा इत्यादिन्यायाः प्रकृते च रभावस्य न केनापि येन नाप्राप्तिरिति चेन्न । किमिदं येन नाप्राप्तिन्यायेन पूर्वसवर्णदीर्घापवादतया प्रथमाद्वितीयामात्रविषयम्, उत "ऋत उत्" ( पा०सू० ६।१।१११ ) इत्यपवादतया पञ्चमीषष्ठीमात्रविषयम्, उत "ऋतो ङि" (पा०सू० ७।४।११०) इति गुणापवादतया सर्वनामस्थानङिमात्रविषयमिति संशये व्यावस्थाकाङ्क्षया तन्न्यायप्रवृत्तेः सूपपादत्वात् । तन्निर्मूलमिति । "जसि रादेशो वक्तव्यो गुणपरत्वात्"(का०वा०) इत्येतत्सूत्रस्थं वार्त्तिकं मूलमिति न वाच्यम् । वाध्यसामान्यचिन्तामाश्रित्य तत्प्रत्याख्यानस्य तृज्वत्सूत्रे भाष्ये ध्वनितत्वेन तस्य दृढमूलत्वाभावात् । वाध्यसामान्यचिन्ताश्रयणे एव तस्य मूलत्वौचित्याच्च तदाह—क्लिष्टं चेति । नाङ्गस्येति । तस्याश्रुतत्वात् ।

ज्योत्स्ना ।

ताप्रयोजकत्व एतत्त्रितयसम्बन्धेन । शक्तित्वैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारतात्वविशेष्यतापर्याप्त्यधिकरणत्व एतदुभयसम्बन्धेनेति वदन्ति ।

---

वि० ( १ ) एकेन हेतुना सर्वबाधसिद्धौ अनेकहेतुना तस्य कल्पनं क्लिष्टमित्यर्थः ।

प्रियत्रिरिति। अत्र व्याचक्षते—स्त्रिया अन्यपदार्थत्वेन बहुव्रीहिरूपमङ्गं तत्र वर्तते त्रिशब्दस्तु पुन्नपुंसकयोरेवेति तिस्रादेशे नेत्यादि। अत्रेदं वक्तव्यम्। जहत्स्वार्थायां त्रिशब्दोऽनर्थकः। अजहत्स्वार्थायां तु स्त्रियां वर्तत एव। तत्कथं पुन्नपुंसकवृत्तिता सङ्गच्छतामिति। अत्रेदं तत्त्वम्। जहत्स्वार्थैव वृत्तिरिहाभिमता। लक्ष्यानुरोधात्। तेनाङ्गं स्त्रियामिति सम्यगेव। त्रिशब्दस्य पुन्नपुंसकवाचिता तु भूतपूर्वगत्या। उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात्। एवं प्रियतिसा पुमानित्यत्र स्त्रियां वृत्तिरपि भूतपूर्वगत्यैव। अजहत्स्वार्थापक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः। "प्रत्ययोत्तरपदयोश्च" (पा०सू० ७।२।९८) इत्येतत्सूत्रगतभाष्यग्रन्थसन्दर्भश्चेह प्रमाणम्।

अनित्यत्वादिति। "इकोऽचि" ( पा०सू० ७।१।७३ ) इत्यज्ग्रहणं चेह लिङ्गम्। तद्धि सम्बुद्धौ नुमं वारयितुं कृतम्। भ्यामादिषु सत्यपि नुमि तल्लोपसम्भवात्। सम्बुद्धिश्च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या।

शब्दरत्न।

स्त्रियां वर्त्तत एवेति। अजहत्स्वार्थायामन्यपदार्थस्य त्रिशब्देनाप्युक्ततया तस्य स्त्रियां वृत्तिः, न चेदं स्त्रीत्वं पदान्तरसापेक्षतया बहिरङ्गमिति वाच्यम्। त्रिशब्देन सर्वत्र स्त्रीरूपार्थप्रतिपादने तात्पर्यग्राहकस्यापेक्षिततया ऽन्तरङ्गाभावादिति भावः। तत्कथमिति। स्त्रियां तत्र च वृत्तिरिति पुन्नपुंसकयोरेवेति त्वदुक्तं विरुद्धमिति भावः। अजहत्स्वार्थापक्षे त्विति। तुनोक्तार्थे ऽरुचिर्ध्वनिता तद्बीजं तु रूढेरविरोधित्वे जहत्स्वार्थावृत्तेरभावः। किं च जहत्स्वार्थाऽजहत्स्वार्थाशब्दयोरवयवानां वाक्यदृष्टस्वार्थत्यागतदभावावित्येवार्थस्तत्रान्त्ये स्वार्थपुमादिवृत्तेः कथमन्यपदार्थस्त्रियां वृत्तिः। न चान्यपदार्थस्य समुदायशक्यत्वेऽपि समुदायघटकत्वेनावयवस्यापि स शक्य इत्याशयस्तर्हि जहत्स्वार्थत्वेऽपि तुल्यं, तत्रापि पक्षे ऽन्यपदार्थस्य समुदायशक्यत्वात्। यदि स्त्रीवाचकतापर्याप्त्यधिकरणत्वविवक्षेत्युच्यते तदा अजहत्स्वार्थत्वेऽपि तुल्यमिति।

तल्लोपसम्भवादिति। पञ्चत्रपुभ्य इत्यादौ समुदायभक्तो नुम् नावयवस्येगन्तत्वविघातक इतीगन्तोत्तरपदद्विगुत्वप्रयुक्तपूर्वपदप्रकृतिस्वरोऽन्तरङ्ग(१)त्वात्, नुमः पूर्वमेव स्वरप्रवृ-

ज्योत्स्ना।

"ङिति ह्रस्वश्च" इत्यत्र 'प्रथमलिङ्गग्रहणं च" इतिवच्चोदितं तदत्र द्रष्टव्यं विजा-

वि० (१) नुमापेक्षयाऽन्तरङ्गत्वादित्यर्थः। नुम् तु विभक्तिसापेक्षत्वेन बहिरङ्ग इति बोध्यम्।

प्रत्ययलक्षणं च "न लुमता" ( पा० सू० १।१।६३ ) इति निषेधस्यानित्यतां विना दुर्लभमित्याकरे स्पष्टम् । न चेदमनित्यत्वं सम्बुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यम् । लक्ष्यानुरोधेनान्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात् । तथा च प्रियतिसृ प्रियत्रि इति रूपद्वयमिति उक्तरीत्यैव कैयटेन समर्थितम् ।

पूर्वविप्रतिषेधेनेति । न चात्र प्रमाणाभावः । प्रियतिसृणि इत्यादिभाष्योदाहरणस्यैव तत्र प्रमाणत्वात् । द्वेरत्वे स्त्याविति । विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तम् । सन्निपातपरिभाषाया अनित्यत्वात् "न यासयोः" ( पा० सू० ७।३।४५ ) इति ज्ञापकाच्चेति भावः । इयादेश इति । अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ।

---

शब्दरत्न ।

त्तेश्च । अकृतव्यूहपरिभाषा त्वनित्या । अतिराभ्यामित्यत्रापि नुमं बाधित्वा परत्वादात्वं "वृद्ध्यौत्व" (का०वा०) इत्यत्र वृद्धिशब्दविहितवृद्धेरेव ग्रहणाच्च पूर्वविप्रतिषेधेन नुमिति शङ्क्यम् । प्रियतिसृभ्यामित्यादावपि नुमः परत्वात्तिस्रादेश एव । एतेन निर्दिश्यमानत्रिशब्दस्य व्यवहितत्वादादेशो न स्यादित्यपास्तम् । शुचीनामित्यादौ "नुमचिर" ( का० वा० ) इति पूर्वविप्रतिषेधेन सकृद्गतिन्यायेन नुमो ऽप्राप्त्या तत्र "इन् हन्" (पा० सू० ६ । ४ । १२) इति नियमाद्दीर्घो न स्यादिति न शङ्क्यम् । बहुभिः कुलैरित्यत्र नुमि पदत्वेऽपि "झल्युपोत्तमम्" (पा०सू०६।१।१८०) इत्यस्य प्राप्त्या तदभावेऽपि बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः । न चोत्तरार्थं, तत्रैव कर्तुं युक्तत्वादित्यन्यत्र विस्तरः । प्रियतिसृ इति । तथैव भाष्ये उदाहृतत्वेनानङि "न लुमता" ( पा० सू० १ । १ । ६३ ) इति निषेध एवेति बोध्यम् । अनित्यत्वे प्रमाणमाह—न यासेति । चो हेतौ ।

ज्योत्स्ना ।

नीयात्" इति भाष्यात् सूत्रकृत्सम्मतमेव नित्यस्त्रीत्वम् । अत्रेति पदस्वारस्यात् । "वामि"इत्यत्र तु—भाष्यवार्तिकसंमतनित्यस्त्रीत्वं गृह्यते । प्रथमलिङ्गग्रहणम् ,अवयवस्त्रीत्वात्सिद्धमित्युक्तत्वात् । "यू स्त्र्याख्यौ" इतिवत् । श्रीणाम् श्रियाम् ब्राह्मणानाम् इत्यादौ "वामि" इति विकल्पः सिद्ध्यति । अत एवोपक्रमे "वाऽमि" इत्यस्य निषेधपरतया व्याख्यानं सङ्गच्छते । अत एव च ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवतो, न तु पुंवाचकाविति वक्तव्यं शकटौ

"नेयङुवङ्स्थानावस्त्री" ( पा० सू० ७।३।४५ )॥ तिष्ठतो ययोरिति स्थानौ अधिकरणे ल्युट्। इयङुवङोः स्थानाविति षष्ठीसमासः। फलितार्थमाह—इयङुवङोः स्थितिर्ययोरिति। यत्रेयङुवङौ निष्पद्येते तत्रैवायं निषेधः। यत्र त्वपवादेन बाध्येते तत्र न निषेध इत्येतदर्थं स्थानग्रहणम्।

"वामि" ( पा० सू० १।४।५ )॥ यद्यपि प्रकृतो निषेधोऽनेन विकल्प्यत इति प्राञ्चः। तथाऽपि निषेधविकल्पे विधिविकल्प एव फलति। तथा च लाघवात् स एव सूत्रार्थ उचित इत्याशयेनाह—वा नदीसंज्ञौ स्त इति। "ङिति ह्रस्वश्च" ( पा० सू० १।४।६ ) इति सूत्रे ऽप्येवमेव। कथं तर्हीति। उवङ्स्थानत्वेन नदीत्वाभावात् ह्रस्वोऽनुपपन्न इत्याक्षेपः। बह्व इति। केचित्तु "वामि" (पा०सू०१।४।५) इत्यतो वाग्रहणमिहापकृष्य व्यवस्थितविभाषां चाश्रित्य समादधुः। तन्मन्दम्। तथा सतीह नञ्ग्रहणस्य "वामि", (पा०सू० १।४।५) इत्युत्तरसूत्रस्य च वैयर्थ्यापत्तेः। अन्ये तु सामान्ये नपुंस-

---

शब्दरत्न।

षष्ठीसमास इति। इयङादिस्थित्यधिकरणत्वेन क्व चिद्दृष्टावित्यर्थः, तेन हे श्रीरित्यादौ निषेधसिद्धिः।

ह्रस्वोऽनुपपन्न इति। "नेयङ्" ( पा० सू० १। ४। ४ ) इत्यत्रेयङादिनाङ्गाक्षेपात् यत्र नदीकार्याश्रये ऽङ्गे बाधकाबाधितेयङादिसत्ता क्व चित्प्रयोगे दृष्टा तस्य तदवयवस्य च निषेध इति भावः। कथं चिदिति। अनेन सीताविरहिणो रामस्य वाक्ये सीताया एव

ज्योत्स्ना।

अतिशकट्यै ब्राह्मण्यै क्व माभूत् शकट्यै अतिशकट्यै ब्राह्मणाय धेन्वै अतिधेन्वै ब्राह्मण्यै क्व माभूत् धेनवे अतिधेनवे ब्राह्मणाय श्रियै अतिश्रियै ब्राह्मण्ये क्व माभूत् श्रिये अतिश्रिये ब्राह्मणाय भ्रुवै अतिभ्रुवै ब्राह्मण्यै क्व माभूत् भ्रुवे अतिभ्रुवे ब्राह्मणाय इति भाष्यं सङ्गच्छते। अत्र च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेत्युक्त्या पूर्वोक्तं सूत्रकारसम्मतं नित्यस्त्रीत्वं "ङिति ह्रस्वश्च" इत्यत्र ग्राह्यमिति बोध्यते। अत्र षष्ठीबहुवचनोदाहरणदानेन "यू स्त्र्याख्यौ" इत्यत्रैव "वामि" इत्यत्रापि भाष्यकारादिसम्मतं नित्यस्त्रीत्वं ग्राह्यमिति बोध्यम्।

ह्रस्वोऽनुपपन्न इति। वस्तुतस्तु हापित इति विधिना त्वयाहं हापितस्त्याजितः हे सुभ्रु त्वं क्वासि इत्येवं बहुविललापेत्यर्थः। एवञ्च विरहपीडितत्वात् अनवधानतया तथोक्तविरहस्य पुष्टतागम्यते इति काव्यगुणत्वेन यत् परममूलेऽभिहितं प्रमाद एवायमित्यनेनानवधानलक्षणः प्रमाद इत्येवसमाधिर्युक्त इति बोध्यम्।

कमिति कथंचित्समादधुः ।

"न षट्" । ( पा० सू० ४।१।१० ) स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानाद् अनन्तरो ङीविव व्यवहितष्टाबपि निषिध्यत इत्याशयेनाह—ङीप्टापौ नेति । राः पुंवदिति । रैशब्दस्य स्त्रीलिङ्गताया अपि स्मरणादिति भावः । तथा च क्षीरस्वामी । रात्येनं राः स्त्रीत्येके इति । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ।

इत्यजन्ताः स्त्रीलिंगाः ॥

## अथाजन्तनपुंसकलिङ्गाः ।

"आतोऽम्" ( पा० सू० ७।१।२४ )॥ स्वमोरिति । अमोऽमविधानं लुग्बाधनार्थम् । अम्स्यादिति । एतच्च प्राचामनुरोधाद्व्याख्यातम् । संयोगा-

---

शब्दरत्न ।

विवक्षितत्वेनेदमप्यप्रयोजकमिति सूचितम् । "नञ्घटितमनित्यम्"(प०)इति तु भाष्यानुक्तत्वान्न लक्ष्यसंस्कारोपयोगि ।

इत्यजन्ताः स्त्रीलिङ्गाः ॥

ज्योत्स्ना ।

स्त्रियां यदुक्तं तन्न भवतीति । "न षट्स्वस्रादिभ्यः" इत्यत्र "टाबृचि" इत्यतः टापः "ऋन्नेभ्यः" इत्यतो ङीपश्चानुवृत्त्योभयनिषेधेन "डाबुभाभ्याम्" इत्यत्र "न षट्स्वस्रादिभ्यः" इत्यनुवृत्त्या डापो निषेधाच्चेति भावः । तथाच—स्त्रियां यत्प्राप्नोति तन्नेति व्याख्येयम् । अत्र प्राचीनोक्तं समाधानं निरस्यति—नञ्घटितमिति ।

इत्यजन्तस्त्रीलिङ्गे ज्योत्स्ना समाप्ता ।

---

लुग्बाधनार्थम् । येन नाप्राप्तिन्यायादिति शेषः । तथाहि—"स्वमोर्नपुंसकात्" इत्येतदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टाकृते चारितार्थ्याभावविशिष्टा "स्वमोर्नपुँसकात्" इत्येतत्प्रवृत्तिसम्भावनाप्रयोज्या या "अतोऽम्" इति शास्त्रवय्यर्थ्यसम्भावना तादृशसम्भावनारूपतृतीयबाधबीजस्य "अतोम्" इति शास्त्रे सत्वादिति भावः । एतन्न्यायविषये च "अतोऽम्" इत्येतत्प्रवृत्तियोग्यातिरिक्तत्वेन "अतोऽम्" इति

न्तलोपो झल इत्यभिप्रायेण वा। वस्तुतस्तु म् इत्येव पदच्छेदो लाघवात्। तत्र सोर्मे कृते ज्ञानमिति सिद्धम्। द्वितीयैकवचने तु "आदेः परस्य" ( पा० सू० १।१।५४ ) इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम्।

यत्तु वदन्ति। एवं सति "सुपि च ( पा० सू० ७।३।१०२ ) इति दीर्घत्वं स्यादिति। तन्न। सन्निपातपरिभाषाविरोधात्। यदपि दीर्घविधौ सा न प्रवर्तत इति। तदपि न। "रुधादिभ्यः श्नम्" ( पा० सू० ३।१।७८ ) "श्नान्नलोपः" ( पा० सू० ६।४।२३ ) इति सूत्रयोः "सुपि च" ( पा० सू० ७।३।१०२ ) इति दीर्घत्वे सन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृता ध्वनितत्वात्। कैयटेनोपपादितत्वाच्च।

यदप्याहुः—अतिजरसमिति न सिद्ध्येदिति। तदपि न। द्वितीयैकवचने

---

शब्दरत्न।

झल इत्यभिप्रायेणेति। एकवाक्यतया झल एव लोप इत्यभिप्रायेणेत्यर्थः। संयोगान्तलोप इति। झल्ग्रहणस्य तत्रापकर्षेऽपि वाक्यभेदेन सम्बन्धः। तेन (१)च पूर्ववाक्यस्य यण्व्यतिरिक्तेऽझल्यपि क्वचित्प्रवृत्तिरिति भावः।

सन्निपातेति। ह्रस्वाकारसन्निपातेन जातस्य तद्विघातकत्वायोगादिति भावः।

ज्योत्स्ना।

शास्त्रविधेयघटितातिरिक्तत्वेन च "स्वमोर्नपुंसकात्" इति शास्त्रे सङ्कोचो भवतीत्यतोऽम् इत्येतत्प्रवृत्तेः प्राक् तत्प्रवृत्त्यनन्तरं च ज्ञानम् इत्यादौ "स्वमोर्नपुंसकात्" इति लुग् भवतीति दिक्।

इत्येव पदच्छेद इति। अन्ये तु—अज्रहितो हलादेशस्य अस्मिन् शास्त्रेऽदर्शनादित्येतत् चिन्त्यमित्याहुः।

परे तु—"सुपि च" इति विघातकशास्त्रे कष्टायेति निर्देशेन "ङेर्यः" इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीति सङ्कोचे गुणात्सम्बुद्धेरित्येव वक्तव्ये एङ्ह्रस्वग्रहणेन च "अतोऽम्" इत्येतदतिरिक्तस्वोपजीवविघातकत्वाभाववान् लोपो भवतीति "एङ्ह्रस्वात्" इत्यत्र सङ्कोचे च "सुपि च" इत्यत्र "अतोऽम्" इत्येतदितिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीत्येवं सङ्कोचाभावात् ज्ञानमित्यादौ सन्निपातपरिभाषया न दीर्घः। नापि हे ज्ञान इत्यादौ सन्निपातपरिभाषया सम्बुद्धिलोपानापत्तिः। तथाच म् इति पदच्छेदे न कोऽपि दोषः। नचैङ् ह्रस्वादित्यत्राङ्गाक्षेपवैयधिकरणान्वयहल्पदानुवृत्तिक्लेशादित्याहुः।

---

वि० ( १ ) संयोगान्तस्य झलो लोप इति वाच्येन चेत्यर्थः।

हि "अतोऽम्" ( पा० सू० ७।१।२४ ) इति बाधित्वा परत्वाज्जरसि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिः स्पष्टैव, प्रथमैकवचने तु अति-

शब्दरत्न ।

परत्वाज्जरसीति । परे तु "जराया" (पा० सू० ७।२।१०१) इति सूत्रोक्तेनाजरांसी-त्यत्र 'नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति भाष्यप्रामाण्येन पूर्वविप्रतिषेधात् पूर्वं विभक्त्यादेशप्रवृत्तिरधिकविभक्त्यर्थापेक्षजरसादेशापेक्षया विभक्त्यादेशाना-मन्तरङ्गत्वाद्भावश्यं वाच्या । अन्यथा शिभावात्पूर्वमेव जरसः प्रवृत्तौ नुमा तस्य विप्रतिषेधविचारासङ्गतिः स्पष्टैव । अत एव "टाङसि" ( पा० सू० ७ । १ । १२ ) इति सूत्रे कैयटेनोक्तं 'भाष्यकारस्तु सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिज-रेणातिजरादिति भाव्यं न त्वतिजरसिन अतिजरसादिति गौरवमुद्भावितवान्' इति । भवद्रीत्या परत्वात्पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे तस्याप्राप्त्यापरि भाषया जरसादेशमनभ्युपयन्नित्यस्यासङ्गतिः स्पष्टैवेत्युच्यते, तदात्राप्यन्तरङ्गत्वादतोऽमि तथा जरसाभाव एवोचितः । न च तत्र नाकारान्तसन्निपातलक्षणमेवाजादित्वं, किं तु तद-भावेऽपि । एषा तु सन्निपातलक्षणविधिप्रवृत्तिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति वाच्यम् । मानाभावात् । "टाङसि" (पा०सू० ७।१।७७२) इति सूत्रस्थेनातिजरेणेत्येत-द्विषयककैयटेन विरोधाच्च (१) । एवं च जराशब्दविषयं परत्वादिनादीन्बाधित्वा जर-सित्यादि मूलमत्रत्यमनोरमा च प्राचामनुसारेणेति तदाह—एकवचने त्विति । तत्रापी-

ज्योत्स्ना ।

तदा इति । तदा इतिपदस्य पाठः प्राचीनपुस्तकेषु दृश्यते ।

कैयटेन विरोधाच्चेति । वस्तुतस्तु—विभक्तिसन्धिमात्रकार्यात् प्रागेव जरस् । यत्र

---

प्र० ( १ ) वस्तुतस्तु विभक्तिसम्बन्धिकार्यमात्रात्प्रागेव जरस् । यत्र जरसादेशस्य परत्वं तत्र 'विप्रतिषेधे परम्' इति परत्वात् जरस् यथा अजरांसि इत्यादौ इयादेशं बाधित्वा जरस् । यत्र या-डादयः पराः तत्रापि पूर्वविप्रतिषेधाज्जरस् । यथा जरसे इत्यादौ याडं बाधित्वा जरस् । अत एव 'जरसोऽवकाशः जरसा जरसे' इति भाष्यं सङ्गच्छते । अन्यथा तत्रापि परत्वात् याटि अजादिविभ-क्तिपरकत्वाभावाज्जरसोऽप्राप्त्याऽवकाशप्रदर्शनमसङ्गतं स्यात् । न च 'जराया' इति सूत्रस्थस्य शब्दरत्नोक्तार्थकस्य 'नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन' इति वार्तिकस्य विरोधापत्तिरिति वा-च्यम् । अतिजर अस् इत्यवस्थायां परमपि जरसादेशं बधित्वा नित्यत्वात् 'जश्शसोः' इति शिः कस्मान्न भवतीति शङ्कां मनसि संभाव्य इयादेशे कृतेऽपि परत्वान्नुमपेक्षया जरसादेश एव भवि-ष्यतीति जरसादेशस्यनित्यत्वं बोधयितुं तद्वार्तिकप्रवृत्तेः । नापि 'टाङसि' इतिसूत्रस्थकैयटविरोधा-पादनं युक्तम् । अतिजरआ इति स्थिते जरसोऽभवपक्षे इनादेशे कृते कुतो न जरस् इति शङ्कोत्थितौ 'सन्निपातपरिभाषया जरसादेशमनभ्युपयन्' इति ग्रन्थस्य प्रवृत्त्या तद्विरोधाभावात् ।

जरमित्येवेष्यते सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः। अत इति तकार उच्चारणार्थः। भसंज्ञायामिति। "सुडनपुंसकस्य" (पा० सू० १।१।४३) इति पर्युदासेनासर्वनामस्थानत्वादिति भावः।

"यस्य" (पा०सू०६।४।१४८)॥ इश्च अश्च यं तस्य। तदाह—इवर्णावर्णयोरिति। औङः श्यामिति। विभक्तित्वापेक्षया श्यामिति स्त्रीलिंगनिर्देशः।

"जश्शसोः" (पा० सू० ७।१।२०)॥ जसा साहचर्यात् शसपि सुबेव गृह्यते। तेनेह न कुण्डशो ददाति।

"शि" (पा० सू० १।१।४२)॥ शीत्यविभक्तिको निर्देशः। महासंज्ञाक-

शब्दरत्न।

त्यर्थः। अत इतीति। न तु तपरसूत्रप्रवृत्त्यर्थं इत्यर्थः। नपुंसके ह्रस्वावश्यम्भावाद् व्यावर्त्याप्रसिद्धेरिति भावः।

ननु तकारस्योच्चारणार्थत्वे 'म्' इति छेदे सन्निपातपरिभाषया दीर्घवारणं कथमिति चेन्न। यादृशशब्दसन्निपातेन सोरादेशस्तस्य विनाशेनादोषात्। अत एव दाक्षिरित्यादौ अङ्गसंज्ञा अकारान्तप्रकृतिप्रत्ययसन्निपातकृताऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्य अनित्यत्वेन भाष्ये समाहितमतस्तस्य सन्निपातस्य शब्दोपात्तत्वाग्रहाभावात्। भाष्यकृता तु मादेशे सन्निपातपरिभाषया सम्बुद्धिलोपाप्रासिसिया 'अम्' इत्येव च्छेदमङ्गीकृत्य "एङ्ह्रस्वात्" (पा०सू०६।७।६९) इत्यत्र व्यधिकरणान्वयहल्पदानुवृत्तिरूपगौरवं फलमुखत्वान्न दोषावहमित्यनुसृतम्। परिभाषाऽनित्यत्वेन तु न समाहितम्। तस्यागतिकगतित्वात्। किं च तस्यानित्यत्वे दीर्घापत्तिः। इदमपि तत्रैव भाष्ये ध्वनितमित्यलम्। विभक्तित्वापेक्ष्येति। तद्गतविभक्तित्वाश्रयणेन विभक्ताविति विशेष्यापेक्षयेत्यर्थः।

सुबेवेति। निरनुबन्धकपरिभाषया तद्धितशसोऽपि ग्रहणमिति नं वाच्यम्। येनानुबन्धेन सानुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः।

ज्योत्स्ना।

जरसादेशस्य परत्वं तत्र "विप्रतिषेधे परम्" इतिपरत्वात् जरस यत्र याडादयः परा तत्रापि पूर्वविप्रतिषेधाज्जरस्। यथाजरसे इत्यादौ याटम्बाधित्वाजरस्। यथा अधरांसि इत्यादौ परत्वाजरस् श्यादेशंबाधित्वा। अत एव जरसोऽवकाशः जरसा जरसे इति भाष्यं सङ्गच्छते। अन्यथा तथापि परत्वात् याटि अजादिविभक्तिपरकत्वाभावात् जरसोऽप्राप्त्याऽवकाशप्रदर्शनमसङ्गतं स्यात्। न च "जराया" इतिसूत्रस्थस्य शब्दरत्नोक्तार्थस्य नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन" इतिवार्तिकस्य विरोधापत्तिरिति वाच्यम्। अनिर्जर-अस् इत्यवस्थायाम् परमपि जरसादेशं बाधित्वा नित्यत्वात् "जश-

रणं पूर्वाचार्यानुरोधात्। अन्यतमस्य त्विति। एवं च 'सामान्यादिष्वन्यतमत्' इत्यादिप्रयोगाः प्रामादिका एवेति भावः। सोरमादेशे इति।

यत्तु प्राचोक्तम्—स्वमोरमादेशे वा जरसिति। तद्भाष्यविरुद्धम्। एवं च अजरसं वर्तते इति, हे अजरसमिति चापशब्द एव, अजरसं पश्येति तु प्रयोगः साधुः। किं तु अमादेशे कृते जरस् इति प्राच उक्तिरेवासाध्वी परत्वाज्जरसो न्याय्यत्वात्, पूर्वविप्रतिषेधे प्रमाणाभावाच्च।

"सान्तमहतः संयोगस्य" (पा० सू० ६।४।१०) ॥ सान्तेति पृथक्पदं लुप्तषष्ठीकम्। संयोगस्येत्यनेन समानाधिकरणमिति व्याचष्टे—सान्तसंयोगस्येति। उपधाया इति। उपाधाग्रहणं पूर्वमात्रोपलक्षणं पारिभाषिकार्थस्येहासम्भवात्। मासश्छन्दसीति। मासित्यस्य तकारः स्यात् भादौ प्रत्यये छन्दसीति वाक्यार्थः। माद्भिः शरद्भिर्दुरोदरं तव इत्युदाहरणम्।

"ह्रस्वो नपुंसके" (पा० सू० १।२।४७)॥ इह ह्रस्वश्रुत्या "अच" इत्युपस्थितम्। तेन प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह—अजन्तस्येति। प्रातिपदिकस्याच इति तु न व्याख्यातम्। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। सुवाग्ब्राह्मणकुलमित्यादौ अतिव्याप्तेश्च। सन्निपातेति। अवर्णमाश्रित्य कृतो यादेशः कथं तल्लोपे निमित्तं स्यात्। एतच्च "एओङ्" (म० सू० ३) सूत्रे "इको गुणवृद्धी" (पा०सू० १।१।३) इति सूत्रे

शब्दरत्न।

अनुरोधादिति। तेन स्वशास्त्रस्य प्रामाण्यज्ञापनमिति भावः। तद्भाष्येति। सन्निपातपरिभाषया विभक्त्यादेशे जरसभावस्य "जराया" (पा०सू०७।२।७७) इति सूत्रे भाष्ये स्पष्टमुक्तेरिति भावः। पश्येति त्विति। तुनाऽन्नारुचिर्बोधिता। तद्बीजं तूक्तम्।

अवर्णमिति। (१)ह्रस्वत्वविशिष्टमवर्णमित्यर्थः। यादेशेऽत इत्यनुवृत्तेस्तत्र यद्यपि "कष्टाय" (पा० सू० ३।१।१४) इति निर्देशप्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्त-

ज्योत्स्ना।

शसोः शिः" इति कस्मान्न भवतीति शङ्कामनसि निधाय श्यादेशे कृतेऽपि परत्वान्नुमपेक्षया जरसादेश एव भविष्यतीति जरसादेशस्य नित्यत्वं बोधयितुं तद्वार्तिकप्रवृत्तेः। नापि "टाङसि" इतिसूत्रस्थकैयटविरोधापादनं युक्तम्। अतिजर आ इतिस्थिते जर-

वि० (१) तत्र श्रीपायेत्यत्र अवर्णत्वम्, अत्त्वजातिरनुवर्तते। अस्तिग्रहणादिति पूर्वान्तावद्भावलभ्यधात्वयवपरत्वस्याचः परस्मिन्नित्यनेनाकारेऽतिदेशादित्यर्थः।

च भाष्ये ध्वनितं कैयटेन प्रतिपादितं शब्दकौस्तुभे निष्कर्षं प्रापितमिति तत एवावधार्यम्। एवं च याधातौ शुभंयाशब्दस्य क्लीबस्य ङयि शुभंय इति माधवेनोदाहृतं तन्नादर्तव्यमिति भावः।

"स्वमोर्नपुंसकात्" ( पा० सू० ७।१।२३ )॥ अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः। परत्वाद्धि त्यदाद्यत्वेऽम्भावेन तं कुलमिति स्यात्।

"वृद्ध्यौत्व" ( का० वा० ) इति। अतिसखीनि कुलानीत्यत्र "सख्युरसम्बुद्धौ" ( पा० सू० ७।१।९२ ) इति णिद्धावाद्वृद्धिः प्राप्ता। वारिणि इत्यत्र तु "अच्चघेः" ( पा० सू० ७।३।११९ ) इत्यौत्वं प्रियक्रोष्टनीत्यादौ तृज्वद्भावः प्राप्तः। ननु नुम्नुटोः को विशेषस्तत्राह—नामीति। नमस्तु अङ्गभक्तत्वात् तस्मिन् सति दीर्घो न स्यादिति भावः।

---

शब्दरत्न।

थाप्यवर्णत्वमादेशेऽनुवर्तते, तदपि चेल्लोपेन निवर्तते तर्हि परिभाषाविरोधः स्पष्ट एवेति भावः। भाष्ये इति। गाधातोष्टे गुणेन अकारे आर्धधातुकोपदेशे ऽदन्तत्वाभावादतो लोपाभावेऽपि पररूपेण सामगस्य सिद्धौ गापोष्टक: कित्करणाल्लिङ्गादाकारस्य गुणो नेति व्यर्थं तत्रेग्ग्रहणमिति भाष्ये उक्तम्। कैयटेनेति। सामगायेत्यत्रासति टकः कित्त्वे एकादेशस्य पूर्वान्तत्वेन ग्रहणात् आकारस्य धात्ववयवत्वेनातो लोपः स्यात्, कित्वे तु "आतो लोप" (पा० सू० ६।४।४७) इत्यालोपे धात्वनवयवत्वादप्रवृत्तिरित्याशङ्क्य सन्निपातपरिभाषयाऽकित्वेऽपि न आतो लोप इति तेन प्रतिपादितम्। शब्दकौस्तुभे इति। पूर्वोक्तभावश्च तत्रोक्तः।

परे तु व्याप्वा ऽत्वजातियनादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम्। सन्निपातपरिभाषायाश्च सन्निपातलक्षणविधिप्रवृत्तेः प्राक् तन्निमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थं इत्याहुः।

पूर्वविप्रतिषेधेनेति। 'अन्तरङ्गानपि' इत्यस्योपलक्षणमिदम्। अत्रत्यवार्त्तिकानुरोधेन त्वेतदुक्तम्। "त्यदादिभ्यश्चेति वक्तव्यम्" ( का० वा० ) इति हि तत्र वार्त्तिकम्। तं कुलमिति स्यादिति। द्वितीयैकवचन इति शेषः। प्रथमैकवचने तु संकुलमिति स्यादिति बोध्यम्।

ज्योत्स्ना।

सोऽभावपक्षे इनादेशे कृते न जरस् इतिशङ्कते। स्थितौ सन्निपातपरिभाषया जरसादेशमनभ्युपयन्निति ग्रन्थप्रवृत्त्या तद्विरोधाभावात।

"तृतीयादिषु" (पा० सू० ७।१।७४) । पुँवदिति । अर्थान्नुम्ह्रस्वयोः प्रतिषेधोऽयम् । प्रवृत्तिनिमित्तभेदादिति । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम् । फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा । उभयथाऽपि पुन्नपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः ।

"अस्थिदधि" ( पा० सू० ७।१।७५ ) ।। अतिदध्नेति । दधि अतिक्रान्तेनेत्यर्थः ।

यत्तु प्रियदध्नेति उरःप्रभृतिषु दधिमधुशालीति पाठात् नित्यः कप् प्राप्तः, भाष्यकारप्रयोगादेव प्रियदधिशब्दे न भवतीत्याहुः । तच्चिन्त्यम् । भाष्ये तादृशपाठस्य बहुषु पुस्तकेष्वनुपलम्भात् । स्त्रियान्तु प्रियदध्न्या प्रियदध्न्यै इति केचित् । तन्न । सन्निपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः । तस्मात् पुंसीव स्त्रियामपि अतिदध्नेत्यादिकमेव बोद्धव्यम् ।

सुधिनी इति । परत्वान्नुमा इयङ् बाद्ध्यते । सुधियेति । पुंवत्त्वपक्षे

शब्दरत्न ।

नुमह्रस्वयोरिति । पुंसि विहितस्य भावस्यातिदेश्यस्याभावात् ह्रस्वनुमो निषेधोऽति-

ज्योत्स्ना ।

पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति । अयं भावः—यत्प्रवृत्तिनिमित्तत्वं पुंस्त्वस्यान्वयितावच्छेदकं तदेव यत्र नपुंसकस्यान्वयितावच्छेदकं भवति तद्भाषितपुंस्कमित्यर्थः । पीलुशब्दे च वृक्षवृक्षत्वव्याप्यजातिरूपं पुंस्त्वस्यान्वयितावच्छेदकम् । फलत्वव्याप्यजातिरूपं च नपुंसकत्वस्यान्वयितावच्छेदकमिति न तस्य भाषितपुंस्कत्वमित्यर्थः ।

परे तु—भाषितः पुमान् यया शक्त्या सा भाषितपुंस्का सा विद्यते यस्मिंस्तद्भाषितपुंस्कम् । अर्शआद्यच् इति भावः । तत्वं च—प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् । शक्तौ प्रवृत्तिनिमित्तविशिष्टत्वं च । स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वं, स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वम् इत्युभयसम्बन्धेन । स्वपर्याप्त्यधिकरणत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्व एतदुभयसम्बन्धेन । पीलुशब्दे च यदि वृक्षत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं स्वाक्रियते, तदा स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्य तदवच्छिन्ननिरूपितशब्दौ सत्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्याभावात् । यदि फलत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं स्वीक्रियते तर्हि तदवच्छिन्ननिरूपितशक्तौ स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्य सत्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्याभावान्न दोषः इत्याहुः ।

नुमोऽभावादियङ् । बह्वयः श्रेयस्यो यस्य तत् बहुश्रेयसी कुलम् । अत्र नपुंसकह्रस्वत्वं न । "ईयसो बहुव्रीहेर्न" ( का० वा० ) इति ह्रस्वमात्रस्य प्रतिषेधादिति श्रीपतिपुरुषोत्तमविश्वरूपादयः ।

अन्ये तु उपसर्जनह्रस्व एव निषिध्यते नपुंसकह्रस्वत्वं तु स्यादेव । बहुश्रेयसि बहुश्रेयसिनी इत्याद्याहुः । स्नुः प्रस्थः सानुरस्त्रियामित्युभयलिङ्गः सानुशब्दः । तस्य नपुंसकत्वे रूपमाह—स्नूनि सानूनीति । पुंसि शम्भुवत् । प्रियक्रोष्टूनीति ।

शब्दरत्न ।

देशसामर्थ्याद् व्याप्तिन्यायाश्रयणाच्चेति भावः । "नब्विषयस्य" ( फि०सू० २६ ) इति स्वरस्य तु न निषेधो भिन्नकर्तृकत्वात् । विषयपदेन नपुंसकत्वाभावेऽपि तत्प्रवृत्त्यङ्गीकाराच्च ।

नुमोऽभावादिति । ह्रस्वाभावेन नाभावाभावाच्चेयङिति भावः । उपसर्जनह्रस्व एवेति । "ईयसो बहुव्रीहौ पुंवत्" इति हि भाष्ये पठितम् । ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत् पुंविषयस्य इकारस्य यथा न ह्रस्वस्तथाऽस्यापीति तदर्थः । ईयसन्ताद्विहितो यः स्त्रीप्रत्ययस्तदन्तात्बहुव्रीहौ पुंवदिति तु नार्थः । बहुव्रीहेः पुंवत्त्वेऽपि उपसर्जनस्य श्रेयसीशब्दस्य स्त्रीप्रत्ययान्तत्वानपायेन उपर्जनह्रस्वस्य दुर्वारतापत्तेः । एवं च प्रत्यासत्त्या स्त्रीप्रत्ययत्वनिमित्तगोस्त्रियोरित्यस्यैव तेनाभावातिदेश इति भावः । तदेवार्थतोऽत्र पठितम् । न च नेत्येव सिद्धे पुंवद्वचनं व्यर्थम् । वार्त्तिकेषु लाघवगौरवविचाराभावस्य तत्र तत्र भाष्ये ध्वनितत्वादिति बोध्यम् ।

इत्याद्याहुरिति । अत्रारुचिबीजं तु "ईयसश्च" ( पा० सू० ५ । ४ । १५६ ) इति सूत्रे भाष्ये "ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम्" ( का० वा० ) । बहुश्रेयसी । 'पुंवद्वचनात्सिद्धम्' इत्युक्तं, तेनास्य नपुंसकह्रस्वनिवृत्त्यर्थत्वं लभ्यते । अन्यथा वचनेन वचनप्रत्याख्यानासङ्गतिः । मम तु मते नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदिति युज्यते एव तेनास्य प्रत्याख्यानम् । दीर्घत्वं हि प्रत्यासत्त्योपसर्जनह्रस्वत्वापवादः ।

ज्योत्स्ना

स्वराभावस्यातिदेशो भविष्यतीत्याशङ्कां वारयति—नबिति । भिन्नेति । पाणिनिभिन्नशान्तनवकर्तृकत्वादित्यर्थः ।

ननु पाणिनिना यथा "अयामन्ताल्व" इत्यादिसूत्रेण अन्याचार्यविहितप्रत्ययानुवादेनायादेशविधानं कृतम् । तथाचान्यविहितस्वराभावस्याप्यतिदेशः स्यादत आह—विषयपदेनेति । ह्रस्वान्तस्य स्त्रीविषयस्येत्यतो विषयपदानुवृत्त्यैव सिद्धे पुनर्विषयोपादानसामर्थ्येनातिदेशिकलिङ्गान्तरयोगाय तस्य प्रवृत्तिरित्यर्थो भविष्यतीति भावः ।

यत्तु प्राचा प्रियक्रोष्टृणीत्युक्तम् । तत्पूर्वविप्रतिषेधपरभाष्यवार्त्तिकविरुद्धम् ।

यत्तु व्याचख्युः "विभाषा तृतीयादिष्वचि" ( पा० सू० ७।१।७७ ) इत्येतद्विषयको विप्रतिषेधः। भाष्ये प्रियक्रोष्टुने अरण्यायेत्यस्यैवोदाहृतत्वादिति । तन्न । उदाहरणस्य सङ्कोचकत्वे मानाभावात् ।

यदाहुः—न चोदाहरणमादरणीयमिति । किं च पूर्वविप्रतिषेधस्य वैकल्पिकतृज्वद्भावमात्रविषयकत्वे तत्र तृज्वद्भावग्रहणं व्यर्थमेव स्यात् । प्रियक्रोष्टुनेत्यादेर्विप्रतिषेधं विनापि पक्षे सुसाधत्वात् । न च प्रियक्रोष्ट्रेत्यादिनिवृत्तिस्तत्फलम् । पुंवद्भावपक्षे तस्य दुर्वारत्वात् । स्वयमपि तथोदाहृतत्वाच्च । न च समाहारद्विगौ पञ्चक्रोष्टुनेत्यादौ पुंवद्भावाभावात् तत्र तृज्वद्भावनिवृत्तिः फलमिति वाच्यम् । एवमपि भाष्योदाहरणासामञ्जस्यात्। उपलक्षणं तदिति चेत्, हन्तैवं प्रियक्रोष्टूनीत्येवोपलक्ष्यतां भाष्योदाहृतप्रातिपदिकांशानुग्रहायेति दिक् ।

सुख्वेति । पुंवत्त्वपक्षे नुमभावाद्यण् । सुलुनेति । "ओः सुपि" (पा० सू० ६।४।८३ ) इति यणं बाधित्वा परत्वान्नुम् । यद्गिन्तमिति । एतच्च

शब्दरत्न ।

सामान्यतो ह्रस्वमात्रापवादत्वे हि प्रत्याख्यानासङ्गतिरिति दिक् । पूर्वविप्रतिषेधपरभाष्येति । अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तग्रहणेन 'यदागमा' इति न्यायेन नुम्विशिष्टस्य ग्रहणेऽपि सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेऽपि पूर्वविप्रतिषेधसामर्थ्यात्सकृद्गतिन्यायेन पुनस्तृज्वत्त्वाभावः । अत्रानयोर्यौगपद्यासम्भवेन विरोध इति भावः । इत्यस्यैवेति । अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागो निर्बीजः स्यादिति भावः । पक्षे—तृज्वत्त्वाभावपक्षे । उदाहृतत्वाच्चेति । न च प्रियक्रोष्टृणे इत्यादिव्यावृत्त्या चारितार्थम् । प्रियक्रोष्टु ए इत्यवस्थायां नुमृतृज्वत्वयोः प्राप्तयोः परत्वात्तृज्वत्वे सकृद्गतिन्यायेन नुमभावसिद्धेः । पुनः प्रसङ्गविज्ञानानाश्रयेण वचनारम्भापेक्षया सकृद्गतीत्याश्रित्य वचना(१)नारम्भस्यैव लघुत्वादिति भावः । पुंवद्भावाभावादिति । भाषितपुंस्कत्वाभावादिति भावः । इत्येवेति । इत्यपीत्यर्थः । प्रातिपदिकांशेति । प्रातिपदिकांशस्याप्यनुग्रहायेत्यर्थः ।

इति दिगिति । दिगर्थस्तु यद्यपि चतुर्थ्यन्तोदाहरणपरभाष्यप्रामाण्यात् पुंवत्त्वपक्षेऽनभिधानेन तृज्वत्वाभावकल्पना न्याय्या, भाष्यकृता हि सूत्रत्रयस्य प्रत्याख्यानाश्रितस्य शब्दानां नियतविषयकत्वस्य सूत्रारम्भेऽप्यावश्यकत्वद्योतनाय पूर्वविप्रतिषेधवार्तिके तदुदाहृतं, तथाऽपि 'न चोदाहरणमादरणीयम्' इति न्यायेन सर्वनामस्थानविषयकता ऽप्यस्य न्याय्या, उदाहृतातिरिक्तोदाहरणाभाव इत्येवंपरतया नादरणीय-

वि० ( १ ) पूर्वविप्रतिषेधवचनेनेत्यर्थः । भाषितेत्यादिसमाहारे द्विगौ तस्य सनपुंसकत्वविधानादिति भावः ।

-रा दाने इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम् ।
अन्ये तु सुद्यो शब्दो भाषितपुंस्कः । स एवेदानीमिगन्तः, एकदेशविकृतस्यानन्यत्वादतः पुंवद्भावो भवतीत्याहुः । तथा च रूपमालादौ पुंवद्भाव उदाहृतः । तस्मादेजन्तेषु क्लीवेषु पुंवद्भावो माधवमते नास्ति, मतान्तरे त्वस्ति । अतः प्रद्यवा प्ररायाा सुनावेत्यादि प्राचोदाहृतमपि नातीव दुष्यति ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

शब्दरत्न ।

-मिति तदर्थं इति बोध्यम् । एकदेशविकृतस्येति । स च न्यायोऽशास्त्रीयस्याप्यतिदेशकोऽशास्त्रीयविकारे चेति "प्राग्दीव्यत" ।(पा० सू० ४ । ८३ ) इति सूत्रस्थभाष्यसम्मतत्वादिति भावः । पुंवद्भाव इति । तेन सुन्दरभार्य इत्यादौ जातनिवृत्तेरपि इष्टत्वेनात्रापि तेन जातह्रस्वनिवृत्तिः ।

ननूपजीव्यविरोधेन ह्रस्वानिवृत्तिः । अत एव "समासस्य" (पा० सू० ६।१ २२३) इति सूत्रे भाष्ये "यतोऽनाव" ( पा० सू० ६।१।२१३ ) इत्यनाव प्रतिषेधो 'हलस्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इत्यस्य ज्ञापक उक्तः । नाव्यमित्यादौ आदिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरित्यनाव इति निषेधो ऽनर्थकः । न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्तु, यदन्तस्य द्व्यच्कस्यादिरुदात्तगुणकरूपो भवतीति च "यतोऽनाव" ( पा० सू० ६ । १ । २१३ ) इत्यस्यार्थ इति वाच्यम् । एवं हि निमित्तभूतद्व्यच्कत्वविनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तिरिति (१)तदाशय इति चेन्न । माधवाद्यनुरोधेनास्य ग्रन्थस्य सत्वात् ।

इत्यजन्ता नपुंसकलिङ्गाः ॥

ज्योत्स्ना

भाष्यसम्मतत्वादिति । तत्र हि दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमित्युक्त्वा किमर्थं विकृतनिर्देशः क्रियते । एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा "एकदेशविकृतमनन्यवत्" इति । अत एव रामावित्यादौ मान्ते यस्माद्विहितस्तत्वस्यातिदेशेन पदत्वस्य सिद्धिः ।

माधवाद्यनुरोधेनेति । अस्यायमाशयः—यदि नुटि कृतेऽप्यात्वं तदा सन्निपातपरिभाषा नुड्विषये न प्रवर्तते इति वक्तव्यम् । नचैवं सति रामाणाम् इत्यत्र "सुपि च" इत्येव दीर्घः "नामि" इत्यस्योपन्यासो व्यर्थः स्यादिति वाच्यम् । नित्यत्वेन तदुपन्यासात् । अनित्यायाः तस्याः कार्यसम्पत्त्यर्थः प्रवृत्त्यप्रवृत्तिर्मध्ये आत्वायाप्रवृत्तिकल्पना, तथेहापि पुंवद्भावेन जातह्रस्वनिवृत्तये तस्या अप्रवृत्तिकल्पना स्यादिति ॥

इत्यजन्तनपुंसकल्लिङ्गप्रकरणम् ।

---

वि० ( १ ) उक्तस्यानाव इति प्रतिषेधस्य ज्ञापकत्वप्रतिपादनाशयः ।

## अथ हलन्तपुँल्लिङ्गाः ।

लिडिति ॥ लिह आस्वादने क्विप् । लिट्सु लिट्त्स्विति । ढस्य जश्त्वेन डः तस्य "खरि च" (पा०सू० ८।४।४५) इति चर्त्वेन टः, तस्यासिद्धत्वात् "डः सि" (पा०सू० ८।३।२९) इति धुट्, चर्त्वम् तकारः। "न पदान्ताट्टोः" (पा०सू० ८।२।४२) इति ष्टुत्वनिषेधः। "चयो द्वितीया" (का०वा०) इति तु नेह प्रवर्तते । चर्त्वस्यासिद्धत्वात् । एतेन ते च प्रत्याहारा एकचत्वारिंशदिति प्राचो ग्रन्थं व्याचक्षाणैर्यदुक्तं लिट्सु लिठ्स्विति टठाभ्यां रूपद्वयमिति तत् प्रत्युक्तम् । तथा च प्रातिशाख्ये ऽपि—

'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्'

इति श्लोके ऽपदान्तेत्यादिविशेषणं सङ्गच्छते ।

"दादेर्धातोर्घः" (पा० सू० ८।२।३२) ॥ धातोरित्यावर्त्तते । तत्रैकमति-

---

शब्दरत्न ।

धुडिति । "ङः सि" (पा० सू० ८।३।२९) इति सूत्रेऽनुवृत्तं पदस्येति व्यधिकरणं पदावयवस्य सस्येत्यर्थ इति भावः । एके द्वितीयमिति । अत्रत्यवार्तिककारा इत्यर्थः । अपदान्तभाजमिति । इदमचर्त्वभाजमित्यर्थोपलक्षकम् । पदान्ते प्रायो जश्त्वप्राप्त्या चर्त्वं विना चयोऽलाभात् । तथा चेति वदता मूलकृता अस्यार्थस्य सूचनात् । अत एव सुगणठ्षष्ठ इत्यादौ भवत्येव । टुगादीनां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्त्या चर्त्वस्याप्यभावादिति भावः ।

धातोरित्यावर्तते इति । इदं प्राचामनुरोधेन । दादेरित्यावर्तते इति युक्तम् । धातो-

ज्योत्स्ना ।

लिडिति । झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्येत्यर्थः । न च लिहौ इत्यादौ हौ इति समुदायपदान्तत्वेन तत्र विद्यमानस्य हस्य ढत्वापत्तिरिति वाच्यम् । हस्य पदविशेषणत्वं स्वीकृत्य हान्तं यत्पदं तदवयवस्य निर्दिश्यमानस्येत्यर्थे तात्पर्यात् ।

इदं प्राचामनुरोधेनेति । धातुपदस्य "दादेः" इति सूत्रे स्थितस्य धातुप्रकृतिककर्तृक्विबन्तदामलिहादिव्यावृत्त्या तस्य चारितार्थ्येन उपदेश इत्यर्थलाभप्रयोजकत्वन्न स्यादत आह—मूले । धातोरित्यावर्तते । अस्यायमाशयः—सौत्रं धातोरिति पदम् "एकाच" इत्युत्तरसूत्रस्य तद्धाङ्शब्दावयवाद्वाह इत्यस्यैकाचः सत्वेन दस्य धकारवारणायावाश्यकमिति प्रकृतसूत्रेऽप्युपकारकमस्ति तावताप्युपदेशकाल इत्यर्थालाभः स्यादत आवृत्तिर्युक्तेति प्राचां हरदत्तादीनां मतं प्रकटयति—धातोरिति ।

रिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—उपदेश इति। आवृत्तिफलं

शब्दरत्न।

रित्यनेन हि औपदेशिकस्य धातोरित्यर्थेन दामलिहो व्यावृत्तावपि अधोगिति न संगृह्येत। दादेर्दादेरित्यनेनोपदेशकालिकदादेरित्यर्थकेनोभयं सिध्यति। उपदेशकालमित्यस्य तात्कालिकं लक्षयतीत्यर्थः। उपदेशे दादेरिति तु फलितोऽर्थः। वाच्यार्थत्वे षष्ठ्यन्तस्य सप्तम्या विपरिणामोऽपि कर्तव्यः स्यादिति गौरवम्। धातोरित्यस्यैव लक्षणया तथार्थकस्य दादेरित्यनेनान्वयेऽपि न क्षतिरित्याशयेन तु मूले धातोरित्युक्तम्। अत एव भाष्ये घत्वस्यासिद्धत्वाद्धुगित्यत्र ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधायाथ वा एवं वक्ष्यामि हो ढोऽदादे(१)रिति ततो धातोरिति दादेरिति वर्तते नेति निवृत्तमित्युक्तम्। द्रुहेस्तु "वा द्रुह" (पा० सू० ८।२।३३) इत्यनेन ढत्वस्यापि विधानात् ध्रुडित्यादौ न दोष इति तदाशयः। तत्र "धातोः"(पा०सू० ६।१।११) इति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्त(२)राभावेन तदुपदेशवद्दादिलक्षकं सामर्थ्यात्। अर्थाधिकारानुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम्। अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ। एवं च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्यौपदेशकालिकदादिलक्षकतोचिता आवृत्याश्रयणन्तु बालानां स्फुटं तत्प्रतिपत्तये इति बोध्यम्(३)। न चोपदेशे इत्येव कुतो नोक्तम्, गौरवापत्तेः। धातो-

ज्योत्स्ना।

फलितोऽर्थ इति। कालमात्रे लक्षणं विधाय उपदेशकालपदे बहुव्रीहिरितिस्वीकार्यम्। उपदेशकालिकदादित्ववतो धातोरिति सूत्रार्थः फलितः।

फलान्तराभावेनेति। दाद्यतिरिक्ते धातौ "पूर्वत्रासिद्धम्" इति घत्वस्यासिद्धत्वात् ढत्वस्य जायमानत्वेन तत्र घत्ववारणाय तदनुवृत्तिर्न सम्भवतीति भावः। ननु दाद्यवयवाभिन्नहस्य ढत्वविधानेन लेढिति लिट् दामनः लिट् दामलिट् इत्यत्र दाद्यवयवत्वेन ढत्वानापत्तिरितिचेन्न। अर्थाधिकारानुरोधेन औपदेशिकदादित्ववतो धातोर्भिन्नस्येत्यर्थेनादोषात्।

इति बोध्यमिति। अन्येतु—अत्रानुवृत्तदादिपदस्य दादिर्यो धात्ववयव इति वैयधिकर-

---

वि० (१) विशेषत उपादानेन विधीयमानढत्वस्यानिरवकाशत्वेन ढत्वस्य बाधकमिति भावः।

प्र० (२) फलान्तराभावेनेति। दाद्यतिरिक्तधातौ "पूर्वत्रासिद्धम्" (पा० सू० ८।२।१) इति घत्वस्यासिद्धत्वाद्ढत्वस्य जायमानत्वेन यत्र घत्ववारणाय तदनुवृत्तिर्न सम्भवतीति भावः।

प्र० (३) वस्तुतस्तु अत्रानुवृत्तदादिपदस्य दादिर्यो धात्ववयव इति वैयधिकरण्यान्वयसम्पादनेन चारितार्थ्यसंभवे उपदेशकालिकदादीत्यर्थे लक्षणाश्रयणे न मानम्। नचैवं अर्थाधिकारानुरोधात्पूर्वयोगेऽपि 'अदादेः' इति पदस्य दादिधात्ववयवभिन्नस्येत्यर्थे क्यजन्तदामलिट्शब्दे ढत्वानापत्तिरिति वाच्यम्। इष्टापत्तेः। अत एव भाष्ये घोऽदादेरित्युच्यते कथमधोगिति शङ्कायां धातोर-

पृच्छति । उपदेशे किमिति । अव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह—अधोगित्यादिना ।

"एकाचो बशो भष्" (पा० सू० ८।२।३७)॥ झलीति निवृत्तमिति । यत्तु प्राचोक्तम्—प्रातिपदिकसंज्ञस्य तु झलि परतः पदान्ते चेति । तत्प्रामादिकमेव । अधोक् अधोग्, अजर्घा इत्याद्यसिद्ध्यापत्तेः । प्रातिपदिकग्रहण-

शब्दरत्न ।

रिति तु वद्धादित्यादिव्यावृत्तये उत्तरत्रावश्यकम् । अव्याप्तीति । अधोगित्यादौ सा । ननु धातोरवयवो यो दादिरित्यर्थे इदं सिद्धं, वैयधिकरण्यं च गर्दभयतेरप्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं, दोग्धेति व्यपदेशिवद्भावात्सिद्धम् । स्पष्टं चेदं भाष्येऽत आह—अतिव्याप्तीति । दामलिडित्यादौ सा । न च प्रागुक्तभाष्योत्तरमधोक्सिद्धये वैयधिकरण्यान्वयपर्यन्तं भाष्यकृतोऽनुधावनं (१)व्यर्थमिति वाच्यम् । दादेरिति वर्तते इत्यस्योक्तमाशयमजानत 'एवमपि घोऽदादेरित्युच्यते । तत्राधोक् न सिद्ध्यति' इति शङ्कायामुत्तरसूत्रार्थमपि प्रसङ्गान्निर्णेतुं दादिपदलक्षणायामधोगित्यस्यासाधारणफलत्वाभावं दर्शयितुं च तथोक्तेः । अत एवाग्रे वैयधिकरण्यस्योत्तरार्थमावश्यकत्वोक्त्येहार्थमावश्यकत्वं भाष्ये ध्वनितं सङ्गच्छत इत्यलम् ।

तत्प्रामादिकमिति । धुग्भ्यामित्यादेः पदान्तत्वादेव सिद्धेरिति भावः ।

ज्योत्स्ना ।

व्यान्वयसम्पादनेन चारितार्थ्यसम्भवे उपदेशकालिकदादीत्यर्थे लक्षणाश्रयणे न मानम् । नचैवम् अर्थाधिकारानुरोधात् पूर्वयोगेऽपि अदादेरिति पदस्य दादिधात्ववयवभिन्नस्येत्यर्थे क्यजन्तदामलिट्शब्दे ढत्वानापत्तिरिति वाच्यम् । इष्टापत्तेः । अत एव घोऽदादेरित्युच्यते कथम् अधोग् इति शङ्कायां धातोरवयवो यो दादिरिति वैयधिकरण्येन समाधानमुक्तम् । भवन्मते दामलिट्शब्दे घत्ववारणायावश्यमुपदेशकालिकेऽर्थे लक्षणाया आश्रयणीयत्वेन तेनैवाधोग् इत्यस्य सिद्धौ "घोऽदादेः" इति शङ्काया वैयधिकरण्येन समाधानस्य चासङ्गतिः स्पष्टैव । तस्मादत्र लक्षणाश्रयणं नयुक्तम् । अत एव धातुग्रहणं सार्थकम् । अन्यथा औपदेशिकदादित्ववतो धातोरेव सम्भवेन धातुभिन्नस्य तथाभूतस्याप्रसिद्ध्या तद्ग्रहणं व्यर्थमेव स्यादित्याहुः ।

---

वयवो यो दादिरिति वैयधिकरण्येन समाधानमुक्तम् । भवन्मते दामलिट्शब्दे घत्ववारणायावश्यमुपदेशकालिकार्थे लक्षणाया आश्रयणीयत्वेन तेनैव अधोगित्यस्य सिद्धौ घोऽदादेरित्युच्यते इति शङ्काया, वैयधिकरण्येनेह सूत्रे समाधानस्य चासङ्गतिः स्पष्टैव । तस्मान्निरुक्तार्थे लक्षणाश्रयणं न युक्तम् । अत एव द्वितीययोगे धातुग्रहणस्य सार्थक्यम् । अन्यथौपदेशिकदादित्ववतो धातोरेव सम्भवेन धातुभिन्नस्य तथाभूतस्य अप्रसिध्या तद्ग्रहणं व्यर्थमेव स्यादिति विभावनीयम् ।

वि० (१) आवश्यकदादिपदलक्षणयैवेष्टसिद्ध्या तद्व्यर्थमिति भावः ।

स्याप्रकृतत्वाच्च। तत्र झलो निमित्तत्वानुपयोगाच्च। धुग्भ्यां धुक्षु इत्यादौ पदान्त इत्येव सिद्धेः। यदपि तत्पौत्रेण व्याख्यातम्। झलि परे प्रातिपदिकसंज्ञस्यैवेत्यादि। तदपि निर्मूलं निष्फलं चेत्युपेक्ष्यम्। भष्भाव इति। जश्त्वचर्त्वयोरसिद्धत्वात्ताभ्यां प्रागेवेति भावः। षत्वचर्त्वे इति। चर्त्वस्यासिद्धत्वात् पूर्वं षत्वं, ततश्चर्त्वमिति भावः।

"वा द्रुह" (पा० सू० ८।२।३२)॥ द्रुहेर्दादित्वात् नित्यं प्राप्ते ऽन्येषामप्राप्ते उभयत्र विभाषेयम्। ननु द्रुहादयो दिवादिषु अनेनैव क्रमेण पठ्यन्ते, तत्र वा द्रुहादीनामित्येवास्तु दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिः, तदन्तर्गणो द्रुहादिरस्तु। मैवम्। तथा हि सति यङ्लुकि न स्यात्। 'निर्दिष्टं यद्गणेन च' इति निषेधात्। दोध्रुक्, दोध्रुट्।

---

### शब्दरत्न।

उपेक्ष्यमिति। एतेन "एकाचो बश" (पा०सू०८।२।३७) इति सूत्रे "ह्रस्वादङ्गात्" (पा०सू०२।४।२७)इत्यतोऽङ्गादित्यनुवर्तते, अङ्गं च द्विविधं धातुरूपं प्रातिपदिकरूपं च। तत्र धातोः पदान्त एव, प्रातिपदिकस्य झलि पदान्ते चेति प्राचामाशय इत्यपास्तम्। स्वरितत्वकल्पनविभक्तिविपरिणामादीनां निर्मूलत्वान्निष्फत्वाच्च। तद्धाट्(१) तद्धाड्भ्यामित्यादावतिव्याप्तेश्चेति दिक्।

निषेधादिति। भष्भावस्तु एकाज्ग्रहणेऽपि अजर्घा इति भाष्योदाहरणेन निषेधानित्यत्वाद्भवतीति भावः। "श्तिपाशपा" इति भाष्यानुक्तत्वादप्रमाणं वैचित्र्याय नु तथा नोक्तमित्यन्ये।

### ज्योत्स्ना।

तद्धाडिति। नचात्र दकारस्य धत्वे ऽपि पदान्तत्वाज्जश्त्वेन दत्वेन रूपे विशेष इति वाच्यम्। तन्दूयते इत्यर्थे तच्छब्दोपपदात् दूङ् परितापे इत्यस्यान्तर्भावितण्यर्थात् क्विपि तद्दूरितिजाते तदुपपदकादवङ् पूर्वात् अह व्याप्तौ इत्यस्मात् क्विपि जायमानतद्धाड्शब्दघटकधात्ववयवदकारे दोषोद्भावने तात्पर्यसत्वादित्यलम्।

---

प्र० (१) तद्धाडिति। न चात्र दकारस्य धत्वेऽपि पदान्तत्वाज्जश्त्वेन दत्वे न रूपे विशेष इति वाच्यम्। तं दूयते इत्यर्थे तच्छब्दोपपदकाद् 'दूङ् परितापे' इत्यस्मादन्तर्भावितण्यर्थात् क्विपि तद्दूरिति जाते तदुपपदकादाङ्पूर्वात् 'अह व्याप्तौ' इत्यस्मात् क्विपि जायमानतद्धाड्शब्दघटकधात्ववयवदकारे दोषोद्भावने तात्पर्यसत्त्वात्।

"इग्यणः" ( पा० सू० १।१४५ ) ॥ यणः स्थाने इति । विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणमिति भावः ।

"वाह ऊठ्" ( पा० सू० ६।४।१३२ ) ॥ "वसोः सम्प्रसारणम्" (पा० सू० ६।४।१३१) इत्यतोऽनुवृत्तं सम्प्रसारणमूठो विशेषणम् । तेन "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) इति न ।

यत्तु प्राचा वाशब्दस्येत्युक्तम् । नासौ सूत्रार्थः । किन्तु कथंचित्फलितार्थकथनपरतया नेयम् । छन्दस्येवेति । "छन्दसि सहः" (पा०सू० ३।२।६३) "वहश्च" ( पा० सू० ३।२।६४ ) इति सूत्रे छन्दसीत्यनुवृत्तेरिति भावः ।

यत्तु ऊठि कृते सवर्णदीर्घः भूहः, । भूहेत्यादि प्राचोक्तं तद्भाष्यविरुद्धम् । तथा हि—ऊठ्ग्रहणं मास्तु । सम्प्रसारणमेव विधीयताम् । तस्य लघू-

शब्दरत्न ।

सूत्रशाटकवदिति । अस्य सूत्रस्य शाटकं वयेत्यादौ 'यदि .वातव्यो न शाटको यदि शाटको न वातव्यः' इति विरोधमाशंक्य 'मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा संज्ञा भवति' इति भाष्ये उक्तम् । तथा प्रकृतेऽपि यणः स्थाने स भवति यस्य सम्प्रसारणशब्देन(१) जातस्य सम्प्रसारणसंज्ञा भवतीत्यर्थं इति भावः । तेन दिव उतो न सम्प्रसारणत्वम् ।

फलितार्थेति । सम्प्रसारणपूर्वत्वाभ्यां फलितेत्यर्थः । ऊठि कृते इति । भूवाट्शब्दे इति

ज्योत्स्ना ।

सम्प्रसारणशब्देन जातस्येति । नचैवं "वसोः सम्प्रसारणम्" इत्यादि विधिसूत्रे यावत्पर्यन्तं वाक्यार्थो न जातः तावत् सम्प्रसारणशब्देन जातत्वज्ञानस्याभावात् तद्वाक्यार्थज्ञानाधीनं सम्प्रसारणशब्दजातत्वबोधः, तद्बोधे च पदार्थज्ञानपूर्वको वाक्यार्थबोध इति परस्परापेक्षत्वरूपान्योन्याश्रय इति वाच्यम् । सम्प्रसारणशब्दभाविते यण्स्थानिके क्त्वावच्छिन्ने च सम्प्रसारणशब्दस्य खण्डशः शक्तिस्वीकारेण सम्प्रसा-

प्र० ( १ ) संप्रसारणब्देन जातस्येति । नचैवं 'वसोः संप्रसारणम्' इत्यादि विधिसूत्रेषु यावत्पर्यन्तं वाक्यार्थो न जातस्तावत् सम्प्रसारणशब्देन जातत्वज्ञानस्याभावात्तद्वाक्यार्थज्ञानाधीनं सम्प्रसारणशब्दजातत्वज्ञानं, तज्ज्ञाने च पदार्थज्ञानपूर्वको वाक्यार्थबोध, इत्यन्योन्याश्रय इति वाच्यम् । संप्रसारणशब्दभाविते यण्स्थानिकेक्त्वावच्छिन्ने च संप्रसारणशब्दस्य खण्डशः शक्तिस्वीकारेण संप्रसारणविधिस्थले संप्रसारणशब्दभावितत्वांशस्य मोषेणोक्तदोषाभावात् । "हलः" इत्याद्यनुवादस्थले चोभयांशोपस्थित्या द्युभ्याम् अपाचि इत्यादौ संप्रसारणशब्दभावितत्वाभावान्नः 'हलः' इति दीर्घापत्तिः ।

पधगुणे कृते "वृद्धिरेचि" ( पा० सू० १।१।१ ) इति वृद्धौ सिद्धं विश्वौह इत्यादि। एवं स्थिते क्रियमाणं वहिरंगपरिभाषां ज्ञापयति। सत्यां हि तस्यां बहिरंगस्य सम्प्रसारणस्यासिद्धत्वादन्तरंगो गुणो न स्यादिति भाष्ये स्थितम्।

नन्वनकारान्तेऽकारान्तोपसर्गे चोपपदे रूपे विशेषः चेन्मैवम्। भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाभावस्यानुमानादिति कैयटहरदत्तादयः। एतेन वायूहः प्रौह इत्यादिप्रयोगा अपि परास्ताः। अथवा ऊहतेः क्विप् इत्यवधेयम्।

"वसुस्रंसु" ( पा० सू० ७।२।७२ )॥ वसुः प्रत्ययः। तेन तदन्तं ग्राह्यम्। "ससजुषो रुः" (पा०सू० ८।२।६६) इति सूत्रात् 'स' इत्यनुवर्तते। तच्च वसोरेव विशेषणम्। न तु स्रंसुध्वंस्वोः। अव्यभिचारात्। नाप्यनडुहः। असम्भवादित्यभिप्रेत्याह—सान्तवस्वन्तस्येति। पदान्ते इति। झलीति तु प्राचः प्रमादः। स्रस्तमित्यादावतिव्याप्तेः।

"सहेः साडः सः" (पा० सू० ८।३।५६)॥ सहेरिति किम्? सह डेन वर्तत इति सडः। यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति। सडस्यापत्यं साडिः॥ इति हान्ताः।

---

शब्दरत्न।

शेषः। क्रियमाणमिति। ऊड्ग्रहणमित्यर्थः। तादृशस्थले इति। भत्वविषये इत्यर्थः। भूवाडित्यादि तु भवत्येव। ऊहतेरिति। एतद्वायूह इत्येतद्विषयम्।

अव्यभिचारादिति। स्रंसुध्वंस्वोर्विच् तु नास्त्यनभिधानात्। अतः संयोगान्तलोपे तत्र व्यभिचार इत्यपास्तम्। अत (१)एव भाष्यकृता सस्येत्यननुवृत्तौ पपिवान् इत्यत्रैव दत्वशङ्का कृता, अनुवृत्तौ चानडुद्भ्यामित्यत्रैव दत्वाभावशङ्का कृतेति दिक्।

ज्योत्स्ना।

रणविधिस्थले सम्प्रसारणशब्दभावितत्वांशस्य मोषेणोक्तदोषाभावात्। हल इत्याद्यनुवादस्थले चोभयांशोपस्थित्या द्युभ्याम् अपाचि इत्यादौ सम्प्रसारणशब्दभावितत्वाभावान्न "हल" इति दीर्घापत्तिः।

न तु स्रंसुध्वंसोर्विचिति। हल्ङ्यादिलोपे संयोगान्तलोपे च कृते सकारान्ताभावात्

---

वि० ( १ ) अनुवर्तमानसग्रहणस्य वसुमात्रविशेषणत्वस्य तादृशस्थले विचोऽनभिधानस्याभिप्रेतत्वादेव।

"दिव औत्" ( पा० सू० ७।१।८४ )॥ प्रातिपदिकस्येति। अव्युत्पन्नस्य, 'दिवेर्डिविः' इति न्यासोहितसूत्रेण व्युत्पन्नस्य वा, न तु 'दिवु क्रीडायाम्' इति धातोः। 'निरनुबन्धकग्रहणे न सानुबन्धकस्य इति परिभाषया। तेनाद्द्यूरित्यादौ न भवति। औतस्तकार उच्चारणार्थः। सुद्युभ्यामिति। उकारस्य सम्प्रसारणत्वात् "हल" ( पा० सू० ६।४।२ ) इति दीर्घः प्राप्त 'उत्' इति तपरत्वसामर्थ्यान्न भवति।

यत्तु प्राचोक्तम्—'दिवो वा आत्वमसि' इति तदुपेक्षितम्। मुनित्रयानुक्तेर्निष्फलत्वाच्च। द्यामिति रूपं द्योशब्दस्यैवेति बोध्यम्॥ इति वान्ताः॥

"षट्चतुर्भ्यश्च" ( पा० सू० ७।१।५५ ) बहुवचननिर्देशादर्थप्राधान्यं विवक्षितम्। अर्थाच्चामः परत्वं शब्दद्वारकम्। तेन तदन्तविधौ सत्यपि परमचतुर्णामित्यादावेव भवति, न तु बहुव्रीहौ। तदेतद्वक्ष्यति गौणत्वे तु नुट् नेष्यते इत्यादिना। द्वित्वमिति। "अचो रहाभ्याम्" ( पा० सू० ८।४।४६ ) इत्यनेन। रान्ताः॥

कमला लक्ष्मीः॥ लान्ताः॥

---

शब्दरत्न।

न्यासोहितेति। न्यासकृदूहितेत्यर्थः। निरनुबन्धकेति। डिवः प्रत्ययस्य सानुबन्धकत्वेऽपि तदन्तस्यातथात्वादिति भावः। इदं चात्र सूत्रे भूवादिसूत्रे च भाष्ये स्पष्टम्। उच्चारणार्थ इति। न तु स्वरितार्थः। उच्चारणार्थानामित्संज्ञायामपि प्रत्ययग्रहणमिति वार्तिकेन तदप्रवृत्तिरिति भावः। सम्प्रसारणत्वादिति। अतद्भावितस्यापि संज्ञेति पक्षे इदम्।

शब्दद्वारकमिति। न चैवं तद्वाचकशब्दात्परत्वमेवार्थात्परत्वमित्यायातम्। ततश्च प्रियपञ्चन् आमित्यत्रापि तद्वाचकपञ्चन्शब्दात्परत्वमस्त्येवेति दोषस्तदवस्थ इति वाच्यम्। एतत्सामर्थ्येन प्रधानीभूतषडर्थवाचकशब्दात्परत्वं विवक्षितमित्यभिमानात्।

इदं प्राचामनुरोधेन। द्विवचननिर्देशे गौरवात्समाहारेण सर्वत्र सूत्रेषु निर्देशादर्शनाच्च षट्संज्ञकानां बहुत्वाच्च बहुवचनोपपत्तेः। किं च "न षट्स्वस्रादिभ्यः" (पा० सू० ४।१।१०) इत्यादौ शब्दबाहुल्याभिप्रायेण बहुवचनस्येव 'तिसृभ्यो जस' इत्यादौ प्रयोगबाहुल्याभिप्रायेण तद्वच्चेहापि बहुवचनं वक्तुं युक्तम्। किं च "नामि" ( पा०

ज्योत्स्ना

व्यभिचारसम्भवात् अव्यभिचारकथनमसङ्गतमित्याह स्रंसुध्वंसोर्विच् तु नास्त्येवानभिधानादिति।

इति । औत्वाभावे त्वदाद्यत्वं साधुत्वम् । अमुक इति त्वसाधुः । सत्वेन मुख्यस्य बाधात् । एवममुकी अमुकशर्मा इत्यादयोऽप्यसाधव एव । अमुका अदकः शर्मेत्यादेरेव न्याय्यत्वात् ।

"एत ईद् बहुवचने" ( पा० सू० ७।२।७१ ) ॥ पारिभाषिकस्य ग्रहणे अमीभिरित्यादिसिद्धावपि जसि अमी इति न सिद्धयेत् । न ह्यत्रेकारस्य बहुवचनपरताऽस्त्यतो व्याचष्टे—बह्वर्थोक्ताविति ।

"न मुने" (पा०सू० ८।२।३)। ने इति विषयसप्तमीत्याह—नाभावे कर्त्तव्ये इति । अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः ।नन्वेवमपि कृते नाभावे "सुपि चे" इति दीर्घः स्यात् । दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह—कृते चेति। संनिपातपरिभाषया वा समाधेयम्। अत्रेदमवधेयम्। अमुनेतिवदमुनेति वक्तव्ये "न मुने" इत्युक्तिर्नेति योगविभागार्था । तेन रामो रामेभ्य इत्यादि सिद्धयति । अन्यथा रोरसिद्धतयोकारस्येत्संज्ञालोपौ कथं स्याताम् । न चानुनासिकनिर्देशसामर्थ्यादित्संज्ञा लोपौ प्रत्यसिद्धत्वं नेति वाच्यम् । तरुमूलमित्यादौ "हशि च" ( पा० सू० ६।१।१४)

शब्दरत्न ।

इत्यादावपि इत्वानापत्तेः । तस्मात्प्रश्लिष्टनिर्देशो नात्रेत्यत्रैव भाष्ये स्पष्टम् ।।एतेन विभक्तावित्यस्य "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) इत्यत्र विषयसप्तमीत्वमपास्तम्। एवं हि विभक्त्युत्पत्तेः पूर्वं त्यदाद्यत्वे टापि सावदस इत्यन्त्यस्यौत्वेऽपि स्थानिवत्त्वेनाप्त्वादित्वापत्तेः। निर्दिष्टपरिभाषायां सत्यां विषयसप्तम्या वक्तुमशक्यत्वाच्चेति दिक् । न्याय्यत्वादिति । क्वचित्सान्तत्त्वेन मुत्वाप्राप्तेः। क्वचित्सत्त्वेन बाधादिति भावः ।

न स्यादिति । इनादेशगुणौ च स्यातामित्यपि बोद्धयम् । हशिचेत्यस्येति । तदर्थमि-

ज्योत्स्ना ।

स्यादित्याह—इत्यादावपीति । अत्रापि प्राग् विभक्तिकार्यं प्रश्लेषसामर्थ्यात्कृते आकाररूपोप्यपरत्वाभावेन इत्वाप्रवृत्तेरिति तत्वम् ।

अन्यथेति । विषयसप्तम्यनङ्गीकारे इत्यर्थः । 'नाभावे कर्तव्ये' इत्यर्थस्वीकारे नाभावस्य सिद्धावपि मुत्वस्यासिद्धत्वेन नादेशगुणौ स्यातामिति रूपासिद्धिरिति दोष इति सूत्रासङ्गतिरस्त्येवेति विषयसप्तमीस्वीकारे नाभावविषये मुत्वन्नासिद्धम् इत्यर्थः । एवञ्च एनादेशगुणदृष्ट्याप्यसिद्धत्वन्नेति फलितम् ॥

तदर्थमिति । तरुमूलमित्यादौ "हशि च" इत्यस्ययथा व्यावृत्तिरनुनासिकनिर्देशस्य-

इत्यस्य व्यावृत्तयेऽतो रोरित्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात् । न च "अतो रोः" (पा० सू० ६।१।१३) इत्यत्र मास्त्वनुनासिकः प्रतिपदोक्तग्रहणेनैव निर्वाहादिति वाच्यम् । एवमपि देव रुहीत्यत्र रुधातोर्दुर्वारत्वात् । रांम इत्यादावप्यनुनासिकस्य रोः श्रवणस्यापाद्यमानतया चरितार्थत्वस्य सुवचत्वाच्च । एवं च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गोऽपि लभ्यते । "प्रत्ययः" ( पा० सू० ३।१।१ ) "परश्च" (पा० सू० ३।१।२) एत्यादिनिर्देशा यत्वविधावश्ग्रहणं चेह लिङ्गमिति दिक् ॥

इति हलन्ताः पुल्लिङ्गाः ॥

---

"नहो धः" ( पा० सू० ८।२।३४ ) ॥ द इत्येव नोक्तम् । तथा हि सति नद्धमित्यत्र "रदाभ्याम्" (पा०सू० ८।२।४२) इति नत्वं स्यात् "झष

---

शब्दरत्न ।

त्यादावतो रोरित्यस्य व्यावृत्त्यर्थमित्यपि बोद्धयम् । तत्रैव चरितार्थत्वादिति । सामर्थ्याच्चोत्वं सर्वादेशः । एवं च—योगविभागेनासिद्धत्वाभावे च । अश्ग्रहणं चेति । अत्र यद्वक्तव्यं तदुक्तं प्राक् ॥

इति हलन्ताः पुल्लिङ्गाः ॥

---

नतु संनिपातपरिभाषया नत्वं न स्यादत आह—झष इति । धत्वे कृते सन्निपा-

ज्योत्स्ना ।

फलम् तथा "अतो रोरप्लुतात्" इत्यस्य तर्वर्थमित्यत्र प्रवृत्तिवारणमपि फलम् इति प्रथमस्य तस्य त्यागे वीजाभाव इत्याह—तर्वर्थमित्यादौ । आदिना तर्वर्थरीत्या संग्रहो बोध्यः । ननूत्वविधायके प्रतिपदोक्तरुशब्दस्य ग्रहणेन न दोष इत्याशङ्कान्निराचष्टे मूले न चेत्यादिना ।

दिगिति । तदर्थस्तु—प्रकृतसूत्रे योगविभागः अप्रामाणिक इति स्वीकारे यत्वविधौ अश्ग्रहणेनोक्तार्थो ज्ञाप्यते । न च तत्रापि अश्ग्रहणे न फलमित्याशङ्कितरीत्या अश्ग्रहणे प्रत्याख्यातमिति वाच्यम् । "हलोऽनन्तरा" इत्यादिषु पदान्तत्वप्रयुक्तपूर्वरूपप्रवृत्त्योपपाद्यमानाः निर्देशा उक्तार्थे ज्ञापका इत्यलम् ।

इति हलन्तपुँल्लिङ्गं प्रकरणम् ।

---

वि० ( १ ) अत्र रुशब्दः प्रतिपदोक्त एवेति भावः । रुहीत्यत्र रुशब्द इति रुधातुः लडन्तमेतदिति बोध्यम् ।

स्तथोः" ( पा० सू० ८।२।४० ) इति च न स्यात् । अत्रेदमवधेयम् । सुष्ठु अनड्वाहो यस्यामिति बहुव्रीहौ स्वनड्वानित्यादि पुंवदेव रूपम् ।

यत्तु गौरादिङीषं कृत्वा स्वनड्वाहीत्युदाजह्रुस्तच्चिन्त्यम् । "अनुपसर्जनात्" ( पा० सू० ४।१।१४ ) इत्यधिकारविरोधात् । गीरिति । ग निगरणे शब्दे च । क्विप् । "ॠत इत्" (पा०सू० ७।१।१००) इतीत्वम् वोंरुपधाया दीर्घः । पूरिति । पॄ पालनपूरणयोः । "उदोष्ठ्यपूर्वस्य" ( पा० सू० ७।१।१०२ ) इत्युत्त्वम् । आशिषाविति । आशासः क्वावुपसंख्यानमित्युपधाया इत्वम् । "शासिवसि" ( पा० सू० ८।३।६० ) इति षत्वम् ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

---

अन्वादेश इति । अयं चाम्येवेति व्याख्यातारः । तस्य लुका लुप्तत्वेऽपि वचनसामर्थ्यात्प्रत्ययलक्षणमित्याहुः ।

वस्तुतस्तु सूत्रे एवैनद्वक्तव्यः । एनम् एनौ इत्यादि तु त्यदाद्यत्वेन सि-

---

शब्दरत्न ।

त्तपरिभाषाया अनित्यत्वान्नद्धमित्यादौ जश्त्वं बोध्यम् ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥



अम्येवेति । औशसादिष्वनेनैव सिद्धिरिति भावः । (१)त्यदाद्यत्वेनेति । न च येन ना-

ज्योत्स्ना ।

अनित्यत्वादिति । ननु हस्य यकारादेशे कृते नद्धमित्यादौ सन्निपातपरिभाषया जश्त्वं न स्यादित्याह—अनित्यत्वादिति । अत एव पास्पर्द्धि इत्यादौ जश्त्वम् माधवादिभिरुक्तम् । न च द इति न्यासे रभ्यामिवि प्राप्तं नत्वं वार्य्यते ध इति न्यासे तस्याः परिभापाया अनित्यत्वं स्वीकृत्य जश्त्वं क्रियते इति तयैव पूर्वापरविरोध इति वाच्यम् । लक्ष्यानुसारेण प्रवृत्त्यप्रवृत्योः स्वीकारेणादोषादिति दिक् ।

इति हलन्त स्त्रीलिङ्ग प्रकरणम् ।

---

प्र० ( १ ) एकदेश्युक्त्येति "यद्येनत् क्रियते एनो न वक्तव्यः कथमेनमित्यादि त्यदाद्यत्वेन सिद्धम् " । एवं रूपयेत्यर्थः । वस्तुस्त इदं भाष्यं नैकदेश्युक्तिः त्यदाद्यत्वविषये तकन्यायस्याप्रवृत्त्या, शब्दरत्नोक्तविषयसप्तम्याश्रयणेन वा एनदादेशेऽपि त्यदाद्यत्वेन सिद्धत्वादेनादेशो न क-

द्धम् । क्लीबेऽमि लुका लुप्तेरपि तकारोच्चारणसामर्थ्यादेनदादेशः । न चैव-मेतच्छ्रित इत्यत्रापि तदापत्तिः । एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेः ।

रोऽसुपि ॥ (पा० सू० ८।२।६९)॥ अहर्भातीति । प्राचा तु "अहन्" (पा० सू० ८।२।६८) इत्युपन्यस्तं तदिहानुचितम् । अहोभ्यामित्याद्यर्थतया कथंचिद्योज्यम् । असृक्शब्दस्त्विवति । तएच्च क्षीरस्वामिग्रन्थे स्पष्टम् ।

---

शब्दरत्न ।

प्राप्तिन्यायेनैनदस्त्यदाद्यत्वा(१)पवादत्वेन तत्र कृते कथं त्यदाद्यत्वम् । न चोपसर्जन एन चरितार्थः । त्यदाद्यत्वेन सिद्धमिति भाष्यासङ्गत्यापत्तेः । एनदोऽप्युपसर्जने "एतदस्त्रतसोः" (पा० सू० २।४।३३) इति साहचर्येणाप्रवृत्तेः स्वीकारात् । न च नपुंसकेऽमि तच्चारितार्थ्ये द्वितीयादिग्रहणस्यैवमप्यचारितार्थ्यादिति वाच्यम् । "आर्धधातुके" (पा० सू० २।४।३५) इत्येतत्साहचर्येणास्यापि द्वितीयादिविषये पूर्वमेव प्रवृत्तेरित्याशयात् । एतत्सर्वं 'भाष्ये यद्येनत् क्रियत' इत्याद्येकदेश्युक्त्या ध्वनितम् । स्वमोर्लुकेति । तद्विषये 'न लुमता' (पा० सू० १।१।६३) इति निषेधबाधेन चारितार्थ्येन बहिरङ्गलुग्विषये तद्बाधे न मानमिति भावः ।

वस्तुत एतत्सर्वमन्नत्यकैयटानुरोधेन । तकारोच्चारणसामर्थ्येन नपुंसकलुकीवात्रापि सामर्थ्यादेवैनत्प्रवृत्तेः । न च बहिरङ्गत्वम् । लुग्विषये बहिरङ्गपरिभाषाऽप्रवृत्तेः । अत एवैनदादेशे एतच्छ्रितक इति न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोतीति भाष्यं सङ्गच्छते । एनद्विधानेन एतत्सूत्रविषये "न लुमता" (पा०सू० १।१।६३) इत्यस्याप्रवृत्तिरिति

ज्योत्स्ना ।

कथं त्यदाद्यत्वमिति । वस्तुतस्तु त्यदाद्यत्वविषये तक्रन्यायस्याप्रवृत्त्या विषयसप्तम्याश्रयणाद्वा एनदादेशेऽपि त्यदाद्यत्वेन सिद्धे एनादेशो न वक्तव्यः । अत एव स इत्यादौ सत्वे त्यदाद्यत्वसिद्धिः । यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वमेवोचितम् इति कल्पनामात्रम् तदोत्तरादानेन भाष्याविरोधेन च सिद्धान्त्युक्तित्वस्यैव न्याय्यत्वात् ।

एकदेश्युक्त्येति । यद्येनत् क्रियते एनो न वक्तव्यः कथमेनदित्यादि त्यदाद्यत्वेनासि-

---

र्व्यः इति भाष्याभिप्रायस्य स्पष्टत्वात् । त्यदाद्यत्वविषये तक्रन्यायाप्रवृत्तेरेव सः इत्यत्र 'तदोः' इति सत्वे त्यदाद्यत्वं प्रवर्तते । न चोक्तभाष्यस्य यदि गर्भस्थत्वेनैकदेश्युक्तित्वं वाच्यम् । यदि गर्भस्थस्यैकदेश्युक्तित्वनियमाभावेन, उक्तशङ्कायां भाष्ये उत्तरादानेन, भाष्यान्तराविरोधेन च तद्भाष्यस्य सिद्धान्त्युक्तित्वात् ।

वि० (१) अत्वे कृतेऽकृते वा एनादादेशे विशेषाभावादिति भावः ।

बहूर्ज्जीति, अन्त्यादिति च वाचनिकम् । तथा च वार्तिकम्—'बहूर्जि प्रतिषेधः' ( का० वा० ) 'अन्त्यात्पूर्वो नुमित्येके' इति । भाष्ये तु अचः परो यो झल् तदन्तस्य नुमित्यर्थमाश्रित्य प्रथमं वार्तिकं प्रत्याख्यातम् । एवं तु उर्द माने, गर्ह गर्हायामित्यादीनामपि क्विबन्तानां नुमा न भाव्यमेव । यथोत्तरं मुनीनां प्रामाण्यादिति दिक् । अल्लोपस्येति । क्वौ लुप्तं न स्थानिवदिति तु नेहाश्रीयते । तस्य काचित्कत्वात् । क्वौ विधिं प्रति न स्थानिवदित्यस्यैव सार्वत्रिकत्वादिति स्पष्टमाकरे ।

अश्वाक्षिभूतानीति । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । तथा हि—सौ नवानामन्त्यस्य द्वित्वेऽष्टादश । औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां ञद्वित्वे सप्त । अनुनासिकस्तु नास्ति प्रगृह्यत्वात् । जसि ञद्वित्वस्यानुनासिकस्य च विकल्पात् द्वादश । सङ्कलनया सप्तत्रिंशत् । एवं द्वितीयायामपि । टायां चतुर्दश । भ्यामि अष्टचत्वारिंशत् । भप्राग्वर्ण-थ-मानां द्वित्वात् भि-

शब्दरत्न ।

तदाशयः । वस्तुत एषामनभिधानमेव । अस्यां शङ्कायां 'यथालक्षणमप्रयुक्ते' ( प० ) इति भाष्योक्तेः । विषयसप्तम्यां मानाभावे त्वैनैनतौ पृथग्वक्तव्यौ इत्याहुः ।

अचः पर इति । "नपुंसकस्य" ( पा० सू० ७।१।७२ ) इति सूत्रेऽज्ग्रहणसामर्थ्येनावृत्त्याऽच इत्यस्य झल्विशेषणत्वम् । अन्यथेगन्तानामिकोऽचीत्येव सिद्धया एजन्तेषु नपुंसकह्रस्वत्वेन चाकारग्रहणमेव कुर्यात् । आवृत्तौ मानं च "दाण्डिनायन" ( पा० सू० ६।४।१७४ ) इति सूत्रे हिरण्मयानोति निर्देश एव । काष्ठतङ्क्षीत्यादौ झल्त्वजातेरचः परत्वाद्भवत्येव नुम् । ऊर्क्शब्दादौ तु नेति भावस्तदाह—एवमिति । एतेन युज्शब्दाद् "नपुंसकस्य" ( पा० सू० ७।१।७२ ) इति 'युजेः' (पा० सू० ७।१।७१) इति च नुम्द्वयमित्यपास्तम् । 'युजे'रित्यस्य नित्यत्वात् पूर्वं प्रवृत्तौ अचः परझलोऽभावेन "नपुंसकस्य" (पा० सू० ७।१।७२) इत्यस्याप्राप्तेः । वस्तुत ऊर्जादेः क्विपि नपुंसके नुम्विषयेऽनभिधानमेव वार्तिकानुरोधात् । अन्यथा भाष्यवार्त्तिकयोः फलभेदापत्तेरित्याहुः । आकरे इति । 'दीधीवेवीटा' ( पा० सू० १।१।६ ) मिति सूत्रे न पदान्तसूत्रे च भाष्यकैयटयोरित्यर्थः ।

सङ्कलनयेति । तत्कृत्यं मन्दबोधनम् । चतुर्दशेति । पूजार्थानां त्रयाणां ञद्वित्वात्

ज्योत्स्ना ।

द्धम् । एवं रूपयेत्यर्थः । वस्तुत इदं भाष्यं नैकदेश्युक्तिः । त्यदाद्यत्वविषये तक्रन्यायस्याप्रवृत्त्या इत्यादिना पूर्वमुपपादितत्वात् । ननूपसर्जने एनदादेशस्य चारिता-

सि चतुर्विंशतिः। ङयि सप्त। अनुनासिकस्तु नास्ति। एकारस्यानण्त्वात्। भ्यसि भ्याम्वत्। ङसौ ङसादिपञ्चके चतुर्दश। सुपि गत्यर्थे त्रयाणां ककारषकारयोर्द्वित्वेन उकारस्यानुनासिकेन चतुर्विंशतिः। एवं कुक्पक्षे षण्णां ङषयोर्द्वित्वे अनुनासिके च अष्टचत्वारिंशत्। कुगभावे त्रयाणां ङकारद्वित्वे अनुनासिके च द्वादश। सु १८ औ ७ जस् १२ अम् १८ औ ७ शस् १२ टा १४ भ्यां ४८ भिस् २४ ङे ७ भ्यां ४८ भ्यस् ४८ ङसि १४ भ्यां ४८ भ्यस् ४८ ङस् ओस् आम् ङि ओस् प्रत्येकम् १४ सुप् ४८। अत्रेदमवधेयम्। पूजायां जसि नुमागमे कृते तस्य पाक्षिके द्वित्वे नकारत्रयसहितं रूपषट्कम्। एवं शस्यपीति सङ्कलनया द्वादश। तथा च रूपं ग्रहाग्नि ५३९ भूताख्यमिति भाष्यव्यतिरिक्तमते इति दिक्। यत्तु वदन्ति—

ऊह्यमेवं द्वित्वपुनर्द्वित्वलोपविकल्पनैः।
अष्टपञ्चाशतो वृद्ध्या त्रिसप्तत्यधिकं शतम्॥ इति।

तच्चिन्त्यम्। पुनर्द्वित्वस्याप्रामाणिकत्वात्, रूपानन्त्यप्रसङ्गाच्च। अष्टपञ्चाशतो वृद्धावुपपत्त्यभावाच्चेति दिक्।

तिरश्ची इति। भत्वात् "अच" (पा० सू० ६।४।१३८)इत्यल्लोपः। आलोप इति वचनात्तिर्यादेशाभावः। स्ववित्ति। शोभना आपोऽस्मिन्

शब्दरत्न।

सप्तानामनुनासिकविकल्पाच्च। चतुर्विंशतिरिति। भप्राग्वर्तिवर्णविसर्गद्वित्वात्। विसर्गे तु नानुनासिकः 'अप्रगृह्यस्य' इति पर्युदासेनाक्षरसमाम्नायिकेष्वेव तत्प्रवृत्तेः। ङषयोरिति। षकारद्वित्वं 'शरः खय' (का० वा०) इत्यनेन। भाष्यव्यतिरिक्तमते इति। भाष्यमतेऽचः परो यो झलित्यर्थेन प्रकृतेऽचः परझलत्वजातेरभावान्नुमोऽप्राप्तेरेव चैतान्यसाधून्येवेति भावः। उपपत्त्यभावादिति। नियमे मानाभावादिति भावः।

ज्योत्स्ना।

र्थात्कथं त्यदाद्यत्वापवादत्वमित्याह—एनदोऽप्युपसर्जन इति।

स्ववीति। शोभनः आपः येषु तानीति बहुव्रीहिः। प्रतिपदविधेरनित्यत्वात् पूर्वं प्रवृत्तिस्तु क्वाचित्की। नित्यस्तु सेदुष इत्यादौ सर्वत्रैव। तेन इयायेत्यादौ पूर्वम् "अचोऽञ्णिति" इति वृद्धौ कृतायाम् "एरनेकाच" इत्यत ए इत्यपकर्षविशिष्टस्य "इणो यण्" इत्यस्याप्राप्त्याऽनित्यत्वान्न पूर्वं प्रवृत्तिः। तत्र एरित्यपकर्षस्तु आयन्नित्यादौ लावस्थायामडिति सिद्धान्तपक्षे अन्तरङ्गत्वात् "आटश्च" इति वृद्धौ कृतायां प्राप्तस्य यणो व्यावृत्तये असिद्धवत्सूत्रे भाष्ये उक्तः। एवं जुहवान्नित्यादौ गुणे कृतेऽप्राप्तस्य "ओः

सरसीति बहुव्रीहिः । "ऋक्पूः" ( पा० सू० ५।४।७४ ) इति समासान्ते प्राप्ते "न पूजनात्" ( पा० सू० ५।४। ६९) इति निषेधः । यत्त्वनित्यत्वादिति प्राचोक्तं, तत्प्रामादिकम् । "द्व्यन्तरुपसर्गेभ्य" ( पा० सू० ६।३।९७ ) इति तु न भवति । तत्रापि इति कृतसमासान्तस्यानुकरणमिति वक्ष्यमाणत्वात् । सुपुमांसीति । "पुंसोऽसुङ्" ( पा० सू० ७।१।८९ ) इति सूत्रे सुटीति व्याचक्षाणस्य प्राचो मते शसि नैतत्सिद्ध्येत् । औङि चातिव्याप्तिः । अस्माकं तु सर्वनामस्थान इति यथासूत्रं ब्रुवतां सर्वेष्टसिद्धिरिति भावः ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

"स्वरादिनिपातमव्ययम्" ( पा० सू० १।१।३७ ) ॥ स्वरादयो निपाताश्चेति समाहारद्वन्द्वः । स्वरिति स्वर्गे परलोके च । अन्तरिति—मध्ये । प्रातरिति—प्रत्यूषे । पुनरिति अप्रथमे विशेषे च । सनुतर् अन्तर्धाने, स्वराद्याः पञ्च रेफान्ताः॥ उच्चैस् महति । नीचैस् अल्पे । शनैस् क्रियामान्द्ये। ऋधक् सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । ऋते वर्जने । युगपदित्येककाले आराद् दूरसमीपयोः । पृथक् भिन्ने । ह्यस् अतीतेऽह्नि । श्वस् अनागतेऽह्नि । दिवा दिवसे । रात्राविति निशि । सायमिति निशामुखे । चिरमिति बहुकाले । मनाक् ईषत् इमावल्पे । जोषं सुखे मौने च । तूष्णीमिति मौने । बहिस् अवस् इमो बाह्ये । समयेति समीपे मध्ये च । निकषेत्यन्तिके । स्वयमित्यात्मनेत्यर्थे । वृथेति व्यर्थे । नक्तमिति रात्रौ । नञ् नि-

शब्दरत्न ।

प्रामादिकमिति । शास्त्रेणैव सिद्धेरिति भावः ॥

इति हलन्ता नपुंसकलिङ्गाः ।

ज्योत्स्ना ।

सुपि" इत्यतः ओरित्यनुवृत्तिविशिष्टहुश्नुवोरिति यणः अतिस्त्रये इत्यादौ "घेर्ङिति" इति गुणे कृते अप्राप्तस्य "अचि श्नु" इति सूत्रात् य्वोरित्यनुवृत्तिविशिष्टस्य "स्त्रियाः" इतीयङश्च पूर्वमप्रवृत्तिः । न चैवं प्रतिपदविधित्वं पूर्वप्रवृत्तौ नियामकमिति कथनम् अयुक्तम् नित्यत्वादिष्टसिद्धेरिति वाच्यम् । सेदुषः अन्तरङ्गत्वात्प्राप्तस्येटः प्राक् सम्प्रसारणं यथा स्यादित्यर्थं तत्स्वीकारस्यावश्यकत्वादिति दिक् ।

इति नपुंसकलिङ्गप्रकरणम् ।

षेधे । हेताविति निमित्ते । इद्धेति प्राकाश्ये । अद्धा इति स्फुटावधारणयोः, तत्त्वातिशययोरित्येके । सामीत्यर्द्धजुगुप्सयोः । वत् "तेन तुल्यम्" ( पा० सू० ५।१।११५ ) इत्यादिभिर्विहितो वतिप्रत्ययः । यस्तु "उपसर्गाद्धात्वर्थे" ( का० वा० ) इति विहितः । स नेह गृह्यते, 'यदुद्वतो निवतो यासि' । सना सनत् इत्येते नित्ये । उपधेति भेदे । तिरस् अन्तर्द्धौ तिर्यगर्थे परिभवे च । अन्तरेति मध्ये विनार्थे च । अन्तरेणेति वर्जने । ज्योगिति काले भूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च । कमिति वारिमूर्द्धनिन्दासुखेषु । शं सुखे । सहसेत्याकस्मिकाविमर्शयोः । विनेति वर्जने । नानेत्यनेकविनार्थयोः । स्वस्तीति मङ्गले । स्वधा पितृदाने । अलं भूषणपर्याप्तिशक्तिवारणनिषेधेषु । वषट् वौषट् श्रौषट् एते हविर्दाने । अन्यदित्यन्यार्थे । अस्तीति सत्तायाम् । उपांश्वित्यप्रकाशोच्चारणरहस्ययोः । क्षमेति क्षान्तौ । विहायसेति वियदर्थे । दोषेति रात्रौ । मृषा मिथ्येत्येतौ वितथे । मुधेति व्यर्थे । पुरेत्यविरते चिरातीते भविष्यदासन्ने च । मिथो मिथस् एतौ रहस्सहार्थयोः । प्रायस् इति बाहुल्ये । मुहुस् पुनरर्थे । प्रवाहुकं समकाले सिद्धार्थे च । प्रवाहिकेति पाठान्तरम् । आर्यहलमिति बलात्कारे । शाकटायनस्तु आर्येति प्रतिबन्धे, हलमिति प्रतिषेधविवादयोरित्याह । अभीक्ष्णमिति पौनःपुन्ये । साकं सार्द्धमेतौ सहार्थौ । नमस् नतौ । हिरुक् वर्जने । धिक् निन्दाभर्त्सनयोः । अम् शैघ्र्येऽल्पे च आम् अङ्गीकारे । "किमेत्तिङव्यय" (पा०सू० ५।४।११) इति "कास्प्रत्ययात्" इत्यादिभिश्च विहितः । प्रत्ययतोऽपीह गृह्यते इत्येके । पपाचतराम् । कारयामास । प्रताम् ग्लानौ । प्रशान् समानार्थे । प्रतान् विस्तारे । मा माङ् एतौ शङ्कानिषेधयोः ।

आकृतिगण इति । तेनान्येऽपि ज्ञेयाः । तथा हि कामं स्वाच्छन्द्ये । प्रकाममित्यतिशये । भूय इति पुनरर्थे । साम्प्रतमिति न्याय्ये । परमिति किन्त्वर्थे । साक्षात्प्रत्यक्षे । साचि तिर्यगर्थे । सत्यमित्यर्द्धाङ्गीकारे । मङ्क्षु आशु एतौ शैघ्र्ये । सम्वत् वर्षे । अवश्यं निश्चये । सपदि शैघ्र्ये । बलवदित्यतिशये ।

शब्दरत्न ।

इत्यादिभिरिति । आदिना "तत्र तस्येव" (पा० सू० ५।१।११६) "तदर्हम्" (पा०सू० ५।१।११७)। इत्येक इति । अत्रारुचिबीजं "किमेत्तिङ"(पा०सू०५।४।११) इति विहितस्य

प्रादुस् आविस् इति प्रकाशे । अनिशं नित्यं नित्यदा अजस्रं सन्ततं एते सातत्ये । उषेति रात्रौ । रोदसी द्यावापृथिव्यर्थे । ॐ इत्यङ्गीकारे ब्रह्मणि च । भूरिति पृथिव्याम् । भुव इत्यन्तरिक्षे । झगिति झटिति । तरसा इति शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु अतिकष्टे । सु पूजायाम् । अह आश्चर्ये । कु इति कुत्सितेषदर्थयोः । अञ्जसा तत्त्वशीघ्रार्थयोः । मिथु इति द्वावित्यर्थे । भाजक् इति शैघ्र्ये । चिराय चिररात्राय चिरस्य चिरं चिरेण चिरात् इत्येते चिरार्थकाः । अस्तमिति विनाशे । अनुषक् आनुपूर्व्ये । आनुषक् अनुमाने । अम्नस् शीघ्रसाम्प्रतिकयोः । स्थाने इति युक्ते । वरमितीषदुत्कर्षे । सुदि शुक्लपक्षे । वदि कृष्णपक्षे । इत्यादि ।

वेति समुच्चयादिषु । 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये' । हेति प्रसिद्धौ । अहेति पूजायाम् । एवेत्यवधारणेऽनवक्लृप्तौ च । एवमिति उक्तपरामर्शे । नूनमिति निश्चये तर्के च । शश्वदिति पौनःपुन्ये नित्ये सहार्थे च । युगपदिति ऐककाल्ये । भूयस् पुनरर्थे अधिक्ये च । कूपदिति प्रश्ने कुविदिति भूत्यर्थे । प्रशंसायां च । नेदिति शङ्काप्रतिषेधविचारसमुच्चयेषु । चेदिति यद्यर्थे । चण् अयं चेदर्थे णित् । समुच्चयादौ त्वननुबन्धः । कच्चिदिति इष्टप्रश्ने । यत्रेत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि न मर्षये गर्हे आश्चर्ये वा यत्र भवान् वृषलं याजयेत् । नहेति प्रत्यारम्भे । हन्तेति हर्षे विषादे अनुकम्पायां वाक्यारम्भे च । माकिः माकिं नकिरिति त्रयोऽपि वर्जने ।

माङ्नञौ स्वरादिषु उक्तौ । इह पाठस्तु निपातत्वार्थः । तेन आद्युदात्तत्वं सिद्ध्यतीति प्राञ्चः । तच्चिन्त्यम् । फिट्स्वरेणापीष्टसिद्धेः ।

यदप्याहुः—सत्त्ववचनानामपि अव्ययसंज्ञार्थः स्वरादिपाठ इति तदपि चिन्त्यम् । लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः । तस्मादुभयत्र पाठे फलं चिन्त्यम् ।

यावत् तावत् एतौ साकल्यावधिमानावधारणेषु । साकल्ये यावत् कार्यं तावत् कृतम् । अवधौ—यावत् गन्तव्यं तावत्तिष्ठ । माने यावद्दत्तं तावद्भुक्तम् । अवधारणे—यावदमन्त्रं ब्राह्मणानामन्त्रयस्व । स्वै विशेषवितर्कयोः । द्वै वितर्के । न्वै इति पाठान्तरम् । रै दाने अनादरे च । रैकरोति ददातीत्यर्थः ।

त्वं रै किं करिष्यसि । श्रौषट् वौषट् एतौ हविर्दाने । स्वाहा देवताभ्यो दाने । स्वधेति पितृभ्यः । श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः । तुमिति तुङ्कारे । गुरुं तुङ्कृत्य हुंकृत्य । तथाहि निदर्शने । खलु निषेधे वाक्यालङ्कारे निश्चये च । किलेति वार्त्तायामलीके च । अथेति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । अयं स्वरादिरपि । तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिद्ध्यति । तथा च श्रीहर्षः—

उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे ।
यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम् ॥

अत्र हि अथ स्नपयाम्बभूवेत्यस्य मङ्गलं स्नपनं चकारेत्यर्थः । निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गध्वनिवत् । सुष्ठु स्वरभेदार्थः पाठः । स्मेत्यतीते पादपूरणे च । आदहेत्युपक्रमहिंसाकुत्सनेषु ।

अवदत्तमिति । इहानुपसर्गत्वात् "अच उपसर्गात्तः" ( पा०सू० ७।४।४७ ) इति न भवति । अहमिति सुबन्तप्रतिरूपकम् । एतेन 'गेये केन विनीतौ वाम्' इति व्याख्यातम् । युवामर्थे हि वामित्यव्ययम् । अस्तीति तिङन्तप्रतिरूपकम् । एवमस्मीत्यहमर्थे । त्वामस्मि वच्मि आहेत्युवाचेत्यर्थे । आसेति बभूवेत्यर्थे—इत्यादि ।

अ इति सम्बोधनेऽधिक्षेपे निषेधे च । आ इति वाक्यस्मरणयोः । इ इति सम्बोधनजुगुप्साविस्मयेषु । ई उ ऊ ए ऐ ओ औ सम्बोधने । पशु सम्यगर्थे । पशु मन्यमानाः । शुकं शैघ्र्ये । यथाकथाचेत्यनादरे । पाट् प्याट् अङ्ग हे है भो अये एते सम्बोधने । घेति हिंसाप्रातिलोम्यपादपूरणेषु । विषु नानार्थे । एकपदे इत्यकस्मादित्यर्थे । पुत् कुत्सायां हेतौ । आत इतोऽपीत्यर्थे । आकृतिगण इति । तद्यथा । यत् तत् इति हेतौ । आहोस्वित् विकल्पे । सिम सर्वतोभावे । कं पादपूरणे । सुकमतिशये । अनुकं वितर्के । शम्वद् अन्तःकरणे आभिमुख्ये च । व पादपूरणे इवार्थे च । दिष्टचेत्यानन्दे । चटु चाटु प्रियवाक्ये । हुमिति भर्त्सने । इवेति सादृश्ये । अद्यत्वे इदानीमित्यर्थे इत्यादि ।

---

शब्दरत्न

"तद्धितश्च" इत्यनेन सिद्धिः । "कारुप्रत्ययात्" इति विहितात्परस्य 'आम' ( पा० सू० २।४।८१ ) इत्यनेन लुक्सिद्ध्या तस्य तत्वे फलाभाव इति । अनुपसर्गत्वादिति । अवदत्तं

अत्रेदमवधेयम्। स्वरादिचाद्योराकृतिगणत्वाविशेषेऽपि येषां निपातस्वरो दृष्टस्ते चादिषु । अन्ये स्वरादिषु । स्वरद्वयभाजस्तूभयत्र बोद्धव्याः । यथा उत-शब्दः स्वरादिषु 'ईडचो नूतनैरुत'इत्यन्तोदात्तप्रयोगात् ।

यत्तु उतशब्दस्य स्वरादितामुक्त्वा निपातस्वरमाशङ्क्यान्तोदात्तनिपातन-माश्रित्य समादधुस्तद्भ्रमसात् । स्वरादेरनिपातत्वात् । अन्तोदात्तत्वनिपातन-वैयर्थ्याच्च । यदपि काशिकायामुक्तम् । स्वर शनैस् ऋधक् दिवा वृथा नक्त-मित्यादयोऽन्तोदात्ता इति । यच्च सनत् सनात् एवमादय आद्युदात्ता इति। तत्सर्वं प्रामादिकम् ।लक्ष्यविसंवादान्निर्मूलत्वाच्चेति शब्दकौस्तुभे प्रपञ्चितम् ।

"तद्धितश्चासर्वविभक्ति" ( पा० सू० १।१।३८ )॥ सर्वेति । वचन-त्रयात्मिकेत्यर्थः । नेति । किंतु एकवचनमेवोत्पद्यते इति भावः । तद्धितः किम् । एकः द्वौ त्रयः । असर्वेत्यादि किम् । औपगवः ।

"कृन्मेजन्तः" (पा० सू० १।१।३९) ॥ जीवसे इति । "तुमर्थे सेसेन्" ( पा० सू० ३।४।९ ) इति असेप्रत्ययः । पिबध्यै इति । तेनैव शध्यैप्रत्ययः "पाघ्रा" ( पा० सू० ३।१।१३७ ) इति पिबादेशः ।

यत्त्वाहुः—कर्त्तरि शबिति । तद्भ्रमसात् । "अव्ययकृतो भावे" इति सि-द्धान्तात् । अन्तग्रहणमौपदेशिकत्वप्रतिपत्त्यर्थम् । तेनेह न । आधये । चिको-

शब्दरत्न ।

चेत्यादि भाष्ये तकाराकरणेन गुणभूतोपसर्गत्वबाधो बोध्यत इति भावः । यदपीति । स्व(१)रादीनुपक्रम्यान्तोदात्ताः पठ्यन्त इति काशिकायाम् । प्रामादिकमिति । "न्यङ्स्वरौ स्वरितौ" ( पा० सू० ७४ ) इति फिट्सूत्रेण स्वरितत्वात् । 'सनाच्च होता नव्यः तिरः पुरूचिदश्विना' इत्यादौ सनात्तिरसोरन्तोदात्तपाठाच्च । निर्मूलत्वाच्चेति । अद्युदा-त्तप्रापकशास्त्राभावादिति भावः ।

सिद्धान्तादिति । व्यत्ययेन यगभाव इति भावः । अन्तग्रहणमिति । नेजूभ्यां कृतो वि-

ज्योत्स्ना ।

ननु यदि शध्यै प्रत्ययो भावे स्यात् तदा "सार्वधातुके यक्" इति यक् स्यादत आह—व्यत्ययेन यगभाव इति ।

वि० ( १ )अत्र स्वरादिशब्दा मूलपठितसमुदायपरस्तेन पुनःशब्दस्य निरासः ।

र्थत्वे। लक्षणप्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धचैतयोरनित्यत्वज्ञापनायेदम्।

"क्त्वातोसुन्कसुनः" (पा०सू० १।१।४०)॥ उदेतोरिति। उत्पूर्वादिणो "भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" (पा० सू० ३।४।१६)। विसृप इति। "सुपितृदोः कसुन्" (पा० सू० ३।४।१७)। आब्ग्रहणमिति। तथा च वार्त्तिकम्—"अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्" (का० वा०) इति। सूत्रस्योक्तिसम्भवस्तु "स्त्रियाम्" (पा०सू० ४।१।३) इति सूत्रे स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वा बोद्धव्यः। स च न स्थितः। भूतमियं ब्राह्मणीत्यादावतिव्याप्तेः। अलिंगत्वे आथर्वणविद्यागतश्रुतिविरोधमाशंक्याह—सदृशमिति। लिङ्गकारकेति। विभक्तिवचनशब्दौ कारकसङ्ख्यापराविति भावः। यथा वाचेति। परिगणनमिदमित्येके। अन्ये तूदाहरणमात्रमित्याहुः। वगाह इति आदिरेवाकारो लुप्यते नान्त्यः। अपिना साहचर्यात्॥

इत्यव्ययानि॥

शब्दरत्न।

शेषणात्तदन्तलाभे सिद्धे इत्यादिः। लक्षणेति। क्वचिद्वर्णग्रहणेऽपि तत्परिभाषाप्रवृत्तिः। तत्राप्रवृत्तिज्ञापकं च तदनित्यत्वमात्रज्ञापकमिति भावः। भूतमिति। (१)भूतशब्दश्चैतन्यवृत्तिर्नित्यनपुंसकस्तत्र पर्जन्यवल्लक्षणप्रवृत्त्याऽन्तरङ्गत्वात् ह्रस्वे शब्दान्तरसन्निधानोत्तरं टापि 'लक्ष्ये लक्षणस्य' इति न्यायेन ननु पुनर्ह्रस्व इति भावः।

इत्यव्ययानि॥

भूतशब्द इति। एको विष्णुर्महद्भूतमित्यादौ यथा।

अलिङ्गत्वादिति। अस्यायम्भावः—'अलिङ्गत्वे सदृशं त्रिषु लिङ्गेषु' इत्यादिश्रुतिविरोध इत्याह—परममूले लिङ्गसंख्याकारकेति। अत्रेदं तत्त्वम् यथा इयं श्रुतिः उपक्रमोपसंहाराभ्यां ब्रह्मपरायाः अप्येतस्याः श्रुतेः भाष्यप्रामाण्येन अत्रोपसंहारस्तथा भाष्यादिप्रामाण्यादेव लिङ्गाद्यभावपरतापीति दिक्।

इत्यव्ययानि।

प्र० (१) एको विष्णुर्महद् भूतमित्यादौ यथा।

# अथ स्त्रीप्रत्ययाः ।

खट्वेति । "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (उ० सू०) । पञ्चाजीति । न च तदन्तविधिविरहादेव टाब्नेति वाच्यम् । अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण(१) च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनात् । मूषिकेति ।

शब्दरत्न ।

अनुपसर्जनाधिकारेण चेति । तस्य हि बहुकुरुचरा व्यावर्त्या । एवं च "वनो र च"

ज्योत्स्ना ।

खट्वा इति । ननु "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः" इति कोशबलात् । केशस्तनवत्त्वं स्त्रीत्वं केशोऽत्रभगः । लोमात्र पुरुषचिह्नम्, शिश्नवत्त्वम्, पुंस्त्वम् तत्तदाकारमात्रधारकत्वम् नपुंसकत्वमिति । पारिभाषितानि लिङ्गानि खट्वाद्यचेतनेषु नोपलभ्यन्ते इति कथं तद्वाचकशब्देभ्यष्टाबिति चेच्छृणु । सत्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यम् 'एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वम्' इति भाष्योक्तेः । सत्वस्योपचये रजस्तमसोः परस्परं न्यूनाधिक्ये एव वा पुँस्त्वम् । रजसः उपचये सत्वतमसोः परस्परं न्यूनाधिक्ये स्त्रीत्वम् । तमसः उपचये सत्वरजसोः न्यूनाधिक्ये वा नपुंसकत्वम् इति स्वीकारेण अचेतनखट्वादिषु दोषाभावात् । प्रायः पुरुषादिषु लोके सत्वाधिक्यस्य रजस आधिक्यस्य च दर्शनात् । अत एव पुरुषस्य स्थैर्यादिकमधिकं शुक्रम् च । स्त्रियश्चाञ्चल्यमधिकम् शोणितञ्च । नपुंसकस्य मोहाधिक्यञ्च ।

अन्ये तु—सत्वादिगुणत्रयोपचयः पुंस्त्वम् सत्वादिगुणापचयः स्त्रीत्वम् । सत्वादिगुणसाम्यन्नपुंसकम् इत्याहुः । न च ब्रह्मपुरुषश्च स्त्री चेत्यादिना ब्रह्मणी पुंस्त्वाद्यनुपपन्नम् ब्रह्मणोनिर्गुणत्वादिति वाच्यम् । परमात्मनो निर्धर्मकत्वेन । तस्य शाब्देन बोधयितुमशक्यत्वेन आरोपितपुंस्त्वादिना तद्बोधनेनादोषादिति दिक् ।

अनुपसर्जनाधिकारेण चेति । शूद्रा चामहत्पूर्वाजातिः इदं वार्तिकम् प्रत्याख्यातम् ।

---

प्र० (१) 'शूद्रा चामहत्पूर्वा' इति वार्तिकस्याग्रे प्रत्याख्यास्य मानतयाऽऽह—अनुपसर्जनाधिकारेण चेति । न चानुपसर्जनाधिकार आचारक्विबन्तप्रकृतिककर्तृक्विबन्ते ङीबादिवारणाय आवश्यक इति वाच्यम् । एतज्ज्ञापकपरभाष्यप्रामाण्येन तेषां स्त्रियामनभिधानात् । तेन अनडुहूशब्दस्य अशब्देन षष्ठीसमासे तस्मादाचारक्विबन्तात्कर्तरि क्विपि अतो लोपे अनडुह् इत्यादिभ्यो न ङीप् । एवं बहुशब्दस्य उशब्देन समासे ततोऽपि 'बह्वादिभ्यश्च' इति ङीष्वारणाय अनुपसर्जनाधिकारस्यावश्यकत्वाज्ज्ञापकपरभाष्यानुपपत्त्याऽनभिधानं बोध्यम् । पञ्च स्त्रीगोव्यक्तयो धनं यस्य स पञ्चगवधन इत्यत्र टजन्तस्य प्रातिपदिकत्वाभावान्न ततो ङीपः प्राप्तिः । एवं आपिशलिना प्रोक्तमधीते

"वृश्चिकृषोः किकन्" ( उ० सू० ) इत्यधिकारे "मुषेर्दीर्घश्च" इति किकनि इकारमध्यो मूषिकशब्दः।

यस्तु मूष स्तेये इति दीर्घोपधात्संज्ञायां क्वुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्ययं टाप्। "प्रत्ययस्थात्" ( पा० सू० ७।३।४४ ) इतीत्वमिति तु विशेषः। यत्तु कुन्नन्तोऽसौ अजादिगणे पाठं न प्रयुङ्क्ते। तस्य जातिलक्षणङीष्बाधनार्थत्वात्। संज्ञायाश्चाजातित्वादित्याहुः। तच्चिन्त्यम्। व्याघ्रीत्यादिवत् संज्ञात्वेऽपि जातित्वानपायात्।

शब्दरत्न।

( पा० सू० ४।१।७ ) इत्यत्रेवात्रापि तदन्तविधिरिति भावः। जातित्वानपायादिति।

ज्योत्स्ना।

इत्यरुचेराह—अनुपसर्जनाधिकारेण चेति। न चानुपसर्जनाधिकारः कुरुं चरयति इति कुरुचर्यः णिचि तस्मादाचारक्विबन्तात्कर्तरि क्विपि तत्र ङीप्वारणाय आवश्यक इति वाच्यम्। तदन्तविधिज्ञापकतापरकभाष्यप्रामाण्येन तेषामनभिधानात्। एवं बहुशब्दस्य उशब्देन समासे तस्मात् "बह्वादिभ्यश्च"इति ङीबभावाय अनुपसर्जनाधिकारस्यावश्यकतया तदन्तविधिज्ञापकतापरकभाष्यासङ्गत्या एतस्याप्यनभिधानं बोध्यम्। न च पञ्च स्त्री गोव्यक्तयो धनं यस्य स पञ्चगवधनः इत्यत्र टजन्ते ङीबभावाय अनुपसर्जनाधिकार इति वाच्यम्। एतत्संज्ञाफलभूतविभक्तीतरस्वसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वाभावेन प्रातिपदिकत्वस्याजन्तेऽभावात् ङीपोऽप्रवृत्तेः। एवञ्च आपिशलिना प्रोक्तमधीते इत्यापिशला ब्राह्मणी इत्यत्रापि ङीपः न प्राप्तिः। प्रोक्तार्थकस्याणः स्त्रियामप्रवृत्तेः। अध्येत्रार्थकाणस्तु लोपात्। न च प्रत्ययलक्षणम्। अण् योऽकार इति व्याख्यानेन वर्णप्राधान्यात् 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति निषेधात्। अध्येत्रर्थगतस्त्रीत्वमादाय प्रोक्ताण्निमित्तकस्य तु न प्राप्तिः। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेन तस्याणः एतत्स्त्रीत्वे अविद्यमानत्वात्। अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना स्त्री इत्यत्रापि न ङीपः प्राप्तिः।

---

आपिशला स्त्री इत्यत्रापि न ङीपः प्राप्तिः। प्रोक्तार्थकाणः स्त्रियामवर्तनात्। अध्येत्रर्थकाण् तु लुप्त एव। न च प्रत्ययलक्षणम् अण् योऽकार इति व्याख्यानेन वर्णप्राधान्यात् प्रत्यलक्षणाप्रवृत्तेः। अध्येत्रर्थगतस्त्रीत्वमादाय प्रोक्ताण्निमित्तकस्य तु न प्राप्तिः। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेन तस्याण एतत्स्त्रीत्वेऽविद्यमानत्वात्। अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना स्त्री इत्यत्रापि न ङीप्। तस्माद्बहुकुरुचरेत्येव व्यावर्त्यम्। तस्य च तदन्तविधिज्ञापनं विना व्यावर्त्यत्वासिद्धेः तदन्तविधिज्ञापकताऽऽवश्यिका।

भस्त्रफलेति । भस्त्रेव फलानि यस्या इति विग्रहः । ङ्यापोरिति । एतच्च फलनिष्पत्ताविति धातौ माधवग्रन्थे स्थितम् । भाष्ये तु प्रायेण दीर्घ एव पठ्यते ।

प्रत्यक्पुष्पेति । "पाककर्ण" इत्यादिसूत्रस्थभाष्यवार्तिकपर्यालोचनयेद-मुक्तम् । तेन सत्प्राक्काण्डेति पाठो नादर्तव्यः ।

शूद्रा चेति । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् । महत्पूर्वस्तु न । जातिश्चेदितीहापि सम्बध्यते । पुंयोगे त्विति । पुंयोगो दाम्पत्यरूप एवेति न नियमः, किं तु जन्यजनकभावोऽपि । तेन 'वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ' इति सिद्धम् । महाशूद्रीति । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः । अत्रेदमवधेयम् । अजादिगणे शूद्रेत्येव पाठ्यम् । जातिरिति व्यर्थम् । मुख्ये कार्यसम्प्रत्ययाज्जातिलक्षणो ङीषेव बाधिष्यते । पुंयोगे हि गौणी वृत्तिः । अमहदित्याद्यपि व्यर्थम् । महाशूद्रशब्दो हि विशिष्ट एव जात्यन्तरे वर्तते । तत्रावयवस्यानर्थकतया शूद्रशब्दार्थसमवेत-

---

शब्दरत्न ।

क्वुनादिविधौ संज्ञापदेन रूढिरेव गृह्यते, न तु शब्दप्रवृत्तिनिमित्तकत्वरूपं संज्ञात्वं गृह्यते । अत एव "घ्रः संज्ञायाम्" ( का० वा० ) इत्यादिना व्याघ्रादिसिद्धिरिति दिक् । गौणी वृत्तिरिति । लाक्षणिकत्वापरपर्यायं गौणत्वमित्यभिमानेनेदम् । सदृशलाक्षणिकत्वमप्रसिद्धत्वमेव वा गौणत्वं गौणमुख्यन्यायश्च पदकार्यविषयोऽत एवास्य स्त्रीत्यर्थेऽजेत्येवेति सिद्धान्ते तु जातिरित्यावश्यकमिति बोद्धयम् । जात्यन्तर इति । ब्राह्मणा-

ज्योत्स्ना ।

तस्माद्बहुकुरुचरा इत्येव तद्व्यावर्त्यम् । तस्य च तदन्तविधिज्ञापकतां विना व्यावर्त्यत्वासिद्धेः तदन्तविधिज्ञापकत्वं सुस्थमिति दिक् ।

सदृशलाक्षणिकत्वमिति । यथा पुरुषकृतधर्माधर्म्माभ्याम् पुण्यपापयोः स्त्रीषु संक्रमः । एवं तद्वृत्तिधर्मान्तरस्यापीत्याहुः । तथा च पत्नीत्वेनारोपो न सदृशत्वेनेति बोध्यम् ।

पदकार्यविषयत्वादिति । स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वम् तत्त्वम् । तत्र स्त्रीत्वानिमित्तकत्वे सतीत्यस्य अजसदृशस्य स्त्री अजेति सिद्धिः फलम् ।

यत्तु—जातिग्रहणमेव एतस्य न्यायस्य पदकार्यविषयत्वे लिङ्गमिति वदन्ति । तन्न । अप्रसिद्धसदृशलाक्षणिकानां गौणमुख्यन्याये गुणादागते गौण इत्यनेन व्युत्पत्तिलब्धस्यैवार्थस्य ग्रहणात् । पुंयोगलक्षणगौणे टाबभावाय तत्सार्थक्यात् । तदेतदाह—सिद्धान्ते

स्त्रीत्वाभावात् टापः प्रसंग एव नास्ति। या तु महती शूद्रा तत्र महाशूद्रेतीष्यत एव। कुञ्चेत्यादि। त्रयोऽमी हलन्ता इत्येके। 'क्रुञ्चानालभेत' 'उष्णिहक्कुभौ' इत्यादिप्रयोगमुदाहृत्यादन्ता अपि भाष्ये स्वीकृताः। पुंयोगेऽपीति। यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदा अदन्तत्वादेव टाप् सिद्धः। यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा तदा पुंयोगलक्षणो ङीष् प्राप्तः सोऽनेन वाध्यत इति सूचयितुमपिशब्दः। "मूलान्नञः"। नञः किम् शतमूली। अमूलेति। ओषधिजातिरियम्।

---

शब्दरत्न।

दुग्रजातिकन्यायामुत्पन्ने आभीरजातावित्यर्थः। नृपात् शूद्रायामुत्पन्नोग्रजातिकन्या। न तु शूद्रत्वं तत्रास्ति। अत एवशूद्रसधर्माणस्ते इत्येव स्मृतिपूक्तं न तु शूद्रा इति। इष्यत एवेति। अतस्तद्व्यावृत्त्यर्थं नैतदिति भावः। भाष्यवार्तिककारौ तु—शूद्रजातिवृत्तिमत्त्वेन तां जातिं तत्रारोप्य शूद्रशब्दप्रयोग इति शूद्रशब्दार्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्राप्तिरित्यमहत्पूर्वेति। शूद्रशब्दार्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तु तदन्तादिति तदन्तविधिज्ञापकताऽपि भाष्योक्ता नासङ्गता। अत एव शंखेन मातृजात्यारोपेणैव ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एवेत्युक्तम्। तत्र जातिरित्यस्याभावे पूर्वं जातिमात्रविवक्षया कुक्कुटाण्डवत् शूद्रश-

ज्योत्स्ना।

तु इत्यादिना शूद्रशब्दार्थेति। स्त्रीत्वे शूद्रत्वावच्छिन्नधर्मितानिरूपितप्रकारत्वस्य सत्वेनेत्यर्थः। तन्मात्रावच्छिन्नत्वनिवेशे प्रमाणाभावादित्याशयः।

मातृजात्यारोपेणेति। अयम्भावः—स्मृतिषु मातृजातिकर्मोपजीवित्वस्योक्तत्वात् आभीरेषु शूद्रत्वजातिमारोप्य शूद्रशब्दप्रयोगेण शूद्रत्वावच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वं तत्वमिति महाशूद्रशब्देऽस्तीति टाप स्यात्। तन्माभूदिति अमहत्पूर्वग्रहणम्। तदन्तविध्यभावे तु महत्वविशिष्टशूद्रत्वावच्छिन्ने एव स्त्रीत्वान्वयात् शूद्रत्वावच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वपर्याप्तिर्महाशूद्रशब्दे एव न शूद्रशब्दे इति न तत्टाप्प्रसक्तिरिति अमहत्पूर्वग्रहणस्य तदन्तविधिज्ञापकत्वं सङ्गच्छते। सति च तदन्तविधौ उक्तरीत्या टापः प्रवृत्तौ अमहत्पूर्वग्रहणं सार्थकमिति दिक्।

कुक्कुटाण्डवदिति। तथाहि तत्र भाष्ये—"कुक्कुट्यादीनाम्" इति वार्तिकप्रत्याख्यानाय पूर्वं स्त्रीत्वविवक्षया सिद्धानां कुक्कुटस्येत्यादीनां अण्डादिशब्दैः समासे समीहितरूपसिद्धिरित्युक्तम्। तथात्रापीति भावः। न चैवमुपसर्जनाधिकारस्य तदन्तविधिज्ञापकत्वं न सङ्गच्छेत। पूर्वं स्त्रीत्वाविवक्षायां बहुशब्दस्य कुरुचरशब्देनसमासे पश्चात्स्त्रीत्वविव-

शब्दरत्न ।

ब्देन समासे ततः स्त्रीत्वविवक्षायाम् "अमहत्पूर्व"इति निषेधेन टाप् न स्यादिति मन्येते। इत्यन्यत्र विस्तरः ।

ज्योत्स्ना ।

क्षायां प्रासङ्गीप्वारणार्थं तस्यावश्यकत्वादिति वाच्यम् । कुरुचरशब्दस्य बहुशब्देन समासे कुरुचरपदार्थमात्रे 'वृत्तस्य विशेषणयोगो न' इति स्त्रीत्वान्वयासम्भवेन कुरुचरमात्रान्ङीपोऽप्राप्त्या चारितार्थ्यानवकाशात् । प्रकृते तु महच्छब्देन समासे विशिष्टे स्त्रीत्वान्वयेऽपि तदन्तविधेश्च सत्वात् जातिवाचकशूद्रशब्दान्तात्प्रातिपदिकाट्टाप् स्यादित्यर्थेन टाप् भवति । अमहत्पूर्वेत्यत्र जातिरित्यस्याभावे तेन निषेधेन टाप् न स्यादिति । अतः जातिसम्बन्धो युक्त इति दिक् ।

अन्ये तु—यथा कृतपूर्वीकटम् इत्यत्र एवं रीत्यास्य साधुत्वे अन्नत्यं भाष्यम्मानम् इत्यादिसोक्त्या प्रत्याख्यानपरभाष्यप्रामाण्येन तत्र तथा कल्पनेऽपि अन्यत्र तथा कल्पने मानाभावः । अमहत्पूर्वेत्यत्र जातिः इत्यस्य सम्बन्धफलं तु महाशूद्रशब्दे महच्छब्देन शूद्रशब्दस्य सम्मतात्प्रागेव शूद्रा चेति प्राप्तटापो यद्यत्र टाब्न स्यादिति महच्छब्देन समासे अमहत्पूर्वेति निषेधः स्यादिति सम्भावनायाः सत्वादुपसञ्जनिष्यमाणन्यायेन 'अहमतपूर्व'इति निषेधाभाव एव, तत्सम्बन्धे तु तेन न्यायेन तत्र निषेधप्रवृत्तिर्दुर्वा रैवेत्याहुः ।

परे तु—उपसञ्जनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचेऽपि तद्घटकातिरिक्तत्वेन सङ्कोचे मानाभावेन तत्र अमहत्पूर्वेति निषेधप्रवृत्तौ मानाभावेन टापः सिद्ध्या न तत्र निषेधाभावो जातिरित्यस्य फलं, किन्तु कुक्कुटाण्डवत् पूर्वोक्तसमासे निषेधाभाव एव । अत्रापि अमहत्पूर्वेति वाक्ये जातिरित्यस्य सम्बन्धप्रतिपादकभाष्यस्यैव पूर्वं स्त्रीत्वाविवक्षया समाससाधुत्वे प्रमाणत्वात् । अत एव 'गतिकारकोपपदानाम्' इत्यस्य व्याघ्री अश्वक्रीती इति फलत्वेन प्रदर्शितं भाष्ये । अत एवा यजे इन्द्र इत्यादौ गुणसिद्धिरिति दिक् । इत्याहुः ।

स्त्रीत्वविवक्षायामिति । ननु शूद्रशब्दे लिङ्गविवक्षायाम् नपुंसकत्वेन "परवल्लिङ्गम्"इति नपुंसकत्वापत्तिरिति चेन्न । अवयवात्समुदायाच्च स्त्रीत्वविवक्षायाम् अवयवस्य स्त्रीलिङ्गत्वेन तस्यैवातिदेशात् । न च महत्पूर्वकशूद्रशब्दान्तप्रातिपदिकाट्टाब् नेत्यर्थेन महाशूद्रशब्दस्य महत्पूर्वत्वेऽपि शूद्रशब्दस्य तत्त्वाभावाट्टाप् स्यादेवेति वाच्यम् । तथा सत्यमहत्पूर्वग्रहणवैयर्थ्येन महच्छब्दपूर्वकशूद्रशब्दान्तप्रातिपदिकावयवाट्टाप् न स्यादित्यर्थेनादोषात् ।

अन्यत्र विस्तरः इति । उद्योतादावित्यर्थः । तथा हि—न च शूद्राभीरम् इत्यादौ सामान्यविशेषभावमादाय द्वन्द्वाभावमाशङ्क्य आभीरी जात्यन्तराणि इत्युक्तम्

"उगितश्च" ( पा० सू० ४।१।६ )॥ भवतीति। सर्वादिषु भवतु इ-त्युदित्पठितो 'भातेर्डवतुः' इति व्युत्पादितश्च। शत्रन्तात्तु ङीपि "शप्श्यनोः" ( पा० सू० ७।१।८१ ) इति नित्यो नुम्।

"वनो र च" ( पा० सू० ४।१।७ )॥ सुत्वानमिति। सुयजोर्ङ्वनिप्। अतिधीवरीति। दधातेः क्वनिप्। शर्वरीति। शॄधातोर्वनिप्। गुणे कृते

---

शब्दरत्न

व्युत्पादितश्चेति। न्यासकृतेति शेषः। इदं व्युत्पादनमप्रामाणिकम् भाष्यासम्मतेः।

दधातेः क्वनिबिति। "घुमास्था" ( पा० सू० ६।४।६६ ) इतीत्वम्। पावान इत्यस्य वनिपा सिद्धिमाश्रित्य 'ईत्वमवकारादौ' इत्यस्य तत्रैव भाष्ये प्रत्याख्यानात् "स्थःक च" इति सूत्रभाष्यस्थे शंस्था इत्यत्र 'अम्बाम्ब' (पा०सू० ८।३।९७) इति सूत्रभाष्य-स्थे सव्येष्ठा इत्यत्र च 'स्यसिच' इत्यतो वाग्रहणं मण्डूकप्लुत्याऽनुवर्त्य व्यवस्थित-विभाषाश्रयणात्तदभावः। तन्न विजेवेत्यन्ये। अत एव धीङ्ध्यायतेर्दधातेर्वेति 'व्या-

ज्योत्स्ना

भाष्ये इत्यनेन विरोध इति वाच्यम्। तस्य भाष्यस्यानारोपकत्वाभिप्रायेणादोषात्। अजादेराकृतिगणत्वात् टायामादेशः इति भाष्यकारीयप्रयोगः 'चमसवदविशेषात्' इति सूत्रे शङ्करभवत्पादानां अजायां छागा इति प्रयोगश्च सङ्गच्छते।

केचित्तु बहुशः छागो इति प्रयोगदर्शनात्तस्य च भाष्यानुक्तत्वात् तस्याजादित्वे मा-नाभाव इति वदन्ति। तन्न तदुक्तेर्भ्रान्तिमूलकत्वात्। तथा हि—उभयप्रयोगदर्शनादजा-दिगणे अन्यगणसूत्रवत् 'छागाद्वा' इति पाठ्यम्। बौधायनोऽप्यत्रानुकूल इति दिक्।

न्यासकृता इति शेषः इति। तदुक्तं भाष्ये—भवती अतिभवति महती अतिमहती इति प्रयोग "उगितश्च" इति सूत्रे। यद्ययं व्युत्पन्न एव स्यात्। तदोगित्वस्य प्रत्यय-मात्रसम्बन्धित्वेन प्रत्ययग्रहणपरिभाषया अतिमहती इत्यत्र ङीप्न स्यादिति भव-च्छब्दस्योगित्वमव्युत्पन्नमपि स्वीकरणीयम्। इति व्युत्पत्तिपक्षोऽसङ्गत इत्याह—न्यासकृतेति।

न च 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधः शङ्क्यः। तस्य सूत्रोक्ता-न्तादिशब्दमात्रविषयत्वात्। एवं च 'रौणः' इत्यादिसिद्धौ स्वस्येत्यनुवृत्तये चकारो न कार्यं इति बोध्यमिति कैयटमतम्।

नव्यास्तु—एतत्परिभाषावतरणदाने "एकगोपूर्वात्" इत्यस्योपादानात् नायं नियम इति कल्प्यते। तन्मते समाधानन्तु प्रातिपदिकग्रहणे एव तत्परिभाषाप्रवृत्तिस्वी-कार इति। तत्त्वं च उगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वम् विस्तरेण परिभाषेन्दुचन्द्रिकायां द्रष्टव्यमित्याहुः।

हशन्तात्परत्वेऽपि हशन्ताद्विहितत्वाभावाद् ङीब्रयोर्निषेधो न । अवावेति । न्यासकारस्तु प्रायिकोऽयं निषेधः । तेन अवावरीत्याह न त्वेतद्भाष्यादौ दृष्टम् । पक्षे डाविति । तथा च द्विवचने बहुधीवर्यौ बहुधीवानौ बहुधीवे इति रूपत्रयं भवतीति भावः ।

"टाबृचि" ( पा० सू० ४।१।९ ) ॥ पूर्वेण प्राप्तस्य ङीपोऽपवादः । अ-

शब्दरत्न ।

यतेः सम्प्रसारणम्" इति वार्तिकस्थं भाष्यं सङ्गच्छते । "घुमास्था" ( पा० सू० ६।४।६६ ) इत्यत्र हलीत्यस्यानजादावित्यर्थात् प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेऽपि प्रत्ययलक्षणकार्यं सुलभमिति दिक् । निषेधो नेति । 'वनो न हश' इति वार्तिके विहितविशेषणस्येदमेव फलमिति भावः । न त्वेतदिति । अतोऽप्रमाणं तदिति भावः ।

ज्योत्स्ना

हशन्ताद्विहितत्वाभावादिति । शर्वरीति सिद्ध्यर्थमेव विहितविशेषणं हश्ग्रहणम् इति भाष्योक्तेः ।

प्रत्ययलक्षणकार्यमिति । धीरित्यत्रेत्वरूपमिति तदर्थः । नन्वेवमपि क्त्वे "अनल्विधौ" इति निषेधात्कथं तल्लाभ इति चेन्न । "न ल्यपि" इति निषेधेनानुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तेः । 'एवञ्च ध्यायतेः सम्प्रसारणञ्च' इति वार्तिकं न करणीयमित्यपि लाघवमिति दिगर्थः ।

"टाबृचि" । पूर्वेण प्राप्तस्य ङीपोऽपवाद इति मनोरमाकारा आहुः । तन्न । "शेषाद्विभाषा" इति सूत्रस्थभाष्यविरोधात् । तत्र भाष्ये प्रतिपदविहितसमासान्ताः कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तम् । प्राचीनरीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । अत एव "ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये पाच्छन्दसमानार्थकपदशब्दान्तात् "द्विपदा" इति संसाध्य सूत्रं प्रत्याख्यातम् । तदा पाच्छब्दान्तान्ङीपि द्विपदी इतीष्यत एव । अपवादत्ववादिनां मते तु द्विपदीत्यस्याभावात् । प्रत्याख्यानमसङ्गतं स्यात् । श्रूयते हि छन्दसि तस्याः सप्ताक्षरमेकं पदम् एकः पाद इत्यर्थ इति च भाष्योक्तेः । ननु प्रत्याख्यानकल्पे ङीपो वैकल्पिकत्वात् ऋचि वाच्यायाम् एकपदा एकपदी एकपात् इति रूपत्रयम्, आरम्भपक्षे एकपदी एकपदा इति रूपद्वयमिति फलभेदस्त्वापि मतेऽस्तीति चेन्न । ऋच्यपि एकपदी एकपादीत्यस्यैवेष्टत्वात् । तथा च सूत्रमते एकपाद् ऋक् इत्यस्य सिद्धये "टाबृचि" इत्यत्र अन्यतरस्यां ग्रहणमनुवर्त्यम् । तथाचोभयकल्पे रूपत्रयं फलितमिति भावः । नच त्वयापि अपवादत्वमस्वीकृत्य एका कल्पना क्रियते । मयाप्यारम्भप्रत्याख्यानयोः फलैक्याय ऋचिवाच्यायां पादान्तस्यानभिधानमिति कल्प्यते । ततश्च न भाष्यविरोधः । अन्यथा ङीबन्तप्रयोगस्य सूत्ररीत्या इत्यस्यासिद्ध्यापत्तेरिति दिक् । अन्ये तु ङीप्पदे मण्डूकानु-

सिद्धत्वादिति। कार्यकालपक्षेणेदम्। यदि तु यथोद्देशं षट्संज्ञा यदि वा उपदेशकाले ष्णान्तेति व्याख्यानं तदा असिद्धत्वोपवर्णनं नोपयुज्यत इत्याहुः।

वस्तुतस्तु यथोद्देशपक्षेऽपि असिद्धत्वमुपयुक्तमेव। एकदेशविकृतस्योपसंख्यानं हि स्थानिवत्सूत्रे पठ्यते। आदेशग्रहणसामर्थ्यात् सर्वे 'सर्वपदादेशा' इत्याश्रित्य आनुमानिकोऽप्यादेशः स्थानिवदिति वा व्याख्यायते। उभयथाऽपि अल्विधौ न तत्प्रवृत्तिः। एतच्च आकरे स्पष्टम्। बहुयज्वानाविति। "न संयोगात्" (पा० सू० ६।४।१३७) इति निषेधान्नायमुपधालोपी तेन "अन उपधालोपिन" ( पा० सू० ४।१।२८ ) इति न प्रवर्तते।

"डाबुभाभ्याम्" ( पा० सू० ४।१।४३ )॥ ननु निषेध डापोर्वचनसामर्थ्यात् पर्यायः सिद्धः। सत्यम्। "अन्यतरस्याम्" इति योगो विभज्यते। तत्र "मन" इति निवृत्तम्। अनो बहुव्रीहेर्डाब् वा स्यात्। ङीपा सह विक-

शब्दरत्न।

व्याख्यानमिति। "उपदेश इति वक्तव्यम्" (का० वा०) इति वदतो वार्तिककारस्येति भावः। आनुमानिकोऽपीति। "एरुः" ( पा० सू० ३।४।८६ ) इत्यनेन तेस्तोरनुमानादिति भावः। एतच्चाकार इति। अत्रारुचिबीजं तु षट्त्वं नाल्धर्म इति तदाश्रयविधीनां (१)नाल्विधित्वमिति।

सिद्ध इति। एवं चान्यतरस्याङ्ग्रहणं किमर्थमिति भावः। ङीपेति। "ऋन्नेभ्य" (पा०

ज्योत्स्ना

वृत्तिप्रयोजकस्वरितत्वस्यैव कल्पनेन "टाबृचि" इत्यत्र ङीबनुवृत्त्यभावेन सूत्रमते एकपदीत्यस्यानिष्टत्वेन अनभिधानेऽपि न फलभेद इत्याहुः।

कार्यकालपक्षेणेदमिति। यथोद्देशे तु स्थानिवत्त्वेनैव षट्त्वं सुलभम्। तस्य संकेतसम्बन्धेन षट्पदवत्त्वरूपेणाल्धर्मत्वाभावादिति भावः।

वचनसामर्थ्यादिति। सूत्रत्रयकरणसामर्थ्यादित्यर्थः। यदि डापो नित्यत्वं स्यात्; तदा 'मनो ङीप् अनो बहुव्रीहेः' इत्येव वदेदिति भावः। एवञ्चोक्तरीत्या तस्य सिद्धत्वे चेत्यर्थः।

मन इति निवृत्तमिति। योगविभागस्येष्टसिद्ध्यर्थत्वादिति शेषः। तेन दाम्नी इति न प्रयोग इति भावः।

वि० (१) नान्तसंख्यावाचकत्वं षडिति संज्ञाप्रवृत्तावुपयोगि आदेशे अनयन्तु षट्त्वमात्रस्य समुदायधर्मतया नाल्विधित्वमिति भावः।

त्वलाभार्थमिदम् । "अन उपधालोपिन" (पा० सू० ४।१।२८) इति सूत्रं नियमार्थम् । अनो योऽसौ विकल्पः स उपधालोपिन एवेति । तथा च सुपर्वेत्यादौ अनुपधालोपिनि निषेधार्थमिदम् । बहुराज्ञीत्यादौ तु "ऋन्नेभ्यः" ( पा० सू० ४।१।५ ) इत्येव ङीप् । तेन बहुधीवरी सिद्ध्यति । "ऋन्नेभ्यः" ( पा० सू० ४।१।५ ) इति हि ङीपमनूद्य तत्सन्नियोगेन विधीयमानो रेफः प्रकरणान्तरस्थेन ङीपि कृते न सिद्ध्येत् । ननु "वनो र च" ( पा० सू० ४। १।७ ) इति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न । उभयविधौ गौरवात् । किंचैवं ङीपि निषिद्धे रोऽपि दुर्लभः । सन्नियोगशिष्टत्वात् । भाष्ये तु सूत्रभंगेन

शब्दरत्न ।

सू० ४।१।९ ) इति विहितेन । अनो योऽसौ विकल्प इति । "अन्यतरस्याम्" इति विभक्तसूत्रेण प्राप्त इत्यर्थः । "अन" (पा० सू० ६।४।१६७) इति सूत्रेऽपि 'अन्यतरस्याम्' इत्यस्य सत्त्वाद्विकल्पनियमलाभोऽन्यथा स नित्यार्थो विधिरेव स्यादिति भावः । स उपधेति । स उपधालोपिनोऽनुपसर्जनस्य बहुव्रीहेरेवेत्यर्थः । निषेधार्थमिति । योगविभागेन पक्षे प्राप्तस्य "ऋन्नेभ्य" ( पा०सू० ४।१।९ ) इति ङीप् इत्यर्थः । इत्येव ङीबिति । नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यभिमानेनेदम् । तेनेति । "अन उपधा" ( पा० सू० ४।१।२८ ) इत्यस्य नियमत्वेनेत्यर्थः । ऋन्नेभ्य इति । अस्यान्यथेत्यादिः । "अन उपधा" (पा०सू०४।१।२८) इत्यस्य विधायकत्वे इति तदर्थः । प्रकरणान्तरस्थेनेति। तेनानन्तरत्वं बोधितम् । गौरवादिति । मम तु 'ऋन्नेभ्य' ( पा० सू० ४।१।९ ) इति प्राप्तङीपमनूद्य तत्सन्नियोगेन रभावमात्रविधायकं तदिति भावः । ननु "वनो र च" (पा० सू० ४।१।७) इत्यस्योभयविधायकत्वे "अनो बहुव्रीहेः" (पा० सू० ४।१२७) इत्यनन्तरत्वादस्य निषेधकमुत येनेति न्यायेन "ऋन्नेभ्य" इत्यस्य, नाद्य इत्याह—किं चेति। "अन उपधा" इत्यनेन ङीप्यपि रो दुर्लभ एवेति भावः । किं चैवं बहुष्वेत्यत्र 'ऋन्नेभ्य' ( पा० सू० ४।१।९ ) इति ङीवापत्तिः । किं च 'बहुव्रीहौ वा' (का०वा०) इति वार्त्तिकस्याप्यपूर्वविधायकतापत्त्या सुपर्वन्शब्दे ङीब्रयोरापत्तिः। (१)सिद्धान्ते तु 'अन उप-

ज्योत्स्ना ।

ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तौ, लाघवात्, वन्नन्तबहुव्रीहौ "अन उपधा" इति ङीपि "ऋन्नेभ्य" इति ङीबनुवादेन विधीयमानो रादेशो न स्यादत आह—अन उपधेति ।

---

वि० ( १ ) "वनोरच" इत्यस्य "ऋन्नेभ्यः" इत्येतत्प्रापितङीबनुवादेन रभावमात्रविधायकसिद्धान्ते इत्यर्थः ।

समाहितम्। तद्यथा—"अनो बहुव्रीहेः" (पा० सू० ४।१।१२) इत्यस्यानन्तरमुपधालोपिनो वेति सूत्रमस्तु। "अन उपधा" (पा० सू० ४।१।२८) इत्यादिप्रदेशान्तरस्थं सूत्रं डाप्सूत्रे अन्यतरस्यां ग्रहणं च मास्तु इति।

"अन उपधा" (पा० सू० ४।१।२८)॥ "बहुव्रीहेरूधसो ङीष्" इत्यतो बहुव्रीहिग्रहणं "संख्याव्ययादेर्ङीप्" इत्यतो ङीप् चानुवर्तते इत्याशयेनाह—अन्नन्तादित्यादि। नियमार्थमिदमित्युक्तम्। न चैवं पूर्वेण विकल्पसिद्धौ इहान्यतरस्यां ग्रहणं व्यर्थमिति वाच्यम्। असति हि तस्मिन् नित्यार्थो विधिरेवायं स्यान्न तु नियमः।

---

शब्दरत्न।

धा" इत्येतत्प्रापितङीबनुवादेन रभावस्य तेन विधानान्न दोषः। एतेनान्त्यपक्षो बाद्धयसामान्यचिन्तयोभयबाधकमिति पक्षश्च परास्तः। 'बहुव्रीहौ वा' (का० वा०) इत्यनेन सुपर्वन्शब्दे ङीब्रयोरापत्तेरिति दिक्। इत्यस्यानन्तरमिति। अनो बहुव्रीहेर्डाबुभाभ्याम् अनुपसर्जनात् उपधालोपिनो वेति पाठ्यमिति भावः। यथा श्रुते "अनुपसर्जनात्" (पा०सू० ४।१।१४) इत्यस्य सम्बन्धो दुर्घटः। अत एव बहुदामानि पुरायतिक्रान्ता नगरीत्यत्र ङीब् न। ग्रहणं चेति। चेन 'बहुव्रीहौ न' (का०वा०)इत्यस्यापि सङ्ग्रहः। पूर्वोक्तयोगविभागप्रकारस्तु गुरुभूत इति भाष्याशयः।

इत्युक्तमिति। डाप्सूत्रे 'अन्यतरस्याम्' इति योगविभागकरणपक्षे इदमुक्तमित्यर्थः। पूर्वेणेति। उक्तयोगविभागेनेत्यर्थः।

ज्योत्स्ना।

इत्यस्यानन्तरमिति। 'अनो बहुव्रीहेः डाबुभाभ्यामन्यतरस्याम् अनुपसर्जनात्' इति सूत्रपाठे भाष्यकृता अनो बहुव्रीहेरित्यनन्तरम् उपधालोपिनो वा इति न्यासप्रदर्शनेन तन्नासम्बन्धो ध्वनितः। अन्यथा तत्सम्बन्धे इदानीं नेति व्यत्यास आपद्येतेति भावः।

वस्तुतस्तु—इत्यस्यानन्तरम् इति प्रतीकमुपादाय रत्नकृता 'अनो बहुव्रीहेः डाबुभाभ्याम् अनुपसर्जनात् उपधाधालोपिनो वा' इति पाठ्यमिति भावः। यथाश्रुते अनुपसर्जनादित्यस्य सम्बन्धो दुर्घटः। अत एव बहुदामानि पुराण्यतिक्रान्ता नगरी इत्यत्र ङीब् न इति भाष्यतात्पर्यस्य तत्सम्बन्धे फलस्य प्रदर्शनेन तद्विरोधाभावात्। विभाषासपूर्वस्येत्यत्र गृह्यमाणान्ते गृह्यमाणे सपूर्वपदार्थे अनुपसर्जनादिति सम्बन्धस्य तत्फलस्य च नागेशेनाप्युक्तत्वाच्च। बहुव्रीहिविशेषणार्थम् अनुपसर्जनादित्यस्य सम्बन्ध आवश्यक इति दिक्।

परममूले "अन उपधा" इत्यस्य नियमार्थत्वं नोक्तमित्युक्तम्, इतिकथनमयुक्तमत आह—डाप्सूत्रे इति।

"प्रत्ययस्थात्कात् पूर्वस्य" ( पा० सू० ७।३।४४ ) ॥ कादित्यकारः उच्चारणार्थः । व्यञ्जनमात्रं विवक्षितम् । विशिष्टविवक्षायां तु एतिकाश्चरन्तीत्यादौ अकचि न स्यादित्याशयेनाह—ककारादिति । वर्णनिर्देशे हि कारप्रत्ययो विहितः । क्वचित्समुदायात् प्रयोगस्तु 'उच्चैस्तरां वा वषट्कारः' इति निर्देशरूपयत्नसाध्य इति भावः । आपि पर इति । एतच्च अकारस्य विशेषणम् । तत्र सामर्थ्यात् ककाराकाराभ्यां व्यवायेऽपि भवति । न तु रथकट्येत्यादौ त्रिचतुरादिव्यवाये । अत एव सर्विकादौ आद्याकारस्य न भवति । तदेतदुक्तम्—अकारस्येकारः स्यादापि पर इति । ककारविशेषणत्वे तु विवक्षिते आप्परात्ककारात् पूर्वस्यात इत्यवक्ष्यत् ।

यत्तु प्राञ्चः—आपीति ककारविशेषणं सर्विकेत्यादौ तु एकादेशस्य स्थानिवद्भावादकारेण व्यवधानेऽपि वचनसामर्थ्याद्भविष्यतीति । तन्न । रथकट्यादावतिप्रसङ्गात् । व्यवहितस्यापि परत्वानपायात् । न च निर्दिष्टपरिभाषया निस्तारः । अनुवादे परिभाषाणामनुपस्थितेः । अनूद्यमानस्य विशेषणेष्विति हि तदर्थः । अत्र च "उदीचामातः" ( पा० सू० ७।३।४६ ) इति सूत्रे स्थानेग्रहणं लिङ्गम् । फलं तु वृद्धसञ्ज्ञायामिक्परिभाषानुपस्थानात् शालीयादिसिद्धिः ।

---

शब्दरत्न ।

अकचि न स्यादिति । तदकारो हि पचतकीत्यादिसिद्ध्ये न प्रयोगसमवायीति भावः । यत्नसाध्य इति । एतत्प्रयोगरूपज्ञापकसाध्य इत्यर्थः । एतच्चाकारस्येति । सन्निहितत्वात् साक्षाद्विध्युद्देश्यत्वेन प्राधान्याच्चेति भावः । तत्र सामर्थ्यादिति । कात्पूर्वस्येति शास्त्रसामर्थ्यात्ककारेण व्यवधानं सह्यते । आवकारयोस्त्वेकादेशे कृते "अचः परस्मिन्" ( पा० सू० १।१।५७ ) इति स्थानिवत्त्वेनाकारव्यवधानेऽपि श्रौताव्यवधानं गृहीत्वा प्रवृत्तिः । अकारशब्देनात्वजातिग्रहणम् । तेनैतिकेत्यादावकारद्वयसत्त्वेऽपि न क्षतिरिति भावः । अत एव 'न यासयोः' ( पा० सू० ७।३।४५ ) इति चरितार्थम् । त्रिचतुरादीति । श्रौतत्रिचतुरादीत्यर्थः । आद्याकरस्येति । इदं च कात्पूर्वस्येत्यंशेऽनूद्यमानविशेषणत्वानाव्यवधानांशप्रवृत्तिरिति वादिनां मते बोध्यम् ।

वचनसामर्थ्यादिति । श्रौताव्यवधानमाश्रित्येत्यर्थः । अनूद्यमानस्येति । साक्षादनूद्यमानविशेषणतया वाऽनूद्यमानस्येत्यर्थः । विशेषणेषु—आपीत्यादिषु । सिद्धिरिति ।

ज्योत्स्ना ।

व्यञ्जनमात्रं विवक्षितमिति । कारप्रत्ययान्तरनिर्देशरूपव्याख्यानेनेत्यर्थः । अन्यथा-

यदप्याहुः—आपीति विधीयमानस्येता विशेषणमिति। तत्स्थवीयः। आपीत्यस्यांगविशेषणत्वं त्वनाशङ्क्यमेव। रथकट्यापुत्रकाम्येत्यत्रातिप्रसङ्गात्। शकेति। पचाद्यच्। स्थग्रहणं विस्पष्टार्थम्। ककारमात्रस्य प्रत्ययस्याभावादेव तात्स्थ्यलाभात्। पूर्वस्य किम्। सर्विकेत्यादौ टाबेकादेशं बाधित्वा कात्परस्य मा भूत्। "तस्मादित्युत्तरस्य" (पा० सू० १।१।६७) इति परिभाषणात्।

यत्तु वार्णादाङ्गमिति परिभाषया एकदेशो बाध्यतेत्याहुः। तन्न। अपवादे परत्वस्येव उक्तपरिभाषाया अपि निष्फलत्वात्। वस्तुतस्तु प्रत्ययस्थे कि इति सप्तमीनिर्देश एवोचितः। पूर्वग्रहणं च सुत्यजम्। अत

शब्दरत्न।

अस्य तैरुक्तमिति शेषः। अनेन तत्र सूत्रे एतस्यैव ज्ञापकत्वं वर्णयतोऽत्र चैवं वदतस्तव पूर्वापरविरोध इति भावः।

यदि त्वन्तरङ्गत्वेन स्थानसम्बन्धलाभ इत्यर्थः "षष्ठीस्थाने" इत्यत्र भाष्ये स्पष्ट इति स्थानेग्रहणं व्यर्थमेव। तस्य परिभाषालभ्यत्वाभावेन ज्ञापकासम्भवात्। वृद्धसंज्ञायामिक्परिभाषानुपस्थितिस्तु "मालादीनां च" (पा० सू० ६।२।८८) इति ज्ञापकात्। तद्धि 'प्रस्थेऽवृद्धम्' इति पर्युदासे प्राप्ते आरभ्यते। अनुवाद इति च निर्मूलम्। यद्वा इक्परिभाषाच्परिभाषयोर्विधीयते इत्यध्याहारात्तत्र तस्या अप्रवृत्तिरनुवादे इति च तद्विषयमेव अत एव "अल्लोपोऽनः" (पा० सू० ६।४।१३३) इत्यत्र यजादिस्वादिपर इत्यस्यान्विशेषणत्वेऽपि अव्यवधानलाभ इति "व्यङः" इति सूत्रे भाष्ये ध्वनितं सङ्गच्छते इति विभाव्यते तदा संनिहितत्वादिनैवापीत्यस्याकारविशेषणतेति बोद्धव्यम्। तत्स्थवीय इति। विधेयस्यासिद्धत्वेन तद्विशेषणतासम्भवादिति भावः। अनाशङ्क्यमेवेति। (१)श्रुतेनान्वयसम्भवेऽश्रुतेनान्वयायोगादिति भावः। लक्ष्यविसम्वादमप्याह–रथेत्यादि। तात्स्थ्यलाभादिति। कान्तात्प्रत्ययादिति तु नार्थः। क्षिपकादीनां निषेधस्य व्यर्थत्वापत्तेः। अपवादे इति। येन नाप्राप्तिन्यायेन बाधकविषये तेनैव न्यायेन बाधसिद्धेरिति भावः। प्रत्ययस्थे कीति। प्रत्यये कीत्येव युक्तं "न यासयोः" (पा०सू०७।३।४६)

ज्योत्स्ना।

वर्णबोधकत्वाभावेन तदसङ्गतिः स्पष्टैव। "न यासयोः" इत्यादिकमप्यत्रैव लिङ्गं बोध्यम्।

पूर्वस्य किमिति। "प्रत्ययस्थात्" इति सूत्रे पूर्वस्य ग्रहणाभावे कादित्रियोगलक्षणपञ्च–

वि० (१) 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति परिभाषया तथा प्रतिपादनादिति भावः।

इति तपरः किम् । "कृदाधारार्चिकलिभ्यः कः" ( का० वा० ) धाका । राका । मासिकेति ।। "केवलमासक" ( पा० सू० ७।३।४४ ) इत्यादिना 'स-

शब्दरत्न ।

इति ज्ञापकात् कादौ प्रत्यय इति नार्थं इति बोद्धयम् । एवं चात्परस्य प्रत्ययस्थक-कारपरस्य चात इदित्यर्थः । तत्र सामर्थ्यादाप्परत्वांशे ककारव्यवधानं सोढव्यमेवेति

ज्योत्स्ना ।

म्या "तस्मादित्युत्तरस्य" इति परिभाषया अव्यवहितत्वोत्तरत्वविधेयान्वयिषष्ठ्यर्थत्वं-शत्रयोपस्थितौ प्रत्ययस्थात् ककारात् अव्यवहितोत्तरस्य ह्रस्वाकारस्येत्वं भवति आपि परे इत्यर्थेन कटुकशब्दादापि कटुक आ इति स्थिते सवर्णदीर्घत्वमाङ्गत्वेनापवा-दत्वाच्च प्रबाध्य इत्वं स्यात् । न चैवम् सर्विका इत्यादावेव सर्वक आ इति स्थितौ उक्तप्रकारेणेत्वापत्तिसत्त्वेन कटुकापर्यन्तानुधावनमनुचितमिति वाच्यम् । "सूतका पु-त्रिका" इति वार्तिके प्रश्लेषेणाकारविधानसामर्थ्येन "प्रत्ययस्थात्" इति सूत्रे दिग्यो-गलक्षणपञ्चमीसत्वेऽपि "तस्मात्" इतिपरिभाषाया अप्रवृत्तिज्ञापनात् । किन्तु पञ्च-म्युपपत्तये दिग्योगवाचकशब्दाध्याहारे प्रसक्ते परस्यैव स नियम इत्यस्याभावेन कदा-चित् परस्यकदाचित् पूर्वस्येत्यस्याध्याहारः । तथा च परपदस्याध्याहारे सवर्णदीर्घ बाधकल्पनम्, पूर्वस्येत्यस्याध्याहारे तु नेति सूत्रबाधपरिहारलाघवेन सर्विकेत्यादि-लक्ष्यसंस्कारस्य पूर्वस्यैवेत्याध्यारेण तत्र दोषाभावात् । यत्रोदाहरणे पूर्वोऽकारो नेति तत्रागत्या परस्यैवाध्याहारे यथा कटुका इत्यत्र पूर्वाकारसम्भवात् तत्रेत्वप्रवृत्यर्थं परस्येत्वस्याध्याहारेदोषः स्पष्ट एवेति तत्पर्यन्तानुधावनस्य सार्थक्यात्। "प्रत्ययस्थात्" इति सूत्रे "तस्मात्" इति परिभाषाप्रवृत्तौ तु "सूतकापुत्रिकावृन्दारकाणाम्" इत्यत्र कात्परस्यैवाकारस्य सत्वेन तस्य विकल्पेनेत्वविधानेऽपि रूपद्वयसिद्धौ प्रश्लेषेणाका-रविधानस्य वैयर्थं स्पष्टमेव । इदानीं तु—'सूतकावृन्दारकाणाम्' इत्यत्र ककारा-त्पूर्वस्याकारस्य सत्वेऽपि पुत्रिका इत्यत्र ककारात्पूर्वस्येकारस्याकारविधाने पुत्रका-तदभावे पुत्रिका इति रूपद्वयसिद्धिरिति वाक्यं सार्थकम् ।

यत्तु—अकारान्तादेव टाब्विधानेन ककारोत्तरस्य आप्याकारस्यैव सम्भवेन "प्रत्य-यस्थात्" इति सूत्रेऽग्रहणस्य तपरकारणस्य वा वैयर्थ्येन तत्सामर्थ्यात् तस्मादित्यु-त्तरस्य" इत्यस्याप्रवृत्तिकल्पनेन सर्विकेत्यत्रोक्तरीत्या दोषाभावेन कटुकेति प्रत्युदाह-रणमिति तन्न। भवतु इति तिङन्तात् "तिङश्च" इति तरपि अ शब्दाचारक्विबन्तात् लोटि सिपि हौ हेर्लुकि द्वयोः भवतकु अ इति यस्यां क्रियायामिति समासे ततष्टापि भवतका-इत्यादावुकारस्येत्वापत्तेः । भविता इत्यस्मादकचि टाबन्तेनाशब्देन समासे भवितका इत्याकारस्य अ शब्दाज्जातेन टापा जातस्य सवर्णदीर्घस्य परादिवद्भावेनाप्त्वादि-त्वापत्तेश्च उभयोश्चारिताध्यात् । सवर्णदीर्घस्य स्थानिवत्वं तु न । अकारस्य पदान्त-

ञ्ज्ञाच्छन्दसोरेव' इति नियमान्न ङीप्। त्यक्त्यपोरिति। "उदीचामातः स्थाने" (पा० सू० ७।३।४६) इति विकल्पस्यापवादः। दाक्षिणात्यिकेति। दक्षिणस्यामदूरे दक्षिणा आजन्तः। दक्षिणा भवेति विग्रहः।

यत्तु दक्षिणस्यां दिशि भवेति प्राचा विगृहीतम्। तन्न। त्यग्विधावव्ययसाहचर्यादाजन्तस्यैव दक्षिणाशब्दस्य ग्रहणात्। अन्यथा—'सर्वनाम्नो वृत्तिमात्रे' (का० वा०) इति पुंवद्भावापत्तेश्च।

यत्तु समासे एव पुंवदिति तन्नेति वक्ष्यते। त्यकि "किति च" (पा० सू० ७।२।११८) इत्यादिवृद्धौ टाप्, ततोऽज्ञाताद्यर्थे कः "केऽण" इति ह्रस्वष्टाप्। इहत्यिकेति। अव्ययात्त्यप्।

"न यासयोः" (पा० सू० ७।३।४५)॥ अत्र न्यासकारः। या इत्येतस्य "उदीचामातः स्थाने" (पा० सू० ७।२।४६) इति विकल्पे प्राप्ते निषेधोऽय-

---

शब्दरत्न।

भावः। विग्रह इति। "दक्षिणापश्चात्" (पा० सू० ४।२।९८) इति त्यक्। अन्यथा—दिग्वाचकस्यापि ग्रहणे चेन साहचर्यत्यागे मानाभावः संगृहीतः।

ज्योत्स्ना।

त्वेन "न पदान्त" इति निषेधात्। न च भवत क अ आ इति स्थिते सवर्णदीर्घात्पूर्वं "प्रत्ययस्थात्" इत्यस्याकारेण व्यवधानादप्राप्त्या सवर्णदीर्घात्पूर्वमन्तरङ्गत्वादुकारस्य यणि ततष्टापा सवर्णदीर्घोत्तरमुकाराभावेन नोक्तापत्तिरितिवाच्यम्। ककारस्यैवेत्वापत्तेः। भविताका इत्यत्रेत्ववारणाय तपरकरणस्यावश्यकत्वेन तदर्थमपि तद्ग्रहणस्योचितत्वाच्चेति दिक्।

वस्तुतस्तु—'कारिका शब्दस्योपसंख्यानम्' 'नित्यं क्रीडाजीविकयोः' इत्यादिनिर्देशेन पूर्वाकारस्यैवेत्वविधानेन सिद्धे पूर्वस्येति सुत्यजमित्याहुः।

नियमान्न ङीविति। अन्यथा णान्तत्वादेवसिद्धे तद्वैयर्थ्यं स्पष्टमेव। न चानेन मामकशब्दान्ङीप एव विधानेन "मामकनरकयोः" इत्यत्र मामकग्रहणं व्यर्थमिति वाच्यम्। मांमातीति मामः मामङ्कायतीमामिका इत्यत्रेत्वविधानार्थं तस्य चारितार्थ्यात्। नचात्रापि "केवलमामक" इत्यस्य प्राप्तिरिति वाच्यम्। भागधेयशब्दसाहचर्येण तद्धितान्तस्य मामकशब्दस्य ग्रहणेनादोषात्। नियमफलं लोके ऽसंज्ञायाम् मामिकेति। न च "मामकनरकयोः" इति वार्तिकारम्भसामर्थ्येन ङीबभावकल्पनेन कथं मामिकेति नियमफलमिति वाच्यम्। उक्तवार्तिकस्यापूपरत्वाभावेऽपि चारितार्थ्यात् सामर्थ्यविरहस्य सत्वेन ङीबभावस्य कल्पयितुमशक्यतया ङीपो दुर्वारत्वेन उक्तप्रयोगस्य नियमव्यावर्त्यस्य सत्वादिति दिक्।

मिति । तन्न । "आतः स्थाने" ( पा० सू० ७।३।४६ ) इत्यंशस्येहाभावात् । या सेति यत्तदोरुपलक्षणमित्याशयेनाह—यत्तदोरिति । स्वरूपस्याविवक्षायां फलमुदाहरति । यकां तकामिति । यासयोरित्यपहाय यत्तदोरित्येव वक्तुमुचितम् । उपत्यकेति । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" ( पा० सू० ५।२।३९ ) । "क्षिपकादीनां च" ( का० वा० ) । नेत्यनुषज्यते । क्षिपकेति । क्षिपेरिगुपधलक्षणः कः । ततोऽज्ञातादौ कः । चट भेदने । पचाद्यच् । ततः कः । तारकेति । तरतेर्ण्वुल् । ज्योतिर्नक्षत्रं नेत्रकनीनिका च वर्णकाप्रावारविशेषः । तन्तूनां विकारस्तान्तवम् । ओरञ् । अन्यत्र वर्णिकेति । ग्रन्थविशेषस्य व्याख्या । स्तोत्रकर्त्री च । वर्तयतीति वर्तका, शकुनौ इत्वं वा । अन्यत्र नित्यमेव । पितरश्च ताः देवताश्च पितृदेवतास्तदर्थं कर्म पितृदेवत्यम् । "देवतान्तात्तादर्थ्ये यत्" ( पा०सू०५।४।२४ ) इति यत् । अश्नन्ति ब्राह्मणा यस्यां सा अष्टका । इष्यशिभ्यां तकन् । अष्टिकान्येति । अष्टौ परिमाणमस्याः । "संख्याया अतिशदन्तायाः कन्" ( पा० सू० ५।१।२२ ) । अर्थगतं स्त्रीत्वमाकारेऽध्यारोप्य 'यकपूर्वायाः' इति स्त्रीलिङ्गनिर्देशः । तेन स्त्रीप्रत्ययो लभ्यत इत्याशयेनाह—स्त्रीप्रत्ययाकारस्येति । सांकाश्यिकेति । सङ्काशेन निर्वृत्तं साङ्काश्यम् । वुञ्छणादिसूत्रेण सङ्काशादिभ्यो ण्यः । ततो भवार्थे धन्वयोपधाद्वुञ् । अकादेशः । स च साङ्काश्यभवां स्त्रियमाहेति तदकारस्यापि इत्वं विकल्प्येत, तस्मादात इत्युक्तम् । ननु यथायमकारो नाकारस्थानिक एवं स्त्रीप्रत्ययस्थानिकोऽपि नेति द्व्यङ्गविकलमेतत् ।

अत्राहुः—सति ह्यात इत्येतस्मिन् स्त्रीलिङ्गनिर्देशबलात् स्त्रीवाचक आकारः स्त्रीप्रत्यय एवेति लभ्यते । असति तु तस्मिन् स्त्रीवाचकस्य योऽकार इत्येतावल्लभ्येत ततः साङ्काश्यिकेत्यत्रापि प्रसज्येतेति । अत्रेदं वक्तव्यम् । यकपूर्वायाः स्थाने इति स्थानेशब्दे जागरूके कथमवयवषष्ठीत्वं गम्यताम् । न च वुञः स्थानेऽयमिति वाच्यम् । अकेति समु-

---

शब्दरत्न ।

इहाभावादिति । अकचः सत्त्वादिति भावः । प्रावारविशेष इति । वर्णयत्याच्छादयतीति व्युत्पत्तेः । जागरूके इति । स्थाने पदाभावेऽप्यन्तरङ्गत्वात्स्थानसम्बन्धस्यैव

दायस्य तथात्वेऽपि अकाररूपावयवस्यातथात्वात्। वुञो यकपूर्वत्वाभावाच्च। नहि तस्यामवस्थायां "यस्य" (पा० सू० ६।४।१४८) इति लोपोऽपि लभ्यते। किं च प्रतिपदोक्तस्य स्त्रीप्रत्ययस्य लाभे भवार्थविहितस्य वुञादेः प्रसङ्ग एव नास्ति। तस्मादात इति स्पष्टार्थमेव। अश्विकेति। कौमारास्तु भस्त्रादिवाक्येऽश्वशब्दमपि पठन्तोऽस्यापि विकल्पमिच्छन्ति। शुभं यातीति शुभंयाः। विच्। ततः कः। केऽणः। शुभमिति मान्तो निपातः। सुष्ठु नयो यस्याः सुनया ततः कः।

"भस्त्रैषा" (पा० सू० ७।३।४७)॥ तदन्तेति। आङ्गत्वादिति भावः। एवं चेति। उक्तं च हरदत्तेन—

अत्रातः स्थान इत्येतत्स्वशब्दस्य विशेषणम्।
सम्भवव्यभिचारौ हि तत्र स्तः काकचोः सतोः॥
द्वैषयोः सम्भवो नास्ति नान्यत्र व्यभिचारिता।
सर्वनाम्नः स्वशब्दस्य तेन नायं विधिर्भवेत्॥ इति।

इह स्वशब्दस्येत्यस्यानन्तरमत इति शेषो बोद्धव्यः। एतच्च इह मूलेऽपि ध्वनितम्। एवं च 'हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिमिव स्विकायाम्' इति श्रीहर्षश्लोके "भस्त्रैषा' (पा० सू० ७।३।४७) इति वैकल्पिकमित्वमिति व्याचक्षाणा उपेक्ष्या इति भावः। आत्मीयायामिति। आत्मज्ञातिधनेषु तु स्त्रीत्वमेव नास्तीति भावः।

---

शब्दरत्न।

लाभ इत्यपि बोद्धव्यम्। प्रतिपदोक्तस्येति। स्त्रियामित्यधिकृत्य विहितस्येत्यर्थः। विशिष्य तदनुपादानात् कथं तल्लाभ इति चिन्त्यम्। इच्छन्तीति। तद्भाष्यादावदर्शनादयुक्तं शुभंयाः विच् ततः क इति नदीसंज्ञासूत्रस्थभाष्यप्रामाण्यात्—आदन्तेभ्यः क्विपोऽनभिधानाद्विजुक्तः। तत्र हि "स्त्र्याख्यौ" इति पदे आदन्तलक्षणो विजुक्तो न तु क्विप् इत्याहुः। कैयटस्तु शुभं याति क्विप्। शुभमिति निपातोऽज्ञातादौ कः "केऽण" (पा० सू० ७।४।१३) इति ह्रस्व इत्याह॥

मूलेऽपि ध्वनितमिति। स्वशब्दस्यातो विशेषणमित्यादिना भवत्युदाहरणमित्यन्तेन ग्रन्थेनेति भावः। स्विकायामितीति। स्वशब्दादत्यन्तस्वार्थिके इत्वे साधुः। न ह्यकच् अत्यन्तस्वार्थिकस्याप्यपवादः। व्याचक्षाणा इति। अकचमुक्त्वा वैकल्पिकमित्वं व्याचक्षाणा इत्यर्थः। स्त्रीत्वमेव नास्तीति।

'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने'

यत्तु ज्ञातिधनयोः स्वका स्विकेति रूपद्वयमाकरे स्थितमित्याहुः । तच्चिन्त्यम् । तादृशस्याकरस्याप्रसिद्धेः । लिङ्गानुशासनविरोधाच्च । यत्तु स्वका स्विकेति काशिकायामुदाहृतं तत्सञ्ज्ञाविषयकं न तु ज्ञातिधनविषयकम् । यदपि स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इति परिजहुः । तदपि चिन्त्यम्—उक्तरीत्या कप्रत्ययान्तात्टाप्सम्भवेऽपि प्रकृतेरस्त्रीलिङ्गतया आतःस्थाने इत्यंशस्य दुरुपपादत्वात्। प्रत्युदाहरणान्युक्त्वा उदाहरणान्याह—निर्भस्त्रिकेत्यादि । निष्क्रान्ता भस्त्राया निर्भस्त्रा । उपसर्जनह्रस्वः । टाप् । ततोऽज्ञातादौ कः । कृतषत्वेति । सूत्रे विकृतनिर्देशो विवक्षितविषयो न तु "न यासयोः"(पा० सू० ७।३।४५ ) इतिवदुपलक्षणमिति भावः । स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गा एव गृह्यन्ते । तेनेह न । शुभ्रोऽजोऽस्याः । शुभ्राजिका । जानातीति ज्ञः । प्रियो ज्ञोऽस्याः प्रियज्ञिकेति ।

"अभाषित" ( पा० सू० ७।३।४८ )॥ विहितविशेषणतया व्याख्यायाः फलमाह—बहुव्रीहेरिति । नित्यमिति । अस्य विकल्पस्याप्रवृत्तेः "प्रत्ययस्थात्"इत्युत्सर्ग एव प्रवर्तत इत्यर्थः । परविशेषणत्वे त्वयं विकल्पः स्यादिति भावः । बहुव्रीहेरित्युपसर्जनोपलक्षणं तेनातिखट्विकेत्यादावपि नित्यमेव । शैषिके कपीति । "आपोऽन्यतरस्याम्" (पा० सू० ७।४।१५) इति ह्रस्वपक्षे इति भावः। अभिव्याप्त्येति । अत एव बहुयुवा शालेत्यत्र "यूनस्तिः"

शब्दरत्न ।

इति कोशादिति भावः । संज्ञाविषयकमिति । सञ्ज्ञाया अपि "सञ्ज्ञापूरण्योश्च" (पा०सू०६।३।३८)इति (१)पुंवत्त्वनिषेधेन भाषितपुंस्कत्वबोधनात् "अभाषितपुंस्काच्च" (पा० सू० ७।३।४८) इत्यनेन न सिद्धिरिति भावः । अत्यन्तस्वार्थिकान्तविषयं चेत्यपि बोद्धव्यम् । उपलक्षणमिति । भस्त्राशब्दसाहचर्येण व्याख्यानेन च श्रुतानुपूर्वीकस्यैवैषाशब्दस्य ग्रहणमत एव 'एषाद्वे नञ्पूर्वे उदाहरणम्'इति भाष्येऽप्येषेत्येवोक्तम् । अन्यथा एतद्वृद्धीत्येव वदेदिति भावः । शुभ्राजिकेति । बहुव्रीहेष्टापि ततः स्वार्थिकः क इति भावः । एतेनातःस्थानिकत्वाभावादप्राप्तिरित्यपास्तम् ।

परविशेषणत्वे त्विति । समुदायस्य भाषितपुंस्कत्वेऽपि तदवयवस्य खट्वशब्दस्यातथात्वेन ततः परत्वात् परविशेषणे दोषः स्यादेवेति भावः ।ह्रस्वपक्षे इति । बहु जस् खट्वा

ज्योत्स्ना ।

अभिव्याप्त्येति । न च गौर इवाचरति गौरायते, गोरायते इति गौरा-

वि० ( १ ) पुंवत्वस्य प्राप्तिपूर्वकस्तस्य प्राप्तिश्च भाषितपुंस्कत्वं विना नेति भावः ।

( पा० सू० ४।१।७७ ) रुपसर्जनत्वान्नेति प्राञ्च आहुः ।

"टिड्ढा" ( पा० सू० ४।१।१५ ) ।। इह वृत्तिकृता सूत्रे ख्युनपि प्रक्षि-

शब्दरत्न ।

जस् इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात् समास-संज्ञायां 'समासान्ता' इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तान्त-समासरूपप्रातिपदिकाभावाद् "गोस्त्रियोः" ( पा० सू० १।२।४८ ) इति ह्रस्वत्वाभावे "केऽण" (पा० सू० ७।४।१३) इति ह्रस्वत्वे च "न कपि" (पा०सू०७।४।१९) इति नि-षिद्धे "आपोऽन्यतरस्याम्" ( पा० सू० ७।४।१५ ) इति ह्रस्वे कपः प्राग्वर्तिनः खट्व-शब्दात्परस्यापोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः । ह्रस्वा-भावे तु बहुखट्वाकेतीति भावः ।

प्राञ्च आहुरिति । न च "स्त्रियाम्" ( पा० सू० ४।१।३ ) इत्यस्य गृह्यमाणविशेष-णत्वान्नात्र दोषः । अनुपसर्जनाधिकारेण तदन्तविधौ स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृति-

ज्योत्स्ना ।

इत्यत्र "षिद्गौरादिभ्यश्च" इति ङीषोऽभावार्थं तच्चरितार्थमिति वाच्यम् । तदन्त-विधिज्ञापकतापरकभाष्यप्रामाण्येन आचारक्विबन्तात्कर्तृक्विपोऽनभिधानात् । नच सूत्रे अत इत्यनुवर्त्य अदन्तेभ्यो गौरादिभ्यो ङीषित्यर्थेन प्रकृतेऽदन्तात्वाभावेनाप्राप्तिरिति वाच्यम् । बहुशब्दादाचारक्विबन्तात्कर्तरि क्विपि "बह्वादिभ्यश्च" इत्यस्याप्रवृत्त्यर्थमनभि-धानस्यावश्यकत्वात् । एवमनडुह् शब्दस्य अशब्देन समासे तस्मादाचारक्विबन्तात्क-र्तरि क्विपि अतो लोपे अनडुह् शब्देऽपि ङीपोऽभावार्थमनभिधानमावश्यकम् । नच अनडुहशब्दात्केवलादाचारक्विबन्ताल्लोपे उद्भावनीयेऽशब्देन समासपर्यन्तानुधावनं वि-फलमिति वाच्यम् । "ह्रस्व नद्यापो नुट्" इति सूत्रे प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषो मिदचोऽन्त्यात्पर इति परत्वे प्रत्ययः परश्चेति वा परत्वे इत्यादि भाष्याद्ध-लन्तेभ्य आचारक्विपोऽनभिधानस्य क्लृप्तत्वेन तत्प्रकृतिककर्तृदुर्लभत्वेन समासपर्य-न्तानुधावनस्य सार्थक्यात् । एवं "प्रातिपदिकात्" इति विहितणिजन्तप्रकृतिकक्विब-न्तानामनभिधानं तुल्यन्यायात् । न च पञ्च स्त्री गोव्यक्तयो धनानि यस्य स पञ्चग-वधनः इत्यत्र पञ्चगवेत्यस्योपसर्जनत्वेन तत्र ङीब् निवृत्त्यर्थं तस्य चरितार्थत्वेन कथं ज्ञापकत्वमिति वाच्यम् । अर्थवत्सूत्रोक्तस्य एतत्संज्ञाफलभूतविभक्तीतरस्वसमभिव्या-हारानपेक्षयालोकेऽर्थविषयकबोधजनकत्वरूपार्थवत्वस्याभावेन टजन्तस्य प्रातिपदिक-त्वाभावेन ङीपोऽप्रसक्तेः । प्राचीनमतेऽपि स्वपर्याप्तत्व, स्वप्रयोज्यबोधजनकत्वप्रकार-कवक्तृतात्पर्याविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन । शक्तिविशिष्टत्वरूपार्थ-वत्वस्य पञ्चगवेत्यत्रासत्वेन तदप्रवृत्तेः । एतेन तत्र चारितार्थ्ये सम्भवति ज्ञापकत्वो-पवर्णनमसम्भवदुक्तिकमिति वदन्तः परास्ताः ।

## ज्योत्स्ना ।

अथ "सर्वादीनि सर्वनामानि" इति सूत्रे "संज्ञोपसर्जनीभूतानां प्रतिषेधो वक्तव्यः" इति वार्तिकस्वीकारेऽपि "त्यदादीनामः" "अद्‌ड्डतरादिभ्यः पञ्चभ्यः," इत्यनयोरुपसर्जने प्रवृत्तिः कस्मान्नेत्याशङ्‌क्य अनुपसर्जना दित्यधिकारसूत्रे अनुपसर्जन अ अत् इति प्रश्लिष्य "अकारात्कारौ शिष्यमाणौ अनुपसर्जनस्य द्रष्टव्यौ" इति भाष्ये उक्तम् । अतश्चानुपसर्जनत्वमत्रत्यं तत्रत्यञ्चैकमेव प्रतीयते । ,किंच तदित्याकाङ्क्षायाम् उपसर्जनभिन्नत्वं तत्वम् । उपसर्जनत्वञ्च यदि स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वम् । अतिसर्वेत्यत्र च स्वं सर्वशब्दः तदन्तम् अतिसर्व इति तत्पर्याप्ता शक्तिः सर्वकर्मकातिक्रमणकर्तृत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थो अतिक्रमणकर्तृत्वावच्छिन्नस्तदर्थनिष्ठविशेष्यतानिरूपितानेकारब्धसमुदायत्वावच्छिन्नप्रकारताप्रयोजकत्वं सर्वशब्दे इति । बहुकुरुचरा इत्यत्रस्थं टच् तन्दतं बहुकुरुचरा इति तत्पर्याप्ता शक्तिः बह्वभिन्नकुरुचराधिकरणत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थः अन्यपदार्थः—तन्निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वम् टचि इति लक्षणसमन्वय इत्युच्यते तर्हि सर्वशब्देऽपि।सर्वनिष्ठविशेष्यतानिरूपितसर्वत्वनिष्ठप्रकारताप्रयोजकत्वमस्त्येत्वेयुपसर्जनत्वं स्यादिति, यदि यस्योपसर्जनत्वं वक्तव्यं तदितरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं तत् । तथा च सर्वशब्दे इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावेन न दोष इत्युच्यते । तदा आचारक्विबन्तस्थले इतरपदार्थनिष्ठविशेष्यताया अभावादनुपसर्जनाधिकारसत्वेऽपि ङीपो दुर्वारत्वेन फलभेदाभावादनभिधानाश्रयणमयुक्तम् । न चाचारक्विप्स्थले' इतरपदं, क्विप् तत्प्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य सत्वेनोपसर्जनतया सिद्धान्ते ङीपोऽप्राप्त्या इदानीमपि तदभावार्थमनभिधानमावश्यकमिति वाच्यम् । क्विपमादायोपसर्जनत्वे छीयतेरप्रत्यये इ इति प्राप्नोति स्व इति चेष्यते' इति भाष्ये सत्वाप्राप्त्या स्व इति चेष्यते इत्यनेन विरोधापत्त्या तदेकवाक्यत्वाय इतरपदेन श्रूयमाणस्यैव,ग्रहणेन क्विपोऽश्रूमायणत्वेनैवेष्टसिद्ध्यानभिधाने दृढतरप्रमाणाभावात्। नन्वेवमपि परमसर्वघटकसर्वशब्दे उपसर्जनत्वं दुर्वारम् । स्वं सर्व इति तदितरत् श्रूयमाणं पदं परम इति, तदर्थनिष्ठप्रकारतानिरूपितविशेष्यता,सर्वत्वनिष्ठा तत्प्रयोजकत्वं सर्वशब्दे । एवमापिशलिना प्रोक्तमधीते या स्त्रीत्यत्राणोऽश्रूयमाणत्वेनोपसर्जनत्वाभावाच् । अनुपसर्जनाधिकारफलप्रतिपादनपरभाष्यविरोधश्चेति चेन्न । स्वविशिष्टप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति स्वीकारेणादोषात् । स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितत्वस्वपर्याप्तशक्तिज्ञानाधीनोपस्थितीयविशेष्यतासामानाधिकरण्यमेतदुभयसम्बन्धेन । स्वान्तत्वं व्यपदेशिवद्भावानतिदिष्टं ग्राह्यम् । एवं च आपिशलेत्यत्र स्वप्रोक्तार्थे जायमानोऽण् तदन्तमपि शल इति तत्पर्याप्ता शक्तिः आपिशलिप्रोक्तग्रन्थकर्मकानयन-

म्नः। औत्सीति। उत्से भवा। "उत्सादिभ्योऽञ्"। (पा०सू०४।१।८६) न च "शार्ङ्गरवाद्यञ्"( पा० सू० ४।१।७३ ) इति ङीना सिद्धमिदमिति वाच्यम्।

शब्दरत्न।

विशेषणतायाश्च ज्ञापनेनादापात्। अत एव धीवानमतिक्रान्ता अतिधीवरीति सिद्ध्यति। प्राधान्येन तद्विशेषणताया न्याय्यत्वाच्च। "अनुपसर्जनात्" इति तु गृह्यमाणस्यैव विशेषणम्। अत एव कौम्भकारेय(१)सिद्धिः। अन्यथा कुम्भकारेयोऽप्यापद्येत(२)।

ज्योत्स्ना।

कर्तृत्वावच्छिन्ननिरूपिता शक्तिः तन्निरूपकोऽर्थो निरुक्तः तन्निष्ठविशेष्यतानिरूपितत्वम् अणप्रत्ययवाच्यप्रोक्तरूपार्थनिष्ठप्रकारतायाम्। एवं स्वं प्रोक्तार्थेऽण् तत्पर्याप्ता शक्तिः प्रोक्तत्वावच्छिन्ननिरूपिता तज्ज्ञानजन्या या उपस्थितीया विशेष्यता प्रोक्तत्वावच्छिन्ननिष्ठा तत्सामानाधिकरण्यमपि सम्पन्नमुपसर्जनत्वम्। परमसर्वघटकसर्वशब्दे सर्वत्वनिष्ठप्रकारतायाम् पूर्वसम्बन्धसत्त्वेऽपि निरुक्तोपस्थितीयविशेष्यता सामानाधिकरण्याभावान्न दोषः। द्वीयतेरप्रत्ययेऽप्यनतिदिष्टस्वान्तत्वाभावान्नानभिधानकल्प्यम्। एवञ्चानडहशब्देऽपि स्वान्तत्वाभावात् उपसर्जनत्वाभावेनानभिधानाश्रयणमयुक्तमेवेति विभाव्यतां विद्वद्भिः।

अत एवेति। गृह्यमाणप्रातिपदिकेनापि तदन्तविधिस्वीकारादेवेत्यर्थः। अन्यथा ग्रहणवता इति द्वितीयतदन्तविधिनिषेधात् "वनो र च" इत्यस्य वन्नन्ततदादित्वविशिष्टप्रातिपदिकादित्यर्थेनातिधीवन्नित्यस्य वन्नन्ततदादित्वाभावात्तद्रूपासङ्गतिः स्पष्टैव।

कौम्भकारेयसिद्धिरिति—न च कुम्भकारीशब्दाड्ढग् दुर्लभः तस्य शिल्पिवाचकत्वेन "सेनान्तलक्षणकारिभ्यश्च" इत्यनेन ण्यप्रत्ययेन बाधादिति वाच्यम्। हिंसार्थकात् कृधातोरणि घटस्फोटकवाचकस्य यौगिकस्यान्यार्थकस्यापि तस्य स्वीकारेणाक्षतेः।

कुम्भकारेयोऽप्यापद्येत इति। ननु प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजक-

---

प्र० (१) न च कुम्भकारशब्दस्य शिल्पिवाचकत्वेन "सेनान्तलक्षणकारिभ्यश्च" इत्यनेन ण्य एव स्यादिति कथं ढगुदाह्रियत इति वाच्यम्। हिंसार्थकात्कृधातोः कर्मण्यणि घटधातुकवाचकस्य कुम्भकारशब्दस्योदाहरणघटकत्वेन ण्यस्याप्राप्तेः।

प्र० (२) ननु प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणप्रातिपदिकात्प्रत्यया भवन्ति। अत एव राजपुरुषस्यापत्यमित्यर्थे राजपौरुषिरिति न भवति। अत एव सूत्रनडस्यापत्यमिति विग्रहे "नडादिभ्यः फक्" इति फक् न भवति तथा प्रकृतेऽपि ङीप्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारतायाः प्रयोजकं पर्याप्त्या कुम्भकारोति, न तु कारीति, तथा च कथं ततो ढगापादनमिति वाच्यम्। उक्तपर्याप्तिघटितार्थस्य प्रत्ययोद्देश्यतावच्छेदकप्रत्ययविधेयकविध्यतिरिक्त एव स्वीकारात्। स्त्रीभ्यो ढक्विधिस्तु स्त्रीप्रत्ययनिष्ठोद्देश्यतावच्छेदकताकः प्रत्ययनिष्ठविधेयता-

तत्र "जातेः" इत्यनुवृत्तेः । अन्यथा पुंयोगेऽपि स्यात् । एतेन इह

शब्दरत्न ।

कुम्भेन समासेऽपि केवलस्य कारस्य प्रातिपदिकत्वेन तदर्थस्यापि स्त्रीत्वेन योगात्ततो ङीपि कुम्भेनैकार्थीभूतस्यापि विशिष्टस्यापत्येन योगे तस्यायोगस्य वक्तुमशक्यत्वात् तेनापि योगे कदाचित्ततो ढकि विशिष्टस्य तन्निरूपिताङ्गत्वाभावेन कुम्भशब्दाकारे वृद्ध्यनापत्तेः । निष्कृष्यैकार्थीभावस्यैव प्रत्ययोत्पत्तिनिमित्तत्वे न मानम् । समुदाये-नैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् । न च समुदायान्ङीप्यपि अनुपसर्जनस्त्रीप्र-त्यये तदादिनियमाभावेन कदाचित्कारीशब्दादापत्तिस्तवापीति वाच्यम् । एतदधि-कारसामर्थ्यादेव तनादिनियमाभावेनाधिकस्यैव कार्यं बोद्ध्यते, न तु न्यूनस्येत्यदोषा-दिति तदाशयो(१) विस्तरस्त्वन्यत्र बोद्ध्यः ।

पुंयोगेऽपि स्यादिति । इष्यते तु ङीषित्यर्थः । प्रत्युक्त इति । अनेनैव सिद्धे तत्राप्य-

ज्योत्स्ना

तात्पर्याप्त्यधिकरणप्रातिपदिकात् प्रत्ययाः भवन्ति । अत एव राजपुरुषस्यापत्यमि-त्यर्थे राजपौरुषिः इति न भवति । अत एव सूत्रनडस्यापत्यमित्यर्थे "नडादिभ्यः फक्" ति न भवति । तथा च प्रकृते ङीप्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारतायाः प्रयोजक-पर्याप्त्या कुम्भकारीति न तु कारीति ततः कथं तस्माड्ढगापादनमिति चेन्न । पर्याप्ति-घटितार्थस्य पूर्वोक्तस्य प्रत्ययोद्देश्यतावच्छेदकप्रत्ययविधेयकविध्यतिरिक्ते एव स्वीका-रेणादोषात् । "स्त्रीभ्यो ढक्" इति—ढक्विधिस्तु स्त्रीप्रत्ययनिष्ठोद्देश्यतावच्छेदकताकः प्रत्ययनिष्ठविधेयताकश्च प्रवर्तते । इति तत्र न तादृशार्थः स्वीक्रियते । अत एव पर-मगार्ग्यस्यापत्यमिति विग्रहे परमगार्ग्यायण इत्यस्य सिद्धिः । अन्यथा गार्ग्येऽपि यञ-न्ततदादेः तादृशप्रकारताप्रयोजकतापर्याप्त्यभावेन स न स्यादिति तदाशयः । एवम् "अयः शूल" इति सूत्रस्थशिवभागवत इत्यस्यापि सिद्धिः । तदर्थं 'भक्तिः' इति सूत्र मत्वन्तभगवत इत्यस्य पाठस्वीकारात् । एवं च लिङ्गविशिष्टपरिभाषया देवोभागवतः इत्यस्यापि सिद्धिः । ग्रन्थेऽपि तत्प्रतिपादकत्वेन सेवकत्वोपचारात् तत्प्रयोगस्य साधु-त्वस्वीकारात् । एतेन ग्रन्थे देवीभागवत, इत्यस्यासाधुत्वं वदन्तः प्रत्युक्ताः ।

विस्तर इति । अन्ये तु अत्र अनुपसर्जने तदादिनियमाभावेन कारीशब्दाड्ढकः प्रा-प्तावपि वृक्षप्रचलनन्यायेन समुदायादेव स्यान्न तु अवयवादित्याहुः । तन्न । वृक्षप्र-

कश्च प्रवर्तते इति तत्र न तादृशार्थस्वीकारः । अत एव परमगार्ग्यस्यापत्यमिति विग्रहे पर-मगार्ग्यायण इत्यस्य सिद्धिः । एवं 'अयं शूले' इति सूत्रभाष्योक्तस्य शिव भागवत इति रूपस्य सिद्धिः तदर्थं 'भक्तिः' इति सूत्रे मत्वन्तभगवत इति पाठस्य कल्पनात् । एवं च लिङ्ग-विशिष्टपरिभाषया देवीभागवत इत्यस्यापि सिद्धिः । ग्रन्थे तूपचारात्तत्प्रयोगो बाध्यः ।

प्र० (१) विस्तर इति । केचिदत्र अनुपसर्जने तदादिनियमाभावेन कारीशब्दाड्ढकः प्राप्ता-

अन्ग्रहणं स्पष्टार्थमिति प्राचो ग्रन्थः प्रत्युक्तः। इहानेकं वाक्यं तत्र अनुपसर्जनमण् योऽकारस्तदन्तादिति व्याख्यानान्नेह। आपिशलमधीते आपिशला ब्राह्मणीति। अत्र हि प्रोक्तार्थेऽण् उपसर्जनम्। अध्येत्रण् तु लुप्तः। वर्णप्राधान्यान्न प्रत्ययलक्षणम्। अतष्टाबेव भवति। ताच्छीलिकेति—अयं

शब्दरत्न।

हणं तूत्सस्यापत्यं स्त्रीत्यत्र जातिलक्षणङीष्बाधनार्थमिति बोद्ध्यम्। अत्र हीति। न चैवमुपसर्जनाधिकारस्य चारितार्थ्यें मूलोक्ततदन्तविधिज्ञापकतानुपपत्तिरिति वाच्यम्। लक्ष्यानुसारिव्याख्यानेन स्त्रियामित्यस्य गृह्यमाणविशेषणतयाऽपि तद्वारणसम्भवात्। तस्माद्बहुकुरुचरेत्येव तद्व्यावर्त्यम्। तच्च तदन्तविधिं विना नोपपद्यत इति तज्ज्ञापकत्वं, स्त्रियामित्यस्य प्रकृतिविशेषणत्वज्ञापकत्वं चेति बोद्ध्यम्। तत्करणे एतद्व्यावृ-

ज्योत्स्ना।

चलनन्यायस्याविषयत्वात्। समुदायस्य कार्यसम्बन्धे यत्रावयवस्य कार्यसम्बन्धो नान्तरीयको भवति। अवयवस्य कार्यसम्बन्धे च समुदायस्य कार्यसम्बन्धो नान्तरीयको न भवति तत्रैव तन्न्यायस्य विषयत्वात्। प्रकृते च ढग्रूपकार्यस्य अवयवेन कारीशब्देन अव्यवहितोत्तरत्वसम्बन्धे समुदायेन कुम्भकारीशब्देनापि स सम्बन्धो भवति। ढक्प्रयुक्तादिवृद्ध्यादिकार्यस्य समुदायेन सम्बन्धे अवयवस्य कारीशब्दस्य तत्सम्बन्धो न भवतीति तन्न्यायावसरस्याभावादिति विस्तरः इतीप्रघट्टकार्थः।

ननु ज्ञापितेऽपि तदन्तविधौ श्रुतानुमितपरिभाषया स्त्रियामित्यस्य टिदादीनां विशेषणत्वे बहुकुरुचरेत्यत्र टितः स्त्रियां विद्यमानत्वाभावेन ङीपोऽप्राप्तौ पुनरपि अनुपसर्जनाधिकारवैयर्थ्यं इत्याशयेनाह—स्त्रियामित्यस्येति। अनुपसर्जनाधिकारेण तदन्तविधौ ज्ञापितेऽपि स्वांशे चारितार्थ्याभावेन प्रातिपदिकविशेषणत्वमेव स्त्रियामित्यस्योचितमिति भावः॥

ताच्छीलके णेऽपि इति। चौरीति। "शीलं" छत्रादिभ्यो णःइति विहितो यो णः तस्मिन् अण्कार्यं भवतीत्येतदर्थकताच्छीलिके णेऽपि इति परिभाषया अण्णन्तत्वारोपे ङीविति बोध्यम्। अत्र च "कामंस्ताच्छील्ये" इति ज्ञापकम्। तत्र हि "अन्" इति सूत्रे-

वपि वृक्षप्रचलनन्यायेन समुदायादेव स्यान्नावयवादिति समादधुः। तन्न। यत्र समुदायस्य कार्यसम्बन्धेऽवयवस्य तत्सम्बन्धो नाप्राप्तो भवति, अवयवस्य च कार्यसम्बन्धे समुदायस्य तत्सम्बन्धो-नाप्राप्तो न भवति। तत्रैव तन्न्यायस्वीकारात्। प्रकृते च ढग्रूपकार्यस्य अवयवेन कारीशब्देन अव्यवहितोत्तरत्वसम्बन्धे समुदायेन कुम्भकारीशब्देनापि स सम्बन्धो भवति। ढक्प्रयुक्तादिवृद्ध्यादिकार्यस्य समुदायेन सम्बन्धे अवयवस्य कारिशब्दस्य तत्सम्बन्धो न भवतीति न तन्न्यायावकाश इत्यादिविस्तर इत्यर्थः।

भावः—"शीलं" ( पा० सू० ४।४।६१ ) "छत्रादिभ्यो णः" इति यो णस्तस्मिन् अण्कार्यं भवति । कार्मस्ताच्छील्ये इति ज्ञापकात् । अनेन हि "अन्" ( पा० सू० ६।४।१६७ ) इति अणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । चौरीति । चुरा शीलमस्याः ।

"हलस्तद्धितस्य" (पा०सू०६।४।१५०) उपधाभूतस्येति । ननु "यस्येति च"(पा०सू०६।४।१४८)इति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या । न चाल्लोपस्य स्थानिवद्भावः । यलोपे तन्निषेधात् । मैवम् । यलोपे कार्येऽल्लोपस्याभीयत्वेनासिद्धत्वात् । अनपत्येति । यद्यपि "आपत्यग्रहणं कर्तव्यम्" (का० वा०) इति वार्तिकं तथाऽपि अपत्याधिकारविहितपरं तत् । तादृशश्च गर्गादियञेव न तु देवाद्यञ् । तस्यापत्याधिकारात् प्रागेव पाठात् । अत एव भाष्यकृता कञ्करपोऽयञश्चेति, गर्गादिभ्योऽयञिति च अकारः प्रश्लिष्टः । यस्कादिभ्यो गोत्रेऽयनञोश्चेति सूत्रेऽप्येवम् ।

शब्दरत्न ।

त्तिरपि अनेनैव उपसर्जे(१)नपदेनोभयोरपि ग्रहणमित्याशयात् । अण्कार्यमिति । ङीबित्यर्थः । ताच्छीलिक इत्युक्तेः "तदस्यां प्रहरणम्"(पा०सू०४।२।५७) इति णे दाण्डेत्येव ।

अकारः प्रश्लिष्ट इति । तद्वार्तिकप्रत्याख्यानायेति शेषः । "अभिजिद्विदभृत्"(पा०सू० ५।३।११८) इत्यादि सूत्रेऽस्त्रियामित्यनुवृत्तेस्तस्य गोत्रार्थकत्वेऽपि न तत्र ङीप् सिद्धान्तेऽपीष्टः । "संघाङ्क" (पा०सू० ६।२।३९) इति सूत्रे एतद्भाष्यप्रामाण्यादेकानुबन्धकपरिभाषाया अप्रवृत्त्या गर्गादियञ एव ग्रहणमिति भावः । एवमिति । अकारः प्रश्लिष्ट इत्यर्थः ।

ज्योत्स्ना ।

णाणिपरे विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । यदि तु णप्रत्यये अण्कार्यं न स्यात्तर्हि किं तेन । ताच्छीलिकस्यैव णप्रत्ययस्य अण्कार्यं ज्ञापनात् "तदस्यां प्रहरणमिति क्रीडायां णः" इति विहितस्य णस्य नाण्कार्यं तेन दाण्डा इति । न चैवं लाघवात् छत्रादिभ्योऽणेव विधीयताम् किं णप्रत्ययविधानेन तस्याण्कार्यज्ञापनेन चेति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् छात्रा इत्यर्थं तस्यावश्यकत्वात् ।

वि० ( १ ) कृत्रिमाकृत्रिमन्यायेनात्रोनुपसर्जनाधिकारप्रयोजनप्रदर्शनपरभाष्यप्रामाण्येन बाध्यत इति भावः ।

"प्राचां ष्फः" ( पा० सू० ४।१।१७ ) ॥ तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम् । ननु तां विनाऽपि षित्करणसामर्थ्यादेव ङीष् भविष्यति । एवं तर्हि तद्धितग्रहणमिनन्तादपि क्वचित् ष्फ इति ज्ञापयति । यजन्ते सवर्णदीर्घेणापि रूपसिद्धौ "यस्य" इति लोपस्यानावश्यकत्वात् । तेन 'आसुरेरुपसंख्यानम्' इति वक्ष्यमाणं सिद्ध्यति ।

"आयने" (पा० सू० ७।१।२) ॥ फकारादिष्वकार उच्चारणार्थः । आयनीनोर्नकारस्य नेत्त्वम् । फिनो नित्करणसामर्थ्यात् ।

"कौरव्य" (पा० सू० ४।१।१९) ॥ कथं तर्हि 'यद्यसौ कूपमाण्डूकि तवैतावतिकः स्मयः' इति भट्टिः । अत्राहुः—कौरव्यसाहचर्यादपत्यप्रत्ययान्तस्यैव

शब्दरत्न ।

प्रातिपदिकसंज्ञार्थमिति । तत्फलं च ङीषिति भावः । न च लिङ्गविशिष्टपरिभाषया तत्सिद्धिः, एतत्सूत्रस्थैतत्समाधानार्थभाष्यप्रामाण्येनास्याः स्त्रीप्रत्ययप्रकरणेऽनुपस्थितेः । सामर्थ्यादेवेति । अप्रातिपदिकत्वेऽपीति भावः ।

उच्चारणार्थ इति । तेन ढ्रक आदेशसिद्धिः । नित्करणेति । असञ्जातविरोधन्यायसहकृतेत्यर्थः ।

ज्योत्स्ना ।

तद्धितग्रहणं प्रातिपदिकसंज्ञार्थमिति । परे तु—अत्र तद्धितग्रहणं षित्करणसामर्थ्यादेवात्र ईकारो भविष्यतीत्याश्रित्य प्रत्याख्यातम् । "कौरव्यमण्डूकाभ्यां च" इति सूत्रे आसुरेरुपसंख्यानम् आसुरायणी इत्युक्तम् । तेन तद्धितग्रहणस्य यस्येति लोपसिद्धिः फलमिति लभ्यते । तावन्मात्रप्रयोजनत्वे "प्राचां ष्फ" इति ङिदेव कार्यं इति प्रत्याख्यातभाष्याशयः इत्याहुः ।

वस्तुतस्तु—षित्करणसामर्थ्यात् ङीषः सिद्धौ अपि ङीषः प्रातिपदिकप्रकृतिकत्वाभावेन लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वानारोपात् ततः सुबाद्यसिद्धिः । स्वाप्रकृतिकलिङ्गबोधकप्रत्ययान्ते स्ववृत्तिधर्मारोपे तु परमकुम्भी । कुम्भपुत्राशब्दादावपि परतः सत्यापत्तिः । षित्करणसामर्थ्यादेवात्र ईकारो भविष्यतीति भाष्योक्त्या स्त्रीप्रत्यये कर्तव्ये लिङ्गविशिष्टपरिभाषायाः प्रवृत्त्यभावो व्यज्यते । तेन भवतीमतिक्रान्ता अतिभवतिः इत्यत्र "उगितश्च" इति ङीप् धीवरीमतिक्रान्ता अतिधीवरिरित्यत्र "वनो र च" इति आदेशसन्नियोगशिष्टो ङीप् च नेति बोध्यम् । एतेन लिङ्गविशिष्टपरिभाषया ष्फान्तस्य प्रातिपदिकत्वात् तत्प्रकृतिकङीषन्तेऽपि प्रातिपदिकत्वारोपात् सुबादिसिद्धिरित्यपास्तम् । अत एव भाष्ये तद्धितग्रहणं न कर्तव्यमिति नोपसंहृतमित्याहुः ।

तेनेढ्रक आदेशसिद्धिरिति । अत्र भाष्यम्–ढग्रहणे सानुबन्धकस्योपसंख्यानं कर्तव्यम् । अननुबन्धकग्रहणेन सानुबन्धकस्येति ग्रहणमित्याशङ्क्य न कर्तव्यम अननुबन्धको हि

माण्डूकस्येह ग्रहणम् । इह तु मण्डूकस्येयं भार्येति "तस्येदम्" (पा० सू० ४।३।१२०) इत्यण् । कुमारीति । प्रथमवयोवाची एष शब्दः । नत्वनूढत्वप्रयुक्तः। वृद्धकुमारीति तु गौणः प्रयोगः । त्र्यनीकेति । त्रयाणामनीकानां समाहारः । अत्राजादेराकृतिगणत्वात् टाबिति त्र्यनीकाधिकरणे मीमांसकाः ।

पञ्चाश्वेति । नन्वत्र "द्विगोः" (पा० सू० ४।१।२१ ) इति ङीप् मा भूत् ठगन्तत्वात्तु स्यादेवेति चेत् । न । ठको योऽकार इति व्याख्यानात् । द्विविस्तेति । 'सुवर्णविस्तौ हेम्नोऽक्षे' इत्यमरः। आचितो दश भारा स्युः। द्विकम्बल्येति । द्वाभ्यां कम्बल्याभ्यां क्रीता । कम्बल्यमूर्णापलशतम् । "कम्बलाच्च संज्ञायाम्" (पा० सू० ५।१।३) इति यत् । क्रीतार्थस्य ठञो लुक् । द्व्याढकीति । द्वावाढकौ पचतीति "आढकाचितपात्रात्खोऽन्यतरस्याम्" (पा० सू० ५।१।५३ ) "द्विगोष्ठंश्च" ( पा० सू० ५।१।५४ ) इति खठन्भ्यामुक्ते प्राग्वतीयष्ठञ् तस्य लुक् । एतेन द्व्याचिता व्याख्याता ।

"काण्डान्तात्" ( पा० सू० ४।१।२३ )॥ षोडशहस्तप्रमाणो दण्डः काण्डम् । यद्यपि विशेषणेन तदन्तविधिः सिद्धस्तथाऽपि अन्तग्रहणे असति

---

शब्दरत्न ।

न त्विति । अल्पवयस्यूढायामपि प्रयोगादिति भावः । गौण इति । पुंसाऽसंप्रयोगरूपसादृश्यादिति भावः ।

ठगन्तत्वादिति । द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यादौ निषेधश्चरितार्थः । अत्र हि कनो लुक् ।

कम्बल्यमिति । अपरिमाणत्वेऽप्येतयोर्ग्रहणं नियमार्थमुन्मानस्य चेद्विस्तकम्बल्ययोरेवेति । तेनान्यत्रोन्माने द्विपली द्विनिष्कीत्यादिसिद्धिः ।

ज्योत्स्ना ।

ढ स्त्रियां नास्तीति सानुबन्धकस्य ग्रहणं विज्ञास्यते इति समाधाय 'ननु चायमस्तीति शिलायाः ढः नैष स्त्रियां वर्तते" अयं तर्हि सभायाः यः ढः छन्दसीति एषोऽपि स्त्रियां न प्रवर्तते तत्र साधुरिति वर्तते । कथं च स्त्रीनाम सभायां साध्वी स्यात् इत्युक्तम् ।

अत्र कैयटः—शिलेव शिलेयम् इति नपुंसकलिङ्गः शिलेयशब्दः स्वभावात् यज्ञसभायां विदुषां पुरुषाणामेव साधुत्वाधिकारात् । ननु सभायां साधुरियं ब्राह्मणपङ्क्तिरिति परिषद्वा इति सम्भवति स्त्रियाः सभायां साधुत्वम् । एवं तर्हि च्छन्दसि एवं विधायां स्त्रियां सभेयशब्दस्य प्रयोगाभाव इत्याह एवं च स्वभावतः सभेयशब्दस्य पुंस्त्वं प्रदर्शितमिति ।

क्षेत्र इत्येतत् श्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तदन्तस्य। ततश्चेहापि स्यात्। द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति। इह तु न स्यात्। द्विकाण्डा क्षेत्रभक्तिरिति। अतोऽन्तग्रहणम्। मात्रच इति। यत्तु प्राचोक्तं द्वयसचो लुगिति। तन्न।

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।

इति सिद्धान्तात्। द्विकाण्डी रज्जुरिति। नन्विहापिपरिमाणान्तादिति पूर्वेण निषेधः स्यात्। काण्डशब्दस्यायामपरतयाऽपरिमाणार्थत्वात्। परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणमाढककुडवादि। न तु यथाकथंचित्परिच्छेदकमात्रम्। यदाहुः—

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः॥ इति॥

---

शब्दरत्न।

श्रुतत्वादिति। अवान्तरवाक्यार्थबोधोत्तरं "येन विधिः"( पा० सू० १।१।७२ )इत्यस्य प्रवृत्तेस्तत्काले श्रुतत्वात्तेनैव सम्बन्धे जाते पश्चात्तदन्तविधावपि पुनर्व्यापारे मानाभाव इति भावः। इहापीति। इहैवेत्यर्थः। सिद्धान्तादिति। षोडशहस्तप्रमाणदण्डार्थकाण्डशब्दस्तु तिर्यङ्मानमिति न तस्योर्ध्वमानत्वमिति भावः।

ज्योत्स्ना।

ऊर्ध्वमानं किलोन्मानमिति। 'ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः'। 'आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः'॥ इति वार्तिकोक्तेः। अत्र परिमाणशब्देनारोहतः परिणाहतः यत् काष्ठादिनिर्मितेन परिमीयते तत् काष्ठादिनिर्मितं गृह्यते। न चैवमुन्माने द्विनिष्की न सिद्ध्येदिति वाच्यम्। 'सुवर्णबिस्तौ हेम्नोऽक्षे, कम्बल्यमूर्णापलशतम्' इति कोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणस्य उन्मानस्य चेन्निषेधो बिस्तकम्बल्योरेवेति नियमार्थत्वेन सार्थक्यात्। अत एव "वयसि प्रथमे" इति सूत्रभाष्ये द्वे वर्षे भूता द्विवर्षा इत्यादौ द्वाभ्यां शताभ्यां क्रीतेत्यर्थे "आर्हात्" इति सूत्रभाष्यप्रयुक्ते द्विशतेत्यादौ तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः। द्विकाण्डी रज्जुरित्यत्र "काण्डान्तात्क्षेत्रे" इति क्षेत्रे एवेति नियमार्थत्वान्न निषेध इति नागेशभट्टैरुक्तम्। तन्न भाष्यत्रयविरोध आपद्येत। एकः प्रकृतसूत्रस्थः द्वितीयः "कम्बलाच्च संज्ञायाम्"इति सूत्रीयः, तृतीयः "संख्यायाः संवत्सरसंख्यस्य च" इति सूत्रस्थश्च। तत्राद्ये—इमौ द्वौ प्रतिषेधावुच्येते तत्रैकः शक्योऽवक्तुम्, कथम् एवं वक्ष्यामि परिमाणान्तात्तद्धितलुकि ङीब् भवतीति। "द्विगोः" इति सिद्धे तन्नियमार्थं भविष्यति। परिमाणान्तादेव, तद्धितलुकि नान्यत इति। विपरीतनियमस्तु न

ज्योत्स्ना ।

लक्ष्यानुसारित्वात् शास्त्रस्य । ततो "बिस्ताचितकम्बल्येभ्यो न तद्धितलुकि"इत्येवोक्तम् । यद्यत्र परिमाणपदेन पारिभाषिकं 'परिमाणं तु सर्वतः' गृह्यते चेत् तदा बिस्तादीनां परिमाणत्वाभावेन परिमाणान्ते देवेति नियमादेव ङीपो व्यावृत्तेः सिद्धौ बिस्ताचितेति द्वितीयो योगो व्यर्थः स्यात् ।

द्वितीयेऽपि—उक्तं भाष्ये अयं योगः शक्योऽवक्तुम् । कथं कम्बल्यमिति । निपातनात् किं निपातनम्, 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इति । इदं तर्हि प्रयोजनम् संज्ञायामिति वक्ष्यामि, इह मा भूत् कम्बलीया ऊर्णा इति । एतदपि नास्ति प्रयोजनम् परिमाणपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणम् तत्र क्रियते परिमाणार्थम् परिमाणं च संज्ञैवेत्युक्तम् । यदि चात्र पारिभाषिकपरिमाणग्रहणं विवक्षितं स्यात्, तदा कम्बल्ये परिमाणत्वाभावेन पर्युदासस्याप्राप्त्या परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्युक्तिरसङ्गता स्यात् ।

तृतीये—"परिमाणान्तस्यासंज्ञाशाणयोः" इत्येव सिद्धे सम्वत्सरग्रहणमनर्थकम् । एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति किं प्रयोजनम् 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' । द्विवर्षा, त्रिवर्षा, परिमाणपर्युदासो न भवति, इत्युक्तम् भाष्यकृता । परिमाणपदेन पारिभाषिकपरिमाणग्रहणे द्विवर्षा इत्यादौ प्राप्त्यभावात् शंकाया ज्ञापनरूपसमाधानस्य चासङ्गतिः स्पष्टैव ।

अत्र वदन्ति—पाणिनिना पारिभाषिकपरिमाणमभ्युपगम्य एको योगः नञ्द्वयं कम्बलाच्चेति सूत्राणि प्रणीतानि तदेव च सूत्रमतम् । भाष्यकारेण परिमाणमात्रं स्वीकृत्य नञ्द्वयखण्डनम् योगविभागः कम्बलाच्चेत्यस्य प्रत्याख्यानं कृतम् "संख्याया" इति सूत्रस्थं भाष्यं भाष्यकृता स्वमतेन प्रतिपादितम् । इति न भाष्यविरोधः । सूत्रमतभाष्यमतयोर्भेदात् इति केचित् । परे त्वेवं स्वीकारे सूत्रभाष्ययोः मते द्विहस्ता भित्तिरित्यत्र विरोध आपद्येत । तस्मादयुक्तमेतत् । यद्यपि भाष्यप्रामाण्यात् अनभिधानाश्रयणं वक्तुं शक्यम्, तथापि सत्यन्यस्मिन्नुपाये अनभिधानमयुक्तमिति विरोधपरिहारः प्रदर्श्यते । भाष्यमते प्रकृतसूत्रे पारिभाषिकपरिमाणग्रहणम्, ततश्च द्वितीययोगो व्यर्थः सन् उन्मानातिरिक्तान्ताच्चेत् परिमाणान्तादेवेति पूर्वयोगस्य नियमाकारं कल्पयति ततश्च बिस्ताद्यन्ते उन्मानातिरिक्तान्तत्वाभावात् नियमेन व्यावृत्तेरसिद्धौ ङ्ब्वारणार्थो द्वितीयो योगः विशेषनियमाकारफलन्तु- द्विनिष्की इत्यादौ ङीप्सिद्धिः । एवं च न प्रकृतसूत्रस्थभाष्यविरोधः । द्वितीये परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्यस्य, तेन पर्युदासेन द्विनिष्की इत्यादावपि निषेधरूपे विधेयङीञ्रूपकार्यस्य पर्युदासे प्राप्ते उन्मानस्य चेद्विस्तकम्बल्योरेवेति

अत एव द्विहस्ता भित्तिरित्यत्र ङीब् न ।

अत्राहुः—नियमार्थमिदम् । क्षेत्रे एव निषेधो यथा स्यादिति । अतो द्विकाण्डी रज्जुरित्यत्र ङीबेव सूत्रस्य फलमिति ।

"पुरुषात्प्रमाणे" ( पा० सू० ४।१।२४ )॥ यद्यपि पुरुषशब्दो जातिवचनस्तथाऽपि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणे वर्तत एव । प्रमाणशब्दसामानाधिकरण्यात् । वृत्तौ तु तत्स्वभावादेव । तथा च शुल्बसूत्रम्—'पञ्चारत्निः पुरुष' इति । द्विपुरुषीति । अत्र न्यासकारः—"प्रमाणे लो 'द्विगोर्नित्यम्' ( उ० सू० ) इति द्वयसचो लुगित्याह । तन्न । पुरुषशब्दस्य प्रमाणवाचित्वाभावेन "प्रमाणे ल" इति श्लोकवार्तिकस्य तत्राप्रवृत्तेः । ये हि शमादिवत् प्रमाणत्वेन प्रसिद्धास्तत्रैतत्प्रवर्तते, न तु पुरुषशब्दे-

शब्दरत्न ।

प्रमाणे वर्तत एवेति । परिच्छेदके वर्त्तत इत्यर्थः । तत्स्वभावादिति । वृत्तिस्वभावादित्यर्थः । द्वयसचो लुगिति । तस्यायं भावः–आयामो दैर्घ्यं तच्च द्विविधम् । तिर्यगूर्ध्वं च । उन्मानं च तुलादावारोप्य येन मीयते तदिदं च विनिगमनाविरहादिति । प्रमाणवाचित्वाभावेनेति । तिर्यङ्मानस्यैव प्रमाणत्वात् । तिर्यङ्मानस्यैवायामपदेन प्रमाणलक्षणे ग्रहणं न तूर्ध्वमानस्य । 'ऊर्ध्वमानं किलोन्मानम्' इत्युक्तेरिति भावः । द्विगोर्लुगित्यंशेऽपि प्रमाणे इत्यनुवर्त्तत एवेति तात्पर्यम् । प्रमाणत्वेन प्रसिद्धा इति । तिर्यङ्मानत्वे-

ज्योत्स्ना ।

परिमाणविशेषे नियमार्थं बिस्तकम्बल्यग्रहणम् कम्बल्यपदस्य कम्बलहितोर्णादिसामान्यार्थकत्वे तु अपरिमाणान्तत्वादेव निषेधे सिद्धे उक्तनियमस्यासंभवात्कम्बल्यग्रहणमनर्थकं स्यादित्यर्थ इति न तद्भाष्यविरोधः ।

तृतीयभाष्यविरोधपरिहारश्चेत्थम्–तत्र तावत् "परिमाणान्तस्यासंज्ञाशाणयोः" इति सूत्रे मापैश्चतुर्भिः शाणः स्यात् पारिभाषितोन्मानभूतशाणपर्युदासात् न सर्वतोन्मानरूपार्थस्य ग्रहणम्, किन्तु परिच्छेदकमात्रस्येति सँवत्सरशब्दस्य परिच्छेदकत्वात् परिमाणग्रहणेन ग्रहणं स्यादिति तदनर्थकत्वशंकोत्पद्यते । संख्यायाश्च आहादिति सूत्रे संख्याग्रहणात् परिमाणग्रहणेनाग्रहणबोधनात् न संख्याग्रहणानर्थक्यमिति न न्यूनत्वम् । अग्रे च भाष्ये तेन कालपरिमाणानां वृद्धिर्नेति कल्पयित्वा द्वैसमिकः त्रैसमिकः इति फलमभिहितम् । शाणपर्युदासात् परिमाणाग्रहणेन उन्मानप्रमाणपरिमाणानां, ग्रहणेऽपि संख्या इव कालपरिमाणानां न ग्रहणं भवतीति तदाशयः । अपर आहेत्यादिना च न केवलं परिमाणान्तस्येति वृद्धिविधायके एवकालपरिमाणान्तस्येति परिमाणग्रहणेन ग्रहणं न भवतीति । तेन द्विवर्षा त्रिवर्षा इत्यादौ अपरिमा–

ऽपि । अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात् । स्पष्टं चेदं "पुरुषहस्तिभ्यासण् च" (पा०सू० ५।२।३८) इति सूत्रे पदमञ्जर्याम् । न चैवं द्वयसज्दघ्नचावपि नास्मात्स्यातामिति वाच्यम् । 'ऊर्ध्वमाने मतौ मम' इति वचनात् । एवं "पुरुषात्प्रमाणे" (पा० सू० ४।१।२४) इत्यस्यापि सामर्थ्यादेव प्रवृत्तिः ।

यत्तु तत्रैव सूत्रे द्विगोर्द्वित्यं लुगिति वृत्तिग्रन्थमुपादाय हरदत्तेनोक्तम्—तस्मादप्राप्त एवात्र लुग्विधीयते इति । तदपि चिन्त्यम् । मुनित्रयानुक्तस्य विधानोक्तेर्व्याहतत्वात् । यदपि प्राचीनप्रक्रियां व्याचक्षाणैरुक्तं "पुरुषहस्तिभ्याम्" ( पा०सू० ५।२।३८ ) इत्यत्र पठ्यमानेन वार्तिकान्तरेण लुगिति । तदपि रभसोक्तिमात्रम् । उदाहृतसूत्रस्य भाष्यवार्तिककाराभ्यामस्पृष्टत्वादित्यास्तां तावत् ।

शब्दरत्न ।

न प्रसिद्धा इत्यर्थः । शमादीनामूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वेऽपि तिर्यगवस्थितवस्तुनोऽपि परिच्छेदकत्वात्तत्त्वेन सिद्धिरक्षता । अन्यथेति । न च "प्रमाणे लः" इत्यत्र "समर्थानां प्रथमाद्वा" (पा० सू०४।१।८२) इत्यतो वेत्यनुवृत्तेरुक्तप्रयोगसिद्धिः । आद्य (१)पदयोरननुवर्तनेन वेत्यस्याप्यसम्बन्धात् । लुक् स्यादिति। शम इत्यादाविवेति भावः । सामर्थ्यादिति । तिर्यगवस्थितवस्त्वपरिच्छेदकत्वेऽपि सामर्थ्यात्प्रमाणपदस्य परिच्छेदक-

ज्योत्स्ना ।

णेति परिमाणपर्युदासो न भवतीति उक्तम् । तस्य च परिच्छेदकविशेषज्ञापनद्वारा इत्यर्थः । तेन चार्हादिति सूत्रस्थ न सर्वतो मानार्थग्रहणप्रतिपादकभाष्येण न विरोधः । "परिमाणान्तस्य" इति सूत्रे तु परिच्छेदकविशेषग्रहणज्ञापनेन कालपरिमाणग्रहणेऽपि प्रमाणपरिमाणोन्मानानां त्रयाणां ग्रहणं शाणपर्युदासात् । एवं च न कश्चिद्विरोधः । इति विचारणीयं सुधीभिः ।

अत्रेयं विचारणा—"आर्हात्"इति सूत्रे 'संख्या बाह्या तु सर्वत' इति कथनात् संख्यायाः न परिमाणग्रहणेन ग्रहणम् । तेन द्विशतेत्यादौ अपरिमाणान्तत्वान्निषेधसिद्धिरिति स्पष्टं भाष्ये । कालपरिमाणस्य च परिमाणग्रहणेन न ग्रहणम् ।तेन द्विवर्षा त्रिवर्षा इत्यादौ अपरिमाणान्तत्वान्निषेधसिद्धिरिति "संख्यायाः सम्वत्सर"इति सूत्रे भाष्ये स्पष्टम् । "आर्हात्" इति सूत्रे भाष्ये प्रसङ्गादुन्मानादीनां त्रयाणां वैलक्षण्योपपादनेऽपि परिमाणग्रहणेन प्रमाणोन्मानयोरग्रहणमित्यनुक्तेः । संख्यायास्तद्ग्रहणेनाग्रहणमुक्त्वा

वि० (१) समर्थानाम्प्रथमादित्यनयोः तयोः प्रत्ययविधावुपयुक्तत्वेनायोग्यत्वादत्रासम्बन्ध इति भावः ।

वस्तुतस्तु "पुरुषात्प्रमाणे" ( पा० सू० ४।१।२४ ) इति सूत्रे द्विगोस्तद्धितलुकि इत्यनुवर्तते। तत्सामर्थ्याल्लुगप्याक्षिप्यते। हरदत्तोक्तिरपि कथंचिदेवं परतयैव नेयेति सहृदयैराकलनीयम्। प्रमाणे किम्। द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः। तद्धितलुकीत्येव। समाहारे पञ्चपुरुषी।

"ऊधसोऽनङ्" ( पा० सू० ५।४।१३१ )॥ नादेशेनैव सिद्धेऽनङ्करणं "धनुषश्च" (पा० सू० ५।४।१३२) इत्येतदर्थम्।

"दाम" ॥ (पा०सू० ४।१।२७) बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टार्थम्। संख्यादेरिति। स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः।

"केवलमामक" ( पा० सू० ४।१।३० )॥ इत्यादीति। अदृष्यस्यां मामकी तनू। मित्रावरुणयोर्भागधेयी। अनिषेव्यास्तन्वः सन्तु पापीः। उतापरीभ्यो मघवा विजिग्ये। समानी व आकूतिः। आर्यकृती। सुमङ्गली। शिवा रुद्रस्य भेषजी। प्रत्युदाहरणं त्विति।

शब्दरत्न।

-मात्रपरत्वमिति भावः। लुगप्याक्षिप्यत इति। इदमपि वृत्त्याशयवर्णनमात्रम्। वस्तुतस्तु द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे "तदस्य परिमाणम्"( पा० सू० ५।१।५७ )इति ठकछञो वा "अद्‌व्यर्धं" (पा० सू० ५।१।५८)इति लुकि शास्त्रस्य चारितार्थ्यात् तदाक्षेपे न मानम्। तत्र हि परिमाणशब्देनोत्तरसूत्रानुरोधेन परिच्छेदकमात्रग्रहणमिति तत्त्वम्।

नादेशेनेति। अत एव "ऊधसो नकारो लिङ्गाधिकारे" इति वार्तिककृतोक्तम्। एतेन लाक्षणिकत्वादस्यानो "अल्लोपोऽनः" इति न स्यात्। कुण्डोध्न्यादिभ्य आचारक्विप्यात्मनेपदार्थं च ङकार इत्यपास्तम्। अत्रत्यवार्त्तिकभाष्यप्रामाण्येनान्ग्रहणे प्रतिपदोक्तपरिभाषाया आचारक्विबभावस्य च तदन्ते आत्मनेपदाभावस्य वा कल्पनात्।

ज्योत्स्ना

तस्यैव द्विशतेत्यादौ अपरिमाणेति निषेधप्रवृत्तिरूपफलोक्तेश्च परिमाणपदेनोन्मानादीनां त्रयाणां ग्रहणम्। अत एव—"असमासे निष्कादिभ्यः" इति सूत्रस्थं असमासग्रहणस्य तदन्तविधिज्ञापकतापरं भाष्यं सङ्गच्छते। सर्वतो मानस्यैव परिमाणपदेन "आर्हात्" इति सूत्रे ग्रहणे तु उन्मानभूतनिष्कस्य अपरिमाणत्वात् नैष्किकं परमनैष्किकम् उभयत्रापि "अर्हादगोपुच्छसंख्यापरिमाणाट्ठक्" इत्यनेन ठकः प्राप्तौ 'निष्काअसमासे एव' इति नियमार्थतया असमासे इत्यस्य चारितार्थ्येन तदन्तविधिज्ञापकत्वासङ्गतिः। कैयटोऽपि तत्र निष्कशब्दस्य परिमाणवाचित्वात् पूर्वेणात्राप्राप्तौ अनेन ठक् विधीयते इत्युक्तवान्। तत्र परिमाणोन्मानयोरेव ग्रहणमिति न युक्तम्, विनिगमकाभावात्। अत एव बिस्तकम्बल्यग्रहणं चरितार्थम्। "काण्डान्तात् क्षेत्रे"

यत्तु प्राचाऽन्तर्वत्नी पतिवत्नीति प्रत्युदाहृतम्। तदयुक्तमिति भावः। व्यस्ते कथमिति। यत्तु प्राचा समस्तेऽप्युपचार इति वर्णितं तन्मुधेति भावः।

"पूतक्रतोरै च" (पा० सू० ४।१।३६) ॥ ऐकार आदेशो न तु प्रत्ययः। उत्तरसूत्रे उदात्त इत्युक्तेः। न त्विति। अन्यथा वृषाकपिशब्दो "लघावन्ते द्वयोश्च बह्वषो गुरुः"( फि० सू० ) इति मद्ध्योदात्तत्वं प्रयोजयति अग्न्यादिषु त्रिषु "स्थानेऽन्तरतम" (पा० सू० १।१।५०।) इत्येव सिद्धमिति प्राचां ग्रन्था विरुद्ध्येरन्निति भावः।

उदात्तौकार इति। मनुशब्दो ह्याद्युदात्तः। शृस्वृस्निहीत्यादौ मनेरुप्रत्ययविधायके सूत्रे धान्ये निदित्यधिकारात्। समासनिर्देशेन तद्दर्शयति। उदात्त इत्यनुवर्त्तमानं सम्बन्धानुवृत्तेरैकारेणैव सम्बध्यते न त्वौकारेणापीति। ततश्च यदुक्तं प्राचा ऐकारौकारावुदात्तौ स्त इति तदुपेक्ष्यम्। वृत्तिपदमञ्जर्यादिविरोधादिति भावः। मनायीति। मध्योदात्तम्। इतरद् द्वयमाद्यु-

शब्दरत्न।

तदयुक्तमिति। अन्तर्वत्नीत्यत्र मतुपोऽप्राप्तेरिति भावः। तन्मुधेति। "विभाषा सपूर्वस्य" (पा० सू० ४।१।३४ )इत्यत्र यज्ञसंयोग इत्यस्यासम्बन्धात्। अतः तवाशायाः पतिराशापत्नीति तत्रोदाहृतं भाष्ये। आशापूरकत्वेन कस्याश्चित्तत्पतित्वमिति भावः।

इत्युक्तेरिति। प्रत्ययत्वे हि "आद्युदात्तश्च"इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः। न त्वौकारेणेति। ततश्च स आन्तरतम्यादनुदात्त एवेति भावः। इतरद् द्वयम्—मनावी

ज्योत्स्ना।

इत्यस्य नियामकत्वकल्पनं तस्येति तु 'विधिनियमसम्भवे विधिरेव ज्यायान्'इति परिभाषा न तु गृहीतं गौरवग्रस्तं च। तस्मात् तिर्यङ्माने द्विहस्ती भित्तिरित्येव। द्विहस्ता इति तु उत्तरपदलोपि समासे अर्शआद्यचा वा कथञ्चित् साधनीयमित्याहुः॥

अन्तर्वत्नी इति। "अन्तर्वत्पतिवत्गर्भभर्तृसंयोगे" इति वार्तिकात् गर्भिण्यां जीवद्भर्तृकायामिति लब्धमिति ध्येयम्।

नत्विवतीति। कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्य इति परममूले उक्तम्, तस्यैव विवरणम् अन्यथेत्यादिना मूले उक्तम्। तस्यायमाशयः—वृत्तौ भाष्ये च—उदात्तग्रहणम् किमर्थमित्याशङ्क्य वृषाकप्यर्थमिति समाहितम्। अन्यथा "लघावन्ते द्वयोश्च बह्वषो गुरुः" इत्यनेन गुरोरुदात्तत्वं स्यात्। कुसिदशब्दस्य दीर्घमध्यत्वे तु कुसिदार्थं चेत्यपि वदेत्। तन्नोक्तम्। अतोऽनुमीयते यत् कुसिदशब्दो न दीर्घमध्य इति।

दात्तम् । एता-कर्बुरा । वर्णानामिति । एतः, शोणः, शितिः, पृश्निः, पृषत् इत्युदाहरणानि । त्र्येण्येति । अत्र उत्तरपदस्योपसर्जनत्वेऽपि समस्तस्य अनुपसर्जनत्वमिति भावः । सञ्ज्ञात्वाद्णत्वं छान्दसत्वाद्वा ।

क्रमेके इति । अत्र च्छन्दसीति भाष्योक्तेर्लोके 'गतो गणस्तूर्णमसिक्निकानाम्' इत्यादिप्रयोगाः प्रामादिका इति प्राञ्चः ।

शब्दरत्न ।

मनुरित्येतत् । समस्तस्येति । एतच्च गृह्यवृत्त्यनुसारेणोक्तम् । "टिड्ढाणञ्" (पा०सू० ४।१।१५) इत्यादाविवात्रापि गृह्यमाणविशेषणत्वमेवेति "उपमानानि" (पा०सू०२।१।५५) इति सूत्रभाष्यसम्मते पक्षे त्रिपु स्थानेपु एनी त्र्येणीति बोध्यम् । छान्दसत्वाद्वा ङीप् । तद् ध्वनयन्सञ्ज्ञात्वानङ्गीकारे आह-छान्दसत्वाद्वेति । ङीप् णत्वं चेति शेषः ।

प्राञ्च इति । कैयटादय इत्यर्थः । छान्दसेषु सूत्रेषु वाग्रहणवदिदमेक इत्यपीति तेषां-

ज्योत्स्ना

गृह्यवृत्त्यनुसारेणेति । तत्र हि अनुपसर्जनादिति वर्तते तच्च तदन्तविशेषणम् । तथा चात्र एतशब्दस्योपसर्जनत्वेऽपि तदन्तमनुपसर्जनमेवेति कृत्वा नारायणेनात्र बहुव्रीहिं कृत्वा अनेन ङीबिति तदनुसारेणेदम् ।

भाष्यसम्मते पक्षे इति । तत्र हि शस्त्री श्यामा इत्यत्र श्यामाशब्दः शस्त्र्यमेव वर्तते उपमेयं तु समासवाच्यमिति पक्षे शस्त्री श्यामो देवदत्तः इत्यत्र ह्रस्वत्वं न सिद्ध्यति ।

यदि—उपसर्जनह्रस्वत्वं तदा कुम्भकपाललोहिनी इत्यत्र अनुपसर्जनलक्षण ईकारो न प्राप्नोतीत्युक्तम् । तत्रायम्भावः—समासवाच्यत्वेनोपमेयस्य प्राधान्यमिति श्यामाशब्दार्थस्य वृत्तिघटकपदार्थत्वेनाप्राधान्यादुपसर्जनत्वमित्यभिमानेन गोस्त्रियोरुपसर्जनस्य" इत्यस्य प्राप्तिरिति ।

वस्तुतस्तु—तत्र "प्रथमानिर्दिष्टम्"इति "एकविभक्ति"इति च शास्त्रीयोपसर्जनस्यैव ग्रहणमिति सामान्यवचनैरिति तृतीयानिर्देशात् अनियतविभक्तिकत्वाच्च श्यामापदस्य शास्त्रीयोपसर्जनत्वाभावेन पूर्वोक्तदोषो दुरुद्धर एव । लौकिकोपसर्जनमभ्युपेत्य दोषान्तरमाह—कुम्भकपाललोहिनीति । उपमेयं समासवाच्यमिति पक्षे कुम्भकपालं लोहितमिवेति विग्रहः । तथा चोपमानस्य नपुंसकत्वात् समासात् प्राक् स्त्रीप्रत्ययो न भवति । समासोत्तरमुपसर्जनत्वेन "वर्णादनुदात्तात् तोपधात्तो नः" इति सूत्रस्याप्राप्तिरिति दिक् ।

त्रिपु स्थानेषु इति । "सुप्सुपा" इति समासः ।

णत्वं चेति शेष इति । समानपदत्वाभावात् "अट्कुप्वाङ्" इत्यस्य संज्ञात्वाभावात् पूर्वपदादित्यस्य चाप्राप्तेरिति भावः ।

वस्तुतस्तु छन्दस्येके इत्यन्वयात् भाषायामपि इति भाष्याभिप्रेतम्। अन्यथा एकग्रहणं न कुर्यात्। न हि 'छन्दसि पलिक्नीरिद्युवतय' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। विशुद्धवाचीति। दैप् शोधने इति स्मरणात्। 'अवदातः सितो गौर' इति कोशे तु विशुद्धत्वसाधर्म्यात् प्रयोग उपनिबद्ध इति भावः। लघाविति। अन्तं एकस्मिन् लघौ द्वयोश्च लघ्वोः परतो बह्वषो बह्वचकस्य गुरुरुदात्तः स्यात्। अषिति अचः प्राचां सञ्ज्ञा। कृष्णेति। कृषेश्चेति नप्रत्यये कपेश्चेति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ।

"षिद्गौरादिभ्यश्च" (पा० सू० ४।१।४१)॥ श्वन्शब्दोऽत्र पठ्यते। तेन "अन्येभ्यो ङीष्" इत्यत्र यत्प्राचा शुनीत्युदाहृतं तत्प्रामादिकम्। यत्तु व्याचक्षते—श्वानमाचष्टे श्वेवाचरतीति वार्थे णिचः क्विपो वा क्वौ उपसर्जनत्वात् ङीषभावे निःशुनीत्यादिवत्। ङीषिति। तन्न। णिचि सम्प्रसारणटिलोपयोरुक्तं रूपं मुख्यमते दुर्लभम्। अन्यत्र तु आस्तां कथञ्चित्।

शब्दरत्न।

भावः। नप्रत्यय इति। दशपाद्यनुसारेणेदम्। तत्र हि नप्रत्ययप्रकरणे "तृषिशुषिरसिकृषेश्च कित्" (पा०सू० १।१।२९) इति इलच्प्रकरणे कपेश्चेति पठितम्। कपिः सौत्र इति चोक्तम्। पञ्चपाद्यां तु "कृषेर्वर्णे" इति नक्प्रत्ययः "कमेः पश्च" इति इलजित्युक्तम्।

पठ्यत इति। इदं चासिद्धवत्सूत्रे भाष्ये स्पष्टम्। उक्तं रूपमिति। नान्तं रूपमित्यर्थः। णिचि "नस्तद्धित" (पा०सू०६।४।४४) इति टिलोपे तदभावः स्पष्ट एव। न च "नस्तद्धित" (पा०सू० ६।४।१४४) इति टिलोपो नेष्ठवद्भावेन। "टेः" इति तु "प्रकृत्यैकाच्" इति निषिद्धमिति वाच्यम्। अस्य मतस्य नामधातौ दूषयिष्यमाणत्वात्। तद् ध्वनयतोक्तम्-मुख्यमते इति। "नस्तद्धितस्य" (पा०सू० ६।४।१४४) इत्यस्यापि प्रकृतिभाव इति "षपूर्व" इति "प्रकृत्यैकाच" इति सूत्रभाष्ये ध्वनितत्वेन पूर्वं टिलोपाभावेऽपि संप्रसारणे 'वार्णादाङ्गम्' इति पररूपात्पूर्वं टिलोप इति तस्य दौर्लभ्यम्। तदुक्तं—सम्प्रसारणटिलोपयोरिति। अन्यत्र क्विबन्तात् क्वौ "अनुनासिकस्य" (पा०सू० ६।४।१५) इति दीर्घेऽपि एकदेशविकृतन्यायेनान्स्वमिति सम्प्रसारणं भवतीति भावः। कथंचिदिति। अनेना-

ज्योत्स्ना।

षपूर्वेति। तत्र भाष्ये—"किमिदं न पूर्वादीनाम्पुनर्वचनम् अल्लोपार्थम् आहोस्विन्नियमार्थम्। कथं वा अल्लोपार्थम् कथं वा नियमार्थम् यद्यविशेषेणाल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम्। अथ हि अणि टिलोपस्यैव प्रकृतिभावः। ततो नियमार्थमित्युक्तम्।

आवपनं चेदिति । ओप्यते निक्षिप्यते धान्यं यस्मिन् । गोणान्येति । यस्या यादृच्छिकं नाम । अकृत्रिमेति । यथा—"सैषा स्थली यत्र विचिन्वता त्वाम्" इति । स्थलान्येति । कृत्रिमा पुरुषेण संस्कृता । यथा स्थलयोदकं परिगृह्णन्ति । श्राणा—पक्का । अयोविकार इति । फाल इति प्रसिद्धः । कुशान्येति । छन्दोगाः स्तोत्रीगणनार्थान् औदुम्बरान् शङ्कून् कुशा इति

शब्दरत्न ।

रुचिः सूचिता । तद्बीजमेषामनभिधानम् । अन्यथा "अनुपसर्जनात्" इति सूत्रस्य तदन्तविधिज्ञापकता भाष्योक्ता भज्येत । किं चाचक्षाणकर्त्रादिरूपार्थस्यापि (१)श्वशब्दार्थत्वेन तस्यानुपसर्जनत्वादस्त्येव ङीपः प्राप्तिः । अभिव्यक्तेति न्यायस्तु ज्योत्स्ना ।

अत्र कैयटः । "प्रकृत्यैकाच्" इति प्रकृतिभावः । प्राकरणिकानि कार्याणि भेदेनापेक्ष्येरन्नभेदेन वेति पक्षद्वयोपपत्तिरित्याह—अविशेषेणेति । अल्लोपटिलोपयोः समुदायमपेक्ष्य प्रकृतिभावो विधीयते भेदेनेत्यनेन बाध्यविशेषचिन्तोक्ता । तदा "अनन्तरस्य" इति न्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः । अस्मिन् पक्षेऽल्लोपो न इत्येव सिद्ध नियमार्थम् । अथ बाध्यसामान्यचिन्ता तदा प्रकृतिभावस्य सर्वबाधकतया अल्लोपस्यापि प्रकृतिभावेन निवृत्तौ प्राप्तायां विध्यर्थमिदं सूत्रम् । अत्र भाष्ये अल्लोपटिलोपयोरिति बाध्यसामान्यचिन्ताभिप्रायेणोक्तम् । तदा "नस्तद्धित" इत्यस्यापि प्रकृतिभावेन निवृत्तिरिति युक्तमेव । अत एव "नैकाच्" इति सूत्रयित्वा प्रकृत्यैकाजिति, किम् इष्टेमेयस्तु, आहोस्विदविशेषेण, किन्त्वतः, पद्यविशेषेण, खीखी शौवमधुना अत्रापि प्राप्नोति, तद्धि सामान्ये प्रकृतिभावविधानात् "अत इनि ठनौ" इति खखशब्दयोरिनौ प्रकृतिभावे सति "यस्य" इति लोपाप्रसङ्गः। शौवमिति श्रुतो विकारावयवयोः प्राण्यञि कृते "नस्तद्धित" इति टिलोपो न प्राप्नोति । अधुना इत्यत्र इदमः इशादेशोऽधुना प्रत्ययश्चेति यदा प्रक्रिया तदा यस्येति लोपप्रसङ्ग इति पूर्वपक्षे "एकाक्षरात् कृतो जातेः संख्यायाश्च न तौ स्मृतौ" इति वार्तिकेन खिखिनोरनभिधानं स्वीकृत्य शौवमित्यस्य श्वन् शब्दादञि द्वारादित्वादैजागमस्य टिलोपस्य च प्राप्तौ परत्वादैजागमे प्रकृतिभावस्याप्राप्तौ पुनः प्रसङ्गविज्ञानाट्टिलोपस्याप्रवृत्त्या सिद्धिं विधाय अधुनेत्यत्र सप्रत्ययकस्य स्थाने निपातनं क्रियते इति सिद्धिं कृत्वा तत्रान्यथा सिद्धिप्रदर्शनेन सूत्रस्य प्रत्याख्यानेऽपि आरम्भपक्षे प्रकृतिभावस्य "नस्तद्धिते" इति टिलोपबाधकत्वं शौवमित्युदाहरणप्रदर्शनेन ध्वनितमिति दिक् ।

वि० (१) यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन, श्वन् शब्देनैव श्वकर्मकाख्यानकर्तुः प्रतिपादनादिति भावः । एवंच दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनोपसर्जनत्वान्ङीषभाव इत्युपादानं विरुद्धमिति तात्पर्यम् ।

व्यवहरन्ति । "अतः कृकमि" ( पा०सू० ८।३।४६ )इति सूत्रे "हानौ तूपाय-न"इति (१)व्याससूत्रे 'कुशा वानस्पत्यास्थतामापात' इति श्रुतौ च प्रसिद्ध-एवायम् ।

पतिंवरेति । तथा च पाणिग्रहणोत्कण्ठाभिधायित्वाद्गुणवचनोऽय-मिति भावः ।

"बह्वादिभ्यश्च" ( पा० सू० ४।१।४५ ) ॥ बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धे उत्तरार्थं ग्रहणमित्याहुः । वस्तुतस्तु बहुशब्दो "नित्यं छन्दसि"

---

शब्दरत्न ।

पदकार्यविषय एवेति ।

इत्याहुरिति । अत्रारुचिबीजं त्वाकडारसूत्रस्थभाष्यविरोधः । तत्र हि समस्तकृदन्त-तद्धितसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तप्रातिपदिकमात्रस्य गुणवचनसंज्ञा कृता ।

ज्योत्स्ना ।

पदकार्यविषय एवेति । स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वमित्यर्थः । तत्र स्त्रीत्वानिमित्तकत्वे सति इत्यस्य अजशब्दस्य स्त्री इत्यर्थे अजा इति सिद्धिः फलमिति बोध्यम् ।

केचित्तु—"शूद्राचामहत्पूर्वा जातिः" इति वार्तिके जातिग्रहणमेवोक्तन्यायज्ञाप-कत्वमाहुरिति, तन्न । अप्रसिद्धगौणलाक्षणिकानामेव गौणमुख्यन्याये गौणपदेन ग्रह-णात् पुंयोगलक्षणगौणे टाबभावाय तत्सार्थक्यात् ।

हानौ तूपायनेति व्याससूत्रे इति । "हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युप-गानवत्तदुक्तम्" (अ०३ पा०३ सू० २६) । इति व्याससूत्रम् । अत्र कुशाच्छन्दस्तुत्यु-पगानवदित्युपमाचतुष्टयम् । तद्यथा 'भाल्लविनां श्रुतौ कुशावानस्पत्यास्थतामापात' इत्येतस्मिन् निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणेऽपि शाट्यायनिनां श्रुतौ औदुम्बराः कुशाः इति विशेपदर्शनात् औदुम्बर्यः कुशा आश्रियन्ते इत्यादि ।

उत्कण्ठेति । उत्कण्ठायाश्च स्मृतिरूपत्वात् गुणत्वम् । कोमलत्वकठोरत्वादीनां संयोगविशेषतया गुणत्वमिति बोध्यम् ।

उत्तरार्थमिति । "नित्यं छन्दसि" इति सूत्रार्थमित्यर्थः ।

---

प्र० ( १ ) 'हानौतूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्'॥ इति व्याससूत्रम् । (अ० ३ पा० ३ सू० २६) । अत्र कुशा–छन्द–स्तुत्युपगानवदित्युपमाचतुष्टयोपादानम् । तद्यथा भाल्लविनां श्रुतौ 'कुशा वानस्पत्या स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्प-तियोनित्वेन श्रवणेऽपि शाट्यायनिनां श्रुतौ 'औदुम्बराः कुशा' इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते इत्यादि ।

(पा० सू० ७।४।८)इत्युत्तरसूत्रं चेति द्वयमपि व्यर्थमेव । सर्वविकल्पानां छन्दसि व्यवस्थितत्वात् ।

---

शब्दरत्न ।

बहुशब्दश्च संख्या। अत्रार्थे बहुग्रहणमपि मानम् । सत्त्वे निविशत इत्यादि गुणलक्षणमपि तदेकवाक्यतापन्नमित्यन्यत्र प्रपञ्चितम् । व्यर्थमेवेति । उत्तरार्थमिति वदतां मते इति शेषः ।

ज्योत्स्ना ।

ननु बहुशब्दस्य "वोतो गुणवचनात्" इति सूत्रभाष्योक्त्या गुणवचनत्वं अस्त्येवेत्याह—सत्वे निविशते इति। सत्वे निविशतेपैति पृथग् जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः इति। अस्यार्थः—सत्वे द्रव्ये निविशते सम्बध्यते अपैति ततो निवर्तते पृथग् भिन्नासु जातिषु जात्याधारेषु कोऽर्थः भिन्नजातीयेषु द्रव्येषु दृश्यते च यः स गुणः, यथा शुक्लादिः स हि घटादौ यस्मिन् सम्बध्यते तत एव च पाकादिना निवर्त्तते। भिन्नजातीयेषु पयः शङ्खादिषु च दृश्यते। अनेनजातेर्गुणत्वनिरासः। घटत्वादिजातिर्हि यस्मिन् घटादौ सम्बध्यते न तं कदाचित्यजति । न च भिन्नजातीयेषु पटादिषु कदाचित् दृश्यते । एवं सति क्रियायां गुणत्वं प्रसज्यते । तस्या अपि घटादौ कदाचिदुपलम्भात् कदाचित्ततो निवृत्तेः भिन्नजातीयेषु घटपटादिषु दर्शनाच्च । अतो विशेषणान्तरमाह—आधेय इति उत्पाद्य इत्यर्थः । अक्रियाजः अनुत्पाद्य इत्यर्थः । तथा च नित्यानित्यवृत्तिपदार्थविभाजकोपाधिमत्वम् इत्यर्थः । गुणत्वस्य पाकजरूपादिषु अनित्येषु आकाशमहत्वादिषु नित्येषु च सत्वात् तद्वत्सु शुक्लादिषु लक्षणसमन्वयः । क्रियात्वस्य च नित्यावृत्तित्वात् तद्वत्यां क्रियायां नातिप्रसङ्गः । एवमपि अवयविद्रव्येऽतिव्याप्तिः । तस्यावयवेषु सम्बध्यमानत्वात् । असमवायिकारणसंयोगनिवृत्तौ ततोऽनिवर्तमानत्वात्। भिन्नजातीयेषु हस्तपादादिषु दृश्यमानत्वात् । नित्यानित्यवृत्तिद्रव्यरूपोपाधिमत्त्वाच्च । अत आह—असत्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः । द्रव्यभिन्नत्वमिति यावत् । तेन तत्र नातिप्रसङ्गः ।

वस्तुतस्तु—अस्मिन् लक्षणे सत्वे निविशते इति पृथग्जातिषु इति वा जातेर्वारणसम्भवे तदन्यतरस्य वैयर्थ्यात् । जातेरनित्यत्वाभावात् नित्यानित्यवृत्तिधर्मवत्वमिति क्रियावारकेणैव तस्याः वारणसम्भवात् तद्वारकयोरुभयोरपि वैयर्थ्यापत्तेः । गुणत्वजातिमत्वमित्येव सिद्धे इतरवैयर्थ्यापत्तेश्चेति भाव इत्याहुः ।

अन्ये तु—सर्वेषामपि सफलत्वम् । तथा हि—सत्वे द्रव्ये निविशते उत्पद्यते अपैति नश्यति । एवञ्च द्रव्याधिकरणकोत्पादविनाशशालित्वमिति प्रथमविशेषणम् निष्पन्नम् । जातिषु इति पञ्चम्यर्थ सप्तमी जातिभ्यः पृथग् इत्यर्थः । तथा च जातिभिन्न

ज्योत्स्ना ।

त्वम् इति द्वितीयं फलितम् । आधेयश्चाक्रियाजश्चेति पूर्ववत् नित्यानित्यवृत्तिधर्मवत्त्वम् इति तृतीयम् । असत्वप्रकृतिः द्रव्यभिन्न इत्यर्थः तेन द्रव्यभिन्नत्वं चतुर्थम् । तत्र द्रव्याधिकरणकोत्पादविनाशशालित्वमित्याद्यनुक्तौ अभावे गुणत्वापत्तिः स्यात् । द्रव्याधिकरणकोत्पादविनाशशालित्वमिति प्रथमविशेषणे उत्पादमात्रोक्तौ ध्वंसेऽतिव्याप्तिः । नाशमात्रोक्तौ प्रागभावेऽतिव्याप्तिः द्वितीयविशेषणानुक्तौ उत्पादविनाशशालिन्यविशिष्टाधिकारप्रयोजकत्वेन क्लृप्तायाः ब्राह्मणत्वादिसामान्यव्याप्यायाः विशिष्टब्राह्मणत्वादिजातेरपि गुणत्वापत्तिः । उत्पादविनाशौ चास्याः संस्कारपातित्वादिना तत्तद्व्यक्तित्वविशिष्टब्राह्मणत्वादिजातेः उत्पादविनाशयोः सकलानुभवसिद्धत्वेन बोध्यौ । तृतीयानुक्तौ क्रियायां गुणत्वापत्तिः । चतुर्थानुक्तौ अवयविद्रव्ये गुणत्वापत्तिः गुणत्वजातिमत्वमिति लक्षणान्तरसम्भवेऽपि अस्य लक्षणत्वे बाधकाभावः । तद्ग्राहकत्वाच्चास्य न वैयर्थ्यम् । एवञ्च सर्वविशेषणानां सार्थक्याननास्यैकदेशयुक्तित्वम् । आकडारसूत्रस्थस्य भाष्यस्य च यत्रार्थनिर्णायकत्वं नोपलभ्यते तत्रैव व्यवस्थापकत्वम् । यथा "गुणवचनब्राह्मणादिभ्य" इत्यादौ अत्र तु भाष्यकारेण गुणलक्षणाभिधानात् न तद्व्यवस्थापकम् । बह्वादिग्रहणसार्थक्यप्रयोजकसंख्यानिष्ठगुणत्वाभावायैकमात्रवृत्तित्वमपि देयम् । नचैकत्वेऽतिव्याप्तिः । अनेकनिरूपितवृत्तितावच्छेदकसंख्यात्वादिधर्मानवच्छिन्नत्वस्यैकमात्रवृत्तित्वाभावादित्याहुः ।

आकडारसूत्रे तु—भाष्ये—अर्थवत् प्रातिपदिकमित्युक्त्वा तस्यैव गुणवचनञ्च इति गुणवचनसंज्ञाविहिता । ततश्च समासकृत्तद्धिताव्ययसर्वनामा असर्वलिङ्गा जातिः, संख्याडच, एकद्रव्योपनिवेशिनी संज्ञा इति समासादिसंज्ञास्तद्बाधकत्वेनोक्ताः । डशब्देन च षट्संज्ञा अत्र कैयटः । गुणवचनं चेति । एकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोश्च समावेशो भवति । उत्तरासु संज्ञासु प्रातिपदिकमित्यनुवर्तनात्ताभिः प्रातिपदिकसंज्ञा समाविशति । गुणवचनसंज्ञा तु ताभिर्बाध्यत इति । एवञ्च समासादिसंज्ञातिरिक्तप्रातिपदिकमात्रं गुणवचनशब्देन ग्राह्यमिति स्पष्टम् प्रतीयते । अत्र समासादिसंज्ञाभिः गुणवचनसंज्ञाबाधात् चित्रगुत्वं कारकत्वम् औपगत्वम् उच्चस्त्वम् सर्वत्वम् घटत्वम् बहुत्वं पञ्चत्वम् डित्थत्वम् इत्यादौ न ष्यञ् । न चैवम् ऐक्यम् राजपौरुष्यम् इत्याद्यसिद्ध्यापत्तिः संख्यासमासशब्दाभ्याम् गुणवचनसंज्ञाबाधादिति वाच्यम् । तयोर्ब्राह्मणादिगणे पाठेन ब्राह्मणादित्वात्तत्सिद्धेः । ब्राह्मणादिग्रहणन्तु समासादिविषयार्थम् । प्राणभृज्जातिलक्षणाण्बाधनार्थम् युवाद्यणासमावेशार्थञ्चेति कैयटः । इत्यादिभाष्यकैयटादिपर्यालोचनेन समासव्यतिरिक्तानामेव गुणवचनशब्देन लाभ इति स्पष्टम् ।

पुंयोगादीति। तथा च गौणी वृत्तिरिति भावः। यदा तु मुख्यार्थात् "तस्येदम्" (पा० सू० ४।३।१) इत्यण् तदा गौपीत्येव भवति। योगश्चेह दम्पतिभाव एवेत्येके।

वस्तुतस्तु सङ्कोचे मानाभावाज्जन्यजनकभावोऽपीहगृह्यते। तथा चभट्टिः—

कौशल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्॥

इति। केकयदुहिता केकयी। "जनपदशब्दात्" इत्यपत्यप्रत्यये तु कैकेयीति स्यात्। न च तस्य "अतश्च" (पा० सू० ४।१।१७७) इति लुक्। "न प्राच्यभर्गादि" (पा० सू० ४।१।१७) इति निषेधात्। तथा च कालिदासः—"कैकेयि कामाः फलितास्तवेति"। एतेन देवकी व्याख्याता।

दुष्टो यवो यवानीति। जात्यन्तरमेवानेनाभिधीयते। अयमेव तस्य दोषः। यदुक्तयवत्वजातेरभावेऽपि तदाकारानुकृतिः। ङीष् वाच्य इति। इदञ्च तृतीये भाष्ये "इङश्च" (पा० सू० ३।३।२१) इति सूत्रे स्थितम्। कथ-

शब्दरत्न।

गौणी वृत्तिरिति। लक्षणेत्यर्थः। न त्वेषा गौणी (१)सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वात्।

"इङश्च" इति सूत्रे इति। 'अपादाने स्त्रियां घञ् उपसंख्यानं तदन्ताच्च वा ङीष्' इति ज्योत्स्ना।

पुंयोगादीति। "पुंयोगादाख्यायाम्" इति हेतौ पञ्चमी आख्यायामिति पञ्चम्यर्थे सप्तमी बोधकत्वमाख्यापदार्थः। पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्तमानात् पुंबोधकाच्छब्दान्ङीषित्यर्थः।

यत्तु केचित्—इयं सप्तमी अधिकरणे एव तस्याः प्रातिपदिकपदार्थेनान्वयः। वृत्तित्वं च जनकतासम्बन्धेनेत्याहुः। तन्न। जनकतायाः वृत्तिनियामकत्वाभावात्।

यत्तु नागेशेन—पुंस्येव यः प्रसिद्धः शब्दः इत्यर्थं इत्युक्तम्। तन्न तथा सति चैत्रस्य स्त्री चैत्री इत्यादौ सूत्रस्य चारितार्थ्येऽपि गोपस्य स्त्री गोपी शूद्रस्य स्त्री शूद्री इत्यादेरसिद्ध्यापत्तेः। तत्र गोपशूद्रादेः स्त्रियामपि प्रसिद्धत्वात्।

वस्तुतस्तु इति। चिन्त्यमिदम्। पुंयोगोऽत्र दाम्पत्यरूप एव गृह्यते भाष्यप्रामाण्यात्। तदुक्तं भाष्ये। यथेयं भर्तृपापकृतानिबन्धबन्धादीनि लभते। एवं तच्छब्दमपीति। देवकी इति तु गौरादित्वात् सिद्धम्।

प्रामाणिकास्तु—गौरादिषु पाठे मानाभावात् एषामसाधुत्वमेवेति वदन्ति। न च "जनपदशब्दात्"इत्यञि णेऽपि रूपसिद्धिरिति वाच्यम्। तत्र देवकस्य जनपदत्वाभा-

वि० (१) सादृश्यसम्बन्धमूलेति बहुव्रीहिः। लक्षणा हि शक्यतावच्छेदकारोपात्मिका तत्र सादृश्यसम्बन्धो यत्र मूलन्तत्रैव लोके गौणीति व्यवहार इति भावः।

मिति। वदन्ति–दीर्घोच्चारणसामर्थ्याद् आ अनुक् इति पदं विभज्यते। तत्रेन्द्रादीनामनुकैव सिद्धे आकारादेशविधानसामर्थ्यात् क्वचिदन्यतोऽपि विधानमनुमीयते। तेन ब्रह्माणी सिद्ध्यतीति। तच्चिन्त्यम्। अनुकि कृते "अतो गुणे" (पा० सू० ६।१।९७) इति पररूपप्रसङ्गात्। नन्वकारोच्चारणसामर्थ्याद्दीर्घो भविष्यति। अन्यथा हि नुकमेव कुर्यादिति चेन्न। "अल्लोपोऽन" (पा० सू० ६।४।१३४) इत्यस्य बाधेन चरितार्थत्वात्। "पत्युर्न" (पा० सू० ४।१।३३) इति वदादेशे कर्त्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेन्न। शर्वशब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति। "न संयोगात्" (पा० सू० ६।४।१३७) इति निषेधात्। तस्मात् ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यकमिति। एतेनानुक् ह्रस्वादिरेव लाघवाद्वक्तव्य इति हरदत्तोक्तिरपि प्रत्युक्ता। कर्मण्यणिति। तदन्तान्ङीप् "पूर्वपदात्सञ्ज्ञायाम्" (पा०सू० ८।४।३) इति णत्वम्।

शब्दरत्न।

तत्रोक्तम्। उपेत्याधीयते यस्या इति विग्रहः। दीर्घोच्चारणेति। न चेन्द्रादिशब्देभ्य आचक्षाणणिचि टिलोप इन्द्राणीति सिद्ध्यर्थं तत्। अदन्तत्वाभावेन तत्राप्राप्तेः। पदं विभज्यते इति। तत्र नकारोच्चारणसामर्थ्यात् श्रुतक्रमानुरोधेन च पूर्वमाकारस्ततोऽनुगिति बोध्यम्। स्पष्टार्थं दीर्घाकार आदेश उक्तः। प्रसङ्गादिति। इन्द्रादिशब्दे इति भावः। अकारोच्चारणेति। अनुकीति शेषः। अल्लोपोऽन इत्यस्य बाधेनेति। "अल्लोपोऽन" (पा० सू० ६।४।१३४) इत्यत्र लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः "बहुव्रीहेरूधस" (पा० सू० ४।१।२५) इति सूत्रभाष्यसंमततयाऽकाराभावेऽवश्यप्राप्तस्य "अल्लोपोऽन" इत्यस्य बाधेनाकारोच्चारणस्य चारितार्थ्यादित्यर्थः। न भविष्यतीति। एवं च न तद्बाधनार्थाकारोच्चारणमिति पररूपस्य तेन बाधादिति भावः। पररूपबाधनार्थमिति। अल्लोपबाधेन चरितार्थस्य पररूपबाधकत्वे मानाभावेनेन्द्रशब्दे पररूपबाधायाकारोच्चारणस्यावश्यकत्वेन त्वदुक्तकल्पनानवकाश इति भावः। ङीबिति। "इन्द्रवरुण" (पा० सू० ४।१।

ज्योत्स्ना।

चादिति दिक्।

अदन्तत्वाभावेनेति। न च ब्रह्माणी इत्येतत् सिद्धितात्पर्यकदीर्घोच्चारणसामर्थ्यात् 'अत' इत्यधिकारोऽपि बाध्यतामिति वाच्यम्। प्रतिलक्ष्यं लक्षणभेदेन नान्तप्रकृतिक ब्रह्माणी इत्यस्य साधकवाक्येऽत इत्यधिकारबाधेऽपि अन्यत्र तद्बाधे मानाभाव इत्याशयात्।

वस्त्रक्रीतीति । वस्त्र भिस् क्रीत इत्यस्यामवस्थायां प्राक् सुबुत्पत्तेः समासेऽदन्तत्वान् ङीष् । कचिन्नेति । "कर्तृकरणे कृता" (पा० सू० २।१।३२) इति सूत्रे बहुलग्रहणात् कचित्सुबन्तेन समासः । तत्र च सुपः प्रागेवान्तरङ्गत्वात् टाप्, ततोऽदन्तत्वाभावान्न ङीष् इति भावः ।

तेन वह्वीति । अयं भावः—"वहोर्नञ्वदुत्तरपदभूम्नि" (पा० सू० ६।२।१७५) "नञ्सुभ्याम्" (पा० सू० ५।४।१२) "जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" । इति ह्यदन्तोदात्तताविधायकानि । तत्र जातिपूर्वादित्युक्ते बह्वादिपूर्वकस्यार्थाद्व्युदास इति । अस्वाङ्गपूर्वपदाद्विक-

शब्दरत्न ।

४९) इति सूत्रं त्विन्द्रीत्यादिव्यावृत्त्यर्थम् । उदात्तनिवृत्तिस्वरेण च स्वरे न विशेष इति भावः ।

सुबुत्पत्तेरिति । टाबुत्पत्तेश्चेत्यपि बोद्धव्यम् । बहुलग्रहणादिति । तत एव "गतिकारक" (का० वा०) इत्यादेरनित्यत्वेनाप्रवृत्तिरिति भावः ।

सुखादिभ्य इति । सुखादयश्च "सुखादिभ्यः कर्तृवेदनायाम्" (पा० सू० ३।१।१८) इत्यत्र पठिताः (१)सुखदुःखकृच्छ्रादयः ।

ज्योत्स्ना ।

ननु पदविभागेऽपि पूर्वमनुगागमः ततोऽन्त्यस्याकारादेश इत्येव प्रक्रिया कुतो नेत्याह—तत्रेत्यादि । तत्र अनुकि यद्यागमोत्तरम् अकारादेशः स्यात् तदा नकारस्यैवादेशः स्यादिति नकारोच्चारणवैयर्थ्यापत्तिरिति भावः ।

अस्वाङ्गपूर्वपदादिति । कल्याणराणिपादेत्यादौ ङीव्व्यावृत्त्यर्थं "अस्वाङ्गपूर्वपदात्" इति "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इत्यत्रानुवर्तते । ततश्च अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्तात्प्रातिपदिकादिति भाष्योक्तार्थस्य सर्वैः स्वीकृततया शिखेत्यादौ अस्वाङ्गपूर्वपदात्परत्वाभावेन ङीषोऽप्राप्तेः । अत एव भाष्ये अशिखेत्येव प्रत्युदाहृतम् । सहनञ्लक्षणनिषेधस्तु अत्र नास्ति । अस्य विष्णो शिखा इति विग्रहे नञोऽभावात् । न च तत्र समासात्प्रागेव टापि अदन्तत्वाभावात् न दोष इति वाच्यम् । उपसंजनिष्यमाणन्यायेन स्त्रीत्वविवक्षया वा पूर्वं टापोऽप्रवृत्तेः । शिखाशब्दस्य "शीङः खो निद्व्रस्वश्च" इत्युणादिनिष्पन्नत्वेन सुबुत्पत्तेः प्रागेव समासेनैवास्य प्रवृत्तेः ।

अन्ये तु उपसंजनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचः क्रिय-

वि० (१) आन्त्रअलीकादयो विवक्षताः । तथाच "जातकाल सुखादिभ्य" इत्यत्र गणपाठप्रदर्शनेऽपि "सुखादिभ्य" इति सूत्रे ये । निदर्शितास्तेऽत्र ग्राह्या इति भावः ।

रूपस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणमित्याह—उरुभिन्नीति । जातान्तादिति । "वर्णादनुदात्तात्" ( पा० सू० ४।१।३९ ) इतिवद् बहुव्रीहेरुदात्तादित्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम् । "वा जाते" (पा० सू० ६।२।१७ ) इति तु वैकल्पिक उदात्तो न तु नित्य इति भावः। सुमुखा शालेति । एवं च फलमुखी कारणमुखी चावनस्थेत्यादिप्रयोगाः प्रामादिका इति बोध्यम् ।

उरः क्रोडेति । स्त्रीलिङ्गोऽयमिति हरदत्तादयः । तत्रोपसर्जनह्रस्वत्वे कृतेऽदन्तत्वाद् ङीषः प्राप्तिः । अमरस्तु–'न ना क्रोडं भुजान्तरम्' इत्याह । रत्नमतिस्तु पुंस्त्वमाह । गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते न तु टाबन्तमिति गणरत्नमहोदधिकारः । एवं चाविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम्। माधवस्तु तुदादिगणे कड निमज्जन इति धातावाह–क्रोडः घञ् । (१)क्रोडादिषु टाबन्तस्यैव पाठाद् भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वांगलक्षणङीष्विकल्पो भवत्येव । कल्याणक्रोडी कल्याणक्रोडा मयूरीति ।

ङीषो ङीबादेश इति । "दिक्पूर्वपदात्" (पा० सू० ४।१।१०७) इति पञ्चम्या ङीषिति प्रथमायाः षष्ठी कल्प्यत इति भावः । यदि तु स्वतन्त्रो ङीप् स्यात्, तदा प्राग्गुल्फादावपि प्रसज्येत । पूर्वोक्तपर्युदासस्य निषेधानां चानुवृ-

शब्दरत्न ।

सक्तवाख्यातनिर्ग्राह्येत्यन्तं द्वितीयं लक्षणम् । तत्राख्यातमुपदेश इत्याशयेनाह—

ज्योत्स्ना ।

ते । न तु भविष्यदपवादविषयघटकातिरिक्तत्वेन । अत एव 'गतिकारकोपपदानाम्' इति परिभाषाफलत्वेनोक्तं व्याघ्रीति सङ्गच्छते । अन्यथा उपसञ्जनिष्यमाणन्यायेन भविष्यदपवादविषयघटकातिरिक्तत्वेन सङ्कोचात् टापोऽप्राप्तौ तदसङ्गतिः । अत एव अयजे इन्द्रम् इत्यत्र पूर्वं गुणः धनक्रीता इत्यादौ टाप् च सिद्ध्यति । पूर्वं स्त्रीत्वाविवक्षापि प्रमाणाभावान्नोपपद्यते। "गतिकारक"इति परिभाषया सुबुत्पत्तेः प्रागेव समासस्तु न। उणादीनामव्युत्पन्नत्वात् । ततश्च अशिखा सुशिखा इत्यादिप्रत्युदाहरणम् । तथान्तरङ्गत्वाट्टापि अदन्तत्वाभावादेव ङीपोऽप्राप्तिः। किन्तु शिखेत्येव प्रत्युदाहरणमित्याहुः।

प्र० ( १ ) क्रोडा अश्वानामुरः, टाबन्तोऽयं स्वभावतो विशेषविषयः । इति पाठोऽधिकः क्वचिद् दृश्यते ।

त्तौ तु गौरत्वमिति भावः । वृषलीति ।

ज्योत्स्ना ।

वृषलीति । जातेरस्त्रीविषयाददोपधादिति भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः, नित्यत्वे सत्यनेकसमवेतत्वं जातित्वम्, इत्यनयोर्लक्षणयोः शुक्लादिगुणस्यैकत्वनित्यत्वपक्षे अतिव्याप्तिसत्त्वम् । जननेन प्राप्यते या सा जातिरिति लक्षणं युवत्वादावव्याप्तमिति वार्तिकमाह—आकृतिग्रहणा जातिः ।

अत्रायं भावः—अभिधीयते अनेन इत्यभिधानम् । प्रत्ययः प्रतीतिः । अभिधानञ्च प्रत्ययश्च अभिधानप्रत्ययौ तयोर्निमित्तं हेतुः । एवं च भिन्नेषु पदार्थेषु अभिन्नाभिधाननिमित्तं जातिः । अभिधानेऽपि नत्वं चैकपुरस्कारेण बोधकत्वम् । यद्धर्मपुरस्कारेण अभिधानस्यानेकधर्मिबोधकता तदितियावत् । एवं भिन्नेष्वभिन्नप्रत्ययनिमित्तं जातिः । प्रत्ययेऽभिन्नत्वं च एकरूपनिष्ठप्रकारतानिरूपकत्वेन । यद्रूपपुरस्कारेण प्रत्ययस्यानेकावगाहित्वं तत्त्वमिति तत्त्वम् । एवं द्वितीयलक्षणस्य नित्यत्वे सति एकत्वे सति समवायेनानेकवृत्तित्वमित्यर्थः । घटस्य समवायेनानेककपालवृत्तित्वेऽपि नित्यत्वोक्त्या न जातित्वम् । एकत्वं सजातीयविजातीयरहितत्वम् । तच्च स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्य स्वसमानाधिकरण्याभावप्रतियोगित्व स्वावृत्तिजात्यभाववत्त्वं एतच्चतुष्टयसम्बन्धेन स्वविशिष्टं यत् तत्सामानाधिकरण्याभावरूपम् । अत्र स्वपदेन यस्य जातित्वं विवक्षितं तस्य ग्रहणम् । तृतीयस्य "स्वतादात्म्य स्वाधिकरणद्रव्योत्पादकसामग्रीतराप्रयोज्यानुयोगिताकसम्बन्धप्रतियोगित्वं जातित्वम् । घटोत्पादकसामग्र्येव घटत्वप्रतियोगिकसमवायीय घटनिष्ठानुयोगिकत्वप्रयोजिकेत्याशयः । अत्राप्यव्याप्तिं प्रदर्श्य चतुर्थलक्षणमाह । आकृतिग्रहणेत्यादि । गृह्यतेऽनेनेति ग्रहणम् । सामान्ये नपुंसकम् । आकृतिः अवयवसन्निवेशः । आकृतिग्रहणं यस्यास्तीति विग्रहः । तदाह—परममूले अनुगतेत्यादि । अस्यायं भावः—ईदृशाकारो गौरिति उपदेशवाक्यस्य गोत्वबोधेच्छाप्रयोज्यतया ईदृशाकारे गोत्वमिति समानाकारकतया गोत्वबोधे एव तात्पर्येण तादृशाकारविशिष्टधर्मिणः प्रत्यक्षादिनावगमे तादृशाकारज्ञानाधीना गोत्वादिजात्यवगतिरेव धर्मिणः सन्निकर्षेणैव गृहीतत्वात् । एतेन जात्याश्रयव्यक्तेरपि आकृतिग्राह्यतया जातित्वापत्तिरित्यपास्तम् । तथा च समानकालिका या अनेकव्यक्तयः तद्वृत्तितदनुगतसंस्थानं तज्ज्ञानजन्यज्ञानविषयीभूता जातिरिति निष्कर्षः ।

लक्षणान्तरमाह—लिङ्गानाञ्च न सर्वभाक् इत्यादिना । अस्यायमर्थः लिङ्गान्वयितावच्छेदकताकूटाभाववत्त्वे सति अयं ब्राह्मण इत्याद्याकारकवाक्यात्मकोपदेशविशिष्टज्ञानप्रकारत्वं जातित्वम् । उपदेशवैशिष्ट्यं च ज्ञाने । स्वजन्यज्ञानजन्यत्वं स्वजन्यज्ञानविधेयीभूतधर्मविधेयकत्वं स्वजन्यज्ञानीयधर्मिताव्यधिकरणधर्मिताकत्वम् एत-

एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विना तस्य सुग्रहत्वादिति भावः। औगपवीति। अणन्तलक्षणं ङीपं परत्वादयं बाधते। एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय "टिड्ढाणञ्" इति ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः। ब्राह्मणीत्यत्रेति। एवं च प्राचो ङीषु-

शब्दरत्न।

एकस्यामित्यादि। ब्राह्मणत्वमप्येवं तत्पितृपितामहादौ सुग्रहमिति बोध्यम्। इयं च नाकृतिग्रहणा ब्राह्मणक्षत्रियाद्याकारस्य समत्वादिति बोद्धयम्। बाधते इति। गोत्राणीति शेषः। प्रतीकमुपादायेति। औपगवीत्यस्य गोत्रानन्तरापत्यसाधारणत्वेन विशिष्य इति तदुक्तिरुपेक्ष्येत्यर्थः। एतेन जातिलक्षणे "एको गोत्रे" (पा० सू० ४।१।९३) इति सूत्रस्थभाष्यप्रामाण्येन पारिभाषिकगोत्रस्यैव ग्रहणम्। अवन्तीत्यादेर्गोत्र-

ज्योत्स्ना।

त्वित्रतयसम्बन्धेन। यथा अयं ब्राह्मणः इत्युपदेशात् एतद्व्यक्तिधर्मिकब्राह्मणत्वप्रकारकज्ञाने एतस्य पिता ब्राह्मणः इति ज्ञानं स्वविशिष्टतत्प्रकारत्वं नपुंसकत्वान्वयितानवच्छेदकत्वेन लिङ्गान्वयितावच्छेदकताकूटाभाववत्वं च ब्राह्मणत्वे इति तस्य जातित्वं बोध्यम्।

यत्तु—सकललिङ्गविशिष्टशूद्रत्वादिविशिष्टार्थकतदादिशब्दजन्यबोधे शूद्रत्वादीनामपि सकललिङ्गान्वयितावच्छेदकतया लिङ्गान्वयितावच्छेदककूटाभावाभावेन जातित्वानापत्येदश्चिन्त्यमिति। तन्न। तत्र लिङ्गप्रतियोगिकसम्बन्धस्यापि पदार्थतया आकाङ्क्षाप्रयोज्यतावच्छेदकविलक्षणरूपावच्छिन्नसंसर्गताश्रयत्वरूपान्वयत्वस्याभावेन प्रकृते च तादृशान्वयित्वावच्छेदकत्वस्यैव विवक्षितत्वेनादोषात्।

वस्तुतस्तु—"लिङ्गानाञ्च न सर्वभाग्" इति शब्दविशेषणम्, जातिरित्यस्य च जातिवाचीत्यर्थ इति न कश्चिद्दोष इति दिक्।

तत्पितृपितामहादिष्विति। विन्नायां ब्राह्मण्यां ब्राह्मणात् जातस्यैव स्मृत्या ब्राह्मणत्वबोधनात् पित्रादिषु तत्सुग्रहम्। न पुत्रादिषु। अन्यजातीयस्त्रियामुत्पन्नस्य पुत्रादेस्तत्वाभावात्। आदिना मातुलपरिग्रहः।

भाष्यप्रामाण्येनेति। तत्र हि गोत्राच्चुनि प्रत्ययो भवति स्त्रियां तु लुगिति न्यासे औपगवी माणविकेत्यादौ अण्योऽनुपसर्जनमित्यनुपर्जनलक्षण ईकारो न प्राप्नोति। माभूदेवम् अणन्तादनुपसर्जनादिति एकदेशिनोक्तम् तदभ्युपेत्य इह तर्हि औपगवीभार्यः जातिलक्षणः पुंवत्वस्य प्रतिषेधान्न प्राप्नोति। मा भूदेवम् वृद्धिनिमित्तस्येत्येवम् भविष्यति। एवं तर्हि ग्लुचुकायनीभार्यः इत्यत्र दोषः इत्यनेन युवापत्ये जातित्वाभावाद्दोषाधानं कृतम्। अन्यथा जातिलक्षणङीषः परत्वादवक्तुं युक्तम्। पुम्वत्वप्रतिषेधो न प्राप्नोतीत्यसङ्गतिश्चेति बोध्यम्।

अवन्तीति ननु अवन्तीत्यत्रानन्तरापत्यप्रत्ययान्ते "वृद्धकोशल" इति ष्यङि तस्य

दाहरणं प्रामादिकमिति भावः ।

कुरूरिति । लिङ्गविशिष्टपरिभाषया स्वादयः । प्राचा तु "अन्तादिवच्च" (पा० सू० ६।१।८५) इति सूत्रमुपन्यस्यादिवद्भावात्स्वादय इत्युक्तम् । अत्रेदं वक्तव्यम्—परं प्रत्यादिवद्भावो विधीयते । तथा चेहाप्रत्यय इति प्रतिषेध एव स्यान्न तु स्वादयः ।

यत्तु व्याचख्युः—आदिः ऊङपेक्षया पूर्वः प्रातिपादिकं, तद्वद्भावात् तदवयवत्वेन ग्रहणात् पूर्वान्तवद्भावादिति यावदिति । तदपि क्लिष्टं स्वरपरग्रन्थविरुद्धम् । उक्तरीत्या हि काण्डे कुड्ये इत्यादावप्येकवचनमुत्सर्गतइति सुः प्रवर्तेत । तद्वारणाय चाप्रत्यय इति प्रसज्यप्रतिषेधाभ्युपगमे प्रकृते दोषः । श्वश्रूरित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया एव आवश्यकत्वाच्च ।

यत्तु तत्र "श्वशुरः श्वश्र्वा" (पा० सू० १।१।७१) इति निर्देशात्स्वादय इति तन्न । निर्देशस्य शब्दपरत्वात् । "विपराभ्यां जेः" (पा० सू० १।३।१९) "ङेर्यः" (पा० सू० ७।१।१३) इतिवत् ।

"श्वशुरस्य"इति। पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् । तत्सन्नियोगेन च विधी-

शब्दरत्न ।

त्वारोपेण(१) जातित्वमिति प्राचीनोक्तमदुष्टमित्यपास्तम् ।

लिङ्गविशिष्टेति । यत्तु लिङ्गबोधकप्रत्ययान्तत्वरूपलिङ्गवैशिष्ट्यस्य प्रातिपादिकत्वस्य च लाभाय पूर्वान्तत्वपरादित्वयोरावश्यकत्वेनोभयत आश्रयणेऽन्तादिवत्त्वाभावान्नाश्रेयमिति । तन्न । इन्द्राणीत्यसिद्ध्यापत्तेः । तस्मात् प्रातिपदिकत्वोपयोगो न कश्चित् । नापि लिङ्गविशिष्टप्रातिपदिकस्येति परिभाषायां पठ्यते । तथा प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशाच्चेति दिक् ।

ननु "सप्तम्यधिकरणे च" (पा०सू० २।३।३६) इति निर्देशेन विभक्त्यैकादेशस्यान्तवत्त्वाभावज्ञापनादुत्सर्गस्यासार्वत्रिकत्वाच्च ह्रस्वस्य सत्त्वप्रधाने एव प्रवृत्तेश्च काण्डे इत्यादौ न दोषोऽत आह—श्वश्रूरित्यत्रेति ।

ज्योत्स्ना ।

स्त्रियामवन्तीत्यादिना लुकि "इतो मनुष्यजातेः" इति ङीषिति "अनुपसर्जनात्" इति भाष्ये उक्तम्, तद्विरुद्ध्येत इत्याह—अवन्तीत्यादेरिति ।

क्लिष्टमिति । आदिशब्दस्य आद्यावयवत्त्वावच्छिन्नबोधकत्वस्य "आद्यन्तौ टकितौ" इत्यादौ क्लृप्तस्य त्यागेन क्लिष्टमित्यर्थः ।

दिगिति । तदर्थस्तु—प्रातिपदिकग्रहणे इति सप्तमी तु कर्त्रर्थे व्यत्ययेन । प्रातिपदि-

वि० (१) "एकोगोत्र" इत्यत्र पारिभाषिकस्यैव गोत्रत्वे मानाभाव इति तदाशः । किञ्चात्र तैः साधारण्येनोक्तं तत्र तु विशिष्येति तेषाम्पूर्वापरविरोधोऽपि दोषः ।

यमानो लोपः सन्निहितत्वादन्तस्यैवाकारस्य न त्वादेः । एतच्च वचनं "श्वशुरः श्वश्र्वा" इति निर्देशसिद्धार्थकथनपरम् । अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः ।

उपमानवाचि पूर्वपदमिति । 'धात्रीकराभ्यां करभोपमोरूः' इत्यत्र तु न करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् । शफौ खुरावितिति । यद्यपि 'शफं क्लीबे खुरः पुमान्'इत्यमरः । तथाऽपि शफशब्दस्य पुंस्त्वमपि बहुसम्मतम् । शफाविव जर्भुराणेति श्रुतौ "ग्राम्यपशुसंघेषु" (पा० सू० १।२।७३ ) इति सूत्रस्य व्याख्यावसरे न्यासहरदत्तादिग्रन्थेषु वाचस्पत्यादिनिबन्धेषु च प्रचुरप्रयोगदर्शनात् । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्याच्च । शफो भुजो गुदं घोणे' इति गणरत्नमहोदधौ क्रोडादिगणे पाठाच्च । 'शफः खुरे गवादीनां मूले विटपिनामपि' इति हेमचन्द्रकोशाच्च । विश्वकोशे च पुन्नपुंसकतोक्ता । वामौ सुन्दरौ ऊरू यस्या इति विग्रहः । इह सर्वत्र उपमानाभावादप्राप्ते विधिः । कथं तर्हि 'पीवरोरु पिबतीव बर्हिण' इति कुमारः । प्रमाद एवायम् । संज्ञापूर्वकत्वात्सम्वृद्धिगुणो नेत्येके । हितेन सहेति । 'समो वा हिततत्तयोः' इति व्युत्पादितः सहितशब्दस्तु नेह गृह्यते । एकदेशविकृततया संहितग्रहणादेव सिद्धेरिति भावः ।

अञ् योऽकार इति। अञा अकारविशेषणं किम् । शूरसेनी । "जनपदशब्दात्" ( पा० सू० ४।१।१६८ ) इत्यञो "अतश्च" (पा० सू० ४।३।१०७) इति लुकि जातिलक्षणो ङीष् । शार्ङ्गरवीति । शङ्गरुशब्दादपत्यार्थे अण् ।

---

शब्दरत्न ।

वचनमिति। वृत्त्यादिपठितमित्यर्थः । उपमानं सादृश्यं तदभावात्तस्य समासावाच्यत्वादित्यर्थः । यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः । शफोरूरित्यत्रापि सादृश्यमूलकः शफत्वारोपो न तु तत्प्रतीतिरिति भावः । एवं च करभोरूशब्दे आरोपविवक्षायामूङ् न भवत्येव । एतेन करभोरुभिरिति व्याख्यातम् । एके इति । तस्य भाष्यानुक्तत्वात् साधुत्वे न नियामकतेत्यरुचिरत्र ।

ङीषिति । अत एव "न प्राच्य" (पा०सू० ४।१।१७) इति सूत्रे यौधेयादिग्रहणं चरि-

ज्योत्स्ना ।

कपदं हि—प्रातिपदिकत्वतद्व्याप्यान्तरधर्मविशिष्टपरम् । तथा च प्रातिपदिकत्वतद्व्याप्यधर्मान्तरविशिष्टस्य ग्रहणं यस्मिन् शास्त्रे तेन लिङ्गविशिष्टस्य बाधनं भवतीत्येव

"नृनरयोः" इति। नृशब्दाद् "ऋन्नेभ्यः" (पा०सू०४।१।५)इति ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम्। ननु नरशब्देऽलोऽन्त्यस्य वृद्धिः स्यात्।

यत्त्वाहुः—अन्त्यस्य यस्येति लोपेनापहारादनन्त्यस्याप्यकारस्य वृद्धिर्भवत्यान्तरतम्यात्। गुणे त्वन्याय्यकल्पनेत्यलोन्त्यपरिभाषाबाधस्यैव न्याय्यत्वादिति। तन्न। प्रत्ययसन्नियोगशिष्टाया वृद्धेरन्तरङ्गत्वेन परमपि "यस्य" इति लोपं बाधित्वा प्रवृत्त्यौचित्यात्। किं चास्तु कथंचिल्लोपस्तथाऽपि रेफस्यैव वृद्धिः स्यान्नत्वकारस्य। अन्तरतमपरिभाषापेक्षयाऽचालोन्त्यपरिभाषायाः परत्वात्। अपि चान्तरतमपरिभाषाऽसदृशमादेशं व्यावर्तयति न तु स्थानिनं नियच्छति। तत्कथं रेफस्य स्थानित्वव्यावृत्तिः। किं च 'गुणे त्वन्याय्य' इति न्यायोपन्यसनं स्थवीय एव। परिभाषयोः परस्परं गुणगुणिभावायोगात्।

अत्रेदं तत्त्वम्—नर इति रान्तलुप्ताकारानुकरणं। नरः अः नरः। ना च नरश्च तयोरिति व्याख्येयम्। यद्वा नरस्य अः नरः कतन्तवत् पररूपम्, ना च नरश्च तयोर्नृनरयोः। नरस्य च प्रथम एव अकारो गृह्यते, न तु

शब्दरत्न

तार्थम्। तद्धि 'पर्श्वादियौधेयादिभ्यामणञौ'इति स्वार्थिकाणो "अतश्च"इति प्राप्तलुको निषेधार्थम्। तत्फलं चाजन्तत्वान्ङीन्यथा स्यात्। ठगन्तत्वान् ङीब् मा भूदिति।

नृशब्दादिति। यद्यपि नृशब्देन नारी सिद्धा, नरी च पुंयोगे दुर्वारा, तथाऽपि नरत्वजातिमात्रप्रतिपादनेच्छायां नरीत्यस्य वारणार्थं नरग्रहणं बोध्यम्। ननु वृद्धिविधानसामर्थ्याल्लोपबाधोऽत आह—गुणे त्विति। अलोऽन्त्यपरिभाषाबाध एव न्याय्य इति भावः। अन्तरङ्गत्वेनेति। सामर्थ्याद्बाधो ह्यनुचितः। न्यायप्राप्तबाधस्तूचित एवेति भावः। कथंचिदिति। संनियोगशिष्टत्वानङ्गीकारेणेत्यर्थः। तत्कथमिति। "स्थानेऽन्तरतम" इति सप्तम्यन्तपाठस्य भाष्ये कुमार्यत्रेत्यादौ यणनापत्त्या दूषितत्वादिति भावः। परिभाषयोरिति। तद्व्याख्यातृग्रन्थानुसारेणेदम्। तर्हि अलोऽन्त्यस्येत्यस्यैव बाधो न त्वन्तरतमपरिभाषाया इति व्याख्यातम्।

व्याख्येयमिति। नृनरयोरित्यावर्त्तते एकत्र पञ्चम्यर्थे षष्ठी ताभ्यां ङीन्, नुर्नरोऽकार-

ज्योत्स्ना।

परिभाषार्थः। तेन कुरुरित्यादिनास्योपयोग इति कुरुरित्यादेर्लिङ्गविशिष्टपरिभाषया न साधुत्वम्, किन्तु "अन्तादिवत्" इति सूत्रेणेति दिक्।

द्वितीयः । प्रश्लेषसामर्थ्यात् । अधिकं शब्दकौस्तुभे बोध्यम् । पुत्रशब्दोऽत्र पठ्यते । शैलपुत्री, 'पुत्रीव हर्षं हृदये तनोति', 'कुर्वे तदुर्वीपतिपुत्रि सर्वम्' । न च पुत्रशब्दः कन्यायां नास्तीति भ्रमितव्यम् । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे' इत्यमरोक्तेः । अत एव "प्रत्ययस्थात्" (पा० सू० ७।३।४४) इतीत्त्वप्रकरणे 'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्त्तिकं च सङ्गच्छते । यत्त्वत्र हरदत्तेनोक्तम्—केवलपुत्रशब्दः स्त्रियां न वर्त्तते इति तद्भाष्यादिविरोधादुपेक्ष्यम् । इत्वप्रकरणस्थस्वग्रन्थविरोधाच्च ।

इदं तु चिन्त्यम् । "कारे सत्यागदस्य" (पा० सू० ६।३।७०) इति सूत्रे 'सूतोग्रराजभाजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति वार्तिकं किमर्थमिति । यत्तु वदन्ति स्वरार्थमिति । तन्न । टित्वात् ङीपि कृते उदात्तनिवृत्तिस्वरेणान्तोदात्ते ङीनन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे भेदाभावात् । यदपि शार्ङ्गरवादौ पुत्रशब्दः प्रक्षिप्तो न तु साम्प्रदायिक इति। तदपि न । उदाहृतप्रयोगविरोधात् । "वा सूतका" (का० वा०) इत्यादिवार्तिके कैयटहरदत्तादिकृताकारप्रश्लेषविरोधाच्चेत्यास्तां तावत् । आम्बष्ठ्येति । "वृद्धेत्कोसल" (पा० सू० ४।१।१७) इति यङ् । करीषस्येव

शब्दरत्न ।

स्य च वृद्धिरित्यर्थ इति भावः । अत एव वानरशब्दे नातिप्रसङ्गः । यतो नरशब्दान्ङीन् तदीयरेफान्तसम्बन्ध्यकारस्यैव वृद्धिविधानात वानरे नरस्यानर्थक्यात्ततो न ङीनिति बोध्यम् । तदाह—अधिकमिति । अमरोक्तेरिति । तत्र स्त्रीत्वबोध ईकारसमभिव्याहारस्तन्त्रम् । केवलाकारान्तपुत्रशब्दस्तु पुंस्त्वविशिष्टस्यैव बोधकोऽत एव स पुत्र इत्यतो न सन्देहः । पुमांसं पुत्रमाधेहीत्यादौ पुंस्त्वेन विशेषणं त्वतिशयितपुंस्त्वबोधनायेति भावः ।

चिन्त्यमिति । चिन्ताबीजं तु सूतादिपुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे "पुत्रः पुम्भ्य" इत्यनेन पुंशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रस्यादिरुदात्त इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुंशब्दोकारोदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः । सानुबन्धकत्वादतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति । "नादिन्याक्रोशे पुत्रस्य" (पा० सू० ८।४।४८)

ज्योत्स्ना ।

ननु पुत्रट् इत्यादेशपक्षे सूतपुत्री इत्यत्र स्थानिवद्भावेन दुहितृशब्दत्वात् । "न षट्" इतिनिषेधः स्यादत आह—पुत्रडादेशे त्विति ।

गन्धोऽस्य करीषगन्धिः। "उपमानाच्च" (पा० सू० ५।४।१३७) इति गन्धस्येदन्तादेशः। तस्य गोत्रापत्यं स्त्री। अण्। "अणिञोः" (पा० सू० ४।१।७८) इति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितस्तथाऽपि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। पौतिमाष्येति। पूतिमाषशब्दो गर्गादिः।

"तद्धिताः" (पा० सू० ४।१।७६)॥ बहुवचनमनुक्तानामुपसंख्येयानां संग्रहार्थं, महासंज्ञाकरणं चान्वर्थत्वाय। तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इति तेन यथाऽभिधानमेव स्युः। स्यादेतत्। टापः प्रागयमधिकारोऽस्तु ष्फविधौ तद्धितग्रहणं "यस्य" इति लोपे ईद्ग्रहणं च मास्त्विति चेत्। मैवम्। पट्वीत्यत्र ओर्गुणप्रसङ्गात्।

शब्दरत्न।

इत्यस्य पुत्रटि अप्रवृत्तिस्तु न फलम्। एतत्सम्बन्धयचः परस्य यर आदिनीशब्दपरत्वासम्भवात्। पुत्रटः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि "न षट्" इति निषेधो न। तस्य "ऋन्नेभ्य" (पा० सू० ४।१।५) इति ङीब्मात्रबाधकत्वात् टित्त्वसामर्थ्याच्च। इदं च वार्तिकं तत्पुरुषे एव प्रवर्तते "कारे सत्या" (पा० सू० ६।३।७०) इति सूत्रे उपसंख्यानात् तत्रान्यासम्भवात् पूर्वोत्तरसाहचर्येण च तत्पुरुष एव। एतेन बहुव्रीहौ ङीबर्थमिदमित्यपास्तम्। टित उपसर्जनत्वेन तत्र ङीपोऽप्राप्तेश्चेति दिक्। ङित्करणसामर्थ्यादिति। यङश्चेत्यत्र सामान्यग्रहणाविघातार्थङित्करणसामर्थ्यादित्यर्थः। (१)द्योतकत्वाच्चेत्यपि बोद्धव्यम्।

अनुक्तानामिति। तेन अल्पार्थे ग्रामटिकादयः साधवः। इदं तु भाष्ये न दृश्यते। टापः प्रागिति। ङीबादिषु ङस्येत्संज्ञा तु 'चुटू' इति सूत्रकरणेन सेत्स्यति, टीबादय एव वा ते सन्तु। तद्धितान्तत्वात्प्रातिपदिकत्वेऽपि फिट्स्वरो न। प्रकृतिप्रत्ययविभागशून्ये एव तत्प्रवृत्तेः। पकारषकारभिन्नानुबन्धवैयर्थ्यापत्तेश्च। अत एव सिद्धान्ते लिङ्गविशिष्टपरिभाषया नात्र फिट्स्वरः। ङीपप्रत्यये विजातीयङकारानुबन्धश्च न कार्य इत्यपरं लाघवम्। टिलोपस्य "नस्तद्धिते" (पा० सू० ६।४।१४४) इत्यनेनैव सिद्धेः। यस्येति लोपे इति। "औङः श्याम्" इति वार्तिकस्याप्युपलक्षणम्। ओर्गुणेति। न च ईद्ग्रहणं ङीबादिषु तद्धितकार्याभावज्ञापनार्थं; तेन पट्वीत्यादौ नोर्गुण इति वाच्यम्। कुरुरित्यादिसिद्ध्यर्थं स्त्रीप्रत्ययेषु तदभावज्ञापने आसुरायणीत्यादौ ष्फेऽपि "यस्य" इति लोपानापत्तेः। अत एव दण्डिनीत्यादौ टिलोपो नेति दिक्।

---

वि० (१) स्त्रीप्रत्ययस्य द्योतकत्वादित्यर्थः। द्योतकविषये द्वौ ब्राह्मणावित्यादौ पञ्चकम्प्रातिपदिकार्थपक्षे द्वित्वसङ्ख्यायाः प्रकृत्याऽभिधानेऽपि तत्र समुच्चयस्य दर्शनादिति भावः।

शङ्गलादिति । यौति मिश्रीकरोति पत्येति व्युत्पत्तेः । केचित्तुबाहुलकात् यौतेः रौणादिकं कतिप्रत्ययंवदन्ति । उभयथाऽपि युवतीनां समूहो यौवतं त्यन्तात्तु अणि पुंवद्भावात् यौवनमित्येव । भिक्षादिपाठसामर्थ्यान्न पुंवदिति वृत्तिस्तु भाष्यविरुद्धा । भाष्ये तत्पाठस्य प्रत्याख्या नादिति दिक् ॥

इति स्त्रीप्रत्ययाः ।

---

शब्दरत्न ।

मिश्रकरोतीति । आत्मानमिति शेषः । दिगिति । दिगर्थस्तु–विकाराभावमात्रतात्पर्यकत्वे वृद्ध्यादीनामप्यभावापत्तिः । अत एव 'युवतीकरनिर्मथितं दधि' इत्यादिप्रयोगसिद्धिः युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्ये सिद्धेऽत्र "तद्धिताः" (पा० सू० ४।१।७६ ) इत्यधिकारो लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थं इति दिक् ॥

इति स्त्रीप्रत्ययाः ॥

---

ज्योत्स्ना ।

दिगिति । तदर्थस्तु यद्यपीदृशेनाजूरूपस्त्रीप्रत्यये तद्धितकार्याभावो ज्ञाप्यताम् , तावतैवासुरायणी इत्यादिसिद्धिर्भविष्यति, तथापि ज्ञापकसिद्धवचनान्तरकल्पनापेक्षया यथाश्रुतमेव लघु इति बोध्यम् ।

ननु "यूनस्तिः" इति सूत्रात्प्राक् तद्धिताधिकारो न कार्यः, लिङ्गविशिष्टपरिभाषयैव सिद्धेरित्याह—युवतिशब्द इति ।

दिगिति । दिगर्थस्तु—ऋन्नेभ्यो ङीपि यूनिशब्दोऽपि साधुरिति कश्चित् । तन्न । येन नाप्राप्तिन्यायेन "यूनस्तिः" इति सूत्रस्य "ऋन्नेभ्य" इति सूत्रापवादत्वात् । कृतेऽपि ङीपि लिङ्गविशिष्टपरिभाषयास्य प्राप्तेरिति दिक् ।

इति स्त्रीप्रत्ययप्रकरणम् ।

---

सच्चिदानन्दकृपया श्रीजगन्नाथशर्मणा ।
ज्योत्स्नास्त्रीप्रत्ययरयेयं सुखदा पूरणी कृता ॥

# अथ विभक्त्यर्थाः ( कारकप्रकरणम् )

मात्रशब्दस्येति । (१)तस्य चावधारणमर्थः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । प्रातिपदिकार्थादीन्येव तन्मात्रमित्येवकारेणास्वपदविग्रहः । मयूरव्यंसकादित्वात्समासः । कृष्ण इति । यद्यपि नीलरूपवत्परोऽयमनियतलिङ्ग-

---

शब्दरत्न ।

नीलरूपवदिति । "प्रत्ययस्थात्", (पा०सू० ७।३।४४) इति सूत्रस्थेन 'असुब्वत' इति

ज्योत्स्ना ।

आरोहणावरोहणयोः क्रमयोर्मध्येऽवरोहणक्रमेण शब्दसाधुतानियामकत्वस्य दृष्टत्वेन ग्रन्थकरणे प्रवृत्तः कौमुदीकारः वाक्यस्फोटस्य मुख्यतया वाक्यस्फोटाभिव्यञ्जकवाक्यसाधुत्वबोधकं पूर्वं पञ्चसन्धिप्रकरणमुक्त्वा ततो वाक्यसाधुत्वबोधनाय वाक्यघटकसुबन्ततिङन्तबोधनस्य आवश्यकतया सूचीकटाहन्यायेन पूर्ववाक्ये सुबन्तस्यैव साधुत्वबोधकषड्लिङ्गाव्ययप्रकरणेऽभिधाय सुप्प्रकृतिभूतप्रातिपदिकसाधुत्वबोधकसमासतद्धितप्रकरणापेक्षया तदीयोद्देश्यतावच्छेदकसम्पादकतया च सुप्साधुत्वबोधककारकप्रकरणस्यौचित्येऽपि सुप्प्रातिपदिकयोरन्तर्गतत्वेन स्त्रीप्रत्ययोत्तरमपि "ङ्याप्प्रातिपदिकात्" इतिसूत्रेण स्वादेर्विधानात् पूर्वं स्त्रीप्रत्ययप्रकरणमुल्लिख्य तदनन्तरं कारकप्रकरणमाह—अथ विभक्त्यर्था इति।

मात्रशब्दस्येति । दीक्षितमते मूलोक्तनियतोपस्थितिकः प्रातिपदिकार्थो निरूप्यते—नियता उपस्थितिर्यस्य स नियतोपस्थितिकः । निपूर्वकयमधातोर्व्यापकत्वमर्थः । आ-

---

प्र० ( १ ) अथ भट्टोजीदीक्षितमते मूलोक्तो नियतोपस्थितिकपदार्थो निरूप्यते—नियता उपस्थितिर्यस्य स नियतोपस्थितिकः, निपूर्वकयमधातोर्व्यापकत्वमर्थः, आश्रयः क्तप्रत्ययार्थः, षष्ठ्यर्थो विषयता । तथाच व्यापकताश्रयोपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति शब्दार्थः । तत्र व्यापकत्वस्य व्याप्यांशे नित्यसाकाङ्क्षत्वात् किंनिष्ठव्याप्यतानिरूपितेत्याकाङ्क्षायां उपस्थितत्वात्प्रातिपदिकमेव व्याप्यत्वेन विवक्ष्यते, किञ्च व्याप्यव्यापकयोः सामानाधिकरण्योपपत्तये स्वविषयकश्रावणप्रत्यक्षसमवायित्व—स्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्वोभयसम्बन्धो व्याप्यतावच्छेदकः, समवायश्च व्यापकतावच्छेदको विवक्ष्यत इति तत्तत्सम्बन्धेन श्रोतुरात्मनि व्याप्यव्यापकयोः सत्त्वात्सामानाधिकरण्यम् । व्याप्यतावच्छेदकस्य स्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्वसम्बन्धस्य निवेशात् अगृहीतशक्तिकपुरुषात्मनि विस्मृतशक्तिकपुरुषात्मनि वा स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकसत्त्वेऽपि उपस्थितेरसत्त्वात् कथं व्यापकत्वमिति शङ्कानवकाशः ।

एवं व्यापकताश्रयोपस्थितिविषयत्वमित्यस्योपस्थितिनिष्ठव्यापकतावच्छेदकविषयताश्रयत्वमर्थः,

स्तथाऽपि वासुदेवे भगवति नियतलिङ्ग एवेति भावः । ज्ञानमिति । भावे ल्युट् । द्रोण इति । न च प्रातिपदिकमात्रे प्रथमेहास्त्विति वाच्यम् । तथा

शब्दरत्न ।

भाष्यप्रयोगेण क्वचिल्लाघवानादरस्यापि सूचनात्कर्मधारयान्मत्वर्थीयोऽपि क्वचिदिति ज्योत्स्ना ।'

श्रयः क्तप्रत्ययार्थः । षष्ठ्यर्थो विषयता । तथा च—व्यापकोपस्थितिविषयताश्रयत्वं प्रातिपदिकार्थं इति फलितम् । तत्र व्यापकत्वस्य यत्किञ्चिन्निष्ठव्याप्यनिरूपितत्वेन किन्निष्ठव्याप्यतानिरूपिताव्यापकतेति उपस्थितत्वात् प्रातिपदिकेति लब्धम् । तथा च उच्चरितप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितीयविषयताश्रयत्वम् ।

नन्वेवमपि उच्चारयितुः समवायेन उच्चारणस्य श्रोतुस्तज्जन्योपस्थितिसत्वेन व्यधिकरणत्वात्तयोः कथं व्याप्यव्यापकभावः । यद्यपि समवायं परित्यज्य स्वजन्यश्रावणप्रत्यक्षसमवायित्वसंसर्गं व्याप्यतावच्छेदकं समवायं च व्यापकतावच्छेदकं स्वीकृत्योक्तदोषः परिह्रियते, तथापि अगृहीतशक्तिकघटादिपदश्रोतरि स्वजन्यश्रावणप्रत्यक्षसमायित्वेनो-

तेन घटपदाद्घटत्वप्रकारकोपस्थितौ पटादेः उद्बोधकान्तरवशात्कादाचित्कभानेऽपि तद्विषयतायां तादृशोपस्थितिनिष्ठव्यापकतावच्छेदकत्वं नास्तीति नातिव्याप्तिः ।

नन्वत्रोपस्थितिपदेन स्मृतिर्गृह्यते शाब्दबोधो वा, नाद्यः, तटशब्दाल्लिङ्गत्रयविषयकबोधस्य आकाङ्क्षाद्यभावेन युगपदनुदयेऽपि लिङ्गत्रयविषयकोपस्थितेर्युगपत्सम्भवेन तस्या व्यापकत्वाद् लिङ्गस्यापि उक्तप्रातिपदिकार्थत्वेन ग्रहणाल्लिङ्गग्रहणवैयर्थ्यापत्तेः । नान्त्यः, शाब्दबोधस्य यत्किञ्चिल्लिङ्गविषयकत्वेनोक्तदोषाभावेऽपि घटादिपदशक्तिग्रहवतोऽपि पुरुषस्य योग्यताकाङ्क्षादिज्ञानाभावे घटः, कर्मत्वम् आनयनम्, कृतिः इत्यतो बोधाभावाद्घटादिबोधेऽपि व्यापकत्वस्य दुर्वचत्वादिति चेन्न, स्वनिष्ठशक्तिज्ञानयोग्यतादिघटितशाब्दबोधसामग्री समवायित्वस्य व्याप्यतावच्छेदकसम्बन्धस्य स्वीकारेणादोषात्,

न चैवमपि क्रियाविशेष्यकबोधस्य "सर्वं वाक्यं क्रियया परिसमाप्यत' इति न्यायात् वैयाकरणनियमेनाङ्गीकारात् क्रियानिष्ठविषयतायां तादृशव्यापकतावच्छेदकत्वसत्त्वात् क्रियायाः प्रातिपदिकार्थत्वापत्तिर्वाच्या, प्रातिपदिकनिष्ठशक्तिनिरूपकत्वस्यापि निवेशनीयत्वात् । एवं च स्वविषयकश्रावणप्रत्यक्षसमवायित्व–स्वनिष्ठशक्तिज्ञानाकाङ्क्षायोग्यताज्ञानादिघटितशाब्दबोधसामग्रीसमवायित्वोभयसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितोपस्थितिनिष्ठव्यापकतावच्छेदकविषयताश्रयत्वे सति प्रातिपदिकनिष्ठशक्तिनिरूपकत्वं प्रातिपदिकार्थत्वमिति सिद्धम् ।

ननु हरिपदनिष्ठसूर्याद्यन्यतमयत्किंचिदर्थनिरूपितशक्तिज्ञानादिविशिष्टशाब्दसमग्रीसमवायिनः तदन्यविषयकशाब्दानुदयात् चालनीन्यायेन तज्जन्यसर्वबोधस्यैव तद्व्यापकत्वात्तत्र विषयीभूतस्य कस्याप्यर्थस्य प्रातिपदिकार्थत्वं न स्यात् । अथ तत्तदर्थविषयकशाब्दसामग्रीसमवायित्वसम्बन्धस्य

व्याप्यतावच्छेदकत्वस्वीकारे तु लिङ्गग्रहणवैयर्थ्यापत्तिः। तत्पदवाच्यतत्तल्लिङ्गविषयकशब्दसामग्रीसमवायिनि तत्तल्लिङ्गविषयकबोधस्य नियतोदयेन तस्यापि प्रातिपदिकार्थत्वेन सिद्धेरिति चेत्। न। उच्चारितप्रातिपदिकप्रयोज्यबोधीयमुख्यविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितप्रकारताविशिष्टत्वं तत्त्वमिति विवक्षितत्वात्। वैशिष्ट्यं च स्वाश्रयत्व—स्वाश्रयावच्छिन्नविषयताश्रयत्वान्यतरसम्बन्धेन। तथा च घटादिपदस्थले लिङ्गविशिष्ट एकस्याः शक्तेः स्वीकारेण पुंस्त्वघटत्वोभयनिष्ठशक्तीयप्रकारतायाः घटनिष्ठशक्तीयविशेष्यतानिरूपितत्वेन तदाश्रयत्वात्पुंस्त्वघटत्वयोः, तदाश्रयावच्छिन्नविषयताश्रयत्वाच्च घटरूपार्थस्य प्रातिपदिकार्थत्वम्। तत्पदस्थले च 'तत्पदाद्बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नो बोद्धव्य' इति शक्तीयविशेष्यता घटादौ तन्निरूपितप्रकारता बुद्धिस्थत्वोपलक्षितघटत्वादौ, इति प्रकारताश्रयतदवच्छिन्नविषयताश्रययोः तत्त्वं सिद्धम्। एवं हर्यादिपदेऽपि तत्तदर्थनिरूपितशक्तिभेदेन तत्तच्छक्तीयप्रकारताविशिष्टस्य तत्त्वं सिध्यति। बोधीयशक्तीयविशेष्यतयोः सामानाधिकरण्यनिवेशाच्च तटपदवाच्यलिङ्गत्वव्याप्यत्वोपलक्षितपुंस्त्वत्वादिनिष्ठप्रकारताया बोधीयविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितत्वाभावात्तदाश्रयपुंस्त्वत्वादेः तदाश्रयावच्छिन्नविषयताश्रयस्य पुंस्त्वादेश्च न तत्त्वम्।

नन्वेवमपि एवशब्दस्यान्ययोगे व्यवच्छेदे च खण्डशः शक्तिस्वीकारेण बोधीयविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितत्वस्य अन्ययोगत्वनिष्ठप्रकारतायामभावेन तदाश्रयस्य अन्ययोगत्वस्य, तदाश्रयावच्छिन्नविषयताश्रयस्य अन्ययोगस्य च तत्त्वानापत्तिरिति चेन्न।

प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यं च स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्व स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकविषयतावत्त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वसम्बन्धेन। प्रकारतावत्त्वं च स्वाश्रयत्व—स्वनिरूपितावच्छेदकताश्रयत्वान्यतरसम्बन्धेन। स्वावच्छिन्नविशेष्यताया एव धर्मितापदेन ग्रहणम्। तथा चानियतलिङ्गतटादिपदस्थले प्रतियोगितावच्छेदकोभयसम्बन्धेन प्रातिपदिकाभावः स्त्रीत्वादौ स्त्रीत्वत्वादौ च नायातीति न तत्र प्रातिपदिकार्थत्वम्। नियतलिङ्गघटादिपदस्थले तु पुंस्त्वादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वसम्बन्धसत्त्वेऽपि द्वितीयसम्बन्धासत्त्वेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः सुलभः इति तत्त्वसिद्धिः। तत्पदस्थले घटादिपदार्थानां स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकविषयतावत्त्वस्य चालनीन्यायेन सत्त्वेऽपि प्रथमसम्बन्धाभावेन, 'एकसत्त्वेऽपि द्वयं नास्ति' इति प्रतीत्योभयसम्बन्धेनाभावः सुलभः। घटादिपदे एवपदे च प्रवृत्तिनिमित्ततदाश्रययोरुभयसम्बन्धेन प्रातिपदिकाभावः स्पष्ट एवेति सर्वत्र लक्षणसमन्वयः।

अथैवमपि अश्वबोधतात्पर्येणोच्चरितहरिपदादिन्द्ररूपप्रातिपदिकार्थे प्रथमापत्तिः। तथा च प्रकृतिप्रत्ययवाच्ययोरश्वेन्द्रयोराधाराधेयभावेनान्वयादश्वारूढ इन्द्र इति बोधापत्तिः। तथा प्रवृत्तिनिमित्तदाश्रयवद् क्रियाया अपि तत्त्वात् प्रातिपदिकार्थत्वापत्तिश्चेति चेन्न। स्वनिष्ठशक्तिप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमिति सम्बन्धस्यापि निवेशनेन सर्वेष्टसिद्धेरित्यलम्।

सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानायोगान्नामार्थ-

शब्दरत्न ।

ज्ञापनान्नैतत्प्रयोगानुपपत्तिरिति बोद्धयम् । नामार्थयोरिति । नामार्थश्च नामार्थश्चेत्येकशेषः ।

ज्योत्स्ना ।

च्चारणसद्भावेऽपि घटघटत्वसमवायानामुपस्थितेरभावात् व्यापकत्वमसम्भवमिति चेन्न । स्वविषयपदनिष्ठशक्तिज्ञानसमवायित्वं, स्वजन्यश्रावणप्रत्यक्षसमवायित्वम् , उभयसम्बन्धेन व्याप्यत्वावगमेनादोषात् । एतेन निश्रतलिङ्गघटादिपदस्य बधिरनिकटे उच्चारणेऽपि उपस्थितेरभावात् निरूक्तप्रातिपदिकार्थत्वं तादृशस्थले न स्यादित्यपास्तम् । स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन बधिरात्मनि प्रातिपदिकोच्चारणस्याभावेऽपि तत्रोपस्थितेरभावेऽपि क्षतिविरहात् ।

वस्तुतस्तु—प्रातिपदिकोच्चारणे व्याप्यतास्वीकारे स्वजन्यश्रावणप्रत्यक्षसमवायित्व स्वविषयपदनिष्ठशक्तिज्ञानसमवायित्वोभयसम्बन्धेन व्याप्यतावच्छेदकसम्बन्धस्वीकारे च गौरवात् । स्वविषयकश्रावणप्रत्यक्षसमवायित्व, स्वनिष्ठशक्तिज्ञानसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितीयविषयत्वं प्रातिपदिकार्थत्वं वक्तव्यम् । प्रातिपदिकनिष्ठव्याप्यता च न प्रातिपदिकसामान्यरूपेण । असम्भवात् । नापि तद्व्यक्तित्वेन, अव्यावर्तकत्वात् । किन्तु तत्तदानुपूर्वीप्रकारेणेति बोध्यम् ।

एवम्व्यापकतावदुपस्थितिविषयत्वमित्यस्य उपस्थितिनिष्ठव्यापकतावच्छेदकविषयताश्रयत्वमर्थः । तेन घटापदाद् घटत्वप्रकारकोपस्थितौ उद्बोधकान्तरवशात् कादाचित्कभानेऽपि तद्विषयतायां तादृशोपस्थितिनिष्ठव्यापकतावच्छेदकत्वं नास्तीति नातिव्याप्तिः । ननु गृहीतशक्तिकस्यापि उपेक्षया अनुत्पन्नसंस्कारस्य कालान्तरे लुप्तसंस्कारस्य वा पुरुषस्य शक्तिज्ञानसत्त्वेऽपि तदुपस्थितेरभावेन प्रातिपदिकनिष्ठव्याप्यतानिरूपिता व्यापकता उपस्थितौ न स्यादिति चेन्न । स्वनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्व स्वविषयप्रत्यक्षसमवायित्व उभयसम्बन्धस्यैव तदर्थमेवस्वीकारात् ।

नन्वत्र उपस्थितिपदेन स्मृतिर्गृह्यते ? शाब्दबोधो वा ? नाद्यः तटशब्दाल्लिङ्गान्वयविषयकबोधस्य आकांक्षाद्यभावेन युगपदनुदयेऽपि लिङ्गत्रयोपस्थितेर्युगपत्सम्भवेन लिङ्गत्रयोपस्थितेर्व्यापकत्वाल्लिङ्गस्यापि उक्तप्रातिपदिकार्थत्वेन लिङ्गग्रहणवयर्थ्यात् । नान्त्यः । शाब्दबोधस्य यत्किञ्चिल्लिङ्गविषयकत्वेनोक्तदोषवारणेऽपि घटादिपदशक्तिग्रहवतोऽपि पुरुषस्य योग्यताकांक्षादिकारणविरहिणः घटः कर्मत्वम् आनयनं कृतिः इत्यतो बोधाभावात् घटादिबोधेऽपि व्यापकत्वस्य दुर्घटत्वादिति चेन्न । स्वविशेष्यकशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्वस्य व्याप्यतावच्छेदकसम्बन्धस्य स्वीकारेणादोषात् ।

योरभेदसंसर्ग एवेति व्युत्पत्तेः । न चाषष्ठ्यर्थबहुव्री-

शब्दरत्न ।

अभेदसंसर्ग इति । यद्यप्यभेदो न संसर्गः, राहोः शिर इत्यादावौपाधिकभेदेन षष्ठ्युपपादनस्य भाष्ये कृतत्वात्तथाऽपि इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गस्य तेन शब्देनाभिधानान्न दोष इति बोद्धव्यम् । व्युत्पत्तेरिति । नीलमुत्पलमित्यादौ तथा क्लृप्तत्वादिति भावः । अषष्ठ्यर्थबहुव्रीहाविति । अत्र षष्ठीपदं सप्तम्या अप्युपलक्षणं वीराः पुरुषा यस्मिन्नित्यत्राप्यव्यभिचारात् । एवं च प्राप्तोदकादावित्यर्थः । न च व्यपेक्षावादेऽपि प्राप्तपदादिविषये पचतीत्यादौ क्लृप्तत्यागस्य प्रत्ययार्थप्राधान्यस्य वृत्तौ त्यागेन विशेषणविशेष्यभाववैपरीत्यस्य सिद्धतया प्रकारीभूतकर्त्रोदकस्याभेदेनैवान्वयात् क्व व्यभिचार इति वाच्यम् । नामजन्यप्रतीतिविशेष्ययोरेवान्वयः । सचाभेदनैवेति पदार्थः

ज्योत्स्ना

नन्वेवमपि 'सर्वं वाक्यं क्रियया परिसमाप्यते' इति क्रियामुख्यविशेष्यकस्य बोधस्य वैयाकरणमते सत्वेन उच्चार्यमाणप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतायाः क्रियाविशेष्यकबोधे एव जायमानत्वेन तादृशबोधीयविषयताश्रयत्वेन क्रियाया अपि प्रातिपदिकार्थत्वापत्तिरिति चेन्न । प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावद्बोधीयविषयताश्रयत्वे सति प्रातिपदिकनिष्ठशक्तिनिरूपकत्वं तत्वमिति विवक्षणेन क्रियायाः प्रातिपदिकनिष्ठशक्तिनिरूपकत्वाभावेन दोषाभावात् ।

ननु हरिपदविशेष्यकसूर्याद्यन्यतमयत्किञ्चिदर्थनिरूपितशक्तिज्ञानादिघटितशाब्दसामग्रीसमवायिनः पुंसः तदन्यविषयकशाब्दानुदयात् चालनीन्यायेन तज्जन्यसर्वबोधस्य तद्व्यापकत्वात् कस्याप्यर्थस्य तत्प्रातिपदिकार्थत्वन्न स्यात् । तत्तदर्थविषयकशाब्दबोधसामग्रीसमवायित्वसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावद्बोधीयविषयताश्रयत्वं तत्वमित्युक्तौ लिङ्गस्यापि तत्वेन लिङ्गग्रहणवैयर्थ्यं दुर्वारमेव । तटादिपदार्थपुंस्त्वविषयकशाब्दसामग्रीसमवायिनि पुंस्त्वविषयकशाब्दबोधस्यावश्यानुदयेन निरुक्तसम्बन्धेन विशिष्टबोधे व्यापकत्वस्य स्फुटत्वेन प्रातिपदिकार्थत्वादेव सिद्धेः ।

न च स्वरूपतः प्रातिपदिकनिष्ठशक्तिविषयत्वाभाववद्धर्मानवच्छिन्नविषयताश्रयत्वं तत्वम् । एवञ्च तटपदं लिङ्गत्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नं, तटत्वावच्छिन्नं च, बोधयत्वित्याकारकशक्तेः स्वीकृततया येन रूपेण शक्तिविषयीभूतः पदार्थः, तेनैव रूपेण शक्तिज्ञाने शाब्दबोधे च विषयी भवतीत्यनियमेन प्रकृते लिङ्गव्याप्यत्वेन रूपेण पुंस्त्वत्वादौ शक्तिविषयतायामपि स्वरूपतः पुंस्त्वत्वबोधे बाधकाभावात् स्वरूपतः पुंस्त्वत्वे पुंस्त्वबोधे स्वरूपतस्तटपदनिष्ठशक्तिविषयत्वाभाववत्पुंस्त्वत्वादिधर्मानवच्छिन्नविषयताश्रयत्वं तटतटत्वयोरेव, नतु पुंस्त्वादेरिति न कोपि दोष इति वाच्यम् । तच्छ-

शब्दरत्न ।

पदार्थेनेत्येतत्सिद्धो निश्चय इति नामजन्यप्रतीतिविशेष्ययोस्तथा ऽन्वयनियमस्य व्यभि-

ज्योत्स्ना ।

च्देऽपि बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नविषयिण्य एकस्या एव शक्तेः सत्वेन बुद्धिस्थत्वेनैव रूपेण घटत्वादौ शक्तिविषयता नतु स्वरूपत इति स्वरूपतस्तत्पदनिष्ठशक्तिविषयत्वाभाववद् घटत्वाद्यवच्छिन्नविषयताश्रयत्वेन घटादेस्तत्पदप्रातिपदिकार्थत्वानापत्तेः।

नच प्रातिपदिकनिष्ठशक्तिविशेष्यतानिरूपितप्रकारताविशिष्टत्वं तत्वम् । वै० स्वाश्रयत्व स्वाश्रयावच्छिन्नविषयताश्रयत्व एतदन्यतरसम्बन्धेन। एवञ्च तत्पदस्थले स्वनिष्ठशक्तियविशेष्यताघटादौ तन्निरूपितप्रकारताबुद्धिस्थत्वोपलक्षितघटत्वादौ, एवं तदाश्रयो घटादिस्तदवच्छिन्नविषयताश्रयत्वं घटादेरिति । घटादिपदस्थत्वे च लिङ्गविशिष्टे एकस्या एव शक्तेः स्वीकारात् पुंस्त्वघटत्वोभयनिष्ठप्रकारतायाः शक्तीयविशेष्यतानिरूपितत्वेन तदाश्रयत्वात्तयोः तदाश्रयावच्छिन्नविषयताश्रयत्वाच्च घटरूपार्थस्येति लक्षणसमन्वय इति वाच्यम् ।

तटपदस्थले दोषस्य तदवस्थत्वात् लिङ्गत्वव्याप्यत्वोपलक्षितपुंस्त्वादितटत्व एतदुभयवृत्तिप्रकारतानिरूपितविशेष्यतायास्तटे पुंस्त्वादौ च सत्वादिति चेन्न। उच्चारितप्रातिपदिकप्रयोज्यबोधीय मुख्यविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितप्रकारताविशिष्टत्वं तत्वम् । वैशिष्ट्यं च स्वाश्रयत्वशक्तीयविशेष्यतास्वाश्रयावच्छिन्नविषयताश्रयत्वान्यतरसम्बन्धेनेत्युक्तौ दोषाभावात् । तद्यथा—तटपदप्रयोज्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणा शक्तीयविशेष्यता तटनिष्ठैव नतु पुंस्त्वादिनिष्ठा तन्निरूपितप्रकारता तटत्वनिष्ठैव तदाश्रयत्वं तस्य तदाश्रयावच्छिन्नविषयताश्रयत्वं च तटस्येति ।

नन्वेवमपि एवशब्दस्यान्ययोगे व्यवच्छेदे च खण्डशः शक्तिस्वीकारेण बोधीयविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितत्वस्य अन्ययोगत्वनिष्ठप्रकारतायामभावेन तदाश्रयस्य अन्ययोगत्वस्य तदाश्रयावच्छिन्नविषयताश्रयस्य अन्ययोगस्य च तत्त्वानापत्तिरिति चेन्न। स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व स्वभावत्वैतदुभयसम्बन्धेन स्वविशिष्टत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषात्। अभावश्च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्व स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। शक्तिवैशिष्ट्यं च स्वविषयविषयतानिरूपकत्वसम्बन्धावच्छिन्नत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वैतदुभयसम्बन्धेन प्रवृत्तिनिमित्ते च तदाश्रये च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्वरूपसम्बन्धाभावादेकसत्वेऽपि द्वयं नास्तीति प्रतीत्या निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावः सुलभ इति सर्वत्र लक्षणसमन्वयः ।

ज्योत्स्ना।

नियतलिङ्गस्थलें पुंस्त्वादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य सत्त्वेऽपि स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयत्वरूपसम्बन्धाभावात्तत्राऽपि निरुक्तद्विशोभयसम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः सुलभ इति तत्राऽपि लक्षणसमन्वयः। अनियतलिङ्गस्थले च तट इत्यादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य पुंस्त्वविषयकबोधे स्त्रीत्वत्वेन स्त्रीत्वविषयको नेति भेदमादाय चालनीन्यायेन स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य च सत्त्वात्तत्र निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकः स्वभावः सुलभ इति लिङ्गग्रहणं सार्थकम्। अत्र प्रथमसम्बन्धोपादानेन स्वविषयकबोधतात्पर्येणोच्चारिताद्धरिशब्दादिन्द्ररूपप्रातिपदिकार्थे प्रथमा न भवति। अन्यथा अश्वारूढो इन्द्र इति प्रकृत्यर्थप्रत्ययार्थयोराधाराधेयभावसम्बन्धेनान्वयाच्छाब्दबोधापत्तिः। अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धदानात्तटादिपदस्थले तत्पदार्थस्य प्रातिपदिकत्वं सिद्ध्यति। तत्रैव द्वितीयसम्बन्धदानात् सूत्रे लिङ्गग्रहणं सार्थकम्।

तत्रैव द्वितीयसम्बन्धघटकस्वविषयतानिरूपकत्वसम्बन्धावच्छिन्नत्वसम्बन्धदानान्नियतलिङ्गस्थले प्रमेयत्वेन पुंस्त्वविषयको नेति भेदमादाय पुंस्त्वादौ नाव्याप्तिः।

अन्ये तु शाब्दबोधजनकशक्तिज्ञानविशिष्टविषयतावत्त्वं प्रातिपदिकार्थम्। शक्तिज्ञानवैशिष्ट्यञ्च, स्वजन्यशाब्दबोधविषयतात्वावच्छिन्नव्यापकत्व, स्वप्रयोज्यत्व, उभयसम्बन्धेन तत्पदार्थस्थले च बुद्धिस्थप्रकारवान् तत्पदवाच्य इति शक्तिज्ञानं न शाब्दबोधजनकं किन्तु घटत्वावच्छिन्नस्तत्पदवाच्य इति, विशिष्यशक्तिज्ञानमेव शाब्दबोधजनकमिति तज्जन्यशाब्दबोधविषयतात्वावच्छिन्नव्यापकत्वं तत्पदार्थेऽव्याहतमिति तत्र न दोषः। तटपदं त्रिषु लिङ्गेषु शक्तमित्यादि शक्तिज्ञानमेव अनियतलिङ्गस्थले शाब्दबोधजनकमिति तत्र कस्यापि लिङ्गस्य नियमेनाभानात् स्वजन्यशाब्दबोधविषयतात्वावच्छिन्नव्यापकत्वं लिङ्गविषयतायां नास्तीति लिङ्गग्रहणं सार्थकम्। साधात्वेऽतिव्याप्तिवारणाय द्वितीयसम्बन्धोपादानमित्याहुस्तन्न। पुँस्त्वनिरूपितशक्तिमत् तटपदं इत्यादिशक्तिज्ञानस्यापि बाधकाभावात् शाब्दबोधजनकत्वेन शाब्दबोधजनकतादृशज्ञानवैशिष्ट्यस्य पुँस्त्वादिविषयतायां सत्त्वेन तदाश्रयपुंस्त्वादौ तटपदप्रातिपदिकार्थत्वापत्तेर्दुर्वारत्वात्।

वस्तुतस्तु पुँस्त्वादिना विशेषरूपेणैव पुंस्त्वादेर्बोधस्य तटादिपदतोऽनुभवसिद्धत्वात्, तस्य च विशिष्यपुंस्त्वनिरूपितशक्तिमत्तटपदं इत्यादिज्ञानं विनाऽसम्भवात् तटपदं त्रिषु लिङ्गेषु शक्तमिति ज्ञानं न शाब्दबोधजनकमिति तद्वैशिष्ट्याभावो न प्रातिपदिकार्थत्वाभावप्रयोजक इत्युक्तनिवेशो विफल एवेति दिक्।

वस्तुतः प्रत्ययार्थविशेषणत्वेन किञ्चिदत्र साधकमित्याशयेन प्रदर्श-

हौ व्यभिचारः । एकार्थीभावाभ्युपगमात् । नापि निपातार्थे । तेषां

शब्दरत्न ।

चार इत्याशयात् । पचतीत्यादौ तिङां द्योतकतया प्रत्ययार्थप्राधान्यत्यागेऽप्यत्र तत्त्यागे मानाभाव इत्यन्ये । प्राप्तावुदकस्य कर्तृतया ऽन्वयः । क्तस्य कर्मणि लक्षणेति तु न युक्तम् । अन्यपदार्थस्य दुरुपपादत्वात् । एकार्थीभावेति । एवं चैकैवोपस्थितिर्व्युत्पत्तयश्च भिन्नोपस्थितिविषया इति न दोष इति भावः । एतेन राजपुरुष इत्यादौ व्यभिचारः । राजपदार्थपुरुषपदार्थयोः स्वस्वामिभावेनैवान्वयात् । सम्बन्धिलक्षणायां तु न मानमित्यपास्तम् । नापीति । घटश्चेत्यादौ समु-

ज्योत्स्ना ।

यति-पचतीत्यादि । तिङामिति । अयमाशयः—श्रूयमाणानामनेकतिबादीनां कर्त्रादौ शक्तिकल्पनापेक्षायां प्रत्ययानुपूर्व्याः नानात्वात्, शक्ततावच्छेदकता नानाधर्मे कल्पयितव्येति गौरवम् । तत्प्रकृतिभूतैकानुपूर्व्यवच्छिन्नधातोरेव शक्तिः पञ्चसु कल्प्यते चेल्लाघवम्भवति । तिङां तु द्योतकतैवेति काल इव द्योत्यः कर्ता तत्र विशेषणमित्यस्तु । अत एव अलेट् इत्यादौ धातुमात्रादपि कर्तृविशेषणकधात्वर्थक्रियाविशेषकबोधोपपत्तिः । द्योत्यार्थस्य विशेषणता च "हेतुमति च" इति सूत्रे भाष्ये स्पष्टा । अत एव "स्त्रियाम्" इति सूत्रे भाष्ये स्त्रीत्वस्य टाबादिवाच्यत्वपक्षे तस्य प्राधान्यापत्तौ द्विवचनाद्यनुपपत्तिरुक्ता, नतु स्त्रीत्वस्य प्रत्ययद्योत्यत्वपक्षे । यत्र तु प्रत्ययार्थप्राधान्ये साधकमस्ति तत्र तु तस्य विशेष्यत्वमेव । एवञ्च "तयोरेव" इति "कर्तरि कृत्" इति "गत्यर्थाकर्मक" इत्यादिशास्त्रबलात्कृत्प्रत्ययसमभिव्याहारे तस्य कर्तृविशेष्यत्वमेवोचितमित्यलम् ।

ननु नात्र प्रत्ययार्थप्राधान्यस्य त्यागः, प्रत्ययस्य कर्मणि लक्षणाया अभ्युपगमात् । विशेषणीभूतक्रियायां कर्तृतासम्बन्धेनोदकस्यान्वय इति नानुभवसिद्धशाब्दबोधानुपपत्तिरित्याशयकस्यचिन्मतं दूषयति—प्राप्तावुदकस्येति ।

एकार्थीभावेति । तत्त्वं च, यत्किञ्चिच्छक्तिविशिष्टत्वम् । वै० स्वपर्याप्त्यधिकरणघटितत्वम्, स्वनिरूपकेतरनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वम्, स्वग्रहप्रयोज्यग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्वम्, एतत्त्रितयसम्बन्धेन । यथा राज्ञः पुरुषः इत्यत्र राजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणराजपदघटितत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकेतरपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वञ्च वर्तते इति लक्षणसमन्वयः ।

एतेन । एकार्थीभावाभ्युपगमेन । व्यभिचार इति । तत्पुरुषे एव व्यभिचारदर्शनात् बहुव्रीहिपर्यन्तानुधावनव्यर्थमिति बोध्यम् ।

अत्रेदं बोध्यम्—व्यपेक्षावादेऽपि अषष्ठ्यर्थबहुव्रीहौ व्यभिचारप्रदर्शनं, वृत्तिविग्रहयोः समानार्थबोधकत्वमिति नियमस्य त्यागेन । वस्तुतस्तु तादृशनियमानुरोधेन प्राप्तोद-

द्योतकताभ्युपगमात् । न च सिद्धान्तेऽपि प्रकृतिप्रत्ययार्थयोरभेदान्वयो दुर्लभः । अन्यत्रादृष्टत्वादिति वाच्यम् । देवतार्थकतद्धितादौ दृष्टत्वादिति भावः । वचनं संख्येति । तथैव प्राचां व्यवहारात् ।

शब्दरत्न ।

च्चयस्य घटे भेदसम्बन्धेनान्वयादिति भावः । द्योतकतेति । घटपदेनैव विशिष्टस्योपस्थितिरिति तत्रान्वयस्यैवाभाव इति भावः । अत एवानुभूयते इत्यादौ सकर्मकत्वम् । निपातातिरिक्तत्वेन विशेषणाददोष इत्य(१)न्ये । देवतार्थकेति । 'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः' इति मीमांसकमते इति शेषः । एकार्थीभाववादिनामस्माकं तु विशिष्टोपस्थित्या तत्रापीदृशान्वयो दुर्लभ एव । द्रोणो व्रीहिमानयेत्यादि त्वनभिधानान्न । सर्पिः कुडवमात्रमित्यादौ षत्वविकल्पोऽपि व्यवस्थितविभाषया नेति (२)दिक् ।

वस्तुतस्तिङ्समानाधिकरणे प्रथमेति लक्षणैकवाक्यतया परिमाणेत्यस्य परिमाणे वर्त्तमानात्प्रातिपदिकादित्येवार्थः । न च प्रातिपदिकार्थत्वात्सिद्धिः । प्रवृत्तिनिमित्ततदाश्रयद्रव्ययोरेवात्र प्रातिपदिकार्थपदेन ग्रहणाद् । द्रोणादिपदानां च द्रोणत्वाद्येव प्रवृत्तिनिमित्तं, परिमाणत्वेन परिमाणं तु लिङ्गवद्विशेष्यान्वय-

ज्योत्स्ना ।

केत्यादिसमुदायाद्वाक्याच्च प्राप्तिः कर्मभिन्नोदककर्म इत्येव बोधः । अत एव पूर्वोत्तरपदयोः सामानाधिकरण्ये एव विहितबहुव्रीहिसमासस्योपपत्तिः । अत एव प्राप्तभार्य इत्यादौ प्राप्तिकर्माभिन्नभार्याकर्ता इति बोधात् प्राप्तपदभार्यापदयोः सामानाधिकरण्यात् पुम्वद्भावस्योपपत्तिः । उदकादौ कर्तृतानिरूपकत्वस्य बाधेऽपि विशेषणीभूतक्रियायां तत्पर्यवसानं बोध्यम् । शिखी ध्वस्त इतिवत् । शाब्दबोधस्तु—विशेषे एवाशेषेणोपपाद्य इति शब्देन्दुशेखरादौ स्पष्टम् ।

प्रवृत्तिनिमित्ततदाश्रयेति । तत्वञ्च—स्वावच्छिन्नविषयताश्रयत्वं, स्वतादात्म्यम् एतदन्यतरसम्बन्धेन तत्पदप्रवृत्तिनिमित्तविशिष्टः प्रातिपदिकार्थः प्रवृत्तिनिमित्तत्वं किमिति चेदत्र केचित् । वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रय-

वि० (१) अन्ये इत्यरुचिबीजन्तु एतादृशस्थले द्योतकत्वस्वीकारेणैवोपपत्तौ निपातातिरिक्तत्वविशेषणदाने गौरवमिति बोध्यम् ।

वि० (२) दिगर्थस्तु—"तिङ्समानाधिकरणे प्रथमा" इति वार्तिकैकवाक्यतया 'नीलो घट' इत्यादावुभयत्र प्रथमायाः साधुत्वोपपत्तये समानविभक्तिकनामार्थयोरभेदान्वयाद्धुभयत्र तिङ्समानाधिकरण्यं तथा यथा यत्र परिमाणाधिक्ये प्रथमा, तत्रापि परिमाणे वर्तमानात्प्रातिपदिकाद्यत्र प्रथमा तत्रापि तत्साहचर्यान्नामान्तरार्थे भेदसम्बन्धेन नान्वयः, किन्त्वभेदेनैवेति ।

शब्दरत्न ।

स्येव । द्रोणः परिमाणमिति तु द्वौ ब्राह्मणावित्यादिवदुपपन्नम् । द्रोणत्वादिचेयत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणो धर्मः । द्रोणः खारी आढकमित्येव तदुदाहरणं भाष्योक्तं साधु । 'द्रोणो व्रीहिः' इति तु सिंहो माणवक इतिवल्लक्षणया साधु । लक्षणा च शक्यतावच्छेदकारोप एव । एवंच प्रातिपदिकार्थ इत्यस्यालिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चोदाहरणम् । अन्ये सर्वे लिङ्गाद्यभि-

ज्योत्स्ना ।

त्त्वमिति । वाच्यत्वपदनिवेशात् आकाशः शब्दाश्रय इति सहप्रयोगदर्शनात् आकाशपदाप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रये नातिव्याप्तिः । न च पुंस्त्वादाविदमतिव्याप्तिरिति वाच्यम् । प्रकारतायां प्रवृत्तिनिमित्तावच्छिन्नधर्मितानिरूपितलिङ्गनिष्ठप्रकारतानिरूपितावच्छेदकत्वासामानाधिकरण्यनिवेशेनादोषात् । वाच्यवृत्तित्वनिवेशाद्वृत्तित्वस्य साक्षात्सम्बन्धेन विवक्षितत्वाच्च गवादिपदवाच्येऽवयवसंयोगविशेषरूपाकृतौ नातिव्याप्तिः । वाच्योपस्थितीयप्रकारतावत्त्वनिवेशादाधाराधेयभावसम्बन्धेन हर्यादिपदवाच्याश्ववृत्तौ हर्यादिपदवाच्येन्द्रादौ घटादिपदवाच्यसमवाये घटादिपदवाच्यवृत्तौ च नातिव्याप्तिः ।

अत्रेदं तत्वम्—प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्त्वम् । वैशिष्ट्यं च स्ववाच्यत्व स्ववाच्यवृत्तित्व स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्वैतत्त्रितयसम्बन्धेन । अत्र विशेष्यतानिरूपितत्वं प्रकारतायां साक्षात्परम्परासाधारणं विवक्षितमिति पशुपदार्थप्रवृत्तिनिमित्तलोमत्वादौ नातिव्याप्तिः । एवमेव पदार्थतावच्छेदकभेदत्वादावपि नातिव्याप्तिः । नच निरूपितत्त्वं साक्षात्परम्परासाधारणं वक्तुं दुर्वचमित्ययं परिष्कारोऽसङ्गत इति वाच्यम् । प्रातिपदिकविशिष्टप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्त्वमिति परिष्कारेणादोषात् । प्रकारतायां प्रातिपदिकवैशिष्ट्यं च स्वजन्यशाब्दबोधीयमुख्यविशेष्यतानिरूपितत्व, स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वाभाववत्व, एतदुभयसम्बन्धेन । अभावश्च आश्रयत्व अवच्छेदकत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । पुंस्त्वादौ चाश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वमेवास्ति नैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इति न तत्राव्याप्तिः । अत्र स्वप्रयोज्यधर्मितानिरूपितप्रकारता अपदार्थसम्बन्धावच्छिन्ना विवक्षितेति लोमवल्लाङ्गूलावच्छिन्नवाचकपशुपदप्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः । न चैवं पदार्थप्रवृत्तिनिमित्तभेदत्वादावव्याप्तिः । एवं पदप्रयोज्याभावत्वावच्छिन्नधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्नप्रकारताया अवच्छेदकत्वाश्रयैव तदन्यतरसम्बन्धेन सत्वेन तदभावस्याभावादितिवाच्यम् । प्रातिपदिकविशिष्टप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात्। प्रकारता-

इह सूत्रेऽर्थे लिंगे च प्रथमेत्येतावदेव सुवचम्। इतरत्सर्वं त्यक्तुं शक्यम्। तथा हि—अर्थे प्रथमेत्युक्ते कस्यार्थे इत्याकांक्षायां यस्मात्स्वादिविधिस्तस्येति लभ्यत एव। स्वादयश्च प्रातिपदिकात्लिङ्गप्रत्ययविशिष्टाच्च विधीयन्ते। तदर्थत्वञ्च ततो नियतोपस्थितिकत्वमेव। एवं च मृडानीत्यादौ पुंयो-

शब्दरत्न।

क्यस्य। परिमाणग्रहणं परिच्छेदकमात्रोपलक्षणम्। तदूध्वनयन्नाह—एतावदेव सुवचमिति।

नियतोपस्थितिकत्वमिति। तद्धच प्रवृत्तिनिमि(१)त्ततदाश्रयरूपम्। परिमाणञ्च प्राति-

ज्योत्स्ना।

र्गां वैशिष्ट्यं च स्वपर्याप्तशक्तिज्ञानाधीनोपस्थितीप्रयोज्यशाब्दबोधनिरूपितत्व स्वप्रयोज्यधर्मितानिरूपिता पदार्थसम्बन्धावच्छिन्ना या प्रकारता पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रकारता, अवच्छेदकत्वाश्रयत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताक, तादृशप्रकारत्वाभाववत्वैतदुभयसम्बन्धेन विशेष्यत्वाभावश्च स्वतादात्म्य स्वनिरूपितत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको विवक्षितः। पार्थ एव धनुर्धर इत्यादौ पार्थत्वावच्छिन्नप्रतियोगिताकभेदवत्सम्बन्धाभावस्य धनुर्धरत्वे बोधनात्प्रतियोगित्वसम्बन्धावच्छिन्नपार्थत्वावच्छिन्नप्रकारतानिरूपितविशेष्यता

प्र० (१) प्रवृत्तिनिमित्तलक्षणं च पक्षधरमिश्रकृतप्रकाशग्रन्थेऽभिहितम्—वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारत्वम् इति। वाच्यत्वनिवेशादाकाशः शब्दाश्रय इति सहप्रयोगदर्शनादाकाशपदाप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रयत्वे नातिव्याप्तिः। तथा वाच्यवृत्तित्वोक्त्या जात्याकृतिव्यक्तयः पदार्थ इति घटादिपदवाच्यावयवसंयोगविशेषरूपाकृतौ नातिव्याप्तिः।

तथा वाच्योपस्थितीयप्रकारतानिवेशात् मृत्पदवाच्ये मृत्पदवाच्यकपालवृत्तिके घटे न मृत्पदप्रवृत्तिनिमित्तत्वम्।

नन्वत्र लक्षणे तटपदवाच्यत्वादिविशेषणत्रयविशिष्टे पुंस्त्वत्वादौ प्रवृत्तिनिमित्तत्वापत्तिरिति चेन्न। वैयाकरणमते आश्रयत्वादीनामिव पुंस्त्वादीनामपि अखण्डोपाधित्वांगीकारेण तेषां स्वरूपतो भानसम्भवेन पुंस्त्वत्वादौ घटादिपदवाच्यत्वास्वीकारेणादोषात्। न च विशिष्टशक्तिपक्षे पुंस्त्वादौ वाच्योपस्थितीयप्रकारतावत्त्वस्यापि सत्वेनातिव्याप्तिरिति वाच्यम्। प्रकारतानिरूपिकाया वाच्यार्थनिष्ठविशेष्यताया निरवच्छिन्नाया विवक्षितत्वात्। लिङ्गस्य प्रवृत्तिनिमित्तावच्छिन्न एवान्वयेन लिङ्गनिष्ठप्रकारतानिरूपितविशेष्यतायाः सावच्छिन्नत्वनियमात्। पश्वादिपदवाच्यलोमादीनां लांगूलत्वाद्यवच्छिन्ने ऽन्वयेन साक्षात्प्रवृत्तिनिमित्तत्वाभावेऽपि प्रवृत्तिनिमित्तभूतलोमत्वाद्याश्रयत्वेनैव तेषां प्रातिपदिकार्थत्वसिद्धेः। इत्यलम्।

गमहत्त्वादेरपि ङ्यन्तान्नियतभानेन प्रथमा सिद्ध्यतीति अपरमनुकूलम् । यथान्यासे तु सा न स्यात् । यदि तु अर्थशब्दो वृत्तिविषयपरः । वृत्तिस्तु शक्तिर्लक्षणा च । गौणी तु लक्षणान्तर्भूता पृथग्वा ऽस्तु । त्रिकं प्रातिप-

शब्दरत्न ।

पदिकांशे । लिङ्गप्रत्ययविशिष्टांशे तु लिङ्गमहत्त्वादिकं च ततो नियतोपस्थितिकमिति तत्सर्वं तदर्थत्वेन गृह्यते । लिङ्गो(१)दाहरणं तटस्तटमिति बोद्धयम् । अकारान्तप्रातिपदिकात्कस्यापि नियमेनानुपस्थितेस्तस्य तदर्थत्वाभावात् । सा न स्यादिति । न च लिङ्गविशिष्टपरिभाषया सिद्धिः । यथान्यासे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रहणेन लिङ्गग्रहणेन तन्मात्राधिक्यस्यैव ग्रहणेन हिमानीत्यादौ महत्त्वस्याधिक्यसत्त्वेन तदसिद्धिरित्याशयात् । द्रोणादिशब्देभ्यः परिमाणस्यापि नियतोपस्थित्या तदपि तदर्थ एवेति तेभ्यः प्रथमासिद्धिः । परिमाणग्रहणस्य मूलोक्तार्थकत्वे तु तथा बोधार्थं तस्यावश्यकत्वेनैतावदेव सुवचमित्युक्तेरसङ्गतिः स्पष्टैव । लक्षणाचेति । इदञ्च स्वरूपकथनं नतु प्रकृतोपयोगि । पदस्य स्वार्थं एवान्वाख्यातस्य पदान्तरसमभिव्याहारे लक्षणेति (२)सिद्धान्तात् । लक्षणान्तर्भूतेति । सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वमिति भावः । पृथग्वेति । मीमांसकरीत्येदम् । त्रिकम् । स्वार्थद्रव्यलिङ्गानि ।

ज्योत्स्ना

अभावत्वावच्छिन्नविशेष्यतानिरूपितपदार्थसम्बन्धावच्छिन्नभेदनिष्ठप्रकारतायां तादात्म्ये भेदत्वे ऽवच्छेदकत्वे च विद्यमानत्वात्तादृशप्रकारत्वाभाववतीयं प्रकारता न जातेति तत्र नाव्याप्तिः । पुंस्त्वादौ चकस्यापि पदार्थस्यान्वयात्प्रातिपदिकपदप्रयोज्यधर्मितानिरूपितपदार्थसम्बन्धावच्छिन्नपुंस्त्वादिनिष्ठप्रकारतावच्छेदकत्वतादात्म्यैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती जातेति तादृशप्रकारताश्रयत्वावच्छेदकत्वैतदन्यरसम्बन्धेन पुंस्त्वे पुंस्त्वादौ च वर्तत एवेति न तादृशप्रकारत्वाभाव इति न तत्राव्याप्तिरिति सुधियो विभावयन्तु ।

इतिसिद्धान्तादिति । तथा च पदसंस्कारवेलायां लक्षणाया अवसर एव नास्तीति लक्षणाया गौण्याश्च वृत्तिशब्दवाच्यत्वव्यवस्थापनं प्रकृतानुपयुक्तमिति भावः ।

मीमांसकरीत्येति । अभिधायाः पदार्थान्तरवदुपपत्तिज्ञानोत्तरं जायमानविषयस्यापि पदार्थान्तरत्त्वमिति तेषामपि मते लक्षणाया मुख्यार्थबाधादिकन्नियामकमस्ति ।

वि० (१) अत्र किमपि लिङ्गन्न प्रातिपदिकजन्यनियतोपस्थितिकमिति लिङ्गग्रहणेनैव तादृशेभ्यः प्रथमा सिद्धिः ।

वि० (२) पदसंस्कारवेलायां लक्षणाया अवसर एव नास्तीति लक्षणाया गौण्याश्च वृत्तिशब्दवाच्यत्वव्यवस्थापनमप्रकृतानुपयुक्तमिति भावः ।

दिकार्थ इत्याश्रीयते, तदा लिंगेत्यपि मास्तु। लक्ष्याणां विचित्रत्वेऽपि न क्षतिः। नियमांशत्यागात्। तथा च अर्थे प्रथमेत्येव सारम्। द्रोणो व्रीहिरित्यपि द्रोणशब्दस्य तत्परिमिते उपचारात्सिद्धम्। गौर्वाहीक इतिवत्। एको द्वावित्याद्यपि 'न केवला प्रकृतिः प्रयोक्तव्या' इति निषेधादेव सिद्धम्। अनन्वितार्थकप्रयोगापेक्षयाऽनुवादकमात्रप्रयोगस्य न्याय्यत्वात्। एवं मात्रग्रहणमपि व्यर्थम्। "सम्बोधने च" (पा० सू० २।३।४७) इति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेः।

शब्दरत्न।

इत्याश्रीयते इत्यनेन सूत्रारम्भेऽस्यानाश्रयणं ध्वनितम्। एवं च लिङ्गस्यापि "स्वमोर्नपुंसकात्" इत्यादिशा(१)स्वबलेन प्रातिपदिकार्थत्वात् तत्रापि सिद्धिरिति भावः। विचित्रत्वेऽपीति। क्व चिल्लिङ्गस्य नियमेन भानं क्वचिदनियमेनेत्येवं विचित्रत्वेऽपीत्यर्थः। तदाह—नियमांशेति। नियतोपस्थितिक इत्यत्र नियमांशेत्यर्थः।

इत्येव सारमिति। प्रातिपदिकग्रहणस्य सूत्रोपक्रमे संख्याविद्धयेकवाक्यतयाऽव्ययेभ्योऽप्राप्त्या तेभ्यो विधानार्थत्वं वदता "तद्धितश्चासर्वविभक्तिः" (पा. सू. १।१।३७) "बहुपु" (पा.सू. १।४।२१) इत्यादिसूत्रेषु अव्ययेभ्यः प्रकारान्तरेण विभक्ति साधयता प्रातिपदिकग्रहणं प्रत्याख्यातं भाष्यकृता। स्वादीनां प्रातिपदिकादेव विधानेनः कस्यार्थे इत्याकांक्षया यस्मात्स्वादिविधिस्तदर्थे इत्यस्य लाभ इति भावः। उपचारात्—द्रोणत्वारोपात्। इतिवदिति। अत्र यथा वाहीके गोत्वारोपस्तद्वत्। वचनग्रहणप्रत्याख्यानोपायमाह—एक इत्यादि। एतत् "अनभिहिते" (पा. सू. २।३।१) इति सूत्रे भाष्ये स्पष्टम्। न्याय्यत्वादिति। इदं च यथान्यासेऽप्यावश्यकम्। अन्यथा एकादिषु वचनविपर्ययो दुर्वारः स्यादिति भावः। ज्ञापकेनेति।

ननु प्रातिपदिकार्थं एवेति नियमात्तदाधिक्येऽप्राप्तौ किं ज्ञापकेनेति चेन्न। यथा कर्मण्येव द्वितीयेति नियमेन कर्मत्वाभावसामानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणार्थान्तरस्य। अत एव 'गां दोग्धि पयः' इत्यादावपादानत्वादिशक्तिबोधेऽपि द्वितीया भवति, तथा प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिः स्यान्न तु तत्सत्त्वे एव कर्मत्वादेरिति भावः। न च प्रातिपदिकार्थाभावसमाना-

ज्योत्स्ना।

तत्र यदि सादृश्यात्मकसम्बन्धज्ञानम्पूर्वं भवति तदा गौणी, अन्यदा शुद्धेति व्यवहार इति दिक्।

वि० (१) नपुंसकशब्दस्य नपुंसकाभिधायकशब्दपरतया लिङ्गस्य यस्मात्स्वादयो विधीयन्ते तदर्थत्वेन सूत्रे लिंगपदाभावेऽपि न क्षतिरिति भावः।

शब्दरत्न।

धिकरणार्थान्तरस्याप्रसिद्ध्या नियमव्यावर्त्याप्रसिद्धिरिति नियमसामर्थ्यात्तत्समानाधिकरणार्थान्तरस्यापि तेन व्यावृत्तिरिति वाच्यम्। प्रातिपदिकार्थे एव प्रथमा न तु निरर्थके इति तद्व्यावृत्तेरेव फलत्वात्। तत्सत्त्वे तु कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे इत्यर्थान्न दोषः। संख्याधिक्ये तु भवत्येव "द्व्येकयोः"(पा०सू० १।४।२०) इत्यादिभिरस्यैकवाक्यत्वात्। वार्त्तिककृता तु अर्थनियममाश्रित्य मात्रग्रहणं "सम्बोधने च" इति सूत्रं लिङ्गादिग्रहणं च प्रत्याख्यातमिति दिक्।

ज्योत्स्ना।

तत्सत्वे तु इति। ज्ञापकसत्वे इत्यर्थः। इदमेव मात्रग्रहणमेतादृशार्थकविषये प्रमाणं बोध्यम्।

अत्रायं भावः—मात्रग्रहणाभावे शङ्खः पाण्डुर एवेत्यादौ एवकारो यथा अयोग्यस्य व्यवच्छेदरूपं विशेषणीभूतपाण्डुरत्वाभावस्वाभावं बोधयति। तथा "कर्मणिद्वितीया" इत्यादिभिः, कर्मणि विवक्षिते एव द्वितीया इत्येवं सामर्थ्याद्बोधने एवकारेण कर्मणोऽविवक्षायामेव द्वितीयादेः साधुत्वाभावो बोध्यते। नतु कर्मणि एव विवक्षिते इत्येवं बोधनात्। कर्मान्यस्मिन् विवक्षिते द्वितीयादेरसाधुत्वम्। तथा च कर्मापादानोभयविवक्षायां कस्या अपि विभक्तेरप्राप्त्या, 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्योक्तिरसंगता स्यात्। तथा च प्रथमा विभक्तिविधायकेऽपि मात्रग्रहणाभावे प्रातिपदिकार्थे विवक्षिते एव प्रथमा, इत्येवं सामर्थ्यान्नियमे एवकारेण प्रातिपदिकार्थाविवक्षायां प्रथमाया असाधुत्वबोधनात् अनर्थकनिपातेभ्यः प्रथमायाः साधुत्वं न स्यात्। स्याच्च कर्मादिविवक्षायामपि प्रातिपदिकार्थविवक्षायाः सत्वात् प्रथमायाः साधुत्वम्। केवलकर्मादिविवक्षायां द्वितीयादिविभक्तीनां चारितार्थ्येन कर्मापादानोभयविवक्षायां प्रथमाया एव परत्वात् बाधापत्तेः। तत्सत्वेन प्रातिपदिकार्थमात्र एव विवक्षिते इति नियमाकारान्न दोषः। प्रातिपदिकार्थान्यविवक्षायां प्रथमाया असाधुत्वात्। अन्यविवक्षायामसाधुत्वे बोधितेऽपि तदविवक्षायामसाधुत्वस्याबोधनात्। अनर्थकनिपातेभ्योऽपि सा सिद्ध्यति। कर्मणि द्वितीया इत्यादिभिः कर्मादिमात्रे द्वितीयादयः इत्येवं नियमकरणात् सर्वासां विभक्तानामभेदार्थकत्वं सिद्ध्यति। अभेदकर्माद्युभयविवक्षायां तासां साधुत्वस्य सूपपादत्वात्। एतन्मूलक एव, अभेद एव विशेषणविभक्तेरर्थः इति प्रवाद इति दिक्।

अर्थनियममाश्रित्येति। प्रातिपदिकार्थे प्रथमैव न द्वितीयादीत्येवंरूप इत्यर्थः। तदानीं विभक्त्यन्तरस्य व्यावृत्तिर्नतु अर्थान्तरसम्बन्धस्येति समाने लिङ्गाधिक्ये च प्रथमा भविष्यति। कर्मत्वाद्यधिक्ये तु कर्मादौ द्वितीयाद्येवेत्येवं रूपनियमार्थे "कर्मणि द्वितीया" इत्यादि सूत्रमिति द्वितीयाद्येव भवति।

दिगिति। तदर्थस्तु—मात्रग्रहणं कुर्वतस्सूत्रकृतो यद्यपि प्रत्ययनियमस्सम्मतः त-

यत्तु प्राचोक्तम्—प्रातिपदिकार्थः सत्तेति। यच्च व्याख्यातं योऽर्थः सन्नेव केवलं भासते न जात्यादिरूपो न लिङ्गसंख्याकारकयोगी स विवक्षितः। यथाऽव्ययार्थः। यथा ऽव्ययार्थो हि केवलमस्तीति शक्यते वक्तुं न पुनरीदृशस्तादृश इतीति चेन्न। उच्चैर्नीचैरित्यादिशब्दानां सन्नित्याकारकप्रतीतिजनकत्वस्य सर्वतन्त्रविरुद्धत्वात्। अस्त्यादिसामानाधिकरण्यस्यापि असत्त्वार्थकेषु दुर्लभत्वात्। न लिङ्गसंख्याकारकयोगीति त्वदुक्तिविरोधाच्च। पदान्तरोपस्थापितस्य अस्तिसामानाधिकरण्यमस्तीति चेन्न। तस्य अव्यावर्तकत्वात्। न पुनरित्यादिवाक्यशेषविरोधाच्च। कृष्णः श्रीरित्यादावव्याप्तेश्च। न च लिङ्गग्रहणात्तत्सिद्धिः। मात्रशब्देनाधिकव्यवच्छेदात्।

यदपि प्राचा व्याख्यातं यत्रार्थान्तरानपेक्षया शब्दप्रवृत्तिः, स सर्वः प्रातिपदिकार्थः शब्दप्रवृत्तिनिमित्तमिति यावत्। यथा उच्चैर्नीचैरिति अलिङ्गसंख्यावेतौ केवलं जात्यादिनिरपेक्षं स्वार्थमाहतुरिति तदपि न। प्रवृत्तिनिमित्तमिह प्रकारीभूय भासते, तथा च तन्मात्रबोधोऽसम्भवी। यदि सोऽपीष्टस्तर्हि घटादिशब्देभ्योऽपि स्यादिति संख्याकारकाद्यनन्वय एव स्यात्।

शब्दरत्न।

जात्यादिरूप इति। जात्यादिना रूप्यत इति व्युत्पत्त्या जात्यादिधर्मविशिष्ट इत्यर्थः। ननूच्चैरादीनामप्याधारतात्वविशिष्टाधारताशक्तिर्वाच्येति तदप्रसिद्धिरित्यतस्तद् व्याचष्टे—न लिङ्गेति। ईदृशस्तादृश इति। असुकलिङ्गादिरित्यर्थः। ननु सन्नित्याकारकप्रतीत्यभावेऽपि अस्तिसामाधिकरण्यं स्यादत आह—अस्त्यादीति। विरोधाच्चेति। सन्नित्यनेन सामानाधिकरण्ये कारकत्वस्य दुर्वारत्वादिति भावः। वाक्यशेषविरोधाच्चेति। तत्सत्त्वे लिङ्गादेरपि सम्भवेन तद्विरोध इति भावः। अव्याप्तेश्चेति। ततः सन्नित्याकारकप्रतीतेरभावादिति भावः। अधिकव्यवच्छेदादिति। कृष्णत्वादेः सत्तालिङ्गाभ्यामधिकस्य भानादिति भावः।

अलिङ्गेति। अलिङ्गसंख्यावेतौ केवलमनाश्रितं निरपेक्षं लिङ्गादिनिरपेक्षं स्वार्थं जात्याद्याहतुरित्यन्वयः। असम्भवीति। प्रकारताया विशेष्यतानिरूपितत्वात्। कारकादीत्यादिना लिङ्गम्।

ज्योत्स्ना।

थापि अर्थनियमपक्षे लाघवमित्ययमेव युक्त इति दिक्।

जात्यादीति। आदिना उपाधिपरिग्रहः। तथा च उच्चैरादीनाम् ऊर्ध्वदेशनिष्ठाधारता वृत्त्याधारतात्वात्मकप्रवृत्तिनिमित्तप्रतिपादकतया नाव्याप्तिरित्याशयः।

इत्यन्वय इति। अनेन जात्यादीति निरपेक्षमिति च भिन्ने पदे इति सूचितम्।

यदपि द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दः सोऽयमित्यभिसम्बन्धात्प्रवर्तते । तत्र गौणमुख्यन्यायान्न प्राप्नोतीति परिमाणग्रहणमिति । तन्न । पदकार्येष्वयं न्यायो, न प्रातिपदिककार्येष्विति सिद्धान्तात् । अन्यथा सिंहो माणवक इत्याद्यसिद्धिप्रसङ्गाच्च ।

यदप्याहुः—द्रोणादयः शब्दा लौहं दारुमयं वा परिमाणमेव न व्यभिचरन्ति, परिमेयं तु व्यभिचरन्त्येव । अतस्तस्य प्रातिपदिकार्थत्वाभावादप्राप्तेः परिमाणग्रहणमिति । तदपि न । गौणलाक्षणिकेषु सिंहो माणवको, मञ्चाः क्रोशन्तीत्यादिष्वव्याप्त्यापत्तेः । तत्र विशेष्यस्य माणवकादेर्भेदे ऽपि सिंहसदृश इत्यर्थो गौण्यां नियतोपस्थितिक एवेति यदि । तर्हि व्रीह्यादेर्भेदेऽपि द्रोणपरिमितो नियतोपस्थितिक एवेति तुल्यम् ।

"सम्बोधने च" ( पा० सू० २।३।४७ ) ॥ मात्रग्रहणात्सम्बोधनाधिक्ये न प्राप्नोतीत्यारम्भः । इह सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रियां प्रति विशे-

शब्दरत्न ।

सिद्धान्तादिति । "ओत्" (पा० सू० १।१।१५) सूत्रे कैयटे स्फुटमेतत् । इदमेव युक्तं विशिष्टरूपोपादानाभावादस्या अत्राप्रवृत्तेर्द्रोणादिशब्दानां लाक्षणिकत्वेऽपि गौणत्वाभावाच्चेत्यपि बोद्धयम् ।

ज्योत्स्ना ।

सिंहो माणवक इतिवल्लक्षणयेति । अत्रायं भावः—सिंहो माणवक इत्यादिवत् द्रोणो व्रीहिः इत्यादेरपि द्रोणादिपरिच्छिन्ने द्रोणत्वाद्युपचारादेव सिद्धेः परिमाणग्रहणसार्थक्यं नियतोपस्थिकत्वनिवेशे दुरुपपादमेवेति प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणं युक्तमिति न कापि तन्मते क्लिष्टकल्पनेति दिक् ।

"ओत्"सूत्रे कैयटे स्फुटमेतदिति । अत्र भाष्यकृता ध्वनितम्, कैयटेन च स्पष्टीकृतम् । तथाहि-तत्र भाष्ये अनदो अदः समभवत् अदोऽभवत् इत्यत्र प्रगृह्यसंज्ञावारणाय वार्तिककृता 'ओतः श्विप्रतिषेधः' इत्युक्तं तस्य लक्षणप्रतिपदोक्तपरिभाषया सिद्धमित्यनेन प्रत्याख्यान एवमपि अगौ गौः समभवत् गोऽभवत् इत्यत्र प्राप्नोतीतिशङ्कायाः गौणमुख्यन्यायेन समाधाने कृते कथं तर्हि वाहीके वृद्धयात्वे भवत इति परेण शङ्किते अर्थाश्रये एतदेवं भवति शब्दाश्रये च वृद्धयात्वे इति समाहितम् ।

एतेन यत्रार्थविशेषपुरस्कारेण कार्यं विधीयते, तत्र मुख्यार्थः प्रथमं बुध्या रूढः । गौणार्थप्रतीतिस्तु पदान्तरसम्बन्धवेलायामिति पदकार्यविषयत्वमस्य न्यायस्येति ध्वनितम् । कैयटेन तु स्पष्टतयोक्तम् । अर्थाश्रये इति—लौकिकार्थवत्त्वयोग्यपदाश्रये इत्यर्थ इति दिक् ।

वणमिति सिद्धान्तः । उक्तं च—

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति ।

एवं च राम मां पाहीति वाक्यस्य रामसम्बन्धिसम्बोधनविषयो मत्कर्मकरक्षणमर्थः ॥

इति प्रथमा ॥

---

शब्दरत्न ।

सम्बोधनपदमिति । अत्र पुञ्जराजः 'आख्यातं सविशेषणं वाक्यम्' इति वाक्यलक्षणं तत्रास्य क्रियाविशेषणत्वाभावे वाक्यत्वं न स्यादिति समानवाक्ये इति प्रकृत्य विहितो निघातो न स्यादिति भाव' इति ।

वस्तुतस्तु एवं सति नद्या यत् कूलं तत्र तिष्ठतीत्याद्यर्थके नद्यास्तिष्ठति कूले इत्यादौ षष्ठ्यन्तस्य क्रियायां विशेषणत्वाभावात्तद्घटितस्य वाक्यत्वानापत्तौ समर्थसूत्रभाष्यसम्मतनिघातस्य तत्रानापत्तिः । तस्मात् सविशेषणमित्यस्य साक्षादन्यद्वारा वा यद्विशेषणं तत्सहितमित्यर्थोऽवश्यं वाच्यः । एतेन यतः पदात्परस्य पदस्य निघातादयः क्रियन्ते तयोः परस्परान्वयनियम इत्यपास्तम् । वस्तुतो व्रजानि देवदत्तेत्यादौ जानीहीति शेषस्तत्र व्रजनस्य कर्मत्वेन देवदत्तस्योद्देश्यत्वेनान्वयान्न दोषः । प्राप्तकाले ऽत्र लोट् इति दिक् ॥

इति प्रथमा ॥

ज्योत्स्ना

निघातो न स्यादिति । आष्टमिकेन "अमन्त्रितस्य च" इत्यनेन समानवाक्यस्यामन्त्रितस्य पदात्परस्यैव निघातविधानादिति भावः । पुञ्जराजमते 'व्रजानि देवदत्त' इत्यस्य देवदत्तसम्बन्धि सम्बोधनविषयं मत्कर्मकं गमनमिति शाब्दबोधः। तत्र साक्षात् यत् क्रियां प्रति विशेषणं तत्सहितस्यैवैकवाक्यत्वमिति कश्चित्। तन्न युक्तमित्याह-वस्तुतस्तु—

यत्तु—सम्बोधनविभक्त्यन्तस्य विधेयभूतस्य क्रियायामेवान्वयः । स एव निघातस्य प्रयोजकः ।

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥

इति हरिग्रन्थात् ।

एवञ्च 'व्रजानि देवदत्त' इत्यत्र व्रजनस्य विधेयत्वाभावेन कथमत्र निघातसिद्धेः फलत्वेन कथनमिति केचित्। तन्मतेऽपि निघातार्थमाह—वस्तुत इति ।

ज्योत्स्ना ।

अत्रेदं तत्वम्-"सम्बोधने च" इति सूत्रं केचिदित्थं व्याचख्युः-समीहितं बोधनं सम्बोधनमिति व्युत्पत्तिमनुसृत्य विषयत्वस्याकाङ्क्षालभ्यत्वात् समीहा, इच्छा, बोधनं च विभक्तिशक्यम् । समीहा इच्छा, बोधनं ज्ञानम्, तत्र राम मां पाहीत्यादौ विभक्त्यर्थज्ञाने प्रकृत्यर्थरामादेः समवायेन तदपेक्षायाः विषयतासम्बन्धेनान्वयः । इच्छा च प्रयोक्तुरेव प्रत्यासन्नत्वात् । तादृशज्ञानस्य च प्रवर्तनाविषयमत्कर्मकरक्षणादिरूपवाक्यार्थेऽन्वयः । तथा च प्रयोक्त्रिच्छाविषयरामसमवेतज्ञानविषयमत्कर्मकप्रवर्तनाविषयरक्षणजनककृतिमांस्त्वमिति बोधः ।

प्रकृत्यर्थरामसमवेतज्ञानस्य प्रयोक्त्रिच्छाविषयत्वे वाक्यार्थरक्षणादेः विशिष्टज्ञानविषयत्वे च शब्दतोऽवगतेः प्रकृतवाक्यार्थरक्षणादिविषयकबोधसमवायित्वप्रकारकेच्छाविषयत्वरूपं सम्बोध्यत्वं प्रकृत्यर्थरामादेः फलति ।

गदाधरमहाचार्यैस्तु—बोधनस्य समीहेति व्युत्पत्तिमवलम्ब्य प्रत्यासत्त्या श्रोतृसमवेतबोधेच्छाया लाभात् सम्बोधनपदाव्यवहितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छाविभक्त्यर्थमङ्गीकृत्य तस्याः प्रकृत्यर्थरामादौ विषयतासम्बन्धेन अन्वयोऽङ्गीकृतः । नामार्थस्य स्वप्रकृतिकप्रत्ययार्थान्वयद्वारैव क्रियान्वय इति नियमानुरोधेन संख्यातिरिक्तसुवर्थकर्मत्वादेः प्रकृत्यर्थविशेष्यतया भानात् सम्बोधनविभक्तिप्रकृत्यर्थस्य च धात्वर्थे विशेषणतया नान्वयात् सम्बोधनस्य प्रकृत्यर्थविशेष्यतया भानं निर्युक्तिकमित्युक्तम् । तन्मते वाक्यार्थे मत्कर्मकरक्षणादेः सम्बोधनविभक्त्यर्थैकदेशे बोधे विषयित्वसम्बन्धेनान्वयः । तथा च मत्कर्मकरक्षणविषयकबोधाश्रयत्वप्रकारकेच्छाविषयत्वरूपं सम्बोध्यत्वं शब्दत एव लभ्यत इति दिक् ।

प्राञ्चस्तु-प्रयोक्तृवचनार्थबोधनायावधानादिवैशिष्ट्योपलक्षितावस्थितीयरूपस्यापि अभिमुखीभावस्य सम्बोधनपदे प्रतीयमानस्य बोधनार्थं सम्मुखीकरणं सम्बोधनमिति व्युत्पत्त्या प्रकृतवाक्यार्थविषयकबोधफलकश्रोत्राभिमुखी भावरूपव्यापारानुकूलव्यापारो विभक्त्यर्थः । स च प्रयोजकनिष्ठेच्छारूप एव । इच्छायां व्यापारानुकूलत्वं च व्यापारविषयकत्वमेव विभक्त्यर्थैकदेशे श्रोतृनिष्ठाभिमुखीभावरूपव्यापारे वृत्तित्वसम्बन्धेन प्रकृत्यर्थरामादेरन्वयः । विशिष्टेच्छायाश्च विषयत्वसम्बन्धेन धात्वर्थरक्षणादावन्वयः ।

'सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्'

इति हर्युक्तेः। बोधजनकव्यापारस्य तु इच्छाविषयत्वे ज्ञाते बोधस्य व्यापारजन्यत्वेनेच्छाविषयत्वं सिद्ध्यति। तादृशेच्छाबोधस्य वाक्यार्थविषयकत्वात् वाक्यार्थरक्षणादेः व्यापारजन्यबोधविषयत्वेनेच्छा विषयत्वं बोध्यम् । रामादित्यभिमुखीभावरूपव्यापारस्येच्छाविषयत्वात् । प्रकृतवाक्यार्थविषयकबोधानुकूलव्यापाराश्रयत्वप्रकारकेच्छोद्देश्यत्वरूपे सम्बोध्यत्वं रामादौ लभ्यते । चैत्रो मैत्रं सम्बोधयतीत्यादौ ण्यन्तबोधिधातुना

"कर्तुरीप्सिततमं कर्म" (पा० सू० १।४।४९) ॥ कर्तुरिति। "क्तस्य च वर्तमाने" (पा० सू० २।३।६७) इति कर्तरि षष्ठी। आप्नोतेः सन्नन्तात् "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। मतिरिच्छा न तु बुद्धिः। पुनर्बुद्धिग्रहणात्। एवं च कर्त्रा आप्तुमिष्यमाणं कर्मेत्यर्थः। कर्ता च धातूपात्तव्यापाराश्रयः। स च केनाप्तुमिच्छतीत्याकाङ्क्षायां विशेषणीभूतेन व्यापारेणेत्यर्था-

---

शब्दरत्न।

आप्नोतेरित्यादि। अनेन व्याख्यानात् क्रियाशब्द एवात्रेप्सितशब्दो न त्वभिप्रेतपरो रूढ इति सूचयति। आप्तुमिति। सम्बन्धुमित्यर्थः। केनेति करणाकांक्षाप्रदर्शनम्। विशेषणीभूतेनेति। कर्तृपदार्थविशेषणीभूतेनेत्यर्थः। उपस्थितं परित्य-

ज्योत्स्ना।

प्रतीयमानस्य तादृशेच्छोद्देश्यत्वबोधानुकूलत्वस्य सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपव्यापारस्येतरनैरपेक्ष्ये णौ सम्बोधनविभक्त्यन्तप्रयोगे प्रतीतेस्तस्य वाक्यार्थत्वाभावः। सम्बोधनं न वाक्यार्थं इति हरिणोक्तः। 'सर्वं वाक्यं क्रियायाः परिसमाप्यत' इति सिद्धान्तात् 'भावप्रधानमाख्यातम्' इति यास्कवचनात् श्रुतत्वाच्च वाक्यार्थप्रधानभूतश्रूयमाणक्रियायामेव सम्बोधनविभक्त्यार्थान्वयः। विभक्त्यर्थसम्बन्धेन वा प्रकृत्यर्थस्य तत्रान्वयः। अत एव 'व्रजानि देवदत्त' इत्यादौ एकवाक्यत्त्वात् निघातसिद्धिः।

आध्याहृतक्रियायामन्वये तु—व्रजनक्रियानिष्ठविशेष्यतानिरूपितत्वस्य तादृशनिरूपितत्वविशिष्टप्रकारत्वावच्छिन्नविशेष्यतानिरूपितत्वस्य वा देवदत्तप्रकारताया अभावेन तदन्यतरवत्प्रकारताप्रयोजकत्वरूपैकवाक्यतात्वाभावात् स न स्यात्। एकतिङन्तघटितत्वाभावेन अध्याहृतक्रियाघटितत्वस्य वाक्यत्वाभावाच्चेत्याहुः।

नव्यास्तु—

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते।

इति हर्य्युक्तेर्लाघवाय प्राचीनमतोक्तव्यापारोद्देश्यकेच्छारूपाभिमुखीकरणफलभूतो मुख्यपरावृत्त्याद्यभिव्यङ्ग्येऽभिमुखीभाव एवात्र सम्बोधनम्। बोधनाय सम्मुखीभावः सम्बोधनमिति व्युत्पत्तेः।

इति प्रथमानिरूपणम्।

क्रियाशब्द एवेप्सितशब्द इति। सम्बन्धार्थकाप्धातुनिष्पन्नत्वेन सम्बन्धेच्छाविषयकार्थ इत्यर्थः।

नाभिप्रेतपरो रूढ इति। अभिप्रेतः कर्तुरिच्छोद्देश्यं सुखदुःखनिवृत्त्यन्यतरत् तत्साधनं वा।

लभ्यते । तदेतदाह—क्रिययेति । क्तप्रत्ययेनोपस्थितं वर्तमानत्वं नेह विवक्षितम्(१) । तेन कटं कृतवान् कटं करिष्यतीत्यादि सिद्ध्यति ।

शब्दरत्न ।

ज्यानुपस्थितकल्पने मानाभावादिति भावः । लभ्यते इति । एवं चेप्सितपदेन

ज्योत्स्ना ।

वर्तमानत्वं तु नेह विवक्षितमिति । ननु "क्तस्य च वर्तमाने" इतिसूत्रस्य वर्तमानार्थबोधतात्पर्योच्चरितक्तप्रयोगे षष्ठी इत्यर्थबोधकत्वेन प्रकृते वर्तमानत्त्वाविवक्षायां कथं षष्ठीतिचेन्न ।

अत्रोच्यते—कर्म पदवाच्यत्वनिष्ठप्रकारतानिरूपितकर्मसंज्ञाविधायकशास्त्रजन्यबोधीयविशेष्यतावच्छेदकत्वेन पाणिनितात्पर्यविषयसत्वेऽपि कर्मपदवाच्यतावच्छेदकत्वेन पाणिनितात्पर्यविषयत्वं वर्तमानस्य नास्तीति तदाशयेन षष्ठीप्राप्तेर्निर्बाधत्वात् । भवति हि क्वचित् उद्देश्यविशेषणतयोपस्थितधर्मे विधेयान्वयितावच्छेदकत्वं क्वचिन्न । यथा घटपदाद् घटो बोद्धव्यः इत्यत्रोद्देशविषयविशेषणघटत्वे विधेयस्य बोधविषयत्वस्याश्रयतावच्छेदकत्वं भवति । चन्द्रसूर्यौ पुष्पवन्तपरबोद्धव्यौ इत्यादौ तु उद्देश्यविशेषणतयोरुपस्थितधर्मे द्वित्वे साहित्ये च न विधेयबोधविषयतावच्छेदकत्वं भवतीति ।

तत्वं च धातुविशिष्टत्वम् । वैशिष्ट्यं च स्वप्रयोगाधिकरणत्व स्वजन्यशाब्दबोधविषयत्वेन तात्पर्यविषयीभूतक्रियात्वविशिष्टत्वैतदुभयसम्बन्धेन । क्रियाकदम्ववैशिष्ट्यं च—स्वघटकक्रियाप्रागभावानधिकरणध्वंससामानाधिकरणत्व स्वघटकक्रियाध्वंसानधिकरणप्रागभावानधिकरणत्व एतदुभयसम्बन्धेन । अत्र स्वप्रयोगाधिकरणत्वनिवेशात्तु पूर्वेद्युस्तेन न वर्तमानकालिकक्रियातात्पर्येणोत्तरदिने पचतीति न प्रयोगः। द्वितीयसम्बन्धेन काश्चन क्रियाः जाताः काश्चन भविष्यन्तीति काश्चन वर्तमानकालिका तावत् क्रियातात्पर्येण पचतीति प्रयोगः सिद्धः। क्रियाकदम्बवैशिष्ट्ये प्रथमसम्बन्धदानात्पाकोत्तरकालस्य न वर्तमानत्वम् । द्वितीयसम्बन्धदानेन पाकपूर्वकालस्य न वर्तमानत्वम् । अविवक्षितमित्यस्य शक्तावविवक्षितमित्यर्थः ।

---

प्र०(१) क्तप्रत्ययेनोपस्थितं वर्तमानत्वं नेह विवक्षितमिति । ननु "क्तस्य च वर्तमाने" इति सूत्रस्य वर्तमानार्थबोधतात्पर्योच्चरितक्तप्रत्यययोगे षष्ठीसत्त्वेन प्रकृते वर्तमानत्वाविवक्षायां कथं षष्ठीति चेत्? अत्रोच्यते—कर्मपदवाच्यत्वनिष्ठप्रकारतानिरूपितकर्मसंज्ञाविधायकशास्त्रजन्यबोधीयविशेष्यतावच्छेदकत्वेन प्राणिनितात्पर्यविषयत्वसत्वेऽपि कर्मपदवाच्यतावच्छेदकत्वेन पाणिनितात्पर्यविषयत्वं वर्तमानत्वस्य नास्तीति तदाशयेन षष्ठी प्राप्तेर्निर्बाधत्वात् । भवति हि क्वचित् उद्देश्यविशेषणतयोपस्थितधर्मे विधेयान्वयितावच्छेदकत्वं क्वचिच्च न । यथा घटपदाद्घटो बोद्धव्य इत्यत्रोद्देश्यविशेषणघटत्वे विधेयस्य बोधविषयत्वस्याश्रयतावच्छेदकत्वम्भवति । चन्द्रसूर्यौ पुष्पवन्तपदाद्बोद्धव्यौ इत्यादौ तु उद्देश्यविशेषणतयोपस्थिते द्वित्वे साहित्ये च न विधेयबोधविषयतावच्छेदकत्वं भवतीति।

कारकमिति। एतच्च "कारके" (पा० सू० १।३।२३) इत्यधिकाराल्लभ्यते। तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी। प्रतिसूत्रं वाक्यं भित्वा कारकसंज्ञा विधीयते। तद्यथा—अपाये ध्रुवं कारकसंज्ञं स्यात्। ततः अपादानम्। उक्तं

शब्दरत्न।

कर्तृव्यापारप्रयोज्यफलाश्रय उच्यते यथा तण्डुलं पचतीति। (१)फलस्यापि व्यपदेशिव-(२)द्भावेन फलाश्रयत्वात्कर्मत्वम्। अत एव तत्समानाधिकरणे शोभनं पचतीत्यादौ कर्मत्वसिद्धिः। वाक्यं भित्वेति। योगविभागेनेत्यर्थः। सञ्ज्ञा विधीयते इति। तदुक्तं भाष्ये 'किमिदं कारक इति सञ्ज्ञानिर्देश' इति। वाक्यभेदं दर्शयति—अपाये इत्यादिना। नन्वेवमप्येकसञ्ज्ञाधिकारात्पर्यायापत्तिः। न च क्रियाजनकानां सञ्ज्ञिनामाक्षेपेण तेषां योगविभागानुवृत्तिभ्यां विनापि कारकसंज्ञाविधानेन पर्याये सिद्धे योगविभागेनानुवृत्त्या प्रतिवाक्यं सञ्ज्ञाविधानं समावेशार्थमिति वाच्यम्। आक्षेपे क्रिया-

ज्योत्स्ना।

व्यपदेशिवद्भावेनेति। ननु घटितत्वघटकत्वमात्रस्यैव तेनातिदेशात्। फले फलाश्रयत्वं तेनातिदेष्टुं न शक्यमिति चेन्न। स्वस्मिन् स्वघटितत्वेऽतिदिष्टे घटितत्वसम्बन्धावच्छिन्नाधिकरणताया आर्थसमाजग्रस्तत्वात्। यदि च फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कार्यत्वाङ्गीकारात् घटितत्वस्य फलतावच्छेदकत्वाभावादिदं न युज्यते इत्युच्यते। तदा "तुल्यास्य" सूत्रस्थभाष्यप्रामाण्येन आश्रयत्वस्यापि घटितत्वघटकत्वयोरिव तेनातिदेशस्वीकारान्न दोष इति बोध्यम्।

अन्ये तु—विधेयतावच्छेदकेऽपूर्वबोध्यत्वाविशेषात् विधेयत्वस्वीकारवदिच्छोद्देश्यतास्वरूपफलतावच्छेदकस्य विक्लित्तित्वादेरपि इच्छोद्देश्यत्वेन फलत्वस्वीकारात् तन्निष्ठेच्छीयोद्देश्यतावच्छेदकतावच्छेदकसमवायादेरपि फलतावच्छेदकफलात् तेन सम्बन्धेन विक्लित्तित्वादिरूपफलाश्रयत्वेन विक्लित्यादीनां कर्मत्वसिद्धिरित्याहुः।

शोभनं पचतीत्यादौ कर्मत्वसिद्धिरिति। शोभनं पचतीत्यादौ फले शोभनत्वाद्यन्वये फले शोभनत्वस्य व्यापारशोभनत्वापेक्षत्वात् व्यापारे शोभनत्वमाक्षिप्यते। ननु व्यापारे शोभनत्वाद्यन्वयः शाब्दः। तथान्वयतात्पर्येण द्वितीयाविभक्तेः साधुत्वस्यानुशासनतो लाभात्। क्रियाविशेषणानां कर्मत्वमित्यभियुक्तोक्तौ क्रियापदं फलपरम्। व्यापारे शाब्दान्वयतात्पर्येण तु शोभनः पाक इत्याद्येवेति दिक्।

---

वि० (१) स्वज्ञानस्य क्रियोत्पत्तिप्रयोजकत्वात्फलस्य कारकत्वम्बोध्यम्।

वि० (२) अत्र प्रमाणं तु "ओजः सहोम्भसा वर्तते" इति प्रकृते "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इत्यनेन द्वितीयान्तेभ्यः प्रत्ययविधानमेव। अत एव प्रतीपं वर्तते प्रातीपिकमिति व्याख्यानं सङ्गच्छते।

कारकमपादानसंज्ञं स्यात् । पुनः कारकशब्दानुवृत्तिसामर्थ्यात् विशेषसंज्ञाभिः सह समावेशः । अन्वर्था चेयं संज्ञा करोतीति कारकमिति । तेन क्रियानन्वयिनो न भवति ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति । इह हि ब्राह्मणः पुत्रविशेषणं न तु क्रियान्वयि ।

## शब्दरत्न ।

जनकमात्रस्य संज्ञापत्तौ नटश्रुतमित्यादौ स्वरवारणाय "कारकादत्त" (पा.सू. ६।२।४८) इत्यादौ स्वरितपाठाद्याश्रयणे ऽधिकगौरवादित्यत आह—पुनः कारकेति । विभक्तेष्वपादानमित्यादिषु तदनुवृत्त्या तदनुवादेन विशेषसंज्ञाविधानादित्यर्थः । समावेशफलं तु ग्रामेवास इत्यादावधिकरणत्वात्सप्तमी कारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्चेति बोद्धयम् । करोतीति । क्रियाञ्जनयतीत्यर्थः । तज्जनकं च प्रत्यासत्या तत्रैवान्वेति । क्रियानन्वयिन इति । तदन्वयप्रयोजकतज्जनकत्वाभाववत इत्यर्थः । ब्राह्मणस्य पुत्रमिति । अत्र "अकथितं च" (पा० सू० १।४।४१) इत्यनेन पृच्छिकर्मपुत्रनिमित्तस्य कर्मत्वापत्तिः । क्रियाजनकत्वं तु न तस्य । पुत्रेणान्यथासिद्धेः । "अकथितं च" (पा० सू० १।४।४१) इत्येतत् प्राप्तापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवर्त्तते । अत एवास्य न क्रियान्वय इत्याह—न त्विति ।

## ज्योत्स्ना ।

अन्वर्था चेयं संज्ञा करोतीति कारकमिति । अत्र प्राचीनाः—करोति स्वसम्बन्धेन क्रियायां विशेषरूपतामापादयतीति व्युत्पत्तेः महासंज्ञया क्रियान्वयित्वमेव कारककर्मादिसंज्ञोद्देश्यतावच्छेदकम् । कारकशब्दस्य क्रियापरत्वपक्षे शीघ्रोपस्थिकत्वेन अन्वयीत्यध्याहारेण तदन्वर्थत्वस्यैव कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वलाभात् । रूढ्यर्थतावच्छेदकं तु कारकपदवत्त्वं तज्ज्ञाप्यशक्तिमत्त्वं वा । तेन न कारकाणां क्रियान्वय इति प्रयोगानुपपत्तिः । ब्राह्मणस्य पुत्रं पृच्छतीत्यादौ क्रियान्वयित्वाभावान्न ब्राह्मणादेः कारकत्वम् । घटं करोतीत्यादौ घटादेः क्रियान्वयित्वस्य सत्वादाञ्जस्येनैव कारकत्वमुपपद्यत इति न आरोपापेक्षा । अधिकरणस्यादिकर्तृकर्मघटितपरम्परासम्बन्धेन साक्षादेव क्रियायामन्वय इति न कारकत्वानुपपत्तिः । अक्षशौण्ड इत्यादौ समासस्तु शौण्डादिपदस्य आसक्तशौण्डादौ लक्षणाश्रयणादुपपादनीय इत्याहुः ।

नव्यास्तु—करोतीति कारकमिति व्युत्पत्या क्रियाजनकत्वस्यैव आञ्जस्येन लाभात् तदेवकारकत्वमिति आद्ये कारणस्य कर्तृकर्मद्वारा क्रियान्वयेऽपि कारकत्वस्योपपत्तेः । अक्षशौण्ड इत्यादौ लक्षणाश्रयणं विना समासः सिद्ध्यति । अत एव अक्षविषयकशौण्डत्ववान् इति विवक्षितबोधस्तत उपपद्यते । अक्षशौण्डस्य धनमस्ति अगत्या लक्षणाश्रयणम् । तत्र शौण्डत्वस्य अविधेयत्वेन लक्षणाश्रयणे बाधकाभावादित्याहुः ।

यद्वा कारकशब्दः क्रियापरः । करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । तथा च अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्संज्ञा विधीयन्ते । "कारकाद्दत्तश्रुतयोः" ( पा० सू० ६।२।१३८ ) इत्यादौ तु कारकशब्दः स्त्र्यर्यते । तेनैतदधिकारोक्तं कर्त्रादिषट्कमेव गृह्यते । अस्मिन् पक्षे वृत्तावपि कारकमित्यस्य क्रियान्वयीत्यर्थः । आद्यपक्षे तु कारकसंज्ञा स्यात् । तच्च कारकं कर्मसंज्ञं स्यादिति व्याख्येयम् ।

---

शब्दरत्न ।

करोतीति । स्वजनकत्वेनैतान् व्यपदेशान् करोतीत्यर्थः । तदुक्तं भाष्ये 'यावद् ब्रूयाद् क्रियायामिति तावत्कारके इति' । क्रियायां विषय (१)इत्यर्थः । विषयत्वं च जनकत्वेनेति बोद्धव्यम् । क्रियान्वयिनामिति । क्रियान्वयोग्यतावच्छेदकक्रियाजनकत्ववतामित्यर्थः । गृह्यते इति । अत एव नटश्रुतमित्यादौ न दोषः । क्रियान्वयीत्यर्थ इति । तदन्वयोग्यतावच्छेदकक्रियाजनकत्ववदित्यर्थः । यथाश्रुतं तु न युक्तं(२) कारकाणां भावनान्वय इति वाक्यस्य घटत्ववतां घटत्ववत्तेति तुल्यतापत्तेः । अत एव भाष्ये क्रियाजनकत्वमेव कारकत्वमुक्तम् । तज्जनकत्वं चैषां तत्क्रियोपयोगिक्रियाश्रयत्वेनेति चोक्तम् ।

---

वि० ( १ ) अत्र विषयता न ज्ञानादिसम्बन्धरूपा क्रियायास्तादृशविषयत्वाप्रसिद्धेः, किन्तु जनकतारूपैव ।

प्र० ( १ ) यथा श्रुतं तु न युक्तमिति । अत्र दीक्षितानामयमाशयः—करोति—स्वसम्बन्धेन क्रियायां विशेषरूपतां सम्पादयतीति व्युत्पत्तेर्महासंज्ञया क्रियान्वयित्व ( क्रियासम्बन्धित्व ) मेव कारककर्मादिसंज्ञोद्देश्यतावच्छेदकम् । कारकपदस्य क्रियापदत्वमिति भाष्योक्तद्वितीयपक्षेऽपि शीघ्रोपस्थितिकत्वादन्वयीत्यध्याहारेण तदन्वयित्वस्यैव कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वलाभः । तथा च तदेव प्रवृत्तिनिमित्तम् । रूढ्यर्थतावच्छेदकं तु संकेतसम्बन्धेन कारकपदवत्त्वं तज्ज्ञाप्यशक्तिमत्त्वं वा । तथा च कारकाणां भावनान्वय इति प्रयोगस्य नासङ्गतिः । घटं करोति इत्यादौ घटादेः अविद्यमानसम्प्रदानादेश्च क्रियान्वयित्वसत्वादाञ्जस्येन कारकत्वोपपत्तिरिति न तदर्थं ज्ञानद्वारारोपेण वा कारकत्वोपपादनापेक्षा । अधिकरणस्यापि कर्तृकर्मघटितसम्बन्धेन साक्षादेव क्रियान्वयात्कारकत्वसिद्धिः । अक्षशौण्ड इत्यादौ शौण्डादिपदस्यासक्तशौण्डादौ लक्षणया समासोपपत्तिरिति ।

शब्दरत्नकृतां त्वयमभिसन्धिः—करोतीति कारकमिति व्युत्पत्या क्रियाजनकत्वस्यैवाञ्जस्येन लाभात्तदेव कारकत्वम् । अधिकरणस्य कर्तृकर्मद्वारा क्रियान्वयेऽपि तज्जनकत्वरूपकारकत्वमस्त्येवेति लक्षणां विनैवाक्षशौण्डादौ समासोपपत्तिः । अत एवाक्षविषयकशौण्डत्ववानिति विवक्षितबोधोदयस्ततो भवति । अक्षशौण्डस्य धनमादत्ते इत्यादौ तु अगत्या लक्षणाश्रयणम् । तत्र शौण्डत्वस्याविधेयत्वेन 'न विधौ परः शब्दार्थः' इति न्यायविषयाभावेन लक्षणायां बाधकाभावादिति ।

"अनभिहिते" ( पा० सू० २।३।१ )॥ ननु बहुपटुरित्यादौ बहुचा उक्तार्थत्वाद्यथा कल्पबादयो न, एवं क्रियते कट इत्यादावपि तिङादिभिरुक्तार्थत्वाद् द्वितीया न भविष्यति, किं च कटं करोतीत्यादौ सावकाशा द्वितीया कुतः कट इत्यादिषु प्रथमया वाधिष्यते निरवकाशत्वात् । न च वृक्ष इत्यादिरवकाशः । तत्रापि प्रतीयमानामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसंगात् । अथ नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अवकाशं ब्रूषे, तर्हि विप्रतिषेधात् प्रथमाऽस्तु । एवं चानभिहिताधिकारो वृथेति चेत् ।

शब्दरत्न ।

अत एवैषां क्रियान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकांक्षोदयेन क्रियाया जनकाकांक्षया च तत्रैवान्वयस्यौचित्यात् । अविद्यमानस्य संप्रदानस्यापि स्वज्ञानद्वारा क्रियाजनकत्वमित्यलम् ।

तिङादिभिरिति । तैरेव तस्याः शक्तेरु(१)क्तौ कटादिप्रातिपदिकस्य उद्भूततच्छक्त्यावृत्तेः कर्मणि वर्त्तमानात्प्रातिपदिकादित्यर्थेऽपि तदनापत्तिरिति भावः । अनभिहितसूत्रमपि अभिधानविषये प्रातिपदिकस्य उद्भूततच्छक्तौ वृत्त्यभाव इत्यत्रैव तात्पर्यग्राहकमिति बोद्धव्यम् । सावकाशेति । मात्रग्रहणेन कर्माधिक्ये प्रथमाया अप्रवृत्तेरिति भावः । प्रतीयमानामिति । अत एव तिङ्समानाधिकरणे प्रथमेति वार्तिकन्यासः सङ्गच्छते । अनावश्यकत्वादिति । तदभिमानादित्यर्थः ।

ज्योत्स्ना ।

स्वज्ञानद्वारेति । सम्प्रदानज्ञानवर्तिन्यादानजनकतायाः सम्प्रदाने आरोप इति भावः ।

के चित्तु—करोति क्रियां निर्वर्तयतीत्यस्य क्रियाया विषयकनिराकाङ्क्षबोधक इत्यर्थः । विषयस्य ज्ञानमात्रं प्रति कारणत्वस्वीकारात् । क्रियाविषयकबोधस्य तत्तत्कारकावताहित्ये हि किं कर्तृकेयमिति आकाङ्क्षा न भवति । अत अस्येदं लक्षणं मया कृतमिति व्यवहार उपपद्यते । तत्रापि वाक्यविशेष्यविरचनद्वारा लक्षणाज्ञानं तेन क्रियते न तु लक्षणाम् । वक्तृधर्मत्वात् तस्यासम्भवात् । एवञ्च क्रियाविषयकनिराकाङ्क्षबोधानुकूलत्वं कारकपदस्य योगार्थतावच्छेदकम् । क्रियाया अपि क्रियाविषयकनिराकांक्षबोधजनकत्वात्तत्रातिप्रसङ्गवारणाय कारकपदत्वस्य रूढ्यर्थतावच्छेदकमपि स्वीकार्यम् । इदं च द्रष्टुपातीत्यादौ पानादिक्रियाया दर्शनादिक्रियाजनकत्वात् तत्रातिव्याप्तिवारणाय पूर्वोक्तोऽप्यावश्यकमित्यूह्यमित्यपि वदन्ति ।

---

वि० ( १ ) वाचकत्वेन द्योतकत्वेन वोद्भूततया उद्भूते कर्मणि वर्तमानात्प्रातिपदिकाद् द्वितीयेतिरीत्या "कर्मणि द्वितीया" इत्यादिसूत्राणामर्थादिति भावः ।

मैवम् । संख्या विभक्त्यर्थ इति पक्षे सूत्रारम्भात् । तथा चानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः । सूत्रानारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति हि वाक्यार्थः । तथा सति 'कृतः कट' इत्यादौ च क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया अम् दुर्वारः । परत्वात्प्रथमेत्यपि

शब्दरत्न ।

संख्येति । "द्व्येकयोः" "कर्मणि" "स्वौजस्"इत्यादेरेकवाक्यतयाऽन्वये कर्मणीतिसप्तम्या"द्व्येकयोः" इति सूत्रोपात्तैकत्वाद्यपेक्षत्वात्कर्मणि यदेकत्वं तत्रामित्यर्थे हि सा विभक्त्यर्थ इति पक्षः । न च 'गुणानां च परार्थत्वात्'इति न्यायेन कर्मणि एकत्वे चामित्येवार्थ उचितः, संख्याया आश्रयापेक्षायां प्रत्यासत्त्या कर्मादेरेव तत्त्वमित्युक्तार्थोऽसङ्गत इति वाच्यम् । संख्यासंख्येययोर्नियमतः साकांक्षत्वेनेदृशे विषये गुणयोरपि,परस्परान्वयाङ्गीकारात् । स्पष्टं चेदमत्रैव कैयटे । तदेकत्वस्येति । प्रधा-

ज्योत्स्ना ।

संख्या विभक्त्यर्थ इति पक्षे सूत्रारम्भादिति । अत्रेदं बोध्यम्—पञ्चकं प्रातिपदिकार्थ इतिपक्षे इदम् । द्विकं त्रिकं वा प्रातिपदिकार्थ इति पक्षे हि कर्मादिकारकेषु एकत्वादिसंख्यासु विवक्षितेषु द्वितीयादिविभक्तीनामेकवचनादीनां च साधुत्वार्थं "कर्मणि द्वितीया" इत्यादीनां "द्व्येकयोः" इत्यादीनां च चारितार्थ्यात् भाष्योक्तनियमानुपपत्तिः । अतः पञ्चकं प्रातिपादिकार्थ आश्रीयते ।

तथा च प्रातिपदिकार्थेनैव संख्याकारकयोरप्यभिधाने कर्मणि वर्त्तमानात् प्रातिपदिकात् द्वितीया, एकत्वे वर्तमानादेकवचनम् , इत्येवं तत्तदर्थस्य वाच्यतया तत्र स्वादिसूत्रेणैव विभक्तेः सिद्धतया तेषां नियमत्वमुपपद्यते । नियमश्च प्रत्ययानाम्, अर्थानां वेत्यन्यदेतत् । अत एव दधीत्यादौ लोपादिकमजानतोऽपि संख्याकारकयोर्बोधः सर्वानुभवसिद्धः । सर्वेषु कारकेषु प्रातिपदिकार्थस्य शक्तत्वेऽपि अमादिसमभिव्याहारेण कर्मत्वादिशक्तिरुद्भूतत्वेन स्वरूपतश्च अवभासत इति तत्समभिव्याहारे कर्मत्वादिशक्तिपुरस्कारेण बोध इति नानवस्था ।

अयमत्र भावः—कारकत्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नः संख्यात्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नश्च घटादिपदवाच्यः, इत्येवं सामान्यतः शक्तिग्रहानन्तरम् अमादिसमभिव्याहारज्ञाने कर्मत्वादौ कारकत्वव्याप्यत्वादौ चावगते मनसा कर्मत्वादिशक्तिमान् एकत्वादिमांश्च घटादिपदवाच्य इति विशिष्यशक्तिज्ञाने स्वरूपतस्तत्तत्पुरस्कारेण बोधः । दध्यादिपदात्तु तृतीयाद्यसमभिव्याहारेणैव तथा शक्तिं गृहीत्वा बोधः । शब्दशक्तिस्वाभाव्यात् । एवम् अजर्घाः अवेत् इत्यादौ तिङ्समभिव्याहारं विनैव कालकारकसंख्यादीनां बोधात् धातोरेव तेषु शक्तिः । तस्मात् सुपां तिङां च द्योतकत्वमेवेति सिद्धान्त इति दिक् ।

न । कर्तव्यः कट इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसंगात् । कारकं

शब्दरत्न ।

नप्रत्यया(१)र्थस्येत्यर्थः। एवं चाप्रधानकर्मादिविशेषणार्थमावश्यकं सूत्रम्'उक्तार्थानाम्" इति(२) न्यायश्च प्रधानार्थविषय एवेति भावः । कर्तव्यःकट इति । न चात्र द्वितीयातः परत्वात्प्राप्तायाः षष्ठ्याः "कृत्यानाम्" इति विभक्तसूत्रेण निषेधापत्तिस्तदधिकाराभावे उभयप्राप्तेः सत्त्वादिति वाच्यम् । अधिकाराभावे सर्वत्रैवोभयप्राप्तिविषयत्वसत्त्वात्कर्मण्येव षष्ठ्यापत्तौ "कर्तृकर्मणोः" (पा० सू० ३।३।६९) इति सूत्रस्थकर्तृग्रहणस्य "उभयप्राप्तौ" (पा०सू०२।३।३६) इति सूत्रस्य च वैयर्थ्या(३)पत्त्या "आत्ममाने खश्च" (पा०सू० ३।२।८३) इति सूत्रस्थभाष्यप्रामाण्येन चोभयोः प्रयोग एवोभयप्राप्तेर्वाच्यतया प्रकृते नोभयप्राप्तिरित्याशयात् । आकृष्टव्या ग्रामं शाखेत्यत्र "कृत्यानाम्"( पा० सू० २।३।७१ ) इति विभक्तसूत्रस्थभाष्योदाहरणे आश्चर्यपदकर्तृपदे अध्याहृत्योभयप्राप्तिर्निरूप्या । इत्यादाविति । आदिना भवतो लाभोऽश्वः क इत्येतत् । कारक-

ज्योत्स्ना ।

उक्तार्थानामिति न्यायश्च प्रधानविषय इति । तत्तत्सूत्रजबोधे यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतया भासमानो योऽर्थः स चेत्पदान्तरेणोक्तस्तदा तस्मिन्नर्थे पदान्तरं शास्त्रेण न साधुत्वेन बोध्यते इति न्यायार्थस्य सद्भावात् ।

भाष्यप्रामाण्येनेति । इत्थं हि तत्र भाष्यम् 'आत्ममाने' इति किमर्थम् परमाने मा भूत्, कृतेऽपि तत्र प्राप्नोति कुत एतत् आत्मन इति कर्तरि षष्ठीमान् इत्यकारो भावे स्वकर्मकमानवत् परकर्मकमानोऽपि स्वकर्तृक एव भवति । नैष दोषः आत्मन इति कर्मणि षष्ठी । कर्तृकर्मणोरिति । ननु च कर्तर्यपि तेनैव विधीयते तत्र कुत एतत् कर्मणि भविष्यति न पुनः कर्तरि । एवं तर्हि आत्मन इति ग्रहणसामर्थ्यात् कर्मणि इति विज्ञास्यत इति ।

अत्र कैयटः-आत्मशब्दः प्रत्यगात्मनः परस्य व्यावृत्तिं करोति तत्र यदि कर्तरि षष्ठी स्यात् आत्मग्रहणमनर्थकं स्यात् । मननक्रियायाः कर्तृसम्बन्धाव्यभिचारात् । अत्र भाष्ये आत्मग्रहणसामर्थ्यात् कर्मणि षष्ठी प्रतिपादिता न तु कर्तरि "उभयप्राप्तौ" इति निषेधात् । तस्माद्यत्रोभयोः प्रयोगः तत्रोभयोः प्राप्तिरिति सामर्थ्यपर्यन्तकथनेन कल्प्यते ।

---

वि० ( १ ) प्रधानीभूतो यः प्रत्ययार्थः संख्यारूपः, तस्येत्यर्थः ।

प्र० (२) उक्तार्थानामिति न्यायश्च प्रधानार्थ विषय एवेति । तत्तत्सूत्रजबोधे यत्किंचिन्निष्ठप्रकारतानिरूपितविशेष्यतया भासमानो योऽर्थः सचेत्पदान्तरेणोक्तस्तदा तस्मिन्नर्थे पदान्तरं शास्त्रेण न साधुत्वेन बोध्यत इति तद्भावार्थसत्वात् ।

वि० ( ३ ) भवन्मते-'अवच्छेदकावच्छेदेनोभयप्राप्तिसम्भवेन कर्तरि षष्ठीनिषेधस्य प्राप्त्या कर्तृग्रहणस्याव्यावर्तकतया "उभयप्राप्तौ कर्मणि" इति सूत्रस्य च वैयर्थ्यापत्तिरित्यर्थः ।

शब्दरत्न।

मिति। संख्यायाः सर्वत्र विशेषणतया भानादेकत्वे यत्कर्मेत्यर्थः। वृक्षे शाखेतिवदेकत्वे

ज्योत्स्ना।

केचित्तु—संख्या-विभक्त्यर्थ इति कथनन्नोचितम्, "कर्मणि द्वितीया" इत्यादिषु कर्मणीत्यादिसप्तम्याः 'श्रुतानुमितयोः' इतिन्यायेन श्रुतद्वितीयादिभिरेव सम्बन्धस्योचितत्वात्। एकत्वद्वित्वादिकन्तु शास्त्रान्तरैकवाक्यतया लभ्यते।

किञ्च संख्यायाः संख्येयपरतन्त्रत्वेन घटोऽस्ति पटोऽस्तीत्यादौ विशेषणत्वस्यैव दृष्टतया एकत्वविशिष्टे कर्मणीत्येवार्थः। किञ्च "स्वौजस्" इत्यादिना कर्मणि द्वितीयायाः सिद्धत्वेन "कर्मणि द्वितीया" इति सूत्रन्नियमार्थमिति भाष्यकारीयसिद्धान्तः। अत एव—

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।

प्रसिद्धो नियमस्तत्र—

इति भाष्येऽभिहितम्। स चार्थनियमः शब्दनियमो वेत्यन्यदेतत्।

यत्तु—देशकालादिकर्मणः सर्वत्राकर्मकधातुप्रयोगे अकर्मकधातुभिर्योगे "देशःकालो भावो गन्तव्योऽध्वा चाकर्मसंज्ञक इति वाच्यम्" इति वार्त्तिकात्सम्भव इति प्रागेवोक्तम्। तन्न। तादृशवार्तिकानुपलम्भात्।

"भावकालाध्वगन्तव्या कर्मसंज्ञो ह्यकर्मणाम्। देशश्च" इति भाष्ये उक्तम्। तत्र हि शब्दघटितत्वेन धात्वर्थकरणकव्यापनेऽर्थे यदा धातोर्वृत्तिस्तदा तेषां कर्मत्वस्य प्रसिद्धत्वं ध्वनितम्। यदा जननादिरूपार्थमात्रधात्वर्थविवक्षा तदा न तेषां कर्मत्वम्।

अत एव "समां समां विजायते" इति सूत्रव्याख्यावसरे समायां समायां विजायते इति विग्रहप्रदर्शनपरं भाष्यं सङ्गच्छते। तादृशवार्तिकसत्त्वे तेन द्वितीयायास्तत्र साधुत्वबोधनेन भाष्यासङ्गतिः स्पष्टैव।

न च केचित् "कालादिभिरकर्मका" इति भाष्यस्य तर्ह्यसङ्गतिरिति वाच्यम्। धातुमात्रस्य स्वार्थकरणकव्यापने वृत्त्या केचिदपि कालादिकर्मसम्बन्धाभाववन्तो नेति तदर्थात्। एवं च कालादिकर्मणां प्रयोगत्वसमानाधिकरण्येनैव सत्त्वमित्येव तात्पर्यम्। एवं च संख्या-विभक्त्यर्थ इति पक्षो न युक्त इति। अत एव वक्ष्यति कारकं विभक्त्यर्थ इति पक्ष इत्यादीति दिगिति वदन्ति।

ननु यत्रोभयोः प्रयोगः तत्रैव चेत् "उभयप्राप्तौ" इत्यस्य प्राप्तिस्तदा "कृत्यानाम्" इतिविभक्तसूत्रस्य यदुदाहरणं भाष्ये उक्तं ग्राममाक्रष्टव्या शाखा इति तस्य कथं सिद्धिरित्याह—आक्रष्टव्येति। आश्चर्यपदाध्याहारप्रयोजनन्तु—यत्राश्चर्यम्प्रतिपाद्यं तत्र कर्ता असमर्थः आकर्षणक्रियायां दुराकर्षा च शाखा। परन्तु सा तादृशेन कर्त्रा अपकृष्यते इत्यर्थस्य प्रतिपत्तिस्तदैव तत्सिद्धिरिति।

विभक्त्यर्थ इति पक्षे तु सूत्रं प्रत्याख्यातमाकरे । हरिं भजतीति भजनक्रियया हरौ प्रीतेरुत्पादनात् प्रीतिविशिष्टतया क्रियाव्याप्यत्वेन हरिः कर्म । तद्विशिष्टं भजनं वाक्यार्थः । हरिः सेव्यते इत्यत्राप्येवमेव । 'क्रियाप्रधानमाख्यातम्' इति

शब्दरत्न ।

इति सप्तमी आधेयस्याधारत्वविवक्षया । एवं चैकत्वविशिष्टे कर्मणीत्यर्थ इति भावः । प्रत्याख्यातमिति । न्यायेनैव सिद्धेरिति भावः । अनेन पञ्चकं प्रातिपदिकार्थ इति पक्षेऽप्यावश्यकता सूचिता । तत्र यथा प्रातिपदिकेनोक्ते कर्मत्वादौ भवति तथा तिङादिभिरुक्तेऽपि स्यादतस्तद्वारणार्थ(१)मिदम् । एवं संख्यातिरिक्तं चतुष्कं प्रातिपदिकार्थः । संख्यामात्रं विभक्त्यर्थ इति पक्षेऽप्यावश्यकं तत् । एवं च कारकस्य विभक्त्यर्थत्वं यत्र यत्र पक्षे तत्र तत्रानावश्यकमिति सूचितम् । प्रीतेरिति । तत्प्रीतिरेव च शुभफलजनिकेति भावः । क्रियाव्याप्यत्वेनेति । क्रियासम्बन्धित्वेनेत्यर्थः । तज्जन्यफलाश्रयत्वं हि तत्त्वम् । एवमेवेति । धात्वर्थ एव विशेष्य इत्यर्थः । इयांस्तु विशेषस्तत्र फलांशो विशेष्यः कर्त्तरि तु व्यापारांश इति । अत एव "सुप आत्मनः" (पा० सू० ३।१।८) इति सूत्रे भाष्यमिष्यते पुत्र इत्यर्थे पुत्रीयतीति न प्रयोगो भिन्नार्थत्वादिति । यदा क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव, व्यापारप्राधान्ये तु क्यजिति कैयटश्च । यद्यप्ययमर्थः प्रती(२)कान्तरे कैयटेनोक्तस्तथाऽप्यत्रापि स एवार्थ उचितः । अत्रैव वेत्यन्यत्र विस्तरः ।

ज्योत्स्ना ।

ननु तद्वत्कारकं विभक्त्यर्थ इति ग्रन्थस्यापि कारकमात्रं विभक्त्यर्थ इत्येव लभ्यते, स न युक्तः । स्वार्थादित्रयस्य प्रातिपादिकार्थत्वपक्षेऽप्यनावश्यकत्वस्य लाभादित्यत आह—एवञ्चेति । यत्र यत्र पक्षे इत्यादि च । त्रिकं प्रातिपदिकार्थ इति पक्षे संख्याकारके विभक्तिवाच्ये एव संख्यान्तचतुष्कं प्रातिपदिकार्थःकारकं विभक्त्यर्थ इति पक्षे चेत्यर्थः ।

अत्रैववेत्यन्यत्र विस्तर इति । नच हरिः सेव्यते इत्यस्माद्यदि फलविशेष्यकबोधस्तदा फलस्यैव प्राधान्येन कालान्वयोऽपि तदैव स्यादिति वाच्यम् ? व्यापारेणैव तस्य साकांक्षत्वादिविशेषणीयभूतेऽपि कालान्वयस्य तस्मिन् स्वीकारात् । अत एव—'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' इति हर्युक्तिः सङ्गच्छते । नचैवं फ-

वि० (१) अत्रेदं रहस्यम्—कृदादिना विभक्त्यर्थकारकस्योक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन तदर्थे विभक्त्यप्राप्तेः "अनभिहिते" इति सूत्रमनर्थकम् । यदि च खलु कारकस्य विभक्त्यर्थत्वं नाङ्गीक्रियते तदा कारकेतरार्थानां कृदादिनोक्त्यसम्भवात् "उक्तार्थानामप्रयोगः" इति न्यायस्याविषयत्वेन सूत्रं सार्थकम् ।

वि० (२) स्वशब्देनोक्तत्वादित्येतद्घटकस्वशब्देनेति प्रतीक इत्यर्थः ।

शब्दरत्न ।

ननु न्यायादिग्रन्थे प्रमान्तविशेष्यकबोधस्यैवानुभवप्रदर्शनात्तथैव युक्तमित्यत आह—क्रियाप्रधानमिति । इदं च रूपप्सूत्रे भाष्ये । क्रियेति धात्वर्थाशद्वयस्यापि क्रियात्वेन

ज्योत्स्ना ।

लानुत्पत्तौ व्यापारसत्त्वे पच्यत इति स्यादिति वाच्यम् । इष्टापत्तेः । पचतीत्यादिभ्यो व्यापारविशेष्यकबोधस्येष्टतया प्रधानभूते तस्मिन् कालान्वय इष्ट एव ।

न च पच्यते तण्डुल इत्यादिभ्यः फलविशेष्यकबोधे प्रधानीभूतधात्वर्थाश्रयत्वेन तण्डुलस्य कर्तृतापत्तिरिति वाच्यम् । कर्तृप्रत्ययसमभिव्याहारे इत्यस्यापि तत्र निवेशात् । अत्र "लः कर्मणि" इत्यनेन कर्मणि लकारविधानमेव मानम् ।

एतेन पच्यते ओदनः इत्यादौ फलविशेष्यकबोधकबोधे फले कालान्वयः स्यात् । एवं 'क्रियाप्रधानमाख्यातम्' इति यास्कवचनविरोधश्च क्रियापदस्य व्यापारे एव सिद्धेः ।

किञ्च प्रधानीभूतधात्वर्थाश्रयत्वेन कर्तृत्वस्य स्वीकारे प्रधानफलाश्रयतण्डुलादेरेव कर्तृत्वापत्तौ देवदत्तेन पच्यते ओदन इत्यादौ देवदत्तपदात्तृतीयानुपपत्तिः ।

किञ्च पाकानुकूलक्रियां पश्येत्यर्थे पचति पश्येतिवत् पचयते पश्येत्यपीष्यते । तच्च फलस्य प्राधान्ये न भवेत् । क्रियायाः फलविशेषणत्वात् । नाप्यस्मिन्मते "सुप आत्मनः" इति सूत्रस्थभाष्यविरोधः । पुत्रीयतीति शब्दजन्यशाब्दबोधे एकाश्रयकव्यापारजन्या पुत्रकर्मिका इच्छा इत्याकारकस्तस्मिन् कर्तुः कर्मण इच्छाया विषयता इष्यते पुत्र इत्यस्मात्तु जातशाब्दबोधेन कर्तुः विषयत्वमिति भिन्नार्थत्वं स्पष्टमेवेति बोध्यम् । उक्तरीत्याऽनुपपत्तिपरिहाराय विशेषणीभूतेऽपि व्यापारे कालान्वयस्य स्वीकारात् । 'भावप्रधानमाख्यातं सत्वप्रधानानि नामानि' इति यास्कवचनस्य भावपदस्य धात्वर्थपरतया क्रियाप्रधानमित्यत्र क्रियापदसाध्यत्वेन प्रतीयमानार्थपरतयाश्चोपपत्तेः । तण्डुलादेः कर्तृत्वापत्तिस्तु न । कर्मणि लकारविधानानुपपत्तेरित्युक्तं प्राक् । अस्मादेव ज्ञापकात् कर्तृप्रत्ययसमभिव्याहारे प्रधीनभूतधात्वर्थाश्रयत्वं कर्तृत्वमिति स्वीक्रियते ।

किञ्च वृत्तिः क्यजन्तात्तदर्थमध्ये न कर्तुः प्रवेशो यथा, तथा पुत्र अम् इष इति समुदायार्थेऽपि न तस्य प्रवेशः, एवमिष्यते पुत्र इत्यर्थेऽपि न तस्य प्रवेश इति कर्तारं गृहीत्वा भिन्नार्थत्वोपपादनमयुक्तमेव । विक्लित्यनुकूलक्रियां पश्येत्यर्थे पचयते पश्येत्यस्य साधुत्वे मानाभावाच्चेत्यलम् ।

ननु व्यापारमुख्य एव विशेष्यकबोध इत्येवोक्तम्प्राक्, तथा च तेनैव प्रथमान्तमुख्यविशेष्यको बोधो निरस्तः । अथ न्यायमतस्वीकारे दोषोऽप्यस्तीत्याह—नन्वित्यादिग्रन्थेन । प्राचीनमतेऽस्मदुक्तरीत्या एव बोध इति नव्यपदोपादानेन ध्वनितम् ।

रूपप्सूत्रे भाष्ये इति । तत्र हि पचतिरूपम् पचतोरूपम् इत्यादेरसिद्धिमाशङ्क्य 'क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नाम' यतः क्रियां पृष्टस्तिङाचष्टे किं चैत्रः करोति पचतीति । द्रव्यं पृष्टः कृताचष्टे कतरश्चैत्रो यः पाचकः' इत्युक्तम् । अत्र कृतेत्यस्य कृद-

सिद्धान्तात् । धातूपस्थिता क्रिया तिङर्थं प्रति विशेष्या, न तु कृदर्थं प्रतीव विशेषणमिति हि तस्यार्थः । अत एव पाचको व्रजतीतिवत् पचति व्रजतीति

---

शब्दरत्न ।

व्यवहारो द्रष्टव्यः । तस्यार्थ इति । आख्यातशब्देनात्र नियमेन जनकाकांक्षविभक्त्यन्तम् "आख्यातमाख्यातेन" (का० वा०) इत्यादौ तथा प्रतीतेः । रूपप्सूत्रे कैयटोऽपि आ-

ज्योत्स्ना ।

न्त प्रकृतिकसुबन्तेनेत्यर्थः । क्त्वपदञ्च तद्धितादेरप्युपलक्षणम् । "ह्रस्वो नपुंसके" इति सूत्रेऽपि भाष्ये प्रातिपदिकग्रहणं तावन्न व्यावृत्यर्थ्यमित्युक्त्वा तद्व्यावृत्यर्थं रमते काण्डे इत्यभिधाय रमते इति क्रियाप्रधानम् । काण्डे इति विभक्त्यर्थप्रधानम् । नचैतयोरर्थयोर्योगोऽस्तीत्युक्तम् ।

ननु पूर्वोक्तभाष्यद्वयेऽपि क्रियापदस्यैव सत्वेन व्यापारमुख्यविशेष्यकबोध एव समायातीत्याह—अंशद्वयस्यापीति । क्रियायाः प्राधान्यन्तु प्रत्ययार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वम् । नामार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वञ्च । आद्यं यथा पचति देवदत्त इत्यादौ । अन्त्यं भूयते घटेनेत्यादौ । अत्रेदं तत्त्वम्—फलव्यापारयोः धातोः पृथक् शक्तिः । कर्तृप्रत्ययसमभिव्याहारे व्यापारस्य कर्मप्रत्ययसमभिव्याहारे फलस्य प्राधान्यमिति सिद्धान्तः ।

परे तु—फलावच्छिन्नव्यापारे व्यापारावच्छिन्ने फले च पृथक्शक्तिः तत्प्रत्ययसमभिव्याहारश्च तत्तद्विशेष्यकबोधनियामकः फलमुखगौरवस्यादोषत्वेन प्रामाणिकैरङ्गीकारादित्याहुः ।

आख्यातशब्देनात्रेति । अन्ये तु—"आख्यातमाख्यातेन" इत्यत्राख्यातपदं यद्यपि तिङन्तपरम्, तथापि आख्यायते सर्वप्रधानीभूतोऽर्थोऽनेनेति व्युत्पत्त्या आख्यातपदेन धातुरेवोच्यते । अत एव 'नामाख्यातोपसर्गनिपाताश्च' इति निरुक्ते भाष्ये च प्रकृतीनामेव परिगणनङ्कृतम् । अत एव 'नामान्याख्यातजानि' इति निरुक्तोक्तौ शाकटयनोक्तेरप्युपपत्तिः । अत एव "उणादयो बहुलम्" इति सूत्रे भाष्ये सर्वन्नामधातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकमित्युक्तम् । एतेन कृतिराख्यातार्थः भावना आख्यातार्थ इति नैयायिकोक्तं नादरणीयम् । "आख्यातमाख्यातेन" इत्यत्र आख्यातपदं धातुप्रकृतिकतिङन्ते लाक्षणिकम् । एवञ्च विशेष्यतासम्बन्धेन कारकप्रकारकशाब्दबुद्धिं प्रति धातुजन्योपस्थितिः कारणमिति कार्यकारणभावः कर्तृकर्मोभयसाधारण एव । न चोक्तकार्यकारणभावात्पक्वस्तण्डुल इत्यत्रापि तण्डुलपदार्थस्य धात्वर्थविशेषणत्वानापत्तिरिति वाच्यम् । 'सत्वप्रधानानि नामानि' इति विशेषवचनेन द्रव्यप्राधान्यस्योपपत्तेरित्याहुः ।

वस्तुतस्तु—उक्तव्युत्पत्त्या धातुमात्रस्याख्यातपदेन ग्रहणे "आख्यातमाख्यातेन"

नेकं वाक्यम्। पाककर्तृकर्तृकं गमनं हि पाचक इत्यादेरर्थः। एककर्तृका पचिक्रिया गमिक्रिया च पचतिव्रजत्योः पृथगेवार्थः। एवं च प्रथमान्तविशेष्यको बोध इति नैयायिकोद्घोषो भाष्याद्यनुसारिभिर्नादर्तव्यः। यास्कोऽप्याह—'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'। पश्य मृगो धावतीत्यादौ तु मृगकर्तृकं गमनं दृशिक्रियायां कर्म। प्रधानं दृशिक्रियैव।

उक्तं च—

सुबन्तं हि यथा ऽनेकं तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति।

एवं पचति भवतीत्यस्य पचिक्रिया भवतीत्यर्थः।

---

शब्दरत्न

ख्यातात्कालसंख्यासाधनाद्यवयवभानेऽपि तस्य क्रियाप्रधानत्वमिति। नामान्याख्यातजानीति शाकटायनोक्तौ आख्यातावयवधातुजानीत्यर्थः। अत एव सर्वं नाम धातुजमाहेति तत्समानार्थकम् "उणादय" (पा० सू० ३।३।१) इति सूत्रे भाष्ये पठितम्। नैकं वाक्यमिति। साधु इति शेषः। प्रथमान्तविशेष्यके बोधे तु तत्त्वं दुर्वारमिति भावः। एवं च अस्य साधुत्वापत्तेश्च। भावप्रधानमिति। भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानमिति तदर्थं तद्भाष्यकार आह—नामानीति। नामपदेन सुबन्तमिति च तद्भाष्ये स्पष्टम्। तच्चाव्ययातिरिक्तमित्यन्यत्र निरूपितम्। नमन्त्याख्याताथं प्रति विशेषणीभवन्तीति नामानीति तद्व्युत्पत्तिर्निरुक्तभाष्ये दर्शिता। किं चैतन्निरुक्तोत्तरं यत्रोभे भावप्रधाने भवत इति निरुक्ते उक्तम्। यत्रोभे नामाख्याते भवतो वाक्ये तत्र ते भावप्रधाने क्रियाप्रधान इत्यर्थकतया च तद्भाष्ये तद्व्याख्यातम्। अतः पूर्वनिरुक्तस्य व्याख्यानान्तरं नादरणीयम्। किं च कर्तृविशेष्यकबोधेऽपचदोदनं देवदत्तं पश्यतीति प्रयोगः शतृविधायकभाष्यकैयटयोरापादितः। यद्यप्यन्तरङ्गा प्रथमा तथाऽपि प्रधानानुरोधिनी द्वितीया भवतीति तदाशयस्तदनुसारेणाह—पश्येति। मृगस्य कर्मत्वे प्रधानानुरोधिनी द्वितीयैव स्यादिति भावः। उक्तं चेति। हरिणेति शेषः। तिङन्तसुबन्तशब्देन तदर्थक्रियादिः। पचिक्रिया भवतीत्यर्थं इति स्पष्टं "भूवादि" (पा० सू० १।३।१) सूत्रे भाष्ये। योऽश्वमेधेन

ज्योत्स्ना।

इत्यत्र लक्षणाया आपत्तेः, शिवये इत्यादि तिङन्तेऽतिव्याप्तिश्चेत्याख्यातपदन्तिङन्तपरमेवेत्याचष्टे—आख्यातशब्देनात्रेत्यादिना।

भुवादिसूत्रे भाष्ये इति। तत्र क्रियावचनो धातुरिति न्यासे "कथं पुनर्ज्ञायते क्रियाव-

अयं तु विशेषः । तिङन्तोपस्थितायाः क्रियायाः क्रियान्तरं प्रति विशेषणत्वेऽपि शब्दादध्याहारवादे कर्मत्वं संसर्ग एव, न तु प्रकारः । अपदार्थत्वात् । अर्थाध्याहारवादे तु प्रकारत्वेऽपीष्टापत्तिः । पचतीत्यादौ धातूपात्तफलस्यापीत्थमेव मतभेदेन व्यवस्था । अत एव तत्समानाधिकरणे शोभनं पचतीत्यादौ द्वितीयैकवचनोत्पत्तिः अग्निष्टोमेन यजेतेत्यादौ तृतीयोत्पत्तिश्च सङ्गच्छते । न च दृष्टान्ते विशेष्यसमर्पकाद्दार्ष्टान्तिके विशेषणसमर्पकाच्च कर्मत्वादिवाचिकायाः सुब्विभक्तेः प्रयोगोऽस्त्विति वाच्यम् । धातुतिङन्तयोरप्रातिपदिकत्वात् । नैयायिकानां तु स्यादेष दोषः ।

---

शब्दरत्न ।

यजते स ब्रह्महत्यां तरतीत्यादौ यत्कर्तृका यागक्रिया तत्कर्तृका तरणक्रियेत्येव बोध इत्यन्यत्र विस्तरः ।

अपदार्थत्वादिति । तन्नये पदजन्योपस्थितिविषयस्यैव प्रकारत्वविशेष्यत्वस्वीकारात् पदाध्याहारस्यात्रासम्भवादिति भावः । प्रकारत्वेऽपीति । अपिना सर्वपक्षे विभक्त्यर्थस्य संसर्गत्वमिति समर्थसूत्रषष्ठीसूत्रभाष्योक्तः सिद्धान्तः सूचितः । शब्दोपस्थितस्यापि संसर्गत्वं षष्ठ्यां सर्वैरङ्गीकृतमेव वृद्धैः । फलस्यापीति । अपिना पक्ष इत्यादौ व्यापारस्य सङ्ग्रहः । तत्र तस्य फलं प्रति विशेषणत्वात् । इत्थमेव । कर्मत्वभानविषये उक्तप्रकारेणैवेत्यर्थः । व्यवस्थेति । सर्वसम्मतेति शेषः । तद्वत्प्रकृतेऽपीति भावः । वस्तुतस्तत्रापि संसर्गतैव घटपदे घटघटत्वयोः समवायस्येव उपस्थितिपूर्वकं पृथगाकाङ्क्षाया अदर्शनेनाध्याहारस्योक्तिसम्भवाभावादिति ध्येयम् । अत एव । फलस्य कर्मत्वादेव । तृतीयेति । तत्र तस्य करणत्वेनान्वयादिति भावः । दृष्टान्ते इति । शोभनं पचतीत्यादौ । तत्र नव्यनैयायिकवैयाकरणयोरुभयोरपि मते फलव्यापारयोः परस्परान्वयस्य सत्त्वेन तस्य दृष्टान्तत्वौचित्यात् । पश्य मृग इत्यादौ धावनदर्शनयोरन्वयस्य नैयायिकासम्मततया साध्यत्वेन न दृष्टान्तत्वमिति बोद्धव्यम् । दार्ष्टान्तिके । पश्य मृगो धावति, पचतीत्यादौ । विशेषण-

ज्योत्स्ना ।

वनात्पचादय इति प्रश्ने यदेतेषां करोतिना सामानाधिकरण्यम् किं करोति पचति, किङ्करिष्यति, पक्ष्यति, किमकार्षीत् अपाक्षीदित्युक्तम् । ततः शङ्कितम् अस्ति भवति विद्यतीनाम्, धातुसंज्ञा न प्राप्नोति । यथाहि भवता करोतिना पचादीनां सामानाधिकरण्यं दर्शितम् न तथाऽस्त्यादीनां निर्दिश्यते नहि भवति किङ्करोति अस्तीति" इत्युक्त्वा यदि पुनर्भाववचनो धातुरित्येतल्लक्षणं क्रियते इत्युक्तम् । कथम्पुनर्ज्ञायते भाववचना पचादयः, यदेतेषां भवतिना सामानाधिकरण्यम् । भवति पचति भवति पक्ष्यति भवति अपाक्षीदित्युक्तम् । तादृशन्यासे पचादीनां धातुसंज्ञा न प्राप्नोति । यथाहि-

तथा हि—धावन्तं मृगं पश्येतिवत् धावति मृगमित्यपि स्यात्। न चाप्रथमासामानाधिकरण्ये शतृशानचोर्नित्यत्वान्नैवं प्रयोग इति वाच्यम्। एवमपि द्वितीयानुत्पत्तेर्दुरुपपादत्वात्। ननु तत्र वाक्यभेद एव पश्येत्यत्र तमिति कर्माध्याहारात्। पचतिभवतीत्यादि तु पाको भवतीत्याद्यर्थे ऽनिष्टमेवेति चेत्।

मैवम्। अद्ध्याहारे गौरवात्। तस्य च मुनिवचनविरोधेनाप्रामाणिकत्वात्। त्वदीयानिच्छामात्रस्याकिञ्चित्करत्वात्। अपि च अपाक्षीद् देवदत्तोऽवेहि इत्यादौ शत्रादेः प्रसङ्ग एव नास्ति। एकवाक्यत्वं च भाष्यवार्तिकादिसकलसम्मतम्। न च तिङन्तस्थले क्रियाविशिष्टक्रियान्तरबोधो न जायत एवेति वाच्यम्। तथैव व्युत्पन्नानां तादृशबोधस्य दुर्वारत्वात्। ईदृशेऽर्थे साधुत्वं नेष्टमित्यपि न। साधुत्वानुशासनार्थं प्रवृत्तैरेव तस्य स्वीकारात्। धातुसम्बन्धाधिकारव्युत्पादिते 'पुरीमवस्कन्द' इत्यादौ तस्यावश्यकत्वाच्च।

---

शब्दरत्न।

समर्पकादिति। अन्वयबोधकाले इत्यादिः। दुरुपपादत्वादिति। एवं च तथा प्रयोग विलय एव स्यादिति भावः।

गौरवादिति। एकवाक्यतया ऽन्वये सम्भवति अद्ध्याहारेण वाक्यभेदे गौरवादिति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह—तस्य चेति। शतृसूत्रस्थेन भूवादिसूत्रस्थेन च मुनिवचनेन विरोध इति बोद्धयम्। अकिञ्चित्करत्वादिति। ऋषीणामेकवाक्यतया बोधे साधुत्वस्येच्छासत्त्वे इत्यादिः। नास्तीति। एवं च तत्र द्वितीया दुर्वारेति भावः। न चेदृशे स्थले विशिष्टस्य देवदत्तमृगादेः कर्मत्वं, विशिष्टवाचकं च न प्रातिपदिकमिति न दोषः। 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभा' इतिवदिति वाच्यम्। नीलत्वविशिष्टघटस्य कर्मत्वे प्रतिपादनीये नीलं घटमित्यादौ द्वितीयानापत्तेः। श्रुत्वेत्यादि त्वार्षमित्यलं मुनिविरुद्धविचारेण। क्रियाप्रधानमित्यत्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययार्थापेक्षयैव बोद्धयते ऽतो दृश्यादिकं प्रति धावनादेर्विशेषणत्वेऽपि न क्षतिरिति दिक्।

भाष्येति। भूवादिसूत्रस्थं भाष्यं पचयादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति तत्रोक्तम्। वार्त्तिकम्—शतृविधायकस्थम्। तस्य—क्रियाविशिष्टक्रियाबोधस्य।

ज्योत्स्ना।

भवता क्रियावचने धातौ करोतिना सामानाधिकरण्यन्दर्शितम्। न तथा भाववचने धातौ निर्दिश्यते करोतिः पचादीनां सर्वान् कालान् सर्वान् पुरुषान् सर्वाणि वचनान्य-

ननु सिद्धान्ते आख्यातवाच्यक्रियाया अपि कर्तृत्वकर्मत्वस्वीकारे तस्या असत्त्वरूपत्वं भज्येतेति चेन्न । लिङ्गसंख्ययोः कर्तृकर्मेतरकारकस्य(१) चाभावमात्रेण तथात्वोपपत्तेः। कर्मत्वस्य प्रकारतया ऽनभ्युपगमाद्वेत्यन्यत्र विस्तरः।

अभिहिते त्विति । नन्वेवं पक्वमोदनं भुङ्क्ते इत्यत्रापि द्वितीया न स्यादिति चेत्। मैवम् । इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती । तत्र प्रधानक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः ।

उक्तं च हरिणा—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।

शब्दरत्न ।

कर्मत्वस्वीकारे इति । क्रियान्तरनिरूपिततत्स्वीकारे इत्यर्थः। कारकस्य । करणादिकारकशक्तेः । हरिं नमेच्चेत्सुखं यायादित्यादौ हेतुहेतुमद्भावेनान्वयो न क्रियाकारकभावेनेति न दोषः । स्ववाचकधात्वर्थं प्रति तु कर्मत्वान्वयः करणत्वान्वयश्च नासत्त्वरूपताप्रतिबन्धकः, शोभनं पचति, ज्योतिष्टोमेन यजेतेत्यादौ दर्शनात् । अन्यत्रेति । कर्मत्वस्य सर्वत्र संसर्गतैवेति भाष्यसंमतपक्षे त्वाद्यमेव सारम् । अभिहिते त्विति । तिङादिभिः कर्मादिशक्तेरभिधाने प्रातिपदिकस्योद्भूततच्छक्तिकेऽर्थे वर्त्तमानत्वाभावाद् द्वितीयादेः कर्मादिशब्देभ्य इवाप्राप्तिरिति भावः । न स्यादितीति । पचधातूत्तरनिष्ठया ऽभिधानादिति

ज्योत्स्ना ।

नुवर्तन्ते । भवति पुनर्वर्तमानकालत्वञ्चैकत्वञ्च । तत्र कैयटः भवति पुनरिति नहि भवति पक्ष्यति अभूदपाक्षीत् भवतः पचतः भवन्तिपचन्ति । ततो भाष्यकारेणोक्तम् । कथं तर्हीयं वाचो युक्तिः भवतिपचति भवति पक्ष्यति भवति अपाक्षीदिति प्रश्ने सा चैषा वाचोयुक्तिः पचादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति । यद्यपि तावदत्रैतच्छक्यते वक्तुम्। यत्रान्या चान्याच क्रिया यत्र खलु सैव क्रिया तत्र कथम् भवेदपि भवेत् स्यादपि स्यादिति । अत्रैकैव क्रिया तस्याः साध्यसाधनभावो विरुद्ध इति भावः। अत्राप्यन्यत्वमस्ति कुतः कालभेदात् , साधनभेदाच्च । एकस्यात्र भवतेः भवतिः साधनम् । सर्वकालश्च प्रत्ययः अपरस्य बाह्यं साधनम् । वर्तमानकालश्च प्रत्ययः यावताऽत्राप्यन्यत्वमस्ति पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीत्युक्तम् ।

कर्तृकर्मेतरकारकस्येति । तदुक्तं हरिणा—'क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः । इति लिङ्गं च क्रियानाधारकारकाणि चेति द्वन्द्वः । क्रियानाधारकारकाणि कर्तृकर्मेतराणि बोध्यानि ।

प्र० (१) तदुक्तंहरिणा—'क्रिया न युज्यते लिङ्क्रियानाधारकारकैः ॥ इति लिंगं च क्रियानाधारकारकाणि चेति द्वन्द्वः । क्रियानाधारकारकाणि च कर्तृकर्मेतराणि ज्ञेयानि ।

शक्तिर्गुणाश्रया तत्र प्रधानमनुरुद्ध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥ इति ।

अत एव पक्त्वौदनो भुज्यते इत्यत्र भुजिप्रत्ययेनाभिहिते प्रथमैव पचेरप्राधान्यात् ।

वस्तुतस्तु पक्त्वा भुज्यते इत्यादौ कर्मणः पचिभुजिभ्यां न युगप-

---

शब्दरत्न ।

भावः । गुणाश्रया—गुणनिरूपिता । प्रधानम्—प्रधानक्रियानिरूपितां शक्तिम् । अनुरोधमेव विशदयति—प्रधानविषयेति । गुणे ऽनुक्ता ऽपि तद्वदुक्तवत् प्रतीयते । तुल्यन्यायादूगुणनिरूपिता उक्तापि प्रधाननिरूपितानुक्तशक्तिवत्प्रकाशत इति । अत एव प्रासादे आस्ते इत्यादौ सदिनिरूपिताधिकरणत्वस्योक्तत्वे ऽप्यासिनिरूपितस्यानभिधानेनानभिहितत्वात्ससमीसिद्धिः । इदं च "स्वादुमि णमुल्" (पा. सू. ३ । ४ ।२६ ) इति सूत्रे भाष्ये स्पष्टम् । तत्रत्यभाष्यार्थानुवादिन्यौ चेमे हरिकारिके इत्यन्यत्र प्रपञ्चितम् । एवमुभयनिरूपितशक्तेरनभिधाने गुणक्रियानिरूपितशक्तेरप्यभिधायिनी विभक्तिर्भवति । यथा ग्रामाय गन्तुमिच्छति ग्रामं गन्तुमिच्छतीति च । इष्यते ग्रामो गन्तुमित्यादौ प्रधानेषिक्रियानिरूपितशक्तेरभिधाने गुणनिरूपिताया अप्यभिधानान्न कदापि चतुर्थीद्वितीये । गमेर्ग्रामः कर्म इषेस्तुभे कर्मणी इति तत्सूत्रे भाष्ये स्पष्टम् । एवं चोभयत्राप्यावृत्त्या शाब्दोऽन्वयः प्रतीयते । अत्र प्रयोगे गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न कदाऽपि भवत इति कैयटात् । एवं चैतद्विरोधादोदनं पक्त्वेत्यपास्तमेवेति यत्केन चित् प्राचीनेन वस्तुतस्तु पक्त्वेत्यादिना साध्वित्यतन्तेनोक्तं तदतितुच्छमिति बोद्धयम् । स्वरूपव्याक्रियैव च पराक्रियेति न्यायेन तथैवानुवदति–वस्तुतस्त्वित्यादिना । अत एव "स्वादुमि"(पा०सू०३।३।२६) इति सूत्रे भाष्ये तुमुन्क्त्वाणमुलादयः स्वान्वयिना समभिव्याहृतेनानुप्रयुज्यमानेन समानाधिकरणे तद्वाच्यकारके वक्तव्याः । तेन पक्त्वौदनो भूज्यत इत्यादावोदने द्वितीया न । अन्यथा कृत्त्वादस्य कर्त्तर्यापत्तौ पचिक्रियाकर्मत्वस्यानभिधानात्सा स्यादेवेत्युक्त्वा न वक्तव्यमव्ययकृतां भावे विधानादित्युक्तम् । अनेन हि भाष्येणोभयत्र शाब्दान्वय एव लभ्यते । तत्र वचनारम्भ एषां प्रयोगाणामुपपत्त्यभावात् प्रत्याख्यानेऽपि हर्युक्तरीत्या सनादिसूत्रस्थभाष्यसम्मत्याऽभाव एवोचितः । एवं च कैयटोक्तं क्षुधं प्रतिहन्तुं शक्यमित्यप्यसाध्वेव वचनारम्भेऽसिद्धेः । तुमुनाद्यन्वयिक्रियानिरूपितशक्तेरयं स्वभावो यत्स्वसमानाधिकरणगुणभूततुमुनादिप्रकृत्यर्थनिरूपितशक्तेःस्ववदभिहितत्वेनानभिहितत्वेन वा प्रकाश इति सुधियो विभावयन्तु ।

च्छाब्दोऽन्वयः, किं त्वन्यतरेण शाब्दोऽपरेणार्थः । तत्र च प्रथमाद्द्वितीये व्यवस्थिते एव । तद्यथा पक्त्वा भुज्यते ओदनः । किं पक्त्वा अर्थादोदनम् । यदा तु ओदनं पक्त्वा भुज्यत इति प्रयुज्यते तदा भुज्यत इत्यत्रार्थादोदन इति गम्यते । एवं च विवक्षाभेदेन पूजयितुं शक्यते हरिर्हरिं वेत्युभयं साधु । प्राप्तानन्द इति । आनन्दकर्तृकप्राप्तिकर्मीभूत इत्यर्थः ।

यदुक्तं प्रायेणेति तस्य फलमाह—क्वचिदिति । विषवृक्ष इति । यदि तु वर्धिच्छिद्योरन्यतरेण सह कर्मतया ऽन्वयो विवक्ष्यते तदा द्वितीया स्यादेवेति ध्येयम् ।

तृणं स्पृशतीति । यथा स्पृश्यमानस्य गङ्गादेरीप्सितस्य क्रियया योगस्तज्जन्यसंयोगादिफलाधारत्वात् तथैवानीप्सितस्य तृणादेरपीति भावः ।

स्यादेतत् । धातूपस्थाप्यफलशालि कर्मेत्येवाऽस्तु । किमीप्सितानीप्सितयोः पृथक्कथनेनेति चेत् । मैवम् । अग्नेर्माणवकं वारयतीत्यत्र "वारणार्थानाम्" ( पा० सू० १।४।२७ ) इति सूत्रेण माणवकस्यापादानत्वं प्राप्तं तद्बाधनाय "कर्तुरीप्सिततमम्" ( पा० सू० १।४।४९ ) इति वक्तव्यमेव । एवं च द्वेष्योदासीनयोः संग्रहार्थं "तथा युक्तम्"(पा० सू० १।४।५०) इत्यस्याप्यावश्य-

---

शब्दरत्न ।

अन्यतरेण सहेति । इदं प्रागुक्तवस्तुतस्त्वित्यादिरीत्योक्तं तद्बदेवेति बोद्धयम् ।

मैवमिति । ग्रामं गच्छतीत्यादौ ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते । एतत्सूत्रबोद्ध्यकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात् । अत एव "कर्मणा यमभिप्रैति" (पा० सू० १।४।३२) इति सूत्रे कर्मणेत्यस्याभावे गां ददातीत्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण संप्रदानसञ्ज्ञा स्यादिति भाष्यकैयटोक्तं संगच्छते । चतुर्थ्या उद्देश्यत्वं वाच्यं तत्समानाधिकरणशक्तिर्वेति सर्वसंमतमिति भावः । फलान्तरमप्याह—अग्नेरिति । ईप्सि-

ज्योत्स्ना

माणवकस्यापादानत्वमिति । ननु यद्यपि निवारकस्यामात्यादेर्दुष्टत्वेन माणवकोऽग्निं संयुनक्तु इत्यपीच्छा, परन्तु स्वामिभयेन तं निवारयति तत्र निवारणानुकूलप्रधानीभूतव्यापाराश्रयीभूत भृत्यवर्तिनी तद्वृत्तिव्यापारवाचकवारिधातुवाच्यसंयोगरूपफलाश्रयत्वप्रकारकेच्छा अग्न्युद्देश्यिकेति तत्रोभयोः "कर्तुरीप्सिततमं कर्म" इति सूत्रेण कर्मसंज्ञायाः प्राप्तिः, तथापि यत्र माणवकोऽग्निं संयुनक्तु इति वारकस्येच्छा नास्ति तत्र भृत्यवृत्तिव्यापारवाचकधातुवाच्यसंयोगरूपफलाश्रयत्वप्रकारकभृत्यसमवेतेच्छो-

शब्दरत्न ।

ततमपदाभावे वारणार्थानामित्यस्यैव तदनवादत्वापत्तेः । न चाप्तौ तच्चरितार्थम् । तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात् । वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । तत्रापीप्सितशब्दः क्रियाशब्द एव ईप्सिततममित्युक्तौ ईप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः । ईप्सितमत्वं च प्रकृतधात्वर्थ-

ज्योत्स्ना ।

द्देश्यत्वाभावेन अग्नेः "कर्तुरीप्सित" इति सूत्रेण कर्मसंज्ञाया अप्राप्तौ तत्रापादानार्थम् "वारणार्थानाम्" इत्यस्य चारितार्थेन अपादानत्वमयुक्तमितिचेन्न । अत्रापि "तथायुक्तं चानीप्सितम्" इत्यनेन परत्वात् कर्मसंज्ञाप्राप्तेः स्पष्टत्वात् । नच बाधितमिदम् । एकदेवेप्सितत्वेन "वारणार्थानाम्" इत्यनेन कर्मसंज्ञाप्राप्तिः । अनीप्सितत्वे च "तथा युक्तम्" इत्यनेन कर्मसंज्ञाप्राप्तेरिति वाच्यम् । "वारणार्थानाम्" इत्यत्र कर्तृपदासत्वेन कारकसामान्यवृत्तीप्साया ग्रहणेन "तथायुक्तम्" इत्यत्र "कर्तुरीप्सित" इति सूत्रात् कर्तृग्रहणानुवृत्त्या कर्तृवृत्तीप्सायाग्रहणेन बाधानवकाशात् । तथा च माणवकात्मककर्मरूपकारकवृत्तीप्साविषयत्वस्य सत्वादग्नेरपादानत्वम् । कारकभृत्यरूपप्रधानीभूतव्यापाराश्रयकर्तृवृत्तीप्साविषयत्वस्याभावत्वेन "तथा युक्तम्" इत्यनेन कर्मप्राप्तिश्च सुलभेति दिक् ।

संयोगानुकूलव्याराभावानुकूलव्यापारोऽर्थ इति । नन्वत्र अभावः कीदृशो विवक्षितः ? न तावदन्योन्याभावः, यत्र भृत्यादिः।निवारणे व्यापारं करोति न निवारयति, तत्रापि वारयतीति प्रयोगापत्तेः । भेदस्य नित्यत्वेन प्रधानव्यापारे तदनुकूलत्वस्य बाधितत्वाच्च । नाप्यत्यन्ताभावः । तस्यापि नित्यत्वात् प्रधानव्यापारेऽत्यन्ताभावानुकूलत्वस्य बाधितत्वात् । नापि ध्वंसः, अननुभवात् । तथाहि, सत्ताकृताग्निसंयोगमग्निसंयोगाय चोद्यतं माणवकं निवर्तयति तत्रैव वारयतीति प्रयुज्यते । यत्र चाग्निं संयुञ्जन्तं माणवकं निवर्तयति तत्र तु अग्नेर्माणवकं विभाजयतीत्येव युज्यते । एवं चाग्निसंयोगात् प्राक् अग्निसंयोगरूपप्रतियोगिनोऽसत्वेन ध्वंसस्य वक्तुमशक्यत्वात् । नापि प्रागभावः, तस्य प्रतियोगिसमवायिकारणवृत्तित्वशीलस्य स्वप्रतियोग्युत्पादकत्वनियमेन माणवकस्याग्निसंयोगापत्तेरित्यत्र केचित्—अत्र संयोगाद्यकुलव्यापाराभावः अत्यन्ताभाव एव, तदनुकूलता च प्रधानव्यापारे न तज्जनकतारूपा, अपि तु तदभावप्रयोजकाभावप्रतियोगितारूपा । तथा च संयोगानुकूलव्यापाररूपतदभावाभावप्रयोजकाभावप्रतियोगित्वं निवारकवृत्तिव्यापारेऽक्षतम् । अभावयोः प्रयोज्यप्रयोजकभावश्च स्वरूपसम्बन्धविशेषः । व्यापकाभावप्रयोज्यत्वस्य व्याप्याभावे व्यवहारात् । यथा वह्न्यभावप्रयोज्यो धूमाभाव इत्यलम् ।

ईप्सिततमलक्षणमाह—ईप्सिततमत्वं चेति । स्वप्रयोज्यत्वं, ।स्ववाचकधातुवाच्यत्व-

कत्वात् । अनीप्सितग्रहणं तु स्पष्टार्थमेव न त्वावश्यकम् ।

इदं त्ववधेयम् । ईप्सितानीप्सितयोः शाब्दबोध एकरूप एव । ईप्सानीप्सादेरधिशीङादिवत्सञ्ज्ञाप्रवृत्तावुपयोगे ऽपि द्वितीयावाच्यकोटावप्रवेशात् । अनन्यलभ्यस्यैव शब्दार्थत्वात् । "कर्मणि द्वितीया" (पा० सू० २।३।२) इति सूत्रे हि तत्तत्सूत्रैर्यावतां कर्मसञ्ज्ञा विहिता ते सर्वे तेन रूपेणोपस्थिताः । तेषु च विधीयमाना द्वितीया आधारवाचिका लाघवात् । क्रियाया धातुना कर्तुश्च देवदत्तादिशब्दैर्लाभात् । इष्टतमत्वादेस्तु मानाभावात् । प्रकृतिप्रत्ययार्थयो-

---

शब्दरत्न ।

प्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम् । अत एवाग्नेर्नोद्देश्यत्वप्रतीतिस्तत्रेति भावः । न त्वावश्यकमिति । द्वेष्यसंग्रहोऽपि व्याख्यानादेव भविष्यतीति भावः । तस्यापीप्सिततमभिन्नत्वात् ।

एकरूप एवेति । इच्छाविषयत्वानिच्छाविषयत्वभानकृतवैरूप्यरहित इत्यर्थः । तदाह-ईप्सानीप्सादेरिति । इच्छाविषयत्वानिच्छाविषयत्वयोः । आदिना ईप्सागतप्रकर्षस्येत्यर्थः । उपयोगेऽपीति । स्वरूपतः सत्तयेति भावः । तदुपलक्षितमुद्देश्यत्वादिकं तु भासत एव तदाह—अनन्यलभ्यस्यैव,वेति । भासमानोद्देश्यत्वतदभावाभ्यामर्थत इच्छाविषयत्वादिलाभादितिभावः । आधारवाचिकेति । इदमुपलक्षणं दिवो योगे करणवाचकत्वात् । आधारपदेन चात्राधारताशक्तिमानुच्यते "कर्तुरीप्सिततमम्",(पा.सू.१।४।४९) इति लक्षणे विशिष्टस्य प्रवेशात्प्रामाणिकं गुर्वेवं शक्यमस्त्वित्यत आह–क्रियाया इति । फलस्य व्यापारस्य चेत्यर्थः । देवदत्तादिशब्दैरिति । आदिना तिङन्तम् । नन्वेवमाधारस्य धर्मिणोऽप

ज्योत्स्ना ।

मेतदुभयसम्बन्धेन व्यापारविशिष्टफलत्वरूपः सम्बन्धश्च धात्वर्थः तत्र प्रयोज्यत्वं तमब्ग्रहणलभ्यम् । वाचकवाच्यत्वं कर्तृग्रहणलभ्यम् । प्राधान्यांशस्तु व्यापारे कर्तृग्रहणमहिमलभ्यः ।

केचित्तु–प्रकृतधात्वर्थफलवत्कर्म इत्येव सूत्रं विधाय "तथा युक्तम्" इति न कर्तव्यमिति लाघवम् । न चैवंमूलोक्तरीत्या "वारणार्थानामीप्सितः" इति सूत्रमनवकाशतया कर्मसंज्ञया वारणार्थकधातुप्रयोगे बाधकं स्यादिति वाच्यम् । प्रवृत्तिविघातो हि वारणम् । प्रवृत्तिविघातश्च प्रवृत्तिध्वंसानुकूलव्यापार एव, स एव च सर्वत्र वारयतेरर्थः । एवञ्च कूपादन्धं वारयति, अग्नेर्माणवकं वारयति इत्यादौ कूपाग्न्यादौ नैतादृशधात्वर्थफलाश्रयत्वमिति कूपादेर्न कर्मत्वप्राप्तिरिति "वारणार्थानाम्" इत्यस्य चारितार्थ्यम् । द्वेष्योदासीनयोस्तु धात्वर्थफलाश्रयत्वाद्भवति कर्मत्वमित्याहुः । तन्न । उक्तरीत्या शाब्दबोधस्य वैलक्षण्यबोधनाय सूत्रस्यावश्यकत्वात् ।

किञ्च यदा न गवि प्रवृत्तिः किन्तु सम्भावितप्रवृत्तिप्रागभावस्यात्यन्ताभावस्य

अभेद इह संसर्गः। तथा च हर्याधारिका या प्रीतिस्तदनुकूलो व्यापारो वाक्यार्थः। यद्यपि कर्मणि कर्तरि अधिकरणे च विहितानां द्वितीयादीनामाधारोऽर्थ इति तुल्यम्। तथा ऽपि तन्निरूपकं फलं, व्यापारः, स्वाश्रयद्वारा तदुभयं चेति फलीभूते शाब्दबोधे वैलक्षण्यं सङ्गच्छते। न चाधारतैव वाच्येति मन्तव्यम्। तन्निष्ठधर्मस्य वाच्यतावच्छेदकतापत्त्या ऽतिगौरवात्। "कर्मणि द्वितीया"

---

शब्दरत्न

प्रकृत्या लाभः। आधारत्वेनालाभ इत्यस्याधारत्वं न लभते इत्यत्रैव पर्यवसानात्तस्यैव शक्तिविशेषरूपस्य वाच्यत्वं युक्तं तस्य धर्मिसाकाङ्क्षत्वाद् विशेषणत्वञ्च युक्तमिति चिन्त्यम्। अभेद इति। विशेष्यविशेषणभाव इत्यर्थः। वाक्यार्थ इति। हरिं भजतीत्यत्रेति शेषः। फलमिति। कर्त्तुरित्यादिविहितकर्मसञ्ज्ञकविषये फलमित्यर्थः। व्यापार इति। कर्तृविषये। स्वाश्रयेति। स्थाल्यां पचति तण्डुलमित्यत्र कर्मद्वारा ऽधिकरणं भूतले देवदत्तः पचतीत्यादौ कर्तृद्वाराऽधिकरणम्। फलीभूते इति। पदजन्योपस्थितावविशेषेऽपि तत्फलभूते शाब्दबोधे इत्यर्थः। इदमुपलक्षणं संज्ञयार्थस्य निमित्तत्वे तत्तत्सञ्ज्ञाप्रकारिकैवोपस्थितिरिति कर्मत्वादिनैवोपस्थितेस्तत्रापि वैलक्षण्यमस्तीत्यन्यत्र विस्तरः। तन्निष्ठधर्मस्येति। आधारेतरावृत्तित्वे सति सकलाधारवृत्तित्वरूपस्येत्यर्थः। आधारता तु शक्तिविशेषरूपा ऽखण्डैवेत्याशयः। नन्वाधारतैव निरूपकाश्रयसम्बन्धभेदेन भिन्ना, आश्रयतात्वमखण्डमिति न गौरवमत आह—कर्मणीति। लोके कर्मादिपदानां धर्मिपरताया

ज्योत्स्ना

वा विवक्षा तादृशस्थले ध्वंसस्य प्रतियोगिपूर्वकत्वेन प्रवृत्तिध्वंसस्य सम्भवात्, यवेभ्यो गां वारयतीति प्रयोगानुपपत्तिरिति प्रवृत्तिध्वंसानुकूलव्यापारमात्रस्य वारयत्यर्थत्वमयुक्तमेव। द्वेष्योदाहरणम्—चोरान् पश्यति, व्याघ्रान् पश्यति इत्याद्येव न तु विषं भुंक्ते इति। महाभयादिभ्यो दुःखस्य सम्भावितस्य निवृत्त्यर्थं यदा विषं भक्षयति, तदा भक्षणक्रियाजन्यफलाश्रयत्वादुद्देश्यत्वाच्च तस्य कर्तुरित्येव कर्मत्वस्य सिद्धत्वात्। अत एव "य एषः मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखानि अनुनिशम्य विषभक्षणमेव ज्यायो मन्यते। अतश्च विषमीप्सितं तद्भक्ष्यतीति भाष्योक्तेः। उदासीनोदाहरणं तृणं स्पृशति इत्याद्येव। यद्यपि द्वेष्योदासीनयोः प्रधानीभूतधात्वर्थव्यापारजन्यफलाश्रयत्वम्, तथापि तेषां न मुख्योद्देश्यत्वमिति "कर्तुः" इत्यनेन न सिद्धिरिति दिक्।

चिन्त्यमिति। चिन्ताबीजं तु अखण्डोपाधिरूपधर्मस्य वाच्यत्वे तस्य विशेषणतया शाब्दबोधविषयकत्वकल्पनेन "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इति न्यायविरोधः। "कर्मणि द्वितीया" इति सूत्रस्य 'सुपां कर्मादयोऽप्यर्थाः

इत्यादिसूत्रस्वरसभङ्गापत्तेश्च । अत एव भाष्यकार आह—'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्' इति । न च तिङोऽपि धर्ममात्रमर्थः । "कर्तरि कृत्" (पा० सू० ३।४।६७) "लः कर्मणि च" (पा० सू० ३।४।६९) "तयोरेव कृत्यक्तखलर्थाः" (पा०सू०३।४।७०) इति सूत्राणां वैरूप्यापत्तेः । पाचको देवदत्तः, पक्व ओदन इत्यादौ सामानाधिकरण्यानुरोधेन धर्मिवाचकतास्वीकाराच्च । तस्मादिह घटादिशब्दानामिव विशिष्टमेव वाच्यम् । अकृत्यधिकरणाभ्युपगमे तु कृत्स्वपि धर्ममात्रं सर्वथाऽपि नैयायिकमीमांसकाद्यभ्युपेतमर्धजरतीयं हेयमेव । न हि तिङ्कृतोर्वैलक्षण्यं सूपपादम् । प्रपञ्चितञ्चैतच्छब्दकौस्तुभेऽस्माभिरित्यलमियता ।

---

शब्दरत्न ।

इष्टत्वेन सूत्रेऽपि तत्परतैवोचितेति भावः । आधारस्य शक्यत्वेनानन्ताधारतानामाधारतात्वेनानुगमान्न शक्त्यानन्त्यमिति बोद्धयम् । कर्मादयोऽपीति । अपिना संख्या । सूत्रवदेवात्रापि कर्मपदस्य धर्मिपरता। शक्तिरप्येतैर्धर्म्यभेदमापन्नैर्वोच्यत इति बोध्यम् । संख्या चेति । चेन कर्तृकर्मणी । वैरूप्यापत्तेरिति । कृद्विषये धर्मिपरता तिङ्विषये धर्मपरतेति वैरूप्यापत्तेरित्यर्थः । कृतां धर्मिवाचकत्वे बीजमाह-पाचक इत्यादि । स्वीकारादिति । कृतामिति शेषः । प्रपञ्चितमिति । लादेशशत्रादेस्तिङां च वैषम्यं सर्वथा दुरुपपादमित्यादीति भावः ।

ज्योत्स्ना ।

संख्या चैव तथा तिङाम्' इति भाष्यविरोधश्च ।

किंचाखण्डधर्मोपाधिरूपस्य धर्मस्य वाच्यत्वे तन्निष्ठधर्मस्य वाच्यतावच्छेदकत्वे तस्य कर्मेतरावृत्तित्वविशिष्टसकलकर्मवृत्तित्वरूपत्वेऽतिगौरवम्, तस्याप्यखण्डोपाधिरूपत्वे तदाश्रयाखण्डोपाधिरूपधर्मस्य वाच्यतावच्छेदकत्वं युक्तमिति ।

वस्तुतस्तु पञ्चकं प्रातिपदिकार्थ इति मुख्यः पक्षः । तथा च कर्मादीनां द्योत्यत्वेन प्रकृत्यर्थविशेषणत्वमेव युक्तमित्यलम् ।

निरूपकाश्रयसम्बन्धभेदेनेति । क्वचिदाश्रयतानिरूपकं विक्लृत्तिरूपं फलम्-क्वचित् संयोगः क्वचिद्विभाग इति यथायथमूहनीयम् । आश्रयत्वेन तण्डुलादयो विवक्षितम्। सम्बन्धभेदस्त्वित्थम्। पचतिगच्छतीत्यादौ फलाधारता समवायसम्बन्धावच्छिन्ना, यवेभ्यो गां वारयतीत्यादौ अभावरूपफलाधारता स्वरूपसम्बन्धावच्छिन्ना, इत्यादीत्यलम्।

नन्वेवमाधारस्य शक्यत्वे तन्निष्ठाधारस्योक्तरीत्या भिन्नस्य शक्यतावच्छेदकत्वे शक्यतावच्छेदकभेदाच्छक्तिभेदापत्तिरत आह—आधारत्वस्य शक्यत्वे इति । शक्तिरपीति । कर्मत्वादिरूपेत्यर्थः । धर्म्यभेदम्—शक्तिमदभेदम् । कर्मत्वादिशक्तिमान् द्वितीयार्थः ।

परिगणनमिति। तेन नटस्य शृणोतीत्यादौ नातिप्रसङ्ग इति भावः। गां दोग्धीति। गोसम्बन्धिपयः कर्मकं दोहनमर्थः। स्यादेतत्। "कर्तुरीप्सिततमं कर्म" (पा० सू० १।४।४९) "तथायुक्तं चानीप्सितम्" (पा० सू० १।४।५०) इति सूत्राभ्यां गतार्थमेतत्।

तथा हि—त्यजनोपसर्जनं त्याजनं दुहेरर्थः। दापनमङ्गीकरणं च याचेः। विक्लेदनं निवर्तनं च पचेरित्यादि। एवं च धातुपात्तव्यापारविषयीभूतं यत् त्यजनदानाङ्गीकारादि तदाश्रयत्वं गवादीनां स्पष्टमेव। अत एव हि अणौ कर्तुर्णौ कर्मत्वस्य न्यायसिद्धतया गत्यादिसूत्रं नियमार्थमिति प्राचां सिद्धान्तः। अत एव चाकडारसूत्रे 'अपादानमुत्तराणि'। गां दोग्धि पय इत्यत्र परत्वात्कर्मसञ्ज्ञेति भाष्यं सङ्गच्छते। पञ्चकं प्रातिपदिकार्थ इति पक्षे त्ववधित्वफलाश्रयत्वयोर्युगपद् विवक्षायां चेदम्। अवधिभूता या गौस्तन्निष्ठो यः पयःक्षरणानुकूलव्यापारस्तद्विषयिणी गोपनिष्ठा प्रेरणेत्यर्थात्। तथा च "अकथितं च (पा० सू० १।४।५७) इति सूत्रं व्यर्थमिति चेत्। अत्रोच्यते—कर्मणः शेषत्वेन विवक्षायां न माषाणामश्नीयादि-

---

शब्दरत्न।

तेन नटस्येति। अपादानादिविशेषैरविवक्षा च प्रसक्तस्य बुद्धिपूर्वमविवक्षा सर्वथाऽप्रसक्तस्याविवक्षा वेत्युभयथाऽपि गृह्यते। प्रकृते चान्त्या। गीतद्वारा च तस्य "आख्यातोपयोगे (पा० सू० १।४।२९) इति शास्त्रक्लृप्तक्रियाजनकत्वम्। न च तस्य कर्मयुक्त्वाभावः। तदंशस्यापि परिगणनलभ्यत्वात्। न च नटान्निस्सरन्तं शब्दं गृह्णातीत्यर्थात्प्राप्तापादानत्वाविवक्षैवात्रेति वाच्यम्। "आख्यातोपयोगे" (पा० सू० १।४।२९) इति सूत्रउपयोगग्रहणेनानुपयोगे आख्यातुरीदृशलक्षणयापादानत्वस्यानिष्टत्वबोधनादिति भावः। गोसम्बन्धीति। गोकर्मकं पयःकर्मकं चेत्यर्थः। तत्र पयस एवेप्सिततमत्वे आह—तथा युक्तमिति। त्यजनोपसर्जनमिति। गौः पयस्त्यजति। गवा पयस्त्याजयतीति प्रतीतेरिति भावः। न्यायसिद्धतयेति। व्यापारद्वयार्थत्वेनोक्तसूत्रद्वयसिद्धतयेत्यर्थः। प्राचाम्—"हेतुमति च" (पा० सू० ३।१।२६) इति सूत्रे भाष्यकृताम्। परत्वादिति। ग्रामादायातीत्यादौ सञ्ज्ञान्तराप्राप्तावपादानत्वं सावकाशम्। कर्मसञ्ज्ञा तु ग्रामं गच्छतीत्यादौ। भाष्यमिति। तच्च भाष्यं नाकथितं चेत्येतद्विषयम्। अस्यापादनत्वाविवक्षायां प्राप्त्या परत्वादित्युक्त्यसंगतेस्तद् ध्वनयन्नाह—पञ्चकमित्यादि। अवधि-

ज्योत्स्ना।

इति भाष्योक्तरीत्या स्वीकार्यं युक्तत्वादित्यर्थः।

तिवत् षष्ठी प्राप्ता तां बाधितुमिदं सूत्रम् । तथा चेह षष्ठीवत्सम्बन्धमात्रं

शब्दरत्न ।

त्वेत्यादि । अ(१)पादानत्वकर्मत्वशक्त्योरित्यर्थः । ईदृशे च विषये आकडारसूत्रतत्त्वा-

ज्योत्स्ना

अपादानत्वकर्मत्वशक्त्योरिति । अत्र शब्दरत्नकृतस्त्वयमाशयः । अवधित्वादपादा-नत्वम्, फलाश्रयत्वात्कर्मत्वमित्यादिप्रतीत्या फलाश्रयत्वाद्यपेक्षया भिन्नं कर्मत्वादिकं शक्तिरूपमस्तीति ज्ञायते । तादृशशक्तिसत्त्वपुरस्कारेणैव द्वितीयादिविभक्तितो बोधो भ-वतीति न "दिवः कर्म च" "अधिशीङ्स्थासां कर्म" "कर्तुरीप्सिततमं कर्म" इत्यादि सूत्रविहितकर्मसंज्ञकार्थकादिपदोत्तरद्वितीयादिभ्यो वैरूप्येण बोधः । तथाचेह षष्ठीवत् सम्बन्धमात्रं द्वितीयार्थं इति दीक्षितोक्तिः द्वितीयादिभ्यो वैरूप्येणापि बोधोदयमा-पादयमानासङ्गतेति मत्वा स्वमते तत्सूत्रावश्यकतां प्रदर्शयति—अत्रारुचिबीजमि-त्यादिना ।

मनोरमाकाराणां त्वयमाशयः—द्वितीयादिभ्यो वैरूप्येण बोधो भवत्येव उद्दे-श्यतावच्छेदकीभूतफलाश्रयत्वादिव्यतिरिक्ता कर्मत्वशक्तिर्नास्त्येव मानान्तराभा-वात् । फलाश्रयत्वात्कर्मत्वम् इत्यादौ तु कर्मत्वादिपदस्य तत्तत्संज्ञापदेन पुनरुक्त्य-भाव इति । यदपि सम्बन्धार्थकत्वे दूषणमुच्यते किञ्च कर्तुरित्यपि षष्ठ्यपवाद एव तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेः । अतस्तदपवादत्वमात्रेण न सम्बन्धत्वेन बोध-

प्र० (१) अपादानत्वकर्मत्वशक्त्योरिति । अत्र शब्दरत्नकृतामयमाशयः—अवधित्वादपादा-नत्वं, फलाश्रयत्वात्कर्मत्वमित्यादिप्रतीत्या फलाश्रयत्वाद्यपेक्षया भिन्नं कर्मत्वादिकं शक्तिरूप-मस्तीति ज्ञायते । तादृशशक्तिमत्वपुरस्कारेणैव द्वितीयादिविभक्तितो बोधो भवतीति न "दिवः कर्म च" "अधिशीङ्स्थासांकर्म" "कर्तुरीप्सिततमङ्कर्म" इत्यादिसूत्रविहितकर्मसंज्ञकार्थकादिपदोत्तर-द्वितीयादिभ्यो वैरूप्येण बोधोदय इति । तथा चेह षष्ठीवत्सम्बन्धमात्रं द्वितीयार्थं इति दीक्षितोक्ति-र्द्वितीयादिभ्यो वैरूप्येणापि बोधोदयमापादयमानाऽसङ्गतेति मत्वा स्वमतेन सूत्रावश्यकतां दर्श-यति—अत्रारुचिबीजमित्यादिना ।

दीक्षितानां त्वयमाशयः—द्वितीयादिविभक्तिभ्यो वैरूप्येण बोधो भवत्येव । उद्देश्यतावच्छेद-कीभूतफलाश्रयत्वादिव्यतिरिक्ता कर्मत्वशक्तिर्नास्त्येव मानान्तराभावात् । फलाश्रयत्वात्कर्मत्वमि-त्यादौ तु कर्मत्वादिपदस्य तत्तत्संज्ञापरत्वेन पुनरुक्त्यभाव इति ॥ यदपि सम्बन्धार्थकत्वे दूषण-मुच्यते' किञ्च कर्तुरित्यपि षष्ठ्यपवाद एव तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेः । अतस्तदपवाद-त्वमात्रेण नसबन्धत्वेन बोधकतोचितेति' तदपि न । कर्तुरित्यादि सूत्रसत्वे कर्मत्वादिना विवक्षायां शेषत्वाभावेन षष्ठ्यप्राप्त्या तत्र सम्बन्धार्थकत्वासम्भवेऽपि, "अकथितं च' इति सूत्रे सत्यपि अत्र षष्ठीप्राप्तिसत्त्वेनापवादत्वस्य स्पष्टतया सम्बन्धार्थकत्वकथनस्यौचितत्वात् ।

द्वितीयार्थ इति स्थितम् । अपादानत्वमात्रविवक्षायां तु पञ्चम्येव । गोः क्षीरविशेषणत्वे तु षष्ठी । तेन गोः पयो दोग्धीत्यपि प्रयोगः साधुरेव । एव-

शब्दरत्न ।

व्यबलादुभयोरपि द्वितीयैव बोधिकेति भावः । इति स्थितमिति । प्राचां ग्रन्थे इति शेषः ।

अत्रारुचिबीजं तु यदा पयोनिष्ठविभागानुकूलव्यापार एव धात्वर्थस्तदाऽपादानत्वाविवक्षायामन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकमेवमन्येष्वपि । किं च कर्तुरित्यपि षष्ठ्यपवाद एव । तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेरतः षष्ठ्यपवादत्वमात्रेण न सम्बन्धत्वेन बोधकतौचिता । तस्मादत्रापि क्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेनैव बोध इत्येवोचितम्(१) ।

व्यापारद्वयार्थत्वे "कर्तुरीप्सिततमम्" ( पा० सू० १।४।४९ ) इत्यनेनापि द्विकर्मकत्वमस्त्येव यथाप्रयोगं बहूनां धातूनाम् । तत्र ये व्यापारद्वयार्थत्वेन द्विकर्मकास्तेषां प्रधानकर्मणि लादयः(२) । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्युक्तेः ।

ज्योत्स्ना ।

कतौचितेति । तदपि न । कर्तुरित्यादिसूत्रसत्वे कर्मत्वादिना विवक्षायां शेषत्वाभावेन षष्ठ्यप्राप्त्या तत्र सम्बन्धार्थकत्वासम्भवेऽपि "अकथितं च" इति सूत्रे सत्यपि अत्र षष्ठीप्राप्तिसत्त्वेनापवादत्वस्य स्पष्टतया सम्बन्धत्वार्थकत्वौचित्यात् ।

इत्येवोचितमिति । फलाश्रयत्वादतिरिक्ता कर्मत्वशक्तिरित्यभिप्रेत्येदम् । तद्बीजं प्रागुक्तमेव ।

प्रधानकर्मणि लादय इति । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम् ण्यन्ते कर्तुश्च कर्मणः । इति भाष्ये उक्त्वा उत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के इति प्रश्ने ।

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च, द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ।

इति भाष्यप्रामाण्यादित्यर्थः ।

ननु अप्रधाने दुहादीनामितिस्पष्टमुक्तेर्व्यापारद्वयार्थकत्वकल्पे दुहादीनां प्रधानकर्मणि लादय इत्युक्तिः कथं सङ्गच्छतामिति चेत्? उच्यते—"अकथितञ्च" इति सूत्रसत्तां मनसि निधाय तद्भाष्यप्रवृत्तेः ।

तथा हि—दुहादीनां पयोनिष्ठविभागानुकूलव्यापारादिरूपैकार्थकत्वकल्पे एव

---

प्र० (१) फलाश्रयत्वादतिरिक्ता कर्मत्वशक्तिरित्यभिप्रेत्येदम् । तद्बीजं तु प्रागुल्लिखितमेव ।

प्र० ( २ ) प्रधानकर्मणि लादय इति—प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ॥ अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ १ ॥ इति भाष्यप्रामाण्यादित्यर्थः । ननु 'अप्रधाने दुहादीनाम्'इति स्पष्टमुक्तेर्व्यापारद्वयार्थत्वकल्पे दुहादीनां प्रधानकर्मणि लादय इति कथं संगच्छता-

शब्दरत्न ।

प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वम् । ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वम् । गर्गाः शतं दण्डयन्तामित्यादौ

ज्योत्स्ना ।

तत्सूत्रारम्भात् दुहादिकर्मीभूतगवादीनां कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वरूपप्रधानकर्मत्वाभावात् । तत्र लादिसिद्ध्यर्थमप्रधाने दुहादीनामित्यस्यावश्यकता । यदा तु पय आदिनिष्ठविभागानुकूलव्यापारादिर्दुहादेरर्थस्तदागवादीनां "कर्तुरीप्सित" इत्यनेनैव कर्मसंज्ञाविधानात्तस्य चोक्तप्राधान्यविशिष्टत्वात् । 'प्रधानकर्मण्याख्याये लादीनाहुर्द्विकर्मणाम्' इत्यस्य विषयत्वमक्षतमेव ।

नच भाष्ये उक्तां कारिकामुपन्यस्य उत्तरार्धोपात्ता दुहादिण्यन्तबुध्याद्यर्थातिरिक्ता द्विकर्मकाः के इति प्रश्ने नीवह्योर्हरतेश्चापि इत्युदाहृत्य परिगणितरूपेणोत्तरदानात् कथं तदतिरिक्तानां द्विकर्मपदेन ग्रहणमिति वाच्यम् । परिगणितरूपेणोत्तरोक्तितुल्यत्वेऽपि न्यादिग्रहणस्य तव मते कृष्युपलक्षणवत् मम मते न्यादिग्रहस्य सकलव्यापारद्वयार्थकधातूपलक्षणार्थत्वाङ्गीकारेण 'यश्चोभयोस्समो दोषः परिहारोऽपि तादृशः । नैकः पर्यनुभोक्तव्यः तादृगर्थविचारणे' इति न्यायेन ण्यन्तविषये तादृशपर्यनुयोगस्यायुक्तत्वात् इष्टव्यवस्थासिद्धये प्रधानकर्मत्वं परिष्करोति ।

प्रधानकर्मत्वं चेत्यादि । कर्तृप्रत्ययसमभिव्याहृतधातुजन्यशाब्दबोधे यः प्रधानभूतो व्यापारः तत्र साक्षाद्विशेषणं यत् फलम् तदाश्रयत्वं ; प्रधानकर्मत्वमित्यर्थः ।

---

मिति चेत् । उच्यते 'अकथितं च' इति सूत्रसत्त्वं मनसिकृत्य तद्भाष्यस्य प्रवृत्तेः । तथाहि दुहादीनां पयोनिष्ठविभागानुकूलव्यापारादिरूपैकव्यापारार्थकत्वकल्प एव तत्सूत्रारम्भात् दुहादिकर्मीभूतगवादीनां कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वरूपप्रधानकर्मत्वाभावात् तत्र लादिसिध्द्यर्थम् 'अप्रधाने दुहादीनाम्' इत्यस्यावश्यकता ।

यदा तु पयआदिनिष्ठविभागानुकूलगवादिनिष्ठव्यापारानुकूलव्यापारादिर्दुहादेरर्थस्तदा गवादीनां 'कर्तुरीप्सित' इत्यनेनैव कर्मसंज्ञाविधानात्तस्य चोक्तप्राधान्यविशिष्टत्वात् 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इत्यस्य विषयत्वमबाधितमेव ॥

न च भाष्य उक्तकारिकामुपन्यस्योत्तरार्धोपात्ता दुहादिण्यन्तबुध्याद्यर्थातिरिक्ता द्विकर्मकाः के: इति प्रश्ने 'नीवह्योर्हरितेश्चापि गत्यर्थानां तथैव च ॥ द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥१॥ इति परिगणितरूपेणोत्तरदानात्कथं तदतिरिक्तानां दुहादीनां द्विकर्मकपदेन ग्रहणमिति वाच्यम् । परिगणितरूपेणोत्तरोक्तितुल्यत्वेऽपि न्यादिग्रहणस्य त्वया कृष्युपलक्षणार्थत्वाङ्गीकारवत् मया न्यादिग्रहणस्य सकलव्यापारद्वयार्थकधातूपलक्षणार्थत्वाङ्गीकारेण 'यश्चोभयोः समो दोषः परिहारोऽपि तादृशः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥ इति न्यायेन तादृशपर्यनुयोगस्यायोग्यत्वात्॥

मग्रेऽप्यूह्यम्(१)। यत्तु प्राचोक्तम्—

शब्दरत्न।

गर्गाणामेव तत्त्वमिति तत्रैव कर्मणि लादयः। उद्देश्यत्वरूपमार्थप्राधान्यं तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधाच्च शवावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः।

एकव्यापारार्थकदुहादियोगे त्वप्रधानकर्मणि। अप्रधानत्वं चात्रोक्तप्रधानकर्मभिन्नत्वम्। तच्च तत्रार्थे गवादीनामेव फलाश्रयत्वाभावात्। एवं च भाष्यानुक्तानां परिगणने(२) पाठोऽयुक्तः। अर्थनिबन्धनेयं सञ्ज्ञेति चायुक्तम्(३)। एवं द्व्यर्थत्वेन द्विकर्मकत्वातिप्रसङ्गस्त्वनभिधानेन वारणीय इति दिक्।

अपादानत्वमात्रेति। विभागानुकूलव्यापारमात्रार्थकत्वविवक्षायामिति भावः। गोः

ज्योत्स्ना।

अग्रेऽप्यूह्यमिति। अत्रायमूहः-"अकथितञ्च" इति सूत्रेऽकथितशब्दः असंकीर्तितपर्यायः नाप्रधानपर्यायः। एवं च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां सर्वव्यापूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति सर्वसम्मतम्। तत्राद्योदाहरणम् 'गां दोग्धि पय' इति। द्वितीयोदाहरणं याचिपृच्छिभिक्षियोगे बलिं याचते वसुधामित्यादि। तत्र प्रथमस्योदाहरणेषु गोदोग्धि पयः गां पयो दोग्धीत्यादि प्रयोगद्वैविध्यसम्भवेऽपि द्वितीयप्रकारोदाहरणेषु 'बलिं याचते वसुधाम्' इत्यादिषु न तादृशप्रयोगद्वैविध्यमिति। अत एव कैयटमतम् असङ्कीर्तितपर्यायाकथितग्रहणे गां दोग्धि गोर्दोग्धीति च। याचिपृच्छिभिक्षियोगे कर्मसंज्ञैवेत्येषा व्यवस्थेति सङ्गच्छत इत्यलम्।

फलाश्रयत्वाभावादिति। फलतावच्छेदकसम्बन्धेनेति शेषः। एवं च फलतानवच्छेदकसम्बन्धेन फलाश्रयं गौणकर्म। फलतानवच्छेदकसम्बन्धश्च न यावान् ग्राह्यः। अपि तु संयोगसमवायविषयविषयिभावाद्न्यतम एव। अन्यथा कालिकादिसम्बन्धेन सर्वेषां फलाश्रयत्वात् स्थाल्यादेः कर्मतापत्तेः। पाचयत्यासावपि धनीयन्नौद्धत्याग स-

---

प्र० (१) एवमग्रेऽप्यूह्यमिति। अत्रायमूहः—अकथितसूत्रेऽकथितशब्दोऽसंकीर्तितपर्यायो नाप्रधानपर्यायः। एवं च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति सर्वसम्मतम्। तत्राद्योदाहरणं गां दोग्धि पय इत्यादि। द्वितीयोदाहरणं याचिपृच्छिभिक्षियोगे बलिं याचते वसुधामित्यादि॥ तत्र प्रथमस्योदाहरणेषु गोर्दोग्धि पयो, गां पयो दोग्धीत्यादि प्रयोगद्वैविध्यसम्भवेऽपि द्वितीयप्रकारोदाहरणेषु बलिं याचते वसुधामित्यादिषु न तादृशप्रयोगद्वैविध्यमिति। अत एवात्र कैयटेनोक्तम्—"असंकीर्तितपर्यायाकथितग्रहणे गां दोग्धि गोर्दोग्धि इति च। याचिपृच्छिभिक्षियोगे कर्मसंज्ञैवेत्येषा व्यवस्थेति"।

प्र० (२) परिगणनेति 'आख्यातोपयोगे' इति सूत्रोक्ते 'दुहियाचिरुधिप्रच्छिभिक्षिचिञामिति' इति परिगणने इत्यर्थः॥

प्र० (३) अर्थनिबन्धनेयं संज्ञेति चायुक्तमिति। अत एव 'आख्यातोपयोग' इति सूत्रस्थे पू-

दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासुजिकमयुक् ।
नीहृकृष्मन्थवहदण्डग्रहमुष्पचकर्मभाक् ॥ इति ।

अत्रेदं वक्तव्यम् । ग्रहेः पाठो निर्मूलः । 'जग्राह च्युतरुं शक्रम्', इत्युदाहरणमप्ययुक्तम् । इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं तथाऽपि संदर्भो-

---

शब्दरत्न ।

क्षीरेति । न च क्रियान्वयेऽपि शेषत्वविवक्षायां सेति वाच्यम् । षष्ठ्यन्तार्थकस्य स्वान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वयव्युत्पत्तेः । अत एव तण्डुलानामोदनं पचतीत्यादौ द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनं पाकेन निर्वर्त्तयतीत्युक्तं भाष्ये न तु पाकान्वये षष्ठीत्युक्तमिति दिक् । निर्मूल इति । अपादानत्वाद्यविवक्षायां तत्सम्बन्धिनः कर्मत्वे मूलं नास्तीति भावः । द्विकर्मकत्वं तु यदीष्टं तर्हि व्यापारद्वयार्थतया बोद्धव्यम् । उदाहरणमप्ययुक्तमिति । शक्रात् च्युतरुमग्राहेत्येव प्रतीतेः । पराक्रमातिशयद्योतनाय जहार च्युतरुमित्यस्यैवोचितत्वाच्चेति भावः । द्विकर्मकत्वमिति । अकथितसूत्रविषयतयेत्यर्थः । कैयटमाधवादिसंमतत्वादिति भावः । अतस्तद्रीत्यैव

ज्योत्स्ना

मवायोऽस्त्येवेति न दोषः ।

परिगणने इति । "आख्यातोपयोगे" इति सूत्रभाष्यपरिगणन इत्यर्थः । तत्र हि दुह्याचरुधिप्रच्छिभिक्षिचिञ्ब्रुविशुगसयः' इत्युक्तम् ।

अयुक्तमिति । अत एव "आख्यातोपयोगे" इति सूत्रे भाष्ये पूर्वोक्तपरिगणनरूपे याचेः पृथग् भिक्षिग्रहणं सङ्गच्छते । परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलव्यापारार्थस्य इदमवश्यं करोमीति प्रतिज्ञावाक्यप्रयोगजनकज्ञानविशेषरूप स्वीकारानुकूलव्यापारार्थत्वस्य चेत्युभयस्य याचेस्तत्र ग्रहणेन प्रथमार्थकयाचिग्रहणेनैव गतार्थत्वात् भिक्षिग्रहणस्य वैयर्थ्यापत्तेरिति दिक् ।

ननूक्तरीत्या द्विकर्मकत्वं साधितमेवेति कथं प्रकृत्या कृदुक्तोदाहरणस्यायुक्तत्वाभिधानमित्याकाङ्क्षायामाह—शक्रादिति । एतेन तादृशप्रयोगाभाव एवेति ध्वनितम् ।

इतरेषां द्विकर्मकत्वन्न व्यापारद्वयार्थत्वेनाभिहितमित्याशयेनाह—अकथितसूत्रेति ।

ननु भाष्यानुक्तत्वेनेतरेषां द्विकर्मकत्वकथनमप्रामाणिकमित्ययुक्तमित्याह—कैय-

---

र्वोक्तपरिगणनपरभाष्ये याचेः पृथग् भिक्षिग्रहणं सङ्गच्छते । अन्यथा परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलव्यापारार्थकस्य, (इदमवश्यं करोमीति प्रतिज्ञावाक्यप्रयोगजनकज्ञानविशेषरूप) स्वीकारानुकूलव्यापारार्थस्य नेत्युभयस्य याचेस्तत्र ग्रहणेन प्रथमार्थकयाचिग्रहणेनैव गतार्थत्वाद्भिक्षिग्रहणवैयर्थ्यापत्तिः स्यात् ।

शुद्धिः। तथा हि—दुह्यादीन् न्यादींश्च द्वैराश्येनेह पठित्वा भावकर्मप्रक्रियाशेषे लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वेत्याकाङ्क्षायां स्वयमेव पठितम्।

न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि॥ इति।

एवं च दण्डिमन्थिभ्यामपि मुख्ये स्यात्। तथा च 'गर्गाः शतं दण्ड्यन्ताम्' इति भाष्यं विरुद्ध्येत। शतं ह्यत्र प्रधानं न गर्गाः। अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात्। दण्डिनश्चेह ग्रहणार्थो न तु निग्रहार्थः। अत एव ह्यत्र समुदाये वाक्यसमाप्तिः। गुणानुरोधेन प्रधानावृत्तेरसम्भवात्। तथा मन्थेरपि प्रधाने स्यात्। इष्यते तु गौणे। तथा च भारविः—

"येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे"

इति। अत्रामृतं मुख्यम्। उद्देश्यत्वात्। अम्बुनिधिस्तु गौणः।

यदपि व्याख्यातार आहुः—द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति। तद्भ्रमात्। तथा हि—"कर्मवत्कर्मणा" (पा० सू० ३।१।८७) इति सूत्रे 'दुहिपच्योर्बहुलं सकर्मकयोः' (का० वा०) इति वार्तिके तद्भाष्ये च पचेर्द्विकर्मकता लभ्यते कैयटहरदत्ताभ्यां तत्रैव स्फुटीकृता। माधवोऽप्याह—जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेरित्यादि। उदाजहार च—तण्डुलानोदनं पचतीति।

---

शब्दरत्न

दूषणमाह—एवं चेत्यादिना। प्रधानमिति। उद्देश्यत्वादिति भावः। तस्योद्देश्यत्वे मानमाह—अर्थिनश्चेति। न तु निग्रहार्थ इति। शारीरदण्डाद्यर्थ इत्यर्थः। तस्मादेव वाक्यशेषादिति भावः। एतत्सर्वं माधवादिरीत्या लाद्युत्पत्तिनियामकम्। यदि प्रागुक्तं प्रधानकर्मत्वं तदेदं सर्वमसंगतमित्युक्तदिशोह्यम्।

द्विकर्मकेष्विति। अकथितसूत्रविषयेष्वित्यर्थः। पचेरप्रामाणिकत्वदूषणं कैयटाद्यनुरोधेनेति ध्वनयन्नाह—कैयटेति। अत्रारुचिबीजं तु पचेर्व्यापारद्वयार्थत्वे "कर्तुरीप्सिततमम्" (पा० सू० १।४।४९) इति कर्मणो वृक्षस्यैकव्यापारपरित्यागेन कर्तृत्वविवक्षयाऽपि भाष्यस्य सूपपादत्वेनैतत्सूत्रविषयत्वे न मानमिति।

ज्योत्स्ना।

ट माधवेत्यादीति। ननु ग्रहणार्थत्वेऽपि निग्रहार्थत्वं सिद्धमेवेत्याह—शारीरेति।

यत्तु "अकथितञ्च" ( पा० सू० १।४।५७ ) इति सूत्रे हरदत्तेनोक्तम्—अकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा पाणिना कांस्यपात्र्यां दोग्धि पय इत्यत्र पाणिकांस्यपात्र्योरपि स्यात् । करणाधिकरणयोस्तु पचत्यादिरवकाशः। न हि तत्रास्य प्रसङ्गो दुहादिपरिगणनादिति । तन्मतान्तराभिप्रायेण । अन्यथा उदाहृतस्वपरग्रन्थविरोधादित्यास्तां तावत् । शतं जयतीति । जि अभिभवे ।

यत्तु जि जय इति व्याख्यातम् । तन्न । तस्याकर्मकत्वात् । यद्यपि जयत्यादयो भाष्ये न पठितास्तथाऽपि चकारेण संगृह्यन्त इति कैयटः ।

अर्थनिबन्धनेति । न तु स्वरूपाश्रया । 'अहमपीदमचोद्यं चोद्य' इति तद्राजसूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः । तथा च भट्टिः—स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् । कालिदासोऽपि—शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव । भारविश्च—उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः । इति ।

एवं च नाथत्यादयो बहवो द्विकर्मका बोद्ध्याः । देश इति । कुरुपञ्चालादिरिव गृह्यते । तेनाधिशीङ्स्थासामित्यादेर्न वैयर्थ्यम् । गोदोह इति । न चेह कालत्वात्सिद्धिः । लोके कालत्वेन प्रसिद्धस्य मासादेरेव ग्रहणात् । तेन घटमास्ते इत्यादि न भवति ।

यत्तु प्राचोक्तम्—'अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो द्वितीया" इति केचित् । नदीमास्ते इत्यादि । अत्रेदं वक्तव्यम् । कर्मसञ्ज्ञाया अनु-

शब्दरत्न ।

तन्मतान्तरेति । पूर्वोपपादितभाष्यसंमतमतान्तरेत्यर्थः । भाष्यानुक्तानां ग्रहणमप्रमाणमित्यनेन सूचयति । उदाहृतस्वपरग्रन्थाश्च यथाश्रुतकैयटानुसारेणेति च ध्वनितमित्यन्यत्र विस्तरः। कैयट इति । अत्रारुचिबीजमुक्तम् ।

इति भाव इति । अर्थनिबन्धनेयं सञ्ज्ञेति वदतां कैयटादीनामित्यादिः । द्विकर्मकत्वं तु व्यापारद्वयार्थत्वेन सिद्धमिति तत्त्वम् । कुरुपाञ्चालादिरिति । व्याख्यानात्तथैव भाष्योदाहरणाच्चेति भावः । न वैयर्थ्यमिति । शीङादेरपि शयनपूर्वके व्यापने वृत्त्या कर्त्तुरित्येव कर्मत्वस्याऽऽस्यादियोग इव सिद्धत्वादिति भावः । एवं चैवं कल्पनयोक्तदेशादीनामेव कर्मत्वेनान्येषामनभिधानादिति,सूचयति । प्रसिद्धस्येति । क्रियायाः कालोपाधित्वमेव प्रसिद्धमिति भावः । तेनेति । देशादीनां ग्रहणेनेत्यर्थः ।

यत्तु मासादेरेव ग्रहणेनेत्यर्थं इति । तन्न । जन्यमात्रस्य कालोपाधित्वेऽपि कालत्वाभावात् । यदि तु जन्यमात्रस्य कालत्वमिति मतमस्ति तदा घटत्वादिना न तस्य

त्त्वात्कर्मणि लादयो न स्युः। आस्यते मास इति यथा। केचिदित्यप्य-सङ्गतम्। द्वितीयाया भाष्यसम्मतत्वात्। नदीमित्युदाहरणमप्यसंगतम्। ग्रामसमूहकुर्वादिरेव देशो न तु प्रदेशमात्रम्। तेन ग्रामं स्वपितीत्यत्र न भवतीत्याकरात्। अध्वेति च न्यूनम्। अध्वानं स्वपितीति प्रसङ्गात्। अत एवाकरे अध्वा गन्तव्यत्वेन विशेषितः। गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति व्याख्यातम्।

"गतिबुद्धि" ( पा० सू० १।४।५२ )॥ प्रत्यवसानं भक्षणम्। शब्द-कर्मकाणामिति। शब्दः कर्म कारकं येषां तेषामित्यर्थः। न त्विह "कर्तरि कर्मव्यतिहारे" ( पा० सू० १।३।१४ ) इतिवत् कर्मशब्दः क्रियापरः।

शब्दरत्न।

कालता किन्तु मासत्वादिनैवेति भावः। एतच्च नापूर्वं वचनमित्याकरे स्पष्टम्। अध्वानं स्वपितीति। स्वापमात्रार्थकोऽत्र स्वपितिः।

ज्योत्स्ना।

"गतिबुद्धिप्रत्यवसानार्थ" इति। अत्र प्राञ्चः—"आकडार" इति सूत्रे भाष्ये आकडारात् परं कार्यमिति पाठे गतिबुध्यत्वादीनां ण्यन्तानां कर्मकर्तृसंज्ञमपि प्राप्नोति। आरम्भ-सामर्थ्याच्च कर्मसंज्ञापरङ्कर्यत्वाच्च कर्तृसंज्ञाप्राप्नोतीत्युक्तम्। तत्रारम्भसामर्थ्यादित्युक्तिः गत्यादिसूत्रस्य विधायकत्वे एवोपपद्यते। नियामकत्वे तु पाचयत्योदनं देवदत्तेनेत्यादौ देवदत्तादेः कर्तुरीप्सिततमत्वेन प्राप्तकर्मसंज्ञाव्यावृत्तये गत्यादिसूत्रस्यावश्यकतया "कर्तुरीप्सित" इत्यस्य च हरिं भजतीत्यत्र चारितार्थ्येन कस्यापि वैयर्थ्याभावात् आरम्भसामर्थ्यादित्युक्तिरसङ्गता स्यात्। तस्मात् कर्मसंज्ञासूत्रस्थकर्तृपदस्य स्वतन्त्रोपलक्षकत्वेन कर्तृसंज्ञायाः कर्मसंज्ञोपजीव्यत्वाभावेऽपि परत्वान्तरङ्गत्वयोः सुवचत्वेन प्रयोज्यस्य परत्वान्तारङ्गत्वाच्च प्राप्तकर्तृसंज्ञाबाधनार्थं गत्यादिसूत्रमित्याहुः।

नव्यास्तु—एवं स्वीकारे "हेतुमतिच" इति सूत्रभाष्ये प्रयोजकव्यापारस्य णिज्वाच्यत्वे प्रयोजकव्यापारेण प्रयोज्यस्येप्सिततमत्वेन कर्मसंज्ञा प्राप्नोति। पाचयत्योदनं देवदत्तेनेत्याशङ्क्य "गतिबुद्धि" इतिसूत्रं नियमार्थं भविष्यति, एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति नान्येषामित्युक्तं नियामकत्वं न सङ्गच्छेत। अतः कर्तृसंज्ञायाः परत्वान्तरङ्गत्वयोरपि कर्मसंज्ञायाः प्रधानव्यापाराश्रितत्वात्। प्रधानाश्रितायाश्च नूलकेनोपदंशं भुङ्क्ते इत्यादौ तृतीयादीनामिव सर्वतो वक्तव्यत्वात् प्रयोज्ये सर्वत्र प्राप्तायां तस्यां "गतिबुद्धि" इति सूत्रं नियामकम्। णिजर्थव्यापारप्रयोज्यफलाश्रयस्य यदि कर्मत्वं तदा गत्यादीनामेव, इत्येतन्नियमारम्भसामर्थ्यादिति वार्थः। तेन पाचयत्यादियोगेन, आकडारसूत्रभाष्योक्तस्यारम्भसामर्थ्यादित्यस्यायमेव भावः। अविरो-

कृत्रिमे कार्यसंप्रत्ययात् कर्मग्रहणसामर्थ्याच्च । अन्यथा 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणाम्" इत्येवावक्ष्यत् । नियमार्थं चैतत्सूत्रमिति प्राञ्चः । णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्याद्यर्थानामेवकर्तुरिति । तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीया सिद्ध्यति । उक्तं च—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मताङ्गतः ।
नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाभिधीयते ॥ इति ।

कर्तुः स्वधर्मेण तृतीययेत्यर्थः । ननु णिजर्थं प्रति कर्मत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम् । अन्तरंगत्वाच्च । स्वकारकविशिष्टा हि क्रिया णिजर्थेन सम्बद्ध्यते । हेतुमति णिज्विधानात् । कर्तृप्रयोजकस्य हेतुत्वात् । अत एवोपजीव्या ऽपि कर्तृसञ्ज्ञा । एवं च ।

परत्वादन्तरङ्गात्वादुपजीव्यतया ऽपि च ।
प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता ॥ इति चेत् ।

अस्त्वेवम् । लक्ष्यस्य निर्बाधत्वात् । नियमसूत्रमिदमिति ग्रन्थानां का

---

शब्दरत्न ।

कार्यसम्प्रत्ययादिति । कार्यसम्प्रत्ययस्यौचित्यादित्यर्थः । ननु "कर्त्तरि कर्म" (पा० सू० १।३।१४) इति सूत्रे क्रियाया अपि कृतिकर्मत्वोक्तेरिदमसङ्गतमत आह—कर्मेति । प्राञ्च इति । "हेतुमति च" (पा० सू० ३।१।२६) इत्यत्र भाष्यकृत इत्यर्थः । गुणक्रियायाम्–णिच्प्रकृत्यर्थक्रियायाम् । स्वातन्त्र्यादित्यस्य स्वधर्मेणाभिधाने हेतुत्वं, कर्मसंज्ञानियमस्य च । प्रेषणे–ण्यर्थे । तृतीययेति । स्वधर्मेणेत्यस्य स्वकार्येणेत्यर्थः । विशिष्टक्रियायाः सम्बन्धे हेतुमाह—हेतुमतीति । अन्तरङ्गत्वादिति । एवं च परत्वादित्यस्युच्चयः । अस्य विधित्वमित्ययं पक्षः "आकडारा" (पा० सू० १।४।१) सूत्रे भाष्ये ध्वनित इत्यभिमानः । तत्र हि परं कार्यमिति पाठे गत्यादीनां ण्यन्तानां कर्मकर्तृसंज्ञामपि प्राप्नोति, आरम्भसामर्थ्यात्कर्मसञ्ज्ञा परंकार्यत्वाच्च कर्तृसञ्ज्ञा प्राप्नोतीत्युक्तम् । तत्रारम्भसामर्थ्यादित्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थं मन्यते ।

ज्योत्स्ना ।

धात् सर्वत्र संज्ञाद्वयप्रसक्तेः कर्तृसंज्ञाविशिष्टा कर्मसंज्ञा भवतिचेत् गत्यादीनामेवेति वा नियमः। परं कार्यमिति पाठे अविरोधात् संज्ञाद्वयप्रसङ्गे विधायकत्वस्य सर्वथा दुरुपपादत्वादित्याहुः ।

गतिरिति चेत्। शृणु। णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्याद् विप्रतिषेध एव नास्ति। अन्तरङ्गोपजीव्यत्वे अपि प्रधानं प्रति न प्राबल्यं प्रयोजयत इत्याशयेन ग्रन्थानामुक्तिसम्भवः। अर्थप्राधान्यपुरस्कारे तु विधायकत्वमेवोचितमिति ध्येयम्। शत्रूनिति।

शब्दरत्न।

पुरस्कारे त्विति। तुनाऽरुचिः सूचिता। प्रयोजकव्यापारेऽन्यानधीनत्वलक्षणार्थप्राधान्यस्य शाब्दप्राधान्यस्य च सत्त्वेनोद्देश्यत्वलक्षणार्थप्राधान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारो न युक्त इति। किं च कर्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रोपलक्षणं न तु तत्सञ्ज्ञकपरम्। अत उपजीव्यत्वं दुरुपपादम्। आकडारसूत्र(१)स्थस्यारम्भसामर्थ्यादित्यस्यैतन्नियमारम्भसामर्थ्यादित्यर्थः।

ज्योत्स्ना।

आकडारसूत्रस्थभाष्येति। तत्र सूत्रे 'आकडारादेकासंज्ञा' इत्येवं सूत्रमस्तु—प्राक्काडारात्परं कार्यमिति वा भाष्यम्। अत्र कैयटः एकासंज्ञा इत्यस्मिन् पाठे क्वचित् संज्ञासमावेशार्थो यत्नः कार्यः। परं कार्यमिति पाठे तु समावेशः सिद्ध्यति। अत्र हि पाठेऽयमर्थः। प्राक्कडारात् संज्ञाख्यं परं कार्यंभवतीति। संज्ञाप्रकरणाच्च संज्ञैव कार्यशब्देन विवक्षिता। तत्र यस्याः संज्ञायाः परस्याः पूर्वया बाधः प्राप्नोति। सा परा ऽनेन भाव्यते इति विध्यर्थमिदं सूत्रं भवति न नियमार्थम्। इदमेव परसंज्ञाविधानं ज्ञापकम्,

---

प्र० (१) आकडारसूत्रस्थस्येति—तत्र सूत्रे ह 'आकडारादेका संज्ञा' इत्येवं सूत्रमस्तु, अथवा 'प्राक्कडारात्परं कार्यमिति' इति भाष्यम्। अत्र कैयटः—एका संज्ञेत्यस्मिन् पाठे क्वचित्संज्ञासमावेशार्थो यत्नः कर्तव्यः। परं कार्यमिति पाठे तु समावेशः सिध्यति। अत्र हि पाठेऽयमर्थः—प्राक्कडारात्संज्ञाख्यं कार्यं परं भवतीति। संज्ञाप्रकरणाच्च संज्ञैवात्र कार्यशब्देन विवक्षिता। तत्र यस्याः संज्ञायाः परस्याः पूर्वया बाधः प्राप्नोति सा पराऽनेन भाव्यते इति विध्यर्थं सूत्रमिदं भवति, न नियमार्थम्। एतदेव च परसंज्ञाविधानं ज्ञापकम् 'अत्र प्रकरणे संज्ञानां बाध्यबाधकभावो ऽस्तीति'। तेन परयाऽनवकाशया सावकाशा पूर्वा बाध्यते। द्वयोश्च सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यते। विप्रतिषेधाभावे त्वर्थादेव समावेश इतीह वस्तुतत्त्वमिति।

तत्राद्यकल्पे 'अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः,कर्मधारयत्वे तत्पुरुषग्रहणम्'तत्पुरुषत्वे द्विगुच ग्रहणम्' 'गति दिवः कर्म हेतुमत्सु चग्रहणम्' 'गुरुलघुसंज्ञे' नदीघिसंज्ञे, परस्मैपदसंज्ञा पुरुषसंज्ञा' इति-दूषणान्युक्त्वा द्वितीयकल्पे दूषणमुक्तम्—परवचने सिति पदम्भम्। गतिबुद्ध्यादीनां ण्यन्तानां कर्मकर्तृसंज्ञम् इति वार्तिककृता। अत्र भाष्यम्—गतिबुद्ध्यादीनां ण्यन्तानाम्। कर्मकर्तृसंज्ञमपि प्राप्नोति। आरम्भसामर्थ्याच्च कर्मसंज्ञा परं कार्यत्वाच्च कर्मसंज्ञा प्राप्नोति नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न कर्मसंज्ञायां कर्तृसंज्ञा भवतीति। यदयं हृक्रोरन्यतरस्यामित्यन्यतरस्यां ग्रहणं करोतीति।

स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरित्यर्थः ।

शब्दरत्न ।

किं च परं कार्यमिति पाठे विरोधाभावात्सर्वत्र सञ्ज्ञाद्वयप्राप्तावस्य नियमार्थतैवोचिता । एषां कर्मसञ्ज्ञैवेति नियमस्तु न । 'प्राक् कडारात्' इति शास्त्रबाधापत्तेः । स्पष्टं चेदं तत्रैव कैयटे(१) ।

ज्योत्स्ना ।

अत्र प्रकरणे संज्ञानां बाध्यबाधकभावोऽस्तीति । तेन परया ऽनवकाशया सावकाशा पूर्वा बाध्यते । द्वयोः सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यते । विप्रतिषेधाभावे तु अर्थादेव समावेश इति वस्तुस्थितिः ।

तत्र आद्यपक्षे अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः । कर्मधारयत्वे तत्पुरुषग्रहणम् । तत्पुरुषत्वे द्विगुग्रहणं गतिर्दिवः कर्म हेतुमत्सु च ग्रहणम् । गुरुलघुसंज्ञे नदीघिसंज्ञे। परस्मैपदसंज्ञा पुरुषसंज्ञा इति दूषणान्युक्त्वा, द्वितीयकल्पे दूषणमभिहितम् । परवचने सिति पदम् भम् , गतिबुद्ध्यादीनां ण्यन्तानां कर्मकर्तृसंज्ञम् इति वार्तिककृता ।

अत्र भाष्यम्—'गतिबुद्ध्यादीनां ण्यन्तानां कर्मकर्तृसंज्ञमपि प्राप्नोति । आरम्भसामर्थ्याच्च कर्मसंज्ञा परं कार्यत्वाच्च कर्तृसंज्ञा प्राप्नोति । नैष दोषः आचार्यप्रवृत्तिर्ज्ञापयति न कर्मसंज्ञा कर्तृसंज्ञा भवतीति । यदयं "हृक्रोरन्यरस्याम्" इत्यन्तरस्यां ग्रहणं करोति' इति ।

तत्रैव कैयट इति । एकसंज्ञाधिकारे गत्यादिसूत्रं कर्मसंज्ञायां सिद्धायां नियमार्थम् । तथाहि- प्रयोज्यः स्वव्यापारे स्वतन्त्रः प्रयोजकव्यापारेण भाव्यते इति संज्ञाद्वयप्र-

---

प्र० (१) तत्रेव कैयटः—एकसंज्ञाधिकारे गत्यादिसूत्रं कर्मसंज्ञायां सिद्धायां नियमार्थम् । तथाहि प्रयोज्यः स्वव्यापारे स्वतन्त्रः प्रयोजकव्यापारेण चाप्यते इति संज्ञाद्वयप्रसङ्गे एकसंज्ञाधिकारादन्यतरया भाव्यम् । तत्र प्रत्ययार्थप्राधान्यात्तत्प्रयुक्तया कर्मसंज्ञया प्रवर्त्यम् । गुणप्रधानसन्निधौ प्रधानस्य प्रयोजकत्वे सम्भवति पृथग्गुणास्तद्विरुद्धकार्यं न प्रयुञ्जते। ततश्च सिद्धायां प्रयोज्यस्य कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्तानां कर्ता ण्यन्ते कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते । तेन पाचयत्योदनं देवदत्तेन यज्ञदत्त इति कर्मसंज्ञा न भवति । प्रधानप्रयुक्तकर्मसंज्ञाभावे च गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तते ।

यदा तु परंकार्यमिति पाठस्तदाऽविरोधात्सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वन्तरप्रयोज्यात्कर्मसंज्ञा व्यावर्त्यते । गत्यर्थादिप्रयोज्यस्य तु संज्ञाद्वयप्रसङ्ग इत्यर्थः ॥ अग्रे च 'यदयम्'इति भाष्यप्रतीकमादाय कैयटः—यदि तु गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं प्रावर्त्स्यत्तत्रैव सूत्रे हृक्रावकरिष्येतां, नाकरिष्यतान्यतरस्यां ग्रहणमित्यर्थ इति ।

नन्विह कथं स्वर्गस्य कर्मत्वं कर्तुरीप्सिततमं हि कर्म, न च शत्रवः कर्त्तारः। तेषां गत्यादि सूत्रेण कर्मत्वादिति चेत्। मैवम्। कर्मसञ्ज्ञायां हि कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम्। स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेव। तच्च प्रयोजकसंनिधानेऽपि प्रयोज्यस्यास्त्येव। न चोपलक्षणत्वे प्रमाणाभावः।

'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।

'अप्रधाने दुहादीनाम्—'

इत्युक्त्वा 'ण्यन्ते कर्तुश्च कर्मण' इति वदतो भाष्यकृत एव तत्र प्रमाणत्वात्। न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन ण्यन्ते कर्तुरिति वचनं सावकाशं स्यात्।

ननु स्वतन्त्रे सङ्केतितस्य तत्रैव लक्षणा कथमिति चेत्सञ्ज्ञान्तरानुपहिते संकेतितस्य तदुपहितसाधारणे स्वतन्त्रमात्रे सेत्यवधेहि।

---

शब्दरत्न।

नन्विहेति। तथायुक्तमित्यनेनापि न। तस्यानीप्सितत्वाभावात्। तत्रापि कर्तुरित्यनुवृत्तेश्च। लक्षणां विनेति। कर्तृपदस्य स्वतन्त्रे लक्षणां विनेत्यर्थः। अत एव सार्थाद्धीयते इत्यत्र कर्तुरपादानत्वेऽपि कर्मत्वप्रयुक्तलकारसिद्धिरिति सम्प्रदानसञ्ज्ञासूत्रे कैयटे स्पष्टम्। "तत्प्रयोजको हेतुः" (पा० सू० १।४।५५) इति सूत्रेऽप्येवमेवात एव णिच्सिद्धिः। अवधेहीति। किं च प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेनाक्षतं कर्मत्वम्। किं च णिजुत्पत्तेः प्रागेव स्वर्गादीनां कर्मत्वप्रवृत्तिस्तस्यामवस्थायां कर्तृत्वसत्त्वात्। 'अकृतव्यूहा' इति त्वनित्या। नास्त्येव वा।

ज्योत्स्ना।

सङ्गे एकसंज्ञाधिकारादन्यतरया भाव्यम्। तत्र प्रत्ययार्थप्राधान्यात् तत्प्रयुक्तया कर्मसंज्ञया प्रवर्त्यम्। गुणप्रधानसन्निधौ प्रधानस्य प्रयोजकत्वे सम्भवति पृथग्गुणास्तत्प्रयुक्तकार्यं न प्रयुञ्जते। ततश्च सिद्धायां प्रयोज्यस्य कर्मसंज्ञायाम् गत्यर्थादीनामेवाण्यन्तानां कर्ता ण्यन्ते कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते तेन पाचयत्योदनं देवदत्तेन इत्यादौ कर्मसंज्ञा न भवति। प्रधानप्रयुक्तकर्मसंज्ञाभावे च गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तते। यदा तु परं कार्यमिति पाठस्तदा विरोधाभावेन सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वर्थप्रयोज्यात्कर्मसंज्ञा व्यावर्त्यते। गत्यादिप्रयोज्यस्य तु संज्ञाद्वयप्रसङ्ग इत्यर्थः। अग्रे यद्यमितिभाष्यप्रतीकमुपादाय कैयटः। यदि तु गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं प्रावर्त्स्यत्, तत्रैव सूत्रे हृक्रोवकरिष्येताम्। नाकरिष्यतान्यतरस्यां ग्रहणमित्यर्थं इति।

नीवह्योरिति । यद्यप्यनयोः प्रापणमर्थो न गतिस्तथाऽपि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः । नियन्त्रिति । नियन्ता पशुप्रेरको न तु सारथिरेव । तेन वाहयति बलीवर्दान् यवान् इति सिद्ध्यति । अनिषेध इति । प्रयोज्यः कर्मेति वक्तव्यमिति फलितार्थः । सूत इति । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' । आदयतीति अकर्त्रभिप्राये फले "शेषात्कर्त्तरि" ( पा० सू० १।४।७८) इति परस्मैपदम् , कर्त्रभिप्राये तु "णिचश्च" (पा० सू० १।३।७४) इत्यात्मनेपदमेव । तदपवादस्य 'निगरणचलनार्थेभ्यश्च' इत्यस्य "अदेः प्रतिषेधः" ( का० वा ) इति निषिद्धत्वात् । सस्यमिति । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा द्रष्टव्या, तस्यामवस्थायां तेषां चेतनत्वात् । स्मारयतीति ।

यत्तु "णेरणौ" ( पा० सू० १।३।६७ ) इति सूत्रे स्मरयत्येनं वनगुल्मस्स्वयमेवेत्युदाह्रियते तत्र भाष्यप्रयोगादेव कर्मत्वं बोद्ध्यम् ।

---

शब्दरत्न ।

प्रापणमिति । उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारो हि तत् । तथाऽपीति । अत एव प्रतिषेधाद्यथाकथंचिद् गत्यर्थानामप्यत्र ग्रहणमिति भावः । प्राप्तिं मत्वेति । "न वा" ( पा० सू० १।१।४४ ) इति सूत्रे भाष्ये हृक्रोरित्यस्योभयत्र विभाषात्वमुक्त्वा प्राप्तेऽभ्यवहरतिमुदाहृत्याप्राप्ते हरति भारं देवदत्तो हारयति भारमित्युदाहरणात् । विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थं इति तत्रत्यकैयटाच्च । "न गति" ( पा० सू० १।३।१५ ) इति सूत्रभाष्ये "हृवह्योरप्रतिषेधः" (का० वा०) सम्प्रहरन्ते राजान इति हिंसार्थं एव भाष्ये उदाहरणाच्च । तत्रैव वहिन गत्यर्थः, देशान्तरप्रापणं हि वहेरर्थ इति भाष्येण प्रापणस्य गतित्वाभावबोधनाच्च न गत्यर्थत्वेन तेषां ग्रहणम् । प्राप्तिश्च सम्बन्धमात्रं न संयोग एव । सुखं प्राप्तो, धनं प्राप्तो भूःप्राप्तेत्यादिव्यवहारात् । आदिकर्मणि च कर्त्तरि क्तः । देशान्तरप्राप्तेः परं गतिं विनाऽनुपपत्त्या क्वचिन्नान्तरीयकतया गतिप्रतीतिरस्त्येव तादृशमपि गत्यर्थकत्वमभिमत्य वार्त्तिकारम्भः । वस्तुतोऽप्राप्तिरेवेति अनेन सूचितम् । हिंसेति । हिंसाङ्गे भक्षणे च भक्षयतेर्वृत्तिर्बोध्या । भाष्यप्रयोगादेवेति । आद्ध्यानार्थकघटादिभिन्नस्मरतेरेव योगे तद्भाष्यप्रामाण्यात्कर्मत्वाभावो घटादेस्तु भवत्येव कर्मत्वमिति भावः ।

ज्योत्स्ना ।

गतिरुत्तरदेशसंयोगानुकूलव्यापारमात्रम् , प्रापणन्तु तादृशव्यापारानुकूलव्यापारः इत्याह—उत्तरदेशेति ।

शब्दायतेरिति। शब्दं करोतीत्यर्थे "शब्दवैर" (पा० सू० ३।१।१७) इत्यादिना क्यङ्। ततो हेतुमण्णिच्। धात्वर्थेति। एतेन शब्दाययति सैनिको रिपूनिति कर्म प्रयुञ्जानाः परास्ताः।

यत्तु प्राचा अय, क्रन्द, शब्दाय, ह्वेञां नेत्युक्तम्। तत्रायतेरुक्तिस्तावन्निर्मूलैव। क्रन्दह्वेञोस्तु शब्दक्रियात्वमात्रेण प्राप्तिसम्भावना।

वस्तुतस्तु नासौ सूत्रार्थ इत्युक्तम्। यदपि "श्रुग्रह दृशाम्" इति कर्मत्वमुक्तम्। तत्र दृशिग्रहणं प्रामाणिकमेव। शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम्। ग्रहेस्तु द्विकर्मकत्वं यद्यपि सुधाकरादीनां सम्मतं तथाऽपि बहूनामसम्मतम्। अत एव 'अजिग्रहत्तं जनको धनुस्तत्' इति भट्टिप्रयोगमजिग्रहत् बोधितवानिति व्याचख्युः। तथा अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेत्यत्र ग्राहयितुमुद्ग्राह्यत्वेन बोधयितुमिति। युक्तं चैतत्। ग्राहेर्द्विकर्मकत्वे हि जायाप्रतिग्राहितगन्धमाल्यामित्यत्र क्तेन प्रयोज्याया धेनोरभिधानं स्यात्। ण्यन्ते कर्तुश्च कर्मण इत्युक्तेः। ततश्च जायया गन्धमाल्ये प्रतिग्राहितामिति स्यात्। सिद्धान्ते तु प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः। जायानिष्ठप्रेरणविषयीभूतं

---

शब्दरत्न।

परास्ता इति। इदं च कैयटानुरोधेनोक्तम्। वस्तुतः शब्दक्रियाणामिति पक्षे भाष्ये ह्वाययति, शब्दाययति, क्रन्दयतीनां निषेध उक्तो न तु शब्दकर्मकाणामिति पक्षे। एवं च तत्र पक्षे शब्दायतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम्। शब्दस्य धात्वर्थेन संगृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्माभावे न मानमिति बोद्धयम्। व्याचख्युरिति। तेन बोधनातिरिक्तार्थस्य न द्विकर्मकत्वम्। अन्यथाऽप्रसिद्धार्थपरिग्रहो व्यर्थ एव स्यादिति भावः। ग्राहेः—बोधनातिरिक्तार्थग्राहेः। ततश्चेति। एवं व्यधिकरणत्वादन्यपदार्थाभावाच्च बहुव्रीहिर्नस्यादिति भावः। प्रतिग्राहिते इति। अस्य जाययेत्यादिः। तत्र जायाप्रतिग्राहितशब्दयोस्तृतीयातत्पुरुषं कृत्वा बहुव्रीहिः कार्य इति भावः। बहुव्रीहिणा तृतीयातत्पुरुषस्तु दुर्लभो विधायकाभावात्। अवयवेन सामर्थ्येऽपि समुदायेन तृतीयान्तस्यासामर्थ्याच्च। तदाह—जायानिष्ठेति। ननु द्विकर्मकत्वेऽपि धेनुरूपप्रयोज्यकर्मणः कर्मत्व विवक्षायां गन्धमाल्यरूपकर्मण्येव क्ते इष्टसिद्धिरिति चेन्न। णिजुत्पत्त्यर्थं प्रयोजकजायाया हेतुत्वावश्यकत्वेन हेतोश्च कर्तृप्रयोजकरूपत्वेन प्रयोज्यायाः धेनोः कर्तृत्वार्थं तन्निष्ठप्रेरणविषयीभूतव्यापाराश्रयत्वविवक्षाया आवश्यकत्वेनेदृशार्थस्यैवैतत्कर्मसंज्ञानिमित्तकोटौ प्रवेशेनेदृशविषये कर्मत्वाविवक्षाया उपपादयितुमशक्यत्वात्। कर्मत्वशक्तेरपि तत्समनियतत्वेनाविवक्षाया असम्भव

गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्कर्त्रीमित्यर्थः । अन्यपदार्थान्तर्भावेणैव विशेषणविशेष्यभाववैपरीत्येनैवैकार्थीभावकल्पनात् । अभिवादिदृशोरिति । अभिवादयतेरप्राप्ते दृशेस्तु प्राप्ते विभाषेयम् ।

"अभिनि" ( पा० सू० १।४।४७ ) ॥ नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणं तादृशसमुदायविवक्षार्थमित्याह—संघातपूर्वकस्येति । तेनेह न । निविशते यदि शूकशिखा पदे इति । क्वचिन्नेति । 'एश्वर्येष्वभिनिविष्टानाम्' इति भाष्यप्रयोगश्चेह मानम् ।

उपपदविभक्तिमाह—उभसर्वतसोरित्यादिना । उभसर्वयोस्तसौ उभसर्वतसौ तदन्तयोर्योगे द्वितीया कार्येत्यर्थः ।

अत्र प्राञ्चः—उभशब्देनोभयशब्दो लक्ष्यते । अन्यथा तसोऽसम्भवादित्याहुः ।

वस्तुतस्तु वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु । धिगित्यविभक्तिको निर्देशो गवित्ययमाहेतिवदिति

शब्दरत्न ।

इत्यभिमानात् । न च निवृत्तप्रेषणप्रतिग्रहधातोर्णिजिति गन्धमाल्यकर्मण्येव क्ते इष्टसिद्धिर्जायापदेन षष्ठीसमास इति वाच्यम् । प्रकृत्यैव तदर्थलाभाण्णिजुपादानस्यापुष्टतापत्तेः । ननु गवादिपदानां विग्रहे स्वार्थमात्रपराणां समासेऽन्यपदार्थपरत्वमिव प्रतिग्राहितशब्दस्य धेनुपरत्वेऽपि वृत्तौ गन्धमाल्यपरत्वं भविष्यतीत्यत आह—अन्यपदार्थेति । तदन्तर्भावेणैकार्थीभावस्य सूत्रव्युत्पत्त्यादिबलेनाङ्गीकारेऽप्यन्यान्तर्भावेण तत्स्वीकारे मानाभाव इति भावः । अभिवादयतेरिति । वदि अभिवादन इति ण्यन्तस्येत्यर्थः ।

व्याख्यानात् सङ्घातग्रहणे स्थिते व्याख्याने बीजाभावं दर्शयति—पूर्वनिपातेति । निविशतइति । अत एव 'सत्त्वे निविशते' इति भाष्यप्रयोगः सङ्गच्छते । भाष्यप्रयोग इति समर्थसूत्रस्थ इति शेषः । उभसर्वयोस्तसाविति । उभांशे उभशब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थं इति बोद्धव्यम् । उभशब्दस्य शब्दपरत्वाद् वृत्तिविषयेऽपि नायच् वार्त्तिके । उदाहरणे तु अन्तरङ्गत्वात् पूर्वमेवायचि तत उभयशब्दान्तस्यापि तद्घटितसमुदायोद्देश्यकत्वमस्त्येवेति न दोषः । वृत्तिविषये इति । वृत्तौ कृतायामित्यर्थः । प्राचीनैर्हि "उभौ साभ्यासस्य" ( पा० सू० ८।४।२० ) इति निर्देशेन वृत्तिघटके परत एवायजिति व्याख्यातं तदाह—उभयशब्दादित्यादि । एवं च तेषां लक्षणाश्रयणं व्यर्थमिति भावः । अविभक्तिक इति । अनुत्पन्नविभक्तिक इति व्याख्यातारः। दृष्टा-

श्रावः। तन्न। तथा सति अपदान्ततया दृष्टान्ते "लोपः शाकल्यस्य" (पा० सू० ८।३।१९) इत्यस्येव दार्ष्टान्तिके जश्त्वस्यापि अप्रवृत्तिप्रसङ्गात्। न चायं गकारान्त एवेति भ्रमितव्यम्। "कस्य च दः" (पा० सू० ५।३।७२) इति सूत्रे धकिदित्युदाहरणस्यासङ्गतिप्रसंगात्। तस्माद् धिगिति विभक्त्यन्तमेव। प्रकृतिवदनुकरणमित्यतिदेशात्सुपो लुक्। उभयतः कृष्णमिति। कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। आद्यादित्वात्तसिः। षष्ठ्यर्थे द्वितीया। एवमुपपदविभक्तौ सर्वत्र बोध्यम्।

नाम्नो द्विधेव सम्बन्धः सर्ववाक्येष्ववस्थितः।
सामानाधिकरण्येन षष्ठ्या वाऽपि क्वचिद्भवेत्॥

एति वृद्धोक्तौ षष्ठीग्रहणं तदपवादविभक्तेरप्युपलक्षणम्। द्विधेत्युक्तिः सामानाधिकरण्यवैयधिकरण्याभ्यां निर्वाह्या। षष्ठीतदपवादयोरेककोटितया वा। धिक् कृष्णाभक्तमिति। तस्य निन्द्यतेत्यर्थः। कथं धिङ् मूर्खेति सम्बोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाभावात्। क्रियापदञ्च क्वचिच्छ्रुतं क्वचिदाक्षिप्तमित्यन्यदेतत्। तथा च मूर्खसम्बोध्यकं निषिद्धाचर-

शब्दरत्न।

न्तबलेन तथैव लाभादित्यभिप्रेत्याह—जश्त्वस्येति। अतिदेशादिति। अतिदेशेनाव्ययत्वादित्यर्थः। आद्यादित्वादिति। कृष्णसम्बन्धिपार्श्वद्वयाभ्यामागता इत्यर्थे पञ्चम्यास्तसिलित्यन्ये। सामानाधिकरण्येन विनाऽपि सम्बन्धं विशेष्यविशेषणभावेन। षष्ठ्येति। भेदसम्बन्धपूर्वकविशेष्यविशेषणभावेनेत्यर्थः। नाम्नोरित्यनेन क्रियाकारकयोः क्रियाकारकभावरूपकारकविभक्त्यर्थसम्बन्धेनान्वय इति सूचितम्। वैयधिकरण्येति। षष्ठ्या वेत्येतद्वैयधिकरण्योपलक्षणमिति भावः। क्रियान्वय इति। बोधनीयक्रियान्वय इत्यर्थः। धिक्शब्दयोगाभावादिति। सम्बोधनस्य क्रियान्वयात् क्रिययैव धिको योगो न तेनापीति

ज्योत्स्ना।

ननु नाम्नोरेव द्विधाभिसम्बन्धाभिधानमसंगतम्। क्रिययोरपि द्विधा सम्बन्धस्य दर्शनात्। एधाञ्चक्रे इत्यादौ पुरीमवस्कन्द इत्यादौ चाभेदस्य, कृष्णं नमेच्चेत् सुखं यायादित्यादौ भेदसम्बन्धावच्छिन्नविशेष्यविशेषणभावस्य प्रतीतेरत आह—नाम्नोरित्यनेनेति।

ननु सम्बोधनपदार्थस्य क्रियायामन्वयस्य पूर्वं प्रतिपादितत्वेन तिङ्समानाधिकरणे प्रथमेति वार्तिकैकवाक्यतया प्रथमायाः कारकविभक्तित्वस्य सत्वाच्च तन्मन्द-

णादि निन्द्यत इति वाक्यार्थः । एतेन हा तात हा देवि धीरा भवेत्यादि व्याख्यातम् ।

यत्त्वाहुः—'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति सम्बोधने प्रथमैव भवति; सम्बोधनपदस्य कर्तृकारकवाचित्वादिति । तन्मन्दम् । सम्बोधनपदस्य कर्तृकारकत्वे उक्तिसम्भवाभावात् । देव प्रसीदेत्यादौ वस्तुगत्या देव एव कर्तेति चेत् नैतावता कारकविभक्तित्वं लभ्यते । किं च देव त्वां भजे त्वां भजन्तीत्यादौ सम्बोध्यस्य वास्तवमपि न कर्तृत्वमित्यास्तां तावत् । उपर्युपरीति । कथं तर्हि 'उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः' । उच्यते—उपरिबुद्धिनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः । एवं च आम्रेडितत्वाभावान्न द्वितीया ।

यद्वा प्रतिपदोक्तस्योपर्यध्यधसः सामीप्य इति कृतद्वित्वस्यात्र ग्रहणम् । तेन वीप्सायां द्विर्वचने सति नास्य प्रवृत्तिः । अन्यत्रापि दृश्यत इत्युक्तं तद्दर्शयति—अभितः परित इति । प्रतिभातीति । एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः । न तु कर्मप्रवचनीयः ।

शब्दरत्न ।

भावः । व्याख्यातमिति । तातेत्यादेर्हाशब्देन (१)न योग इति भावः । हापदस्य चाध्याहृतत्वमित्यनेन वाऽन्वय इति तात्पर्यम् ।

कारकविभक्तित्वमिति । कर्तृकारकविभक्तित्वमित्यर्थः । सम्बोधनपदार्थस्य देवस्य त्वमित्यनेन सहाभेदेऽपि (२)शब्दतः क्रियाश्रयत्वादिप्रतीतेरुपपादनस्याशक्यतया कर्तृत्वं दुर्लभम् । वास्तवक्रियाश्रयत्वमादाय कर्तृत्वे तु बहूपप्लव इति भावः ।

नास्य प्रवृत्तिरिति । अत एव 'सर्वेषामयमम्लानामुपर्युपरि वर्त्तत' इत्यादौ न द्वितीया । अत्र ह्युपर्युपरीत्यस्यातिशयोऽर्थो न सामीप्यम् । वीप्साद्विर्वचनं चात्रेति बोध्यम् । उपसर्ग इति । बुभुक्षितान्वितप्रत्यर्थसम्बन्धस्य क्रियागतत्वात् बुभुक्षितस्य न

ज्योत्स्ना ।

मित्यादिना प्रतिपादितमसङ्गतमत आह— कर्तृकारकेति ।

ननु यदि कारकत्वं तर्हि कर्तृत्वमप्यस्तु इत्याह—सम्बोधनपदार्थस्येति ।

---

वि० (१) 'हा तात, हा देवि, धीरा भव' इत्यत्र तात इत्यादेर्न हाशब्देनान्वयः । किन्तु जानीहीत्येतदर्थं तातेत्यस्येति भावः ॥

वि० (२) सम्बोधनपदार्थे इत्यादिः । उद्देश्यतयैव तस्य तत्रान्वयस्य स्वीकारादिति भावः ॥

अन्तरा त्वां मामिति । तव मम च मध्ये इत्यर्थः । सामर्थ्यादिति । अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियत इति भावः।

नदीमन्विति । द्वितीयायाः सम्बन्धोऽर्थः । स चेह (१)साहित्यरूप इत्यनुना द्योत्यते ।

"लक्षणेत्थम्" ( पा० सू० १।४।९० )। वृक्षं प्रतीति । वृक्षसम्बन्धि द्योतनमर्थः । सम्बन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति । भक्तो विष्णं प्रतीति । विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः । लक्ष्मीरिति । लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः । वृक्षं वृक्षमिति । (२)इह वीप्सा द्विर्वचनेनैव द्योत्यते। परिशब्दस्तु क्रियया सम्बध्यते। कर्मणि

शब्दरत्न ।

भातीत्यन्वय इति भावः । मध्य इति । अन्तरा इति हि मध्ये इत्यर्थकम् ।

लक्ष्यलक्षणेति । वृक्षप्रकाशेन विद्युद्विद्योतज्ञानात् वृक्षो लक्षणं विद्युद्विद्योतनं लक्ष्यम् । कर्मणीति । वृक्षपदार्थस्य सेचनं प्रति कर्मत्वात् । अत एव वृक्षस्य प्र-

ज्योत्स्ना ।

साहित्यरूप इति । अत्र हि "तृतीयार्थे"इत्यनेन तृतीयापदेन सन्निधानात् "सह युक्तेऽप्रधाने" इति सूत्रोपात्ततृतीयानिमित्तभूतः सहशब्दो लक्ष्यते । तदर्थः साहित्यं समानकालिकक्रियागुणकत्वरूपम् । तदेवात्र कर्मप्रवचनीयसंज्ञानिमित्तम् । न तु सहशब्दार्थभूतम् । सादृश्यादिकमपि तन्निमित्तम् । एतदर्थमेव सहार्थे इत्यनुक्त्वा "तृतीयार्थे" इति सूत्रितम् । तृतीयानिमित्तभूतसाहित्यमेव यथा लभ्येतेति ।

इह वीप्सेति। अत्रेदं बोध्यम्—पर्यादिशब्दानां स्वातन्त्र्येण वीप्सावाचकत्वे "अव्ययं

---

प्र० ( १ ) साहित्यरूप इति । अत्र हि 'तृतीयार्थे' इत्यत्रत्येन तृतीयापदेन सन्निधानात् "सहयुक्तेऽप्रधान" इति सूत्रोपात्ततृतीयानिमित्तभूतः सहशब्दो लक्ष्यते। तदर्थः साहित्यं समानकालिकक्रियागुणकत्वरूपम्। तदेवात्र कर्मप्रवचनीयसंज्ञानिमित्तं नतु सहशब्दार्थभूतं सादृश्यादिकमपि तन्निमित्तम् । एतदर्थमेव सहार्थे इत्यनुक्त्वा तृतीयार्थे इति सूत्रितम्। तृतीयानिमित्तभूतसाहित्यमेव यथा लभ्येतेति ।

प्र० ( २ ) अत्रायम्भावः, पर्यादिशब्दानां स्वातन्त्र्येण वीप्सावाचकत्वे 'अव्ययं विभक्ति' इत्यनेन वीप्सारूपयथार्थवाचकत्वान्नित्यसमासापत्तिः। वीप्साद्योतकत्वपक्षे तु द्वित्वसत्वे एव पर्यादेर्वीप्साद्योतकत्वज्ञानाद्द्वित्वाभावे वृक्षं परि सिञ्चतीत्यादौ तदज्ञानाद्द्वित्वमेव मुख्यं वीप्साद्योतकमिति न पर्यादेस्तद्द्योतकत्वाङ्गीकारे मानमित्याशयेनाह—इह वीप्सा द्विर्वचनेनैव द्योत्यते परिशब्दस्तु क्रियया सम्बध्यते इति। एतदर्थमेव लक्षणादयो विषयतयोपात्ता इति व्याख्यातमाकरे इति

द्वितीया । कर्मप्रवचनीयसञ्ज्ञया बाधात् षत्वं न । एतदर्थमेव लक्षणादयो विषयतयोपात्ता इति व्याख्यातमाकरे । "पञ्चम्यपाङ्परिभिः" ( पा० सू० २।३।१० ) इति तु न भवति । वर्जनार्थेनापेत्यनेन साहचर्यात् ।

शब्दरत्न ।

तिसेचनमित्यादौ षष्ठीति भावः । विषयतयेति । अन्यद्योत्याया अपि वीप्सायाः सञ्ज्ञां प्रति निमित्तत्वादिति भावः । इतरे लक्षणादयस्तु द्योत्या एवेति बोद्धयम् ।

इति तु न भवतीति । विशिष्टक्रियासम्बन्धे विशेषणेनापि सम्बन्धात्प्राप्तिरिति भावः ।

ज्योत्स्ना ।

विभक्ति"इतिसूत्रेण वीप्सारूपयथार्थवाचकत्वान्नित्यसमासापत्तिः वीप्साद्योतकत्वपक्षे तु द्वित्वसत्वे एव पर्यादेर्द्योतकत्वज्ञानात् द्वित्वाभावे वृक्षं परिसिंचति तदज्ञानात् द्वित्वमेव मुख्यं वीप्साद्योतकमिति न पर्यादेस्तत् द्योतकत्वाङ्गीकारे मानमित्याशयेनाह- 'इह वीप्सा द्विर्वचनेनैव द्योत्यते परिशब्दस्तु क्रियया परिसमाप्यते' इति । एतदर्थमेव लक्षणादयो विषयतया उपात्ता इति व्याख्यातमाकरे इति च । एवञ्च वीप्सायां द्वित्वसत्वे एव पर्यादेः कर्मप्रवचनीयसंज्ञाप्रसङ्गः । वीप्सा च व्यापकत्वबोधनेन च । तन्निमित्तं च द्वित्वं "नित्यवीप्सयोः"इत्यनेन पदसंज्ञके एव प्रवर्तते । तच्च पदं द्विरुच्चारणीयत्वेन,विवक्षितनिष्ठपदसंज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यताशाल्यर्थवाचकं गृह्यते । अत एव कर्मत्वसम्बन्धावच्छिन्नव्यापकत्वविवक्षया वृक्षो वृक्षः सिञ्चतीति न प्रयोगः । सुप्रत्ययस्य कर्मार्थकत्वाभावात् । वृक्षो वृक्षः सिच्यते इत्यत्र तु सुप्रत्ययेन तिङोक्तकर्मत्वशक्तिरनुद्भूतरूपेण गृह्यत इतिकर्मत्वसम्बन्धावच्छिन्नव्यापकत्वविवक्षया द्वित्वं भवत्येव । एवञ्च यत्किञ्चिदर्थे विभक्त्युत्पत्त्यन्तरमेव पदसंज्ञायां कृतायां वीप्सायां द्वित्वे च कृते वीप्सायां विषयभूतायां पर्यादेः कर्मप्रवचनीयसंज्ञाप्राप्तिसत्वेन नात्र द्वितीयोत्पत्तिः संज्ञाफलम् । किन्तूपसर्गादिसंज्ञाबाध एवेति ।

---

च । एवं च वीप्सायां द्वित्वसत्त्वे एव पर्यादेः कर्मप्रवचनीयसंज्ञाप्रसङ्गः । वीप्सा च व्यापकत्वबोधनेच्छा । तन्निमित्तं द्वित्वं "नित्यवीप्सयोः"इत्यनेन पदसंज्ञके एव प्रवर्तते । तच्च पदं द्विरुच्चारणीयत्वेन विवक्षितनिष्ठपदसंज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यताशाल्यर्थवाचकं गृह्यते । अत एव कर्मत्वसम्बन्धावच्छिन्नव्यापकत्वविवक्षया वृक्षो वृक्षः सिञ्चतीति न प्रयोगः । सुप्रत्ययस्य कर्मत्वार्थकत्वाभावात् । वृक्षो वृक्षः सिच्यते इत्यत्र तु सुप्रत्ययेन तिङोक्तकर्मत्वशक्तिरनुद्भूतरूपेणोच्यते इति कर्मत्वसम्बन्धावच्छिन्नव्यापकत्वविवक्षया द्वित्वं भवत्येव । एवं च यत्किञ्चिदर्थे विभक्त्युत्पत्त्यनन्तरमेव पदसंज्ञायां कृतायां वीप्सायां द्वित्वे च कृते वीप्सायां विषयभूतायां पर्यादेः कर्मप्रवचनीयसंज्ञाप्राप्तिसंभवेन नात्र द्वितीयोत्पत्तिः संज्ञाफलम्; किं तूपसर्गादिसंज्ञाबाध एवेति ।

ममाभिष्यादिति । मम भागः स्यादित्यर्थः । मामभिष्यादित्यपि प्राञ्चः प्रत्युदाहरन्ति । तत्र मां प्राप्नुयादित्यर्थः । उपसर्गवशेन अस्तेः सकर्मकत्वान्मामिति द्वितीया । अत्र च मम भाग इत्यर्थतः पर्यवसानात् । 'अभागे' इति कर्मप्रवचनीयत्वे निषिद्धे "उपसर्गप्रादुर्भ्याम्" (पा०सू० ८।३।८७) इति षत्वम् । पूजायां चेति । "सुः पूजायाम्" (पा०सू० १।४।९४) इति पूर्वसूत्रात् पूजाग्रहणमनुकृष्यते ।

"कालाध्वनोः" ( पा०सू० २।३।५ ) ॥ अन्तं विराममतिक्रान्तोऽत्य-

---

शब्दरत्न ।

एतत्सर्वं (१)हरदत्तानुरोधेन।(२)कर्मत्वाविवक्षायामपि द्वितीयार्थं सञ्ज्ञाया आवश्यकत्वात् ।

किं च परैः क्रियाविशेषकत्वेऽन्वर्थत्वेन कर्मप्रवचनीयत्वस्यैवानापत्तिरित्यन्यत्र विस्तरः ।

नन्वत्रार्थं भागाप्रतीत्या कथं निषेधोऽत आह–अत्र चेति । अर्थतो भागे पर्यवसानमादाय निषेधप्रवृत्तिरिति भावः ।

कालाध्वेति । येन कालेनाध्वना वाऽत्यन्तसंयोगस्तद्वृत्तिभ्यामित्यर्थः ।

ज्योत्स्ना ।

कर्मत्वाविवक्षायामपि द्वितीयार्थमिति । वस्तुतो नेदं सङ्घटत इत्युक्तमेव । अपि च तथात्वाङ्गीकारे वृक्षो वृक्षः प्रतिसिच्यते इत्यादावपि प्रातिपदिकार्थे प्रथमां बाधित्वा द्वितीयापत्तिः, कर्मणः शेषत्वविवक्षायां वृक्षस्य वृक्षस्य परिसिंचतीत्यादौ षष्ठीश्रवणानापत्तिरित्याद्यूहनीयम् ।

न च सम्प्रति क्रियाविशेषकत्वे अन्वर्थकर्मप्रवचनीयसंज्ञानापत्तिरितिवाच्यम् । पूर्वकालिकक्रियाविशेषकत्वमात्रस्यान्वर्थबललभ्यत्वेन सम्प्रतिक्रियाविशेषकत्वालाभात्संज्ञाप्राप्तौ बाधकाभावात् ।

---

वि० ( १ ) "उपपदविभक्तेः" इति न्यायेनात्र कर्मण्येव द्वितीया; पर्यादयस्तु क्रियाविशेषका एवेति हि तेनोक्तम् ।

प्र० ( २ ) कर्मत्वाविवक्षायामपि द्वितीयार्थमिति । वस्तुतो नेदं संघटते इत्युक्तमेव । अपि च तथात्वाङ्गीकारे वृक्षो वृक्षः प्रतिसिच्यत इत्यादावपि प्रातिपदिकार्थे प्रथमां बाधित्वा द्वितीयापत्तिः। कर्मणः शेषत्वाविवक्षायां वृक्षस्य वृक्षस्य परिसिञ्चतीत्यादौ षष्ठीश्रवणानापत्तिश्च स्यादिति ऊहनीयम्।

नच संप्रति क्रियाविशेषकत्वे अन्वर्थकर्मप्रवचीयसंज्ञानापत्तिरिति वाच्यम् । पूर्वकालिकक्रियाविशेषकत्वमात्रस्यान्वर्थबललभ्यत्वेन सम्प्रति क्रियाविशेषाद्योतकत्वस्य तेनालाभात्संज्ञाप्राप्तौ बाधकाभावात् ।

न्तः स चासौ संयोगो निरन्तरसन्निकर्ष इत्यर्थः । द्वितीया स्यादिति । श्रुतत्वात् कालाध्ववृत्तिभ्यामेव । मासस्येति । "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" (पा० सू० २।३।६४ ) इति षष्ठीत्याहुः । तन्न । तत्र शेषग्रहणानुवृत्त्या द्विरह्नो भोजनमिति कृदन्तेन सह समासाप्रवृत्तेरेव फलत्वात् । तस्मादिह "षष्ठी शेषे" ( पा० सू० २।३।५०) इति सूत्रेणैव षष्ठीति तत्त्वम् ॥

इति द्वितीया ॥

"स्वतन्त्रः कर्ता" ( पा०सू० १।४।५४ ) प्रधानीभूतधात्वर्थं प्रति आश्रयत्वं स्वातन्त्र्यम् ।

आह च—

धातुनोक्तक्रिये नित्यङ्कारके कर्तृतेष्यत ॥ इति ।

---

शब्दरत्न ।

तस्मादिति । अन्तरङ्गत्वाच्चेत्यपि बोद्धयम् । एतेन शेषग्रहणाननुवृत्तौ तेनैवेति परास्तम् ॥

इति द्वितीया ॥

प्रधानीभूतेति । प्राधान्यं च कर्तृप्रत्ययसमभिव्याहारे(१) धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वम् । धातुनोक्तक्रिये कारके नित्यं कर्तृतेष्यते इत्यन्वयः ।

ज्योत्स्ना ।

परास्तमिति । अल्पापेक्षकत्वमन्तरङ्गत्वं सत्त्वम्मतमिति तद्रीत्यैव तदुक्तं परास्तम् । यदि तु—तादृशान्तरङ्गबहिरङ्गभावो न सिद्धान्तिसम्मत इत्युच्यते, तदा तु तेनैव द्वितीयेति हृदयम् ।

इति द्वितीयाकारकप्रकरणम् ।

कर्तृप्रत्ययसमभिव्याहर इति । कर्तृप्रत्ययसमभिव्याहारे इत्यनुपादाने देवदत्तेनौदनः

---

प्र० ( १ ) कर्तृप्रत्ययसमभिव्याहारे इत्यस्यानुपादाने देवदत्तेनौदनः पच्यत इत्यादौ फलमुख्यविशेष्यकशाब्दबोधाङ्गीकारेण देवदत्तवृत्तिधात्वर्थव्यापारेऽव्याप्त्यापत्तिरतस्तवारणाय तदुपादानम् । नचैवं देवदत्तो यज्ञदत्तेन पाचयतीत्यत्र पचधातोरेव विक्लित्यनुकूलव्यापारानुकूलव्यापारवाचकत्वेन प्रयोज्यव्यापारस्य प्रधान्यानापत्तिरिति वाच्यम्। तत्र णिचोऽपि वाचकत्वाङ्गीकारेण पचधातोर्विक्लित्त्यनुकूलव्यापारमात्रवाचकत्वेन प्रयोज्यवृत्तिव्यापारस्य प्राधान्येन पचनिरूपितकर्तृत्वस्य प्रयोज्ये सुलभत्वात् । प्रयोजकस्य तु पचिधातुनिरूपितं तदिति न दोषः । नचैवं प्राधान्यलक्षणे कर्तुः प्रविष्टत्वात्कर्तृलक्षणे च प्राधान्यज्ञानस्यापेक्षितत्वादन्योन्याश्रय इति वाच्यम् । तृच्प्रत्ययसमभिव्याहारे इतिनिवेशेन दोषाभावादिति दिक् ॥

"साधकतमं करणम्" (पा०सू० १।३।४२)॥ प्रकृष्टेति। यद्व्यापारादनन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टम्। उक्तं च—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥ इति।

विवक्ष्यत इत्यनेन स्थाल्यादीनामपि वैवक्षिककरणत्वमस्तीति ध्वनयति। आह च—

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ इति।

शब्दरत्न।

यद्व्यापारादिति। अनन्तरशब्दयोगे "दूरान्तिकार्थे" (पा० सू० २।३।३४) इति सूत्रेण पञ्चमी। यत्र येषां कारकाणां मध्ये इत्यर्थः। वस्तुत इति। वस्तुनीत्यर्थः। सार्वविभक्तिकस्तसिः। तत्कर्तृत्वादिकमनिर्देश्यम्। इदं वस्तु कर्त्रेवेत्यादिक्रमेण न निर्देश्यमित्यर्थः। हि यतो वस्तु तत्तद्रूपेण न व्यवस्थितम्। तामेवाव्यवस्थां दर्शयति—स्थाल्येत्यादि।

ज्योत्स्ना।

पच्यते इत्यादौ फलमुख्यविशेष्यकशाब्दबोधाङ्गीकारेण देवदत्तवृत्तिधात्वर्थव्यापारेऽव्याप्तव्याप्तिस्तद्वारणाय तदुपादानम्।

नच देवदत्तेन यज्ञदत्तः पाचयतीत्यादौ यत्र धातोरेव विक्लित्यनुकूलव्यापारानुकूलव्यापारवाचकत्वेन प्रयोज्यव्यापारस्य प्राधान्यानापत्तिरितिवाच्यम्। तत्र णिचोऽपि प्राधान्यावाचकत्वाङ्गीकारेण पच्धातोर्विक्लित्यनुकूलव्यापारमात्रवाचकत्वेन प्रयोज्यवृत्तिव्यापारस्य प्राधान्येन पचनिरूपितकर्तृत्वप्रयोज्ये सुलभत्वात्। प्रयोजकस्य पचिधातुनिरूपितं तदिति न दोषः। न चैवं प्राधान्यलक्षणे कर्तुः प्रविष्टत्वात् कर्तृलक्षणे च प्राधान्यज्ञानस्यापेक्षितत्वादन्योन्याश्रय इति वाच्यम्। तृच्प्रत्ययसमभिव्याहारे इति निवेशेनादोषादिति दिक्।

कप्रत्ययसमभिव्याहारे स्वजन्यबोधीयमुख्यविशेष्यताश्रयोऽर्थः, तदाश्रयत्वसम्बन्धेन धातुविशिष्टः कर्तेति विशेष्यतायां मुख्यत्वञ्च। स्वप्रयोजकप्रयोज्यविशेष्यतानिरूपितप्रकारताऽसामानाधिकरण्यम्।

नन्वेवं चैत्रेण तण्डुलं पाचयति मैत्रः इत्यादौ णिचो द्योतकत्वेन विक्लित्यनुकूलव्यापारस्य पच्धातुवाच्यतया प्रयोज्यव्यापारस्य मुख्यविशेष्यताश्रयत्वरूपप्रधानत्वाभावेन तदाश्रयस्य कर्तृत्वानापत्तिरिति चेन्न। विक्लित्यनुकूलव्यापारवाचकपच्निरूपितं कर्तृत्वं प्रयोज्यकर्तरि सुलभम्, पाचिनिरूपितं कर्तृत्वं च प्रयोजके सुलभ-

अयं भावः—कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कं च वस्तुविशेषे विशेषण-विशेष्यभाववन्न व्यवतिष्ठते । न हि गौस्सर्वं प्रति गौरेव न तु किं चित्प्रत्यगौ-रितिवद् विशेषणं विशेषणमेवेति सुवचम् । तथा च कयाचिद् धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने प्रकृतव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता । व्यापारव्यधिकरणफलाश्रयः कर्म । कर्तृकर्मद्वारकसम्बन्धेना-श्रयोऽधिकरणम् । पच्यर्थो व्यापारश्चानेकधा । एवं च पचेरधिश्रयणतण्डु-लावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्त्ता । ज्वलनतात्पर्यकत्वे एधाः कर्त्तारः । तण्डुलधारणादिपरत्वे स्थाली कर्त्री । अवयवविभागादिपर-त्वे तण्डुलाः कर्तारः । स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयापि स्थाली करणमेव न तु कर्त्री। देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात् । तथा आदिखा-दिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता । तस्मिन्नेवार्थे भक्षयतिनोपात्ते कर्म । अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे आधारः कर्म, केवलैरुपात्ते अधिकरणमित्यादि । एतेन ज्ञानस्य स्वप्रकाशकत्वे कर्तृकर्मविरोध इत्यादि परास्तम् । शब्दविशेषो-पाधिकस्य कर्तृत्वादेः प्रत्यक्षादौ उक्तिसम्भवाभावात् ।

---

शब्दरत्न ।

कारकत्वमिति । विशेषणत्वादि यथा खञ्जकुब्जादावव्यवस्थितमेवं कारकत्वं तद्व्याप्यमधिकरणत्वादिकं चेत्यर्थः । तण्डुलानोदनं पचतीत्यत्र कारकस्यापि तण्डुलस्य तण्डुलानामोदनं पचतीत्यादावोदनपदार्थान्वयेन षष्ठ्यन्तत्तदर्शनात्कार-कत्वस्य व्यभिचारो द्रष्टव्यः । प्रकृतव्यक्त्युपात्तेति । प्रकृतधातुव्यक्तीत्यर्थः । अनेकधा-त्वमेव दर्शयति–एवं च पचेरिति । तण्डुलधारणादिपरत्वे इति । आदिना आपाकसमासिधा-रणम् । अवयवविभागादीति । आदिना रोटिकाद्यवयवमेलनम् । तण्डुलाः कर्तार इति । क-र्मकर्तरीत्यर्थः । सम्प्रदानापादानयोस्तु न कर्तृत्वविवक्षा शब्दशक्तिस्वाभाव्यात्तद्व्या-पारे धातोरवृत्तेरिति बोद्धयम् । उपात्ते–उक्ते इत्यर्थः । स्वप्रकाशकत्वे । ज्ञानविषयत्वे । कर्तृकर्मविरोध इति । अभेदे आधाराधेयभावस्य विषयविषयिभावस्य चाभावादिति भावः । शब्दविशेषोपाधिकस्य–शब्दविशेषनिमित्तस्य । कर्तृकर्मशब्दयोराश्रयविषयोप-

ज्योत्स्ना ।

मितिकल्पनेन दोषाभाव इत्याशयात् ।

न च करणतृतीयया निर्वाहः, काष्ठादेः करणत्वविवक्षायां देवदत्तादेः तदविवक्षाया-मपि । कर्तृत्वप्रयुक्ततृतीयार्थः । देवदत्तः शतेन बन्धयतीत्यादौ शतपदात् "अकर्तर्युणे पञ्चमी" पञ्चमीनिषेधार्थञ्च कर्तृत्वस्यावश्यकत्वादिति दिक् ।

एतेन परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वं चेत् अपादानेऽतिव्याप्तिमाशङ्क्य धात्वर्थतावच्छेदकफलशालि कर्मेति परिष्कुर्वन्तोऽपि प्रत्युक्ताः। ग्रामं गमयति देवदत्तमित्यादौ गन्तर्यव्याप्तेः । तन्मते गमनस्य प्रकृत्यर्थत्वेऽपि तथात्वानवच्छेदकत्वात् । तत्र णिचो व्यापारार्थकत्वं न प्रकृतेः । तत्त्वे वा पाचयत्यादिप्रयोज्यकर्तर्यतिव्याप्तेः। पारिभाषिकमनुशासनोपयोगि कर्मत्वं वचनबलाद् व्यवस्थितमिति चेत् । अपादानेऽपि तर्हि तन्नास्तीत्यवधेहि । एकसञ्ज्ञाधिकारेऽनवकाशया सावकाशाया बाधात् । अत एवात्मानमात्मना ह-

शब्दरत्न ।

लक्षकत्वे, स्वप्रकाशत्वे इत्यस्य स्वप्रकाशपदव्यवहार्यत्वे इत्यर्थे वा लक्षणैव दोष इति बोद्धयम् ।

परेति । कर्मत्वाभिमतापेक्षया परेत्यर्थः । गम्यादिकर्तर्यतिि(१)व्याप्तिवारणायेदम् । अपादाने इति । प्रयागात् काशीं गच्छतीत्यादौ तस्यापि क्रियाजन्यविभागाश्रयत्वादिति भावः । धात्वर्थतावच्छेदकेति । संयोगस्यैव तथात्वं न तु विभागस्येति भावः । तत्त्वे वेति । ण्यन्तधात्वर्थतावच्छेदकत्वे वेत्यर्थः। वचनबलात् । गत्यादिनियमबलात् । ननु विभागस्य तत्त्वेन "कर्तुः" (पा०सू० १।४।४९)इति "तथायुक्तम्" (पा० सू० १।४।५) इति च प्राप्नोति अपादानप्रकरणेऽवध्यन्वयिनो विभागस्य धात्वर्थताया वक्ष्यमाणत्वादित्यत आह—एकसञ्ज्ञेति । सावकाशाया इति । विषं भुङ्क्ते इत्यादौ सावकाशाया इत्यर्थः । 'कर्तु'रिति कर्मसञ्ज्ञात्वपादानसञ्ज्ञायाः परत्वाद् बाधिका। अत एव ग्रामं त्यजतीत्यादौ द्वितीयासिद्धिरिति तात्पर्यम् । अपादाननिष्ठविभागीयसम्बन्धस्य फलतानवच्छेदकत्वान्न दोष इत्यपि बोद्धयम् । अत एव । एक-

ज्योत्स्ना ।

ननु स्वमते यदि सूत्रेणैव संज्ञाप्रवृत्तिनिर्णयः, तदाऽपादानस्य कर्मसंज्ञाप्राप्नोति इत्याशयेन शङ्कते–नन्विति । प्रकारान्तरेणाप्यतिप्रसङ्गवारणार्थमाह—अपादाननिष्ठेत्यादि । अयम्भावः–ग्रामात् गृहमायातीत्यत्र यद्यपि विभागावच्छिन्नसंयोगानुकूलो व्यापारो धात्वर्थस्तथापि संयोगी यो योऽनुयोगितारूपः सम्बन्धः स एव फलतावच्छेदकः, न तु विजातीयः, फलतावच्छेदसम्बन्धेन फलाश्रयत्वमेव कर्मसंज्ञाप्रयोजकम् । अन्यथा कालिकसम्बन्धेन संयोगाश्रयत्वस्य पर्वतादावपि सत्वेन ग्रामम्पर्वताद्गच्छति यत्र तत्र पर्वत गच्छतीति स्यात् । यत्र विभागावच्छिन्नो व्यापारो धात्वर्थस्तत्राप्य-

वि० (१) 'ग्रामङ्गच्छति चैत्रः' इत्यत्र चैत्रे गमनक्रियाजन्यसंयोगाश्रयत्वसत्वादतिव्याप्तिरित्यर्थः । अत्र फले तद्धात्वर्थत्वमपि विशेषणं देयम् । तेन स्पन्देन पूर्वोत्तरदेशयोः कर्मत्वापत्तिरिति बोध्यम् ।

न्तीत्यादौ परया कर्तृसंज्ञया कर्मसंज्ञाबाधमाशङ्क्याहङ्कारादिविशिष्टात्मभेदमाश्रित्य समाहितं भाष्ये ।

रामेणेति । इह यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव तथाऽपि कृदुपस्थितानां विशेष्यतैव । 'सत्त्वप्रधानानि नामानि' इत्युक्तेः । धातूपस्थाप्ययोः फलव्यापारयोरपि कर्मकृत्समभिव्याहारे विशेषणविशेष्यभावव्यत्यासः । तथा च रामनिष्ठो यो व्यापारस्तद्विषयीभूतबाणव्यापारसाध्यप्राणवियोगाश्रयो वालीति वाक्यार्थः ।

यत्तु वाजपेयाधिकरणे मीमांसकैरुक्तं काष्ठैः पाचक इत्यपि स्यादिति तदिष्टापत्तिग्रस्तम् । "कर्तृकरणे कृता बहुलम्" (पा० सू० २।१।३२) "कर्तृकर्मणोः कृति" (पा०सू० २।३।६५) इत्यादिसूत्राणां कृत्प्रकृत्यर्थेन कारकान्वयं विनोक्तिसम्भवस्यैवाभावादिति सुधीभिराकलनीयम् ।

---

शब्दरत्न ।

सञ्ज्ञाधिकारे सञ्ज्ञयोर्बाध्यबाधकभावादेव । अहंकारादीति । आदिना शरीरम् । विभक्त्युपस्थितानामिति । विभक्त्यर्थस्य संसर्गत्वमते तदन्तोपस्थितानामित्यर्थः । व्यत्यास इति । तद्व्यत्यासेनैव धातुतस्तदुपस्थितिरित्यर्थः । तत्र व्यापारजन्यफलमेव धात्वर्थ इति भावः ।

तदिष्टापत्तीति । तत्प्रकृत्यर्थक्रियायामपि कारकाणामन्वयादिति भावः । तत्रैव मानमाह—कर्त्रित्यादि । यत्तु भवतिक्रियायां प्राथमिकान्वयेन तत्तद्विभक्तौ कृदन्तेन पार्ष्णिकान्वयात् तेषां चारितार्थ्यमिति । तन्न । भवतिक्रियायां कर्तृत्वेनान्वये कर्तुरुक्तत्वात्तृतीयानापत्त्या हरिणा त्रात इत्यसिद्ध्यापत्तेः । करणत्वेनान्वये पार्ष्णिकस्यापि

ज्योत्स्ना ।

नुयोगितासम्बन्ध एव फलतावच्छेदकः, न तु प्रतियोगितालक्षणः । अत एव वृक्षाद्विभजते इत्यादौ वृक्षात् पञ्चमी विभक्तिः ।

नच 'आत्मानमात्मना हन्ति' इति वच्चैत्रश्चैत्रंगच्छतीति प्रयोगापत्तिः, तत्रापि शरीराद्युपाधिभेदेन कर्तृकर्मणोर्भेदसम्भवादिति वाच्यम् । प्रामाणिकप्रयोगस्योपपत्तये एवं कल्पना सम्भवादिति दिक् ।

तद्व्यत्यासेनैवेति । फलव्यापारयोर्विशेष्यविशेषणभावव्यत्यासेन फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च शक्तिर्धातोः कल्प्यते । कर्तृकर्मबोधकप्रत्ययसमभिव्याहारेत त्तद्बोधतात्पर्यग्राहक इति स्वसिद्धान्ताभिप्रायेणेदम् । तत्र कर्मबोधकप्रत्ययसमभिव्याहारे—मूले—रामनिष्ठो यो व्यापारः तद्विषयत्वं फलभूतधात्वर्थ

अनभिहिते किम् ? हरिः करोति । जीवन्त्यनेन जीवनः । शाब्दिकः । "शब्ददर्दुरं करोतीति( पा० सू० ४।४।३४ )ठक् । कृतं विश्वं येन कृतविश्वः विश्वकर्मकक्रृत्याश्रय इत्यर्थः । अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरस्वीकारात् । यथा चैतत्तथा वक्ष्यते ।

प्रकृत्यादिभ्य इति । आकृतिगणोऽयम् । तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्त' इत्यादि बोद्धव्यम् । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात्स्त्रीत्वाभावः । द्रोणद्वयसबन्धिधान्यमित्यर्थः । चादिति । करणशब्दानुवृत्त्या "परिक्रयणे सम्प्रदानम्" ( पा० सू० १।४।४४ ) इत्युत्तरसूत्रस्थान्यतरस्य ग्रहणापकर्षणेन वा सञ्ज्ञयोः पर्याये लब्धे समावेशार्थश्चकारः । तेन मनसादेव इत्यत्र कर्मण्यण् , करणे तृतीया चेत्युभयं सिद्ध्यति । "मनसः सञ्ज्ञायाम्" ( पा०सू० ६।३।४ ) इत्यलुक् ।

शब्दरत्न ।

हरिकर्तृकत्राणकर्मणो बोधानापत्तेः । कर्तृतृतीयान्तेन समासविधायकासङ्गतेश्च । यत्कर्तृककृतिकर्म विश्वमिति विग्रहवाक्यजबोधाद्भिन्नबोधस्वीकारे न मानमत आह—अषष्ठ्यर्थेति ।

आकृतीति । इदं च यथायथं सर्वविभक्त्यपवादः । नाम्नेति ॥ नामसम्बन्धितीक्ष्णत्ववानित्यर्थः । करणशब्दानुवृत्त्येति ॥ एकसंज्ञाधिकारेण चेति बोध्यम् । ननु मनसादेव इत्यसङ्गतं कृद्योगलक्षणषष्ठीप्राप्तेः । न च कर्तृसाहचर्यात्तत्र मुख्यव्यवहारेण धात्वर्थाश्रयस्यैव कर्मणो ग्रहणम् । अतः स्तोकं पाक इत्यादौ षष्ठी नेति वाच्यम् । धात्वर्थे भेदेनान्वयिकर्मग्रहणेनैव तदुपपत्तावत्राप्रवृत्तौ मानाभावात् । ध्वनितं चेदम् "आकडार" ( पा० सू० १।४।१ ) सूत्रे कैयटे ।

ज्योत्स्ना ।

उक्तम् , तच्च स्वोत्पादकप्रवृत्त्युद्देश्यत्वरूपं बोध्यम् । एवं प्राणवियोगात्मकफले बाणव्यापारसाध्यत्वाभिधानं कृदन्तेन करणकारकस्य स्वव्यापारद्वारा फलं प्रत्येव जनकत्वात्तत्रैवान्वय इति सूचितम् ।

सर्वविभक्त्यपवाद इति । तत्र प्रायेणात्र याज्ञिका इत्यत्र अत्र बहवः याज्ञिका अत्रार्थे प्रथमा प्राप्नोति । प्रायशब्दस्य बहुत्वविशिष्टार्थबोधकत्वात् । तस्य वैशिष्ट्यसम्बन्धेन याज्ञिकपदार्थेऽन्वयात् । तदर्थं "इत्थम्भूतलक्षणे" इत्यनेनैव यद्यपि तृतीया सिद्ध्यति, तथापि तस्य सम्बन्धत्वेन विवक्षायां षष्ठी प्राप्नोति तद्बाधनार्थमिदम् । तथाच बहुत्वसम्बन्धिनो याज्ञिका इति बोधः । एवं च बहुशब्दस्य बह्वाचारपरत्वेऽपि ज्ञाप्यत्वस्य सम्बन्धत्वेन विवक्षायां तृतीयाबाधनार्थमिदम् ।

किं चादीर्देवयते यज्ञदत्तेनेत्यत्र सकर्मकत्वादणि कर्तुर्णौ कर्मत्वं न। "अणावकर्मकात्" (पा० सू० १।३।८८) इति परस्मैपदं च नेति सिद्धान्तः।

यत्तु प्राचा कर्मसंज्ञं वा स्यादिति व्याख्यातम्। तदाकरविरोधादुपेक्ष्यम्।

स्यादेतत्। करणसञ्ज्ञाया अवकाशः देवना अक्षाः। करणे ल्युट्। कर्मसञ्ज्ञायास्तु दीव्यन्ते अक्षाः। कर्मणि लट्। अक्षैर्दीव्यतीत्यत्र तु संज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे परत्वात् तृतीयैव स्यान्न तु द्वितीयेति चेत्। अत्राहुः–कार्यकालपक्षे कर्मणि द्वितीयेत्यत्र यदस्योपस्थानं तस्यानवकाशत्वाद् द्वितीयेति। ननु दीव्यन्ते अक्षा इत्यत्र कर्मण्यभिहितेऽपि करणत्वस्यानभिधा-

शब्दरत्न।

तादृशसञ्ज्ञात्वे दृढतरमानाभावश्चेत्यरुचेराह—किं चेति॥ कर्मत्वं नेति॥ न च वैकल्पिकत्वेऽप्यत्यन्ताविद्यमानकर्मकत्वाभावात् कर्मत्वाभावः सिद्ध इति वाच्यम्। तत्रात्यन्ताविद्यमानकर्मकाणामेव ग्रहणे मानाभावस्यान्यत्र निरूपितत्वादिति भावः। फलान्तरमाह–अणाविति। दीव्यतेऽक्षैर्देवदत्तेनेति भावे लकाराभावः फलमित्यपि बोद्धव्यम्। करणत्वाच्च (१)तृतीयेति समावेशफलम्। द्वितीयेतीति। अक्षान् दीव्यतीत्य-

ज्योत्स्ना।

प्रकृत्या चारुरित्यत्र प्रकृतिसम्बन्धिचारुरित्यर्थः। अत्र षष्ठी प्राप्ता तद्बाधनार्थमेतत्।

गोत्रेण गार्ग्य इत्यत्र गोत्राभिन्नो गार्ग्य इत्यर्थे प्रथमा प्राप्नोति। गोत्रसम्बन्धि गार्ग्यत्ववान् इत्यर्थे षष्ठी प्राप्नोति। समेन धावतीत्यत्र धावनकर्मदेशसामानाधिकरण्यात् द्वितीया प्राप्नोति।

द्विद्रोणेन धान्यं क्रीणातीत्यत्र परिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणाभिन्नं धान्यमित्यर्थे द्वितीया प्राप्नोति। एवं पञ्चकेन पशून् क्रीणाति सहस्रेणाश्वान् क्रीणाति इत्यादावपि सङ्घसङ्घिनोरभेदात् द्वितीया प्राप्नोतीति वार्तिकमतम्।

भाष्यकारास्तु—प्रकृत्या स्वभावेन कृतश्चारुः सुन्दरः, न तु वस्त्रादिनाग्रहणधारणयोः, सौकर्याय बाहुल्येन आधीयते याज्ञिकाः। अहं गार्ग्य इति गोत्रेण संज्ञाय। समेन यथा एति गच्छति, पञ्चकेन पशुसम्बन्धसाधनेन पशून् गृह्णाति। सहस्रेण सहस्रपरिमाणेन हिरण्येन अश्वान् क्रीणातीति सर्वत्र अध्याहृतक्रियादिकमादाय करणविभक्तिमुपपाद्य "प्रकृत्यादिभ्य" इदं वार्तिकं प्रत्याचख्युः। तेषां मते उक्तप्रयोगेषु सम्बन्धत्वेन विवक्षायामनभिधानान्न षष्ठीति बोध्यम्।

अक्षान् दीव्यतीत्यत्रेति। "कर्तुः" इति सूत्रेणैतद्विवक्षायायां द्वितीयायाः साधुत्वादे-

वि० (१) चकारो भिन्नक्रमेण तृतीयापदानन्तरन्द्रष्टव्यः।

नात् तृतीया स्यात् । तथा देवना अक्षा इत्यत्र ल्युटा करणस्याभिधाने ऽपि कर्मणोऽनभिधानात् द्वितीया स्यात् । मैवम् । एकैव ह्यत्र शक्तिः संज्ञाद्वययोगिनी । तथा च उभयत्राप्यभिधानमेव न त्वनभिहितत्वम् ।

"सहयुक्ते" ( पा० सू० १।३।७९ ) ।। पुत्रेणेति । पितुरत्र क्रियासंबन्धः शाब्दः । पुत्रस्य तु आर्थ इति तस्याप्राधान्यम् । अप्रधानग्रहणं शक्य-

शब्दरत्न ।

त्राक्षपदस्याक्षजेये घने लक्षणा । न च तदा करणत्वमक्षैरित्यर्थेऽक्षानिति न भवतीत्यन्ये । एकैव ह्यत्र शक्तिरिति । दिवधात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः ।

सहयुक्ते । अत्राप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभाव इत्याह—पितुरत्रेति । आर्थ इति । पुत्रसाहित्यवान् पिता आगत इति बोधे साहित्यस्य पुत्रेणागमनसंबन्ध एव सम्भव इति पश्चात्तस्यापि मानसस्तत्संबन्धबोध इति भावः । शाब्दत्वं च विवक्षानिबन्धनमेवं चैषु शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः । सहैव पुत्रैर्दशभि-

ज्योत्स्ना ।

रित्यर्थः । एवं स्थिते कृद्योगे तृतीयातोऽपि परत्वात् "कर्तृकर्मणोः" इत्येवेत्याहुः ।

अन्ये इति । भाष्यतत्त्वविदः । इदमुपलक्षणं यदाऽक्षेषु फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदापि तादृशप्रयोगसिद्धिरिति बोध्यम् । एकैवशक्तिः संज्ञाद्वयोपयोगिनी इति मूलं त्वयुक्तम् । "सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रे कारकशब्दस्य कर्मत्वादिशक्तिपरत्वस्य सुप्रसिद्धतया कर्मत्वस्य च तादृशस्य करणत्वापेक्षया भिन्नत्वेनैकशक्तेः संज्ञाद्वयोपयोगित्वं वक्तुमशक्यमत आह—दिवधात्वर्थेति । एवञ्चैकैव शक्तिरित्यन्यत्र शक्तिपदं धर्मपरं द्रष्टव्यम् । तथा च कर्मादिपदानां कर्मत्वादि तत्तच्छक्तिरूपेण बोधकतया द्वयोः शक्त्योर्भेद एव उचितः । सर्वसाधारणकर्मव्यवहारस्तु कर्मत्वशक्तिमत्वेनैवोपपादनीयः । एवं सकर्मकत्वमपि तादृशशक्तिमदर्थान्वयित्वमेव । अत एव अध्यासिता भूमयः इत्यत्र कर्मणि क्तः सिद्ध्यति । सूत्रस्थ चकारेणशक्तिद्वययोगो बोध्यते । न तु तयोश्शक्त्योरभेदः । न चैवं सति ननु इत्यादिना मूले प्रतिपादिता शंका तदवस्थैवेति वाच्यम् । 'अपादानमुत्तराणि कारकाणि बाधन्ते' गान्दोग्धिपयः इत्यत्र परत्वात्कर्मसंज्ञेत्युक्तम् । तत्र पञ्चमीवारणाय द्रव्यगतानेकशक्तिमध्ये एकस्या अभिहिते परस्या अपि तद्वत् प्रकाशाङ्गीकारेण क्षक्तेः । मूलन्तु प्राचामनुसारणेति दिक् ।

"सह युक्तेऽप्रधाने" इति । अत्र सूत्रे लौकिकं यत् प्राधान्यं मुख्यत्वरूपं तदभाववत्वरूपमप्राधान्यन्नविवक्षितम् । राज्ञा सह सेना आगच्छतीत्यत्र राज्ञो लौकिकप्राधान्यत्वसत्वात् तृतीयानापत्तेः । अत अत्राप्राधान्यमित्यादिना गुणाद्यन्वयित्वमित्यत्रादि-

मकर्त्तुम् । न चैवं पितुरपि तृतीयापत्तिः । तत्र प्रातिपदिकार्थमात्रे अन्तरङ्ग-

शब्दरत्न ।

भारं वहतीत्यादौ विद्यमानतावाचिसहशब्दयोगे क्रियाद्यन्वयित्वरूपविशेष्याभाव-कृतो विशिष्टाभावो दशानां पुत्राणां विद्यमानत्वेऽपीत्यर्थं इत्यन्यत्र विस्तरः । अन्तरङ्ग-त्वादिति । प्राचीनैरन्तरङ्गत्वमूलकतयोक्तात् "उपपदविभक्तेः" इति न्यायादित्यर्थः ।

वस्तुतस्तु तद्वाचनिकमेवेत्यन्तरङ्गत्वं तन्न्यायोपलक्षणं बोध्यम् । प्रथमायाश्च कारकविभक्तित्वमनभिहितपादे भाष्ये बहुशः स्पष्टमन्यत्र प्रपञ्चितं च । अन्तरङ्गत्वं तु न युक्तम् , षष्ठ्यपवादत्वमिव प्रथमापवादत्वमित्यस्याप्युपपदविभक्तेनामापत्तेः । अनन्तरस्येति न्यायेन च प्रथमापवादत्वस्यैव वाऽऽपत्तेः। 'उपपदविभक्तेः' इति न्यायेन वाचनिके सर्वतो बलवत्त्वे कारकविभक्तेर्बाधितेऽर्थाच्छेपषष्ठ्यपवादत्वमुपपदविभक्ती-

ज्योत्स्ना ।

पदात् द्रव्यक्रिययोः संग्रहः । नचैवं सति द्रव्यादूयन्वयित्वाभाव इत्येव द्रव्यपदार्थस्य प्रथमं तन्त्रान्ते प्रतिपादनादुचितमिति वाच्यम् । 'गुणसमुदायो द्रव्यम्' पतञ्जल्युक्ता-नुसारेणैवमभिधानात् । गुणोदाहरणं पुत्रेण सह स्थूलः । द्रव्योदाहरणं पुत्रेण सह पितु-र्धनम् । क्रियोदाहरणम्—पुत्रेण सहागतः पितेति सुप्रसिद्धमेव । एषु शाब्दगुणान्वयि-त्वं पितुरेवेति पुत्रस्याप्राधान्यम् । आर्थिकान्वयस्तु तत्रापि । अत एव पुत्रेण सह पितुरागमनमित्यत्र पितरि शाब्दस्य कृत्प्रकृत्यर्थक्रियाकर्तृत्वस्य सत्त्वेन "कर्तृकर्मणोः कृति" इत्यनेन षष्ठी सिद्ध्यति। शाब्दत्वं तु इतरसम्बन्धम्विनापि वाक्यजन्यशाब्दबोधे भासमानत्वमेव । सहार्थः—साहित्यम् । तच्च—स्वसमभिव्याहृतशब्दजन्योपस्थिति-विषयगुणादिसमानाधिकरणगुणाद्यन्वयित्वम् । अत्र सामानाधिकरण्यं कालिकप्रत्या-सत्त्या क्वचित् यत्र क्षेत्रे तिलवापोत्तरं माषवापस्तत्र तिलैस्सहमाषान् वपति इति प्रयोगदर्शनात् दैशिकमपि क्वचित् । एतत्तृतीयार्थस्तु क्रियावाचकप्रयोगसत्वे प्रतीय-मानतादृशक्रियान्वयित्वमेव, यत्र तु गुणाद्रव्ययोरुपस्थितिः, तत्र सहशब्दस्य प्रयोग-बलात् प्रतीयमानतत्तत्पदार्थसम्बन्धित्वमेव ।

एवञ्च पुत्रेण सह पितुर्धनमिति शब्दात् पुत्रस्वामित्वसमानकालिकपितृस्वामि-त्ववद्धनमिति बोधः । पुत्रेण सह स्थूल इतिशब्दात्तु—पुत्रवृत्तिस्थौल्यसमानकालिक-स्थौल्यवान् पितेतिबोधः । पुत्रादेस्सहार्थयोगस्तु तत्तद्द्वारैवेति विभाव्यम् ।

ननु प्रथमायाः कारकाधिकारे पाठाभावात् अकारकविभक्तित्वेन तेन वचनेन कथं प्रथमासाधनमित्याह—प्रथमायाश्चेति ।

कारकविभक्तित्वमिति । क्रियाजनकार्थकविभक्तित्वम् । तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरस्ति इत्यभिहिते प्रथमा इति वार्तिककारोक्तेः ।

केचित्तु—प्रधानीभूता या क्रिया तत्सम्बन्धनिमित्तकं कार्यमन्तरङ्गमिति त-

त्वात्प्रथमोत्पत्तेः। पितुरागमनमित्यादौ कारकविभक्तेः प्रावल्याच्च।

"येनाङ्गविकारः" (पा० सू० २।३।२०)॥ अङ्गशब्दोऽर्श आद्यजन्तस्तदाह—अङ्गिन इति। येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्यते; सन्निधानात्। सचार्थाद्विकृत एव। न ह्यविकृतेनावयवेन शरीरस्य विकारः सम्भवति। तदेतदाह—येनाङ्गेन विकृतेनेति। सञ्जानीत इति। "सम्प्र-

शब्दरत्न।

नासवतिष्ठते। किं च उपपदविभक्तेः (१)पदान्तरनिमित्तकत्ववत् कारकविभक्तेः क्रियानिमित्तकत्वात्तत्वं दुरुपपादम्। न च सम्बन्धस्य क्रियाकारकभावमूलकत्वेन तत्प्रयुक्तं कार्यं बहिरङ्गं पुत्रेऽपि तृतीयानापत्तेरकर्क्रियाकर्तृत्वात्साहित्यस्य। क्रियायाः प्राधान्यात्तन्निमित्तिका विभक्तिः प्रबलेत्यपि न युक्तम्। अप्रधानक्रियायामपि कारकान्वयदर्शनात्। तदेव ध्वनयन्नाह—इत्यादौ कारकविभक्तेरिति। अत्रादिना पुत्रेण सहागतः पितेत्यस्य सङ्ग्रह इत्यलम्।

अर्श आद्यजन्त इति। व्याख्यानादिति भावः। अन्यथा येन गुणेन करणत्वादिनाऽवयवस्य विकारो लक्ष्यत इत्यर्थापत्त्याऽक्षि काणमस्येत्यादौ प्रथमां बाधित्वा गुणवचनात्काणशब्दादेरेव स्यात्, (२)अक्ष्णा काण इत्यादौ तु षष्ठ्येव स्यादिति बोध्यम्। प्रकृत्यर्थेति। अर्शआद्यच्प्रकृतेरित्यर्थः। शरीरस्येत्यवयव्युपलक्षणम्। सम्भवतीति।

ज्योत्स्ना।

न्यायार्थः। कारकविभक्तेः प्रधाननिमित्तकत्वेन प्रावल्यादित्याहुः। तन्मतं निरस्यति—क्रियाया इत्यादिना।

यदि तु—प्रधानक्रियायामेव कारकान्वयनियमः स्यात्, तदा भवदुक्तिसम्भावस्तदेव तु नास्तीत्याह—अप्रधानक्रियायामिति।

व्याख्यानादिति। अङ्गग्रहणसामर्थ्यमूलकाद्व्याख्यानादित्यर्थः। अत एव 'अङ्गशब्दोऽयं समुदायशब्द इति भाष्ये उक्तम् काणशब्दादेरेव स्यादिति। अत्रायं भावः—विकारवाचकः काणशब्दः यदाङ्गिपरस्तदा अङ्गवाचकात्तृतीया। यथा अक्ष्णा काणः। यदा चाङ्गपरस्तदात्वङ्गवाचकात् प्रथमा। यथा आक्षिकाणमस्य। एतत्सर्वं च अर्शआद्यजन्तअङ्गशब्दमहिम्ना एव लभ्यते। तदभावे यदाङ्गपरस्तदैव स्यादिति। सम्प्रत्युभयप्रसक्तौ लाघवाद्विकृताङ्गरूपशक्यपरग्रहणसम्भवे विकृताङ्गविशिष्टरूपलक्ष्यपरो न गृह्यत इति।

---

वि० (१) पदान्तरेति। तदर्थेत्यर्थः। एवञ्चान्तरङ्गत्वमनैमित्तिकत्वरूपमल्पापेक्षत्वरूपं वा भवता वाच्यन्तदुभयमपि न भवति, अन्यादृशन्तु तद्वक्तुमशक्यमिति भावः।

वि० (२) अत्रादिना पादेन खञ्ज इत्यस्य सङ्ग्रहः। यदि तु सूत्रेऽङ्गशब्दम्परित्यज्य गुणिशब्द एवोपादीयते; तदा तु न दोष इत्यवधेयम्॥

तिभ्यामनाध्याने" ( पा० सू० १।३।४३ ) इति तद्धयोगे परत्वात् षष्ठी पितुः संज्ञाता ।

यत्तु हरदत्तेनोक्तम्—आध्याने परत्वात् "अधीगर्थे" ( पा० सू० २।३।५२ ) इति षष्ठी मातुः संजानातीति । तन्न । तत्र शेषाधिकारात् ।

द्रव्यादीति । उक्तं च—

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् ॥ इति ।

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ॥ इति च ।

फलमपीति । एतच्च 'प्रत्ययः' इति सूत्रे कैयटे स्पष्टम् । एवं च तादर्थ्यचतुर्थ्या सहेयं तृतीया विकल्प्यते । अध्ययनार्थं वसति । अयं तु विशेषः अध्ययनस्य फलेन सहाभेदः संसर्गः । उपकारकत्वेन सह तु निरूपकतेति ।

शब्दरत्न ।

लक्ष्यः संभवतीत्यर्थः । द्रव्यादीति । आदिना गुणक्रिये । एवं च त्रितयसाधारणं हेतुत्वम् । नियतक्रियमिति क्रियया नियतमित्यर्थः । क्रियामात्रविषयमिति यावत् । हेतुकरणयोर्वैषम्यान्तरमप्याह—अनाश्रिते त्विति । एवं च करणत्वहेतुत्वविषयकशाब्दबोधाय सूत्रद्वयमित्यर्थः । विकल्प्यत इति । तदर्थत्वेन विवक्षायां चतुर्थ्या, हेतुत्वेन विवक्षायां तृतीयायाश्च प्राप्तेर्विवक्षाभेदेन विभक्तिद्वयमित्येतावता तयोर्विकल्पव्यवहार इति बोध्यम् । फलेन सहेति । तच्च फलं फलत्वेन तृतीयार्थ इत्येके । हेतुत्वेनैवेत्यन्ये । अध्ययनहेतुको वास इति बोधस्तृतीयायाम् । चतुर्थ्यामध्ययनोपकारको वास इति बोध इति मते इदम् । अध्ययनोपकार्यको वास इति बोधश्चतुर्थ्यामिति मते तत्राप्यभेदेभानमेवेति बोध्यम् ।

ज्योत्स्ना ।

"प्रत्यय" इति सूत्रे कैयट इति । परममूले फलमपीहहेतुरित्युक्तम् । तत्र इह इत्यस्य इह सूत्रे इत्यर्थः । कस्यचिन्मते इह इत्यर्थः । आद्यमते तृतीयार्थः फलत्वेन फलन्तत्र तृतीयार्थस्याभेदेन,, तस्य च जनकता सम्बन्धेन वा सादावन्वयः । तथा च अध्ययनाभिन्नफलजनको वा स बोधः । द्वितीयमते तु—फलस्य स्वज्ञानद्वारा वासादिहेतुत्वविवक्षा यत्र तत्राध्ययनाय वसतीति प्रयोगादध्ययनस्य हेतुरूपतृतीयार्थे ऽभेदेनान्वयः । तृतीयार्थस्य तु जन्यतासम्बन्धेन वासेऽन्वयः, इत्यध्ययनाभिन्नहेतुजन्यो वास इति बोधः । तदेतदाह—तच्च फलमित्यादिना ।

अस्य सिद्धान्तत्वसूचनाय भाष्यं प्रमाणयति—स्पष्टञ्चेदमिति । "इग्यणः सम्प्रसारणम्" इति सूत्रे भाष्येऽपि । तत्र हि वाक्यस्य सम्प्रसारणसंज्ञायाम् "सम्प्रसारणाच्च" इत्यादावनुवादप्रदेशे वाक्यात्परत्वानुपपत्तिप्रसत्या संप्रसारणाज्जातं सम्प्रसारणश-

गम्यमानेति। न तु श्रूयमाणैवेत्याग्रह इति भावः। साधनेति। साध्यमित्यत्र प्रकृतिभागस्यार्थं प्रतीति भावः। 'मा चापलायेति गणान् व्यनैषीत्' इत्यत्र तु यतध्वमिति शेषः।

अशिष्टेति। एतच्च "दाणश्च सा चेच्चतुर्थ्यर्थे" (पा० सू० १।३।५५) इत्यनेन ज्ञाप्यते॥

इति तृतीया॥

अन्वर्थसञ्ज्ञाबलेनाह—दानस्येति। तेन 'अजां नयति ग्रामं, हस्तं निदधाति वृक्षे, इत्यादौ नातिप्रसङ्ग इति भावः। दानं चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम्। अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति। तत्र हि ददातिर्भाक्तः। एतच्च वृत्तिमतम्॥

---

शब्दरत्न।

गम्यमानेति। श्रमेणेत्यादिपदजबोधविषयेत्यर्थः। स्पष्टं चेदं "सहयुक्त" (पा० सू० २।३।१९) इत्यत्र भाष्ये तदाह—न तु श्रूयमाणेति। श्रूयमाणस्वमात्रवाचकपदजन्यबोधविषयेत्यर्थः।

ज्ञाप्यत इति। चतुर्थ्यर्थेविहिततृतीयायुक्ताद्दाण आत्मनेपदमिति तदर्थः। सा चेदित्यनेन तस्याः क्वाचित्कत्वं ज्ञाप्यते। तेनाशिष्टव्यवहारे इत्यंशोऽपि सिद्ध इति भावः।

इति तृतीया॥

अपुनर्ग्रहणायेति। इदं च स्वत्वनिवृत्तेर्वाच्यतास्वीकारफलप्रदर्शनं न तु धात्वर्थनिविष्टमिति बोध्यम्। भाक्त इति। अधीतीकरणरूपेऽर्थे इत्यर्थः। 'न शूद्राय मतिं

ज्योत्स्ना।

ब्देनोच्यत इत्युक्तम्। परममूलस्य तु स्ववाच्यक्रियाम्प्रति स्वस्य करणत्वमित्यर्थ इत्यलम्।

॥ इति तृतीया॥

सच्चिदानन्दकृपया ज्योत्स्नाख्ये टिप्पणे त्विदम्।
तृतीयाकारकं पूर्णं श्रीजगन्नाथशर्मणा॥ १॥

ननु स्वसत्वनिवृत्तिपूर्वकं परस्वोत्पत्त्यनुकूलव्यापारो यदि दाधात्वर्थो विवक्षितस्तदा कर्मणि स्वत्वनिवृत्तिः प्रधानव्यापारेण सम्पन्नेति पुनर्ग्रहणाप्रसक्त्या अपुनर्ग्रहणेति मनोरमोक्तिः कथं सङ्गच्छत इत्याह—इदञ्चेति।

ननु स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापार एव दानञ्चेत्तदा 'न शूद्राय मतिं दद्यात्' इत्यत्र चतुर्थ्यनुपपत्तिः, मतिशब्दे व्यापारजन्यफलाश्रयत्वस्याभावेन द्वितीयाया अप्रवृत्तेश्चेत्याह—न शूद्राय मतिमिति।

भाष्यमते तु नान्वर्थतायामाग्रहः (१)। खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति प्रयोगात् । रजकस्य वस्त्रं ददातीति तु शेषत्वविवक्षायां बोद्ध्यम् । न चैवमजां नयति ग्राममित्यत्रापि प्रसङ्गः। यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य शेषित्वं कर्मणश्च शेषत्वं लभ्यते। ग्रामस्य अजां प्रति शेषित्वं नास्ति । दानीय इति । बाहुलकात् संप्रदाने अनीयर् ।

"रुच्यर्थानां प्रीयमाणः" ( पा० सू० १।४।३३ )॥ प्रीञ् तर्पणे । अस्मात् कर्मणि लट् । हरये रोचते इति । हरिं प्रीणयतीत्यर्थः । कर्मसञ्ज्ञायां

शब्दरत्न ।

दद्यात्' इत्यत्र मतिं तज्जनकं शास्त्रं नोपदिशेदित्यर्थः ।

आग्रह इति । अत एव "क्रियाग्रहणं कर्त्तव्यम्" ( का० वा० ) इति वार्तिकं भाष्ये प्रत्याख्यातम् ।

भाष्यान्तरमाह—खण्डिकेत्यादि । चपेटां ददातीत्यत्र संयोगोऽर्थः। शेषित्वमुद्देश्यत्वम् । शेषत्वमप्रधानत्वरूपम् । शेषित्वं नास्तीति । यद्यपि ग्रामसंस्कारार्थमजानयने तदपि ग्रामस्यास्ति, तथाऽप्यजाया इव परत्वात् "कर्त्तुः" ( पा० सू०१।४।४९ ) इति कर्मसञ्ज्ञया बाधान्न दोष इति तत्त्वम् ।

अस्मात्कर्मणीति । क्र्यादेश्चुरादेर्वेत्यर्थः। प्रीङ् प्रीताविति दैवादिकादित्यपि कश्चित् । हरिं प्रीणयतीति । 'प्रीयमाण' इति निर्देशेन प्रीधात्वर्थकर्मणः संप्रदानत्वाभावज्ञाप-

ज्योत्स्ना ।

नान्वर्थतायामाग्रह इति । किञ्च दाधातोः क्रियामात्रोपलक्षणत्वेन अन्यधात्वर्थकर्मयोगेऽपि चतुर्थी भवति, तेन पुत्राय धर्ममुपदिशति, पुत्राय पत्रं प्रेषयति, इत्यादयः प्रयोगाः सङ्गच्छन्ते । अत एव क्रियापि कृत्रिमं कर्म, कया क्रियया सन्दर्शनादिक्रियया, इत्युक्त्वा क्रियाग्रहणकर्तव्यम्' इति वार्तिकं प्रत्याख्यातं भाष्ये ।

प्रीयमाण इति निर्देशेनेति । अत्र हि कर्मणि प्रत्ययो दृश्यते । यदि रुच्यर्थकत्वमात्रप्रयोगे सम्प्रदानसंज्ञा स्यात्, तदा कर्मणि शानच्प्रत्ययो न स्यादित्याशयः। इदं च प्रीधातोरपि रुच्यर्थत्वाभिमानेन ज्ञापकत्वप्रदर्शनम् ।

वस्तुतस्तु—रुच्धातोर्विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणो व्यापारो वाच्यः। तत्र विषयतारूपफलतावच्छेदकसम्बन्धेन प्रीत्याश्रये भक्त्या कर्मसंज्ञायाः कर्तृसंज्ञया परत्वाद्बाधान्न कर्मत्वमिति क्ष्यादेः समवायेन प्रीताव-

प्र० ( १ ) किञ्च दाधातोः क्रियामात्रोपलक्षकत्वादन्यधात्वर्थकर्मयोगेऽपि चतुर्थी भवति । तेन पुत्राय पत्रं प्रेषयतीत्यादिप्रयोगाः सङ्गच्छन्ते । अत एव क्रियाग्रहणं कर्तव्यम्' इति वार्तिकं प्रत्याख्यातं भाष्ये ।

प्राप्तायां वचनम्(१)। प्रीयमाणः किम् ? देवदत्ताय रोचते मोदकः पथि। अत्र पथो मा भूत्।

शब्दरत्न।

नादत्र न सम्प्रदानत्वमिति भावः। अत्र पथ इति। न च तदभावे सूत्रस्य शेषत्वविवक्षायां चारितार्थ्येन परत्वात्तया बाधासिद्धिरिति वाच्यम्। देवदत्तं रोचत इत्यास्याप्यापत्तेः(२)।

ज्योत्स्ना।

न्वयविवक्षायां षष्ठीप्राप्तावनेन सम्प्रदानत्वं विधीयते। प्रीधातोस्तु समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीतिव्यधिकरणो वाच्यः। तत्र हरेः समवायात्मकफलतावच्छेदकसम्बन्धेन प्रीतिरूपफलाश्रयत्वात्कर्मत्वम्। सकर्मत्वाच्च कर्मणि शानचा प्रीयमाण इति रूपस्य निर्देशोपपत्तिः। एवं च प्रीधातुयोगे हर्यादेः कर्मसंज्ञाविषयत्वादेतद्विषयतैव नास्तीति निर्देशस्य ज्ञापकत्वोपवर्णनं मास्तु कर्मसंज्ञायां प्राप्तायां वचनमिति मनोरमोक्तिस्तु, धातोरेतादृशार्थविभागानाश्रयणेन। हरिं प्रीणयतीति तु निर्देशज्ञापनेन सिद्धमित्यभिप्रायेणेति दिक्।

इत्यस्याप्यापत्तेरिति। विनिगमनाविरहाद्यथाऽधिकारत्वविवक्षायामधिकरणसंज्ञायाः

---

प्र० (१) वस्तुतस्तु रुचधातोर्विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणव्यापारो वाच्यः। तत्र विषयतारूपफलतावच्छेदकसंबन्धेन प्रीत्याश्रये भक्तयादौ कर्मसंज्ञायाः कर्तृसंज्ञया परत्वाद्बाधान्न सकर्मकत्वमिति हर्यादेः समवायसंबन्धेन प्रीतावन्वयविवक्षायां षष्ठीप्राप्तावनेन संप्रदानत्वं विधीयते। प्रीधातोस्तु समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीतिव्यधिकरणो व्यापारो वाच्यः। तत्र हरेः समवायात्मकफलतावच्छेदकसम्बन्धेन प्रीतिरूपफलाश्रयत्वात्कर्मत्वम्। सकर्मत्वाच्च कर्मणि शानचा प्रीयमाण इति रूपस्य निर्देशोपपत्तिः।

एवं च प्रीधातुयोगे हर्यादेः कर्मसंज्ञाविषयत्वादेतद्विषयतैव नास्तीति निर्देशस्य ज्ञापकत्वोपवर्णनं मास्तु। कर्मसंज्ञायां प्राप्तायां वचनमिति मनोरमोक्तिस्तु धात्वोरेतादृशार्थविभागानाश्रयणेन, हरिं प्रीणयतीत्यस्य निर्देशज्ञापनेन सिद्ध्यभिप्रायेण च प्रवृत्तेति बोध्यम्।

प्र० (२) देवदत्तं रोचत इत्यस्याप्यापत्तेरिति। केचित्तु अत्र कारकाधिकारात् क्रियाजनकत्वमवश्यमेष्टव्यम्। तथाच कर्मत्वादिरूपव्याप्यशक्त्यभावेऽपि क्रियाजनकत्वरूपकारकत्वविवक्षाया 'आख्यातोपयोगे' इत्यत्रोपयोगग्रहणान्नटस्य गाथां शृणोतीत्यादौ नटादेः सत्त्वेऽपि प्रकृते देवदत्तादेः शेषत्वविवक्षायां कारकत्वसत्त्वे मानाभावात्तत्र सूत्रस्य चारितार्थ्योक्त्यसम्भवात्। तच्चद्व्याप्यशक्तिविवक्षायां तु सर्वत्र तत्तत्संज्ञया बाधप्राप्ताविदं बाध्यसामान्यचिन्तया सर्वस्यापवादः स्यादिति पथिन्शब्दे चतुर्थ्यापत्तिरेव दोषः।

किञ्च तथात्वाङ्गीकारे प्रीयमाणग्रहणे सत्यपि क्रियाजनकत्वमात्रविवक्षायामेतस्य चारितार्थ्येन कर्मत्वविवक्षायां 'हरिं रोचते भक्तिः' इति प्रयोगो दुर्निवार एव स्यादित्याहुः।

"श्लाघह्नुङ्" (पा० सू० १।४।३४) ॥ श्लाघा—स्तुतिः । कृष्णाय श्लाघते । कृष्णं स्तौतीत्यर्थः ।

शब्दरत्न ।

कृष्णं स्तौतीति । स्तुत्या परस्मै कृष्णं कथयतीत्यर्थः । ज्ञीप्स्यमानपदेन प्रथमोपस्थितत्वाण्णिच्प्रकृत्यर्थकर्मैव ग्राह्यम् । तस्यापि ज्ञापनविषयेच्छाविषयत्वाच्छानुपपत्तिरिति भावः । ह्नुङादेरपि ह्नुनुइत्यादिना बोधनसर्थं इति बोध्यम् ।

ज्योत्स्ना ।

शेषत्वविवक्षायाञ्चारितार्थ्यायाः सम्प्रदानसंज्ञया बाधः ; तथा कर्मत्वविवक्षायां कर्मसंज्ञया बाधापत्तावस्याप्याप्तेरिति भावः ।

केचित्तु—अत्र कारकाधिकारात् क्रियाजनकत्वञ्चात्रावश्यं द्रष्टव्यम् । तथा च कर्मत्वादिरूपव्याप्यशक्त्यभावेऽपि क्रियाजनकत्वरूपकारकत्वविवक्षायां च "आख्यातोपयोगे" इत्यत्रोपयोगग्रहणात् 'नटस्य गाथां शृणोति'इत्यादौ नटादेः सत्वेऽपि प्रकृते देवदत्तादेः शेषत्वविवक्षायां कारकत्वसत्वे मानाभावात् । तत्र सूत्रचारितार्थोक्त्यसम्भवात् । तत्तद्व्याप्यशक्तिविवक्षायान्तु सर्वत्र तत्तत्संज्ञया बाधापत्ताविदं बाध्यसामान्यचिन्तया सर्वस्यापवादः स्यादिति पथिन्शब्दे चतुर्थ्यापत्तिरेव दोषः ।

किञ्च तथात्वाङ्गीकारे प्रीयमाणग्रहणे सत्यपि क्रियाजनकत्वमात्रविवक्षायामेतस्य चारितार्थ्येन कर्मत्वविवक्षया हरिं रोचते भक्तिः' इति प्रयोगो दुर्निवार एव स्यादित्याहुः ।

ज्ञापनविषयेच्छेति । विषयतासम्बन्धेन तादृशपदार्थविशिष्टं यज्ज्ञानं तदनुकूलव्यापारानुकूलव्यापारविषयकेच्छाविषयकत्वादित्यर्थः । विशिष्टस्येच्छाविषयत्वे विशेषणस्यापीच्छाविषयत्वम् । प्रयोज्यसखीजननिष्ठज्ञानानुकूलो व्यापारो मदिष्टसाधनमिति ज्ञानात् सखीजननिष्ठज्ञानानुकूलव्यापारानुकूलव्यापारो जायतामित्याकारेच्छा गोप्या अस्तीति तादृशेच्छाविषयत्वव्यापारप्रयोज्यव्यापारजन्यज्ञानविषयत्वस्य कृष्णे सत्वात् ज्ञीप्स्यमानपदेन तस्य बोधनं सम्भवतीति भावः । कृष्णस्य कर्मत्वप्राप्तावनेन सम्प्रदानत्वम् । श्लाघृधातुयोगे विवरणवाक्ये परस्मै कथयतीति कथधातोरपि स एवार्थ इति कर्मसंज्ञा"गतिबुद्धि" इत्यनेन परशब्दार्थस्य, सखीजनस्य तु न भवति । तत्र ज्ञानसामान्यस्य बुद्धिपदेन ग्रहणात् । अत्र कथधात्वर्थत्वेन चाक्षुषज्ञानस्य विवक्षितत्वात् । किन्तु कर्मणा कृष्णेन सखीजनमभिसम्बन्धुमिच्छतीति सम्प्रदानसंज्ञा तस्य भवति । कृष्णेनाभिसम्बन्धस्तु कृष्णविषयकचाक्षुषज्ञानाश्रयत्वमेव । अत एव तत्र परत्वाच्चतुर्थी कृतेति दिक् ।

ननु णिच्प्रकृत्यर्थकर्मत्वमेव यदि ज्ञीप्स्यमानपदप्रवृत्तये विवक्षितं तदा ज्ञीप्स्यमान इत्येवोच्यताम् । तावतापि सनर्थेच्छाविषयज्ञानविषयत्वस्य कृष्णे सत्वात् जिज्ञा-

अन्ये त्वाहुः—कृष्णायात्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति। तत्राद्ये पक्षे कर्मत्वे प्राप्ते द्वितीये तु कारकशेषत्वात् षष्ठ्यां प्राप्तायां वचनम्। ह्नुत इति। सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः। यस्य कस्य चित् ह्नुत इति वा। तिष्ठत इति। स्थित्या स्वाभिप्रायं बोधयतीत्यर्थः। "प्रकाशनस्थेयाख्ययोः" ( पा० सू० १।३।२३ ) इति तङ्।

"धारेरुत्तमर्णः" ( पा० सू० १।४।३५ )॥ षष्ठ्यां प्राप्तायां वचनम्।

"स्पृहेरीप्सितः" ( पा० सू० १।४।३६ )॥ परत्वादिति। तेन परस्परेण स्पृहणीयशोभम्, स्पृहणीयगुणैर्महात्मभिरित्यादि सिद्धम्। यदा तु शेषत्वविवक्षा तदा षष्ठी। तेन 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इति सिद्धम्। एतच्च सर्वं हरदत्तादिरीत्योक्तम्। वाक्यपदीयहेलाराजग्रन्थयोस्तु स्पृहयतियोगे कर्मसञ्ज्ञायाः शेषषष्ठ्याश्च बाधिकेयं सम्प्रदानसञ्ज्ञेति स्थि-

---

शब्दरत्न।

अन्ये त्विति। प्राधान्यात् ज्ञीप्स्यमानपदेन ण्यर्थकर्मण एव ग्रहणमिति तदाशयः। तदेवाह—कृष्णायेति। कारकशेषत्वादिति। "कर्मणा यमभिप्रैति" ( पा० सू० १।४।३२ ) इति संप्रदानत्वाविवक्षया शेषत्वादित्यर्थः। सपत्नीभ्य इति। तत्र ह्नुवानेत्यन्तमार्थिकार्थकथनम्। स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः। एवं शपते इत्यपि व्याख्येयम्।

सिद्धमिति। स्पृहणीये कर्मण्यनीयरिति भावः। यदा त्विति। कर्मणः शेषत्वेन विवक्षेत्यर्थः। इति स्थितमिति। शेषत्वविवक्षायां चारितार्थ्येन कर्मसञ्ज्ञाबाधकत्वायोगोऽ-

ज्योत्स्ना।

स्यमानत्वस्य सत्वात् इष्टसिद्धिर्भविष्यतीत्याह मूले-अन्ये त्वित्यादिना। अदर्शनयोग्यदेशे स्थापनं ह्नुतिः। गुणवत्त्वबोधकः शब्दस्तुतिः। स्थितिः प्रसिद्धा। उपालम्भदानं शापः। अत्र तत्तत्पूर्वकबोधने श्लाघादीनां वृत्तिः।

"स्पृहेरीप्सितः" इति। अत्रायं भावः-स्पृहधातुः इच्छामात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये सम्प्रदानसंज्ञा। द्वितीये कर्मसंज्ञा। तत्रेप्सितत्वम्-धात्वर्थजन्यफलाश्रयत्वम्। तत्र फलावच्छिन्ने वाचीत्यस्य विषयतापत्तिरूपफलावच्छिन्नेच्छावाचीत्यर्थः। आश्रयता च फलतावच्छेदकः सम्बन्धः। तेन सम्बन्धेन विषयतारूपधात्वर्थफलाश्रयत्वात्कर्मत्वं पुष्पादेः। इच्छामात्रवाचित्वे इच्छाया धात्वर्थत्वेऽपि धात्वर्थजन्यत्वाभावाद्विषयतायाश्च धात्वर्थत्वाभावाच्च तद्विषयस्य कर्मत्वम्। कर्तृग्रहणेऽप्रत्यासत्त्या धात्वर्थफलाश्रयस्यैव कर्मसंज्ञाविधानादिति दिक्।

तम् । तन्मते स्पृहणीयमित्यत्र दानीय इतिवत् सम्प्रदाने कृत्यः । कुमार्यै इवेत्यत्र तु विभक्तिविपरिणामेन कान्ताय स्पृहयन्तीति व्याख्येयम् ।

"क्रुधद्रुह" ( पा० सू० १।४।३८ )॥ क्रुध कोपे, द्रुह द्रोहे, ईर्ष्य ईर्ष्यायाम् । असूयेति कण्ड्वादियगन्तः । एषामर्थ इवार्थो येषां धातूनामित्यर्थः । तत्र क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्या—असहनम् । असूया तु गुणेषु दोषारोपः । क्रुधद्रुहोरकर्मकत्वात् तद्योगे षष्ठी प्राप्ता, अन्ययोः सकर्मकत्वाद् द्वितीया प्राप्ता ।

"राधीक्ष्योः" ( पा० सू० १।४।३९ )॥ कारकमिति । कर्मकारकमिति तु प्राचः प्रमादः, एकसञ्ज्ञाधिकारात् । न च प्राथमिकप्राप्तिमात्राभिप्रायेण कर्मत्वव्यपदेशः । कृष्णसम्बन्धि शुभाशुभं पर्यालोचयतीत्यर्थाभ्युपगमेन षष्ठ्या एव प्राप्तेः ।

---

शब्दरत्न ।

त्रारुचिः । संप्रदाने इति । बाहुलकादिति भावः । व्याख्येयमिति । षष्ठ्यपवादत्वाच्छेषत्वविवक्षाकर्तुमशक्येत्यभिमानः ।

अमर्ष इति । वाक्चक्षुरादिविकारानुमेयः प्ररूढकोप इत्यर्थः । अपकार इति । अपकारविषयेच्छेत्यर्थः । असहनम्—उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः । गुणेषु—गुणविषये । दोषारोपः—दोषत्वारोपानुकूलो व्यापारः । अकर्मत्वादिति । क्रोधजन्यस्य फलस्य देवदत्तादौ सत्त्वेऽपि तस्य धात्ववाच्यत्वादिति भावः । द्वितीयेति । तत्प्रयोजिका कर्मसञ्ज्ञेत्यर्थः ।

प्राथमिकेति । राधीक्ष्योः प्रश्नविषयपर्यालोचनमर्थः, तत्र प्रश्नविषयरूपफलाश्रयत्वात्कर्मत्वप्राप्तिरिति भावः । इत्यर्थाभ्युपगमेनेति । तस्य प्रधानीभूतधात्वर्थाप्रयोज्यत्वेन तदप्राप्तिरिति भावः ।

ज्योत्स्ना ।

प्ररूढकोप इत्यर्थ इति । यावत् वाचःस्फुरणं, चक्षुषो रक्तत्वं दन्तानां घर्षणमित्यादयो विकारानाभिव्यज्यन्ते किन्तु सूक्ष्मरूपेणावस्थितास्तावच्चित्तस्य कोपावस्था । अभिव्यक्तेषु तेषु तु क्रोधावस्थेति तयोर्विशेषः । भार्यामीर्ष्यतीत्यादावन्यकर्तृकदर्शनविषयका सहमरूपो व्यापार इर्ष्यतेरर्थः । दर्शने च भार्यायां कर्मत्वसम्बन्धेनान्वयः । अत्रान्यकर्तृकदर्शन एव द्वेषः, न तु भार्यायामिति । यं प्रतिकोप इति विशेषणोपादानान्न तस्याः सम्प्रदानत्वमिति भावः ।

यद्यपि देवदत्ताय इर्ष्यतीत्यादौ देवदत्तादिसम्बन्धि उत्कर्षविरोधिधर्मानुकूलव्यापारजनकश्चित्तवृत्तिविशेष एव ईर्ष्यधातुना प्रत्याय्यते, प्रकृते तु भार्यायां कोपा-

"अनुप्रति" ( पा० सू० १।४।४१ )॥ गृण इति श्नान्तस्यानुकरणात् षष्ठी। होत्रे इति। कर्मत्वे प्राप्ते।

"परिक्रयणे" ( पा० सू० १।४।४४ )॥ क्रयो धनाद्यर्पणेनात्यन्तिकस्वीकरणम्। तस्य समीपं परिशब्द आचष्टे। तच्च नियतकालं ततो न्यूनत्वाद्विति व्याचष्टे—नियतेति। भृत्या—वेतनादिना।

तादर्थ्य इति। तस्मै कार्यायेदं तदर्थं कारणम्। तस्य भावस्तादर्थ्यम्। व्यक्त्या उपकारकत्वरूपः सम्बन्धोऽभिधीयते। 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्तात्। उपकारकत्वं चानेकधा। तेन ब्राह्मणाय दधीत्यादावपि भवति।

भक्तिर्ज्ञानायेति। ज्ञानात्मना परिणमत इत्यर्थः। प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी। अभेदविवक्षायां तु परत्वात्प्रथमैव। भक्तिर्ज्ञानं कल्पत इति। यदा तु "जनिकर्तुः" (पा०सू० १।४।३०) इति भक्तेरपादानत्वं विवक्ष्यते, तदा ज्ञानस्याभिहितकर्तृत्वात्प्रथमैव। भक्तेर्ज्ञानं कल्पते। 'क्लृपि' इत्यर्थग्रहणमित्याशयेनाह—सम्पद्यत इत्यादि।

---

शब्दरत्न।

कर्मत्वे प्राप्ते इति। शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं तयोरर्थः। शंसितुः प्रोत्साहने कर्मतयाऽन्वयः। होतुश्च शंसितर्यभेदान्वयः। एवं च कर्मसामानाधिकरण्यात् कर्मत्वप्राप्तिरिति भावः।

धनादीति। आदिना दुर्भिक्षेऽन्नम्। अनेकधेति। साक्षात्परम्परया चेत्यर्थः। ब्राह्मणाय दधीत्यादौ तद्भोजनोपकारकत्वेन तदुपकारकत्वं बोद्धव्यम्।

ज्ञानात्मनेति। आत्मशब्दस्तद्वृत्तिधर्मपरो ज्ञानत्वेन परिणमत इत्यर्थः। एवं च तस्य विकृतिवाचकत्वाभावान्न चतुर्थी, किन्तु प्रकृत्यादित्वात्तृतीया। ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेति यावत्। रूपान्तरप्राप्तिर्हि परिणाम इति भावः। प्रथमैवेति। भक्त्युपादानको ज्ञानरूपः परिणाम इति तदा बोधः।

ज्योत्स्ना।

भावान्न तथा। तथापि चित्तवृत्तिविशेषरूपेऽप्यार्थकत्वमुभयत्र समानम्। सा च यस्मिन् ताडनवाक्पारुष्याद्यनुकूलव्यापारजनकचित्तवृत्तिविशेषरूपकोपजन्या, तमुद्दिश्य तत्सम्बन्ध्युत्कर्षविरोधि धर्मानुकूलव्यापारं जनयति। यत्र च नोक्तविधकोपजन्या, किन्त्वन्यदर्शनजन्या तमुद्दिश्य तत्सम्बन्ध्युत्कर्षविरोधि धर्मानुकूलव्यापारं जनयतीति विशेषः। यं प्रतिकोप इत्यस्यानुपादाने तु ईर्ष्याजनककोपविषये देवदत्तादाविव

उत्पातेनेति । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः । तेन ज्ञापितेऽर्थे वर्त्तमानाच्चतुर्थीत्यर्थः । वातायेति । वातस्य ज्ञापिकेत्यर्थः । हितेति । समासविधानाज्ज्ञापकादिति भावः । एवं सुखयोगेऽपि बोद्धव्यम् । "तुमुन्ण्वुलौ क्रियायाम्" ( पा० सू० ३।३।१० ) इति सूत्रमहिम्ना क्रियार्थकमुपपदं क्रियावाच्येव फलतीत्याशयेनाह—क्रियेति । क्रियाफलकम् । क्रियावाचकप्रकृतिकमित्यर्थः । तुमुनिति ण्वुलोऽप्युपलक्षणम् । फलेभ्यो यातीत्यस्य फलान्याहरक इत्यपि विवरणे बाधकाभावात् । कर्मणीति । तथा च द्वितीयापवादोऽयमिति भावः ।

यत्तु प्राचा व्याख्यातमप्रयुज्यमानस्यैव कर्मणि यथा स्यात् , प्रयुज्यमानस्य मा भूदिति नियमार्थं सूत्रमिति । तन्न । अप्राप्तस्य नियमायोगात् । न च तादर्थ्य इति प्राप्तिः । न हि फलार्था यानक्रिया किं त्वाहरणार्था । आहरणं तु फलकर्मकमित्यन्यदेतत् । तुमुनो भाव एव विधानात्तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहार्थमित्याह—इति सूत्रेणेति । न

---

शब्दरत्न ।

समासविधानादिति । "चतुर्थी तदर्थ" ( पा० सू० ६।२।४३ ) इति हितसुखयोगे समासविधानाज्ज्ञापकादित्यर्थः । तदाह—एवमिति । वृत्तावाशीरर्थाप्रतीतेर्न "चतुर्थी चाशिषि" ( पा० सू० २।३।७३ ) इति चतुर्थ्या हितयोगे निर्वाहः । आशीरर्थयोगे आशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते । न च वृत्तौ तथा ऽन्वयो व्युत्पन्न इति हरदत्त इति दिक् ।

न हि फलार्थेति । यद्यपि ब्राह्मणाय दधीत्यादौ ब्राह्मणाय भोजनोपकारकमपि दधि तद्द्वारा ब्राह्मणोपकारकं तथाऽपि फलेनाहरणद्वारा न कोऽपि यानक्रियोपकार इत्या-

ज्योत्स्ना ।

तज्जनकान्यदर्शनविषये भार्य्यादावपि प्रसज्येतैव सम्प्रदानत्वमिति दिक् ।

असूया तु शौचाचारादिषु दम्भादिकृतत्वाध्यासप्रयोजिका चित्तवृत्तिः, द्वेषस्तु दुःखसाधनत्वज्ञानजन्यानभिनन्दनात्मिका चेतनाचेतनविषयसाधारणी चित्तवृत्तिः । सा च क्रोधादिभ्यः विलक्षणैवेति न तद्योगेऽनेन सम्प्रदानसंज्ञेति औषधं द्वेष्टि अस्मान् द्वेष्टि इत्येवेत्यलम् ।

क्रियार्थकमुपपदमिति । ननु ब्राह्मणाय दधीत्यादौ यथा स्वसम्बन्धिभोजनरूपोपकारत्वजनकत्वरूपतादर्थ्येन ब्राह्मणादेरन्वयविवक्षया ब्राह्मणादिपदोत्तरं चतुर्थी यथा प्रयुज्यते तथा फलेभ्यो यातीत्यादावपि स्वसम्बन्ध्याहरणादिजनकत्वसम्बन्धेन फलादे-

च तादर्थ्ये इत्येव गतार्थता शंक्या। भाववचनेनैव तुमुनेव तादर्थ्यस्य द्योतिततया प्रातिपदिकार्थमात्रे प्रथमाप्रसङ्गात्।

यत्तु प्राचोक्तम्—भाववचनादेव यथा स्यात् पाचको व्रजतीति ण्वुलन्तान्माभूदिति नियमार्थमिदं सूत्रमिति। तन्न। ण्वुलन्ते कर्तुः प्राधान्यात् कर्तारं प्रति च तादर्थ्याभावात् गुणीभूतयानस्य च विभक्त्यर्थानन्वयात्। ननु षष्ठ्यपीति कुतः षष्ठ्येवास्तु। अलंशब्दस्तु पर्याप्तीतरार्थक एव गृह्यतामित्याशंक्याह—तस्मै प्रभवतीति।

न त्वां तृणमित्यादि। ननु तृणादिवत् युष्मच्छादपि पक्षे चतुर्थ्या भाव्यम्। मैवम्। अनादर इति हि कर्मणो (१)विशेषणम्। अनादरद्योतकं य-

शब्दरत्न।

शयः। तुमुनेवेति। भाववचनघञादीनां तुमुनपवादतया तत्समानार्थत्वात्। एवं च प्रथमापवाद इति भावः। 'द्विषां विघाताय विधातुमिच्छत' इत्यत्र विघातायेति तादर्थ्ये चतुर्थी, विघातार्थं यद्विधानं तदर्थेच्छावत इत्यर्थः। एतेनात्र तुमुना तादर्थ्यस्योक्तत्वात्कथं चतुर्थीत्यपास्तम्। उत्तरक्रिययोस्तद्द्योतनेऽपि पूर्वक्रिययोस्तद्द्योतनात्।

। कर्तुः प्राधान्यादिति। एवं च तादर्थ्यचतुर्थ्यास्तत्राप्राप्तेर्नियमासंभव इति भावः। विभ-

ज्योत्स्ना।

र्थानादिक्रियायामन्वयविवक्षया फलादिपदेभ्योऽपि चतुर्थी सिध्येदितीत्थं सूत्रं व्यर्थम्। न चोक्तविवक्षायां फलान्याहर्तुं यान्तीत्यादावपि तदापत्तिरिति वाच्यम्। "उपपदविभक्तेः" इति न्यायेन तत्र द्वितीयाया एव युक्तत्वादिति चेन्न। फलकर्मकाहरणफलकं यानमिति बोधेच्छायाम् आहरणादिक्रियानिष्ठविशेष्यतानिरूपितकर्मत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन तात्पर्यविषयात्फलादिपदाच्चतुर्थी सिद्धये एतस्य सत्त्वात्।

अनादर इति कर्मणो विशेषणमिति। अनादर इत्यत्र नञोऽसुर इत्यादाविव विरुद्धार्थवाचकत्वादादरविरुद्धतिरस्काररूपार्थलाभः।। तद्द्योतकं कर्म गृह्यत इति न

प्र० (१) कर्मणो विशेषणमिति। अनादर इत्यत्र नञोऽसुर इत्यादाविव विरुद्धार्थवाचकत्वादादरविरुद्धतिरस्काररूपार्थलाभः। तद्द्योतकं कर्म गृह्यते इति न युष्मदादिशब्देभ्यस्तत्प्राप्तिरित्यर्थः। तिरस्कारोऽपि व्याख्यानबलादपकृष्टनिष्ठोपमानतानिरूपितोपमेयत्वरूपाप्यभावरूपोऽत्र गृह्यते; न तूपमेयेऽपकृष्टसादृश्यरूपोऽपि। तादृशतिरस्कारप्रतीतिश्च नञ्समभिव्याहार एवेति 'न त्वां तृणाय' इत्यादि नञ्प्रयोगे एव तदुदाहरणोक्तिः। 'तृणाय मत्वा रघुनन्दनोऽपि' इति भट्टिप्रयोगेऽपि नञमध्याहृत्य चतुर्थी उपपादनीयेति बोध्यम्।

त्कर्मेति । तादृशं तृणमेव न तु युष्मदर्थः ।

इति चतुर्थी ॥

"ध्रुवम्" (पा० सू० १।४।४४) इति ॥ ध्रु गतिस्थैर्ययोः । अस्मात्कुटादेः पचाद्यच् ध्रुव स्थैर्ये इति पाठे तु इगुपधलक्षणः कः । ध्रुवं स्थिरम्—प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयः । तच्चार्थादवधेरेवेत्याह—अ-

शब्दरत्न ।

त्यर्थेति । तादर्थ्यचतुर्थ्यर्थे इत्यर्थः ॥

इति चतुर्थी ॥

प्रकृतेति । कर्त्तर्यतिव्याप्तिवारणाय सत्यन्तम् । अन्यथा कर्तृसञ्ज्ञाया ह्ययमपवादः स्यात् । कर्तृसंज्ञा तु पचतीत्यादियोगे चरितार्था । कर्मणि ग्रामे ऽतिव्याप्तिवारणाय वि-

ज्योत्स्ना ।

युष्मदादिशब्देभ्यस्तत्प्राप्तिरित्यर्थः । तिरस्कारोऽपि व्याख्यानबलादपकृष्टनिष्ठोपमानतानिरूपितोपमेयत्वस्याप्यभावरूपो गृह्यते । नतूपमेयेऽपकृष्टसादृश्यरूपोऽपि । तादृशतिरस्कारप्रतीतिश्च नञ्समभिव्याहार एवेति न त्वा तृणेत्यादौ नञ्योगे एव तदुदाहरणोक्तिः । 'तृणाय मत्वा रघुनन्दनोऽपि' इति भट्टिकाव्ये नञमध्याहृत्य चतुर्थी उपपादनीयेत्यलम् ।

इति चतुर्थी ।

कर्तरीति । यत्र प्रयागात् काशीं गच्छतीति प्रयुज्यते; तत्र चैत्रादावतिव्याप्तीतिवारणायेत्यर्थः । प्रकृतेति धात्वर्थविशेषणम्-तच्च शब्दप्रयोगाधिकरणकालिकविवक्षाविवक्षाविषयत्वम्, नतु तत्तद्धातुवाच्यत्वेन प्रसिद्धत्वम् ।

केचित्तु-प्रकृतेति धातुविशेषणमित्याहुस्तन्न । "अपादानमुत्तराणि कारकाणि बाधन्ते" इतिभाष्यविरोधापत्तेः ।

तथाहि—धनुषा विध्यतीति वाक्ये तदा निःसरणपूर्वके व्यधने धातोर्वृत्तिस्तदा धनुषो निःसरणावधित्वात्प्राप्तापादानं बाधित्वा; व्यधनम्प्रति करणत्वेन विवक्षितत्वात्करणसंज्ञा भवतीति भाष्योक्तिः सङ्गच्छते । यदि प्रकृतपदं धातुविशेषणं स्यात्तदा धनुर्विध्यतीति प्रयोगे यादृशव्यापाराश्रयत्वेन तत्र कर्तृत्वं भवति तादृशव्यापारस्य कर्तृत्वोपपत्तये वधधातुवाच्यत्वमावश्यकम् । तद्व्यापारद्वारैव करणत्वस्य वाच्यतया तदनाश्रयत्वस्य धनुष्यभावेनापादानत्वाप्रसक्त्या भाष्यासङ्गतिः स्पष्टैवेति दिक् ।

अत्रेदं तत्वम्—मूलोक्तव्याख्यानसम्मतध्रुवपदार्थस्वीकारे भाष्यसम्मतध्रुवपदार्थस्त्यक्त एव । तथाहि भाष्ये-'त्रस्तादश्वात्पतितः, 'धावतोऽश्वात्पतितः' इत्यादा

वधिभूतमिति । धावत इति । इह क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुद्ध्यते । परस्परस्मान्मेषावपसरत इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादानाद् एकनिष्ठां गतिं प्रतीतरस्यापादानत्वं न विरुद्ध्यते । उक्तञ्च—

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥

---

शब्दरत्न ।

शेष्यम् । अवधित्वं न विरुद्ध्यत इति । तदुपात्तक्रियानाश्रयत्वादिति भावः । न विरुध्यते । तदनाश्रयत्वादिति भावः ।

अतदावेशादिति । तद्धातूपात्तगत्यनावेशादित्यर्थः । तदावेशादिति पाठे तन्मात्रावेशाद् विभागमात्रावेशादित्यर्थः ।

ज्योत्स्ना ।

अश्वे ध्रुवत्वाभावमाशङ्क्य अध्रौव्यमविवक्षितमत्र यतः सतोऽप्यविवक्षा भवति 'अलोमिका एडकाः अनुदराकन्येति । असतश्च विवक्षा भवति । समुद्रः कुण्डिकाविन्ध्योवर्द्धितकमिति । असतश्चेत्यादि निदर्शनार्थमुक्तम् , नत्वस्य प्रकृते उपयोगः, प्रकृतोपयोगि सतोऽप्यविवक्षेत्येव । तत्र कैयटोक्तस्याध्रुवत्वस्य विवक्षाः तदा भाष्यासङ्गतिः। तेन हि त्रस्तादश्वादिति प्रयोगे अव्याप्त्युपपादनावसरे अचलं ध्रुवमेकरूपञ्चेति परिस्पन्दे ध्रुवता नास्तीत्युक्तम् । अनेकार्थत्वाद्धातूनां त्रासपूर्वकपरिस्पन्दे त्रसिर्वर्तत इति नाश्वस्य ध्रुवत्वम्। नवाऽध्रौव्यस्याविवक्षितत्वादित्यादिना समाधानावसरे ध्रौव्यमपायविषयमाश्रीयते । अपाये यदनाविष्टं तदपाये ध्रुवमुच्यते । देवदत्तकर्तृके पाते त्रस्तस्याप्यश्वस्यापापावेशाभावाद्ध्रुवत्वम् । एतत्कैयटप्रदर्शितरीत्या मूलेऽप्युक्तम् । तत्र पदव्यापारानाश्रयत्वस्य त्रस्तेऽश्वेसत्वाद्ध्रुवत्वमिति यदि ब्रूषे तदाऽध्रौव्यमश्वे नास्त्येवेति सतोऽप्यविवक्षेत्यादेरसङ्गतिः स्पष्टैव ।

किञ्च सिद्धान्तेऽपि तदुक्तध्रुवत्वं भाष्यकृता नोक्तं न्यूनतापत्तिः । तस्मात्प्रकृतसूत्रे अवधिभावोपगमाश्रयत्वे सति तदन्यस्यावधित्वोपयोगिव्यापारानाश्रयत्वमिति ध्रुवत्वम्बोध्यम् ।

अपाये इति । विभागजन्यसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेषः । अत एवगतिर्विनात्ववधिना नापाय इति कथ्यत इति हरिणाऽप्युक्तम् ।

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥ इति ।

पर्वतात्पततो ऽश्वात्पततीत्यत्र तु पर्वतावधिकपतनाश्रयो ऽश्वस्तदवधिकं देवदत्तादिनिष्ठपतनमर्थः । पञ्चम्यर्थे ऽवधौ अभेदेन संसर्गेण प्रकृत्यर्थो विशेषणम् । प्रत्ययार्थस्तु क्रियायां, स च धर्मी न तु धर्ममात्रम् । विभक्त्यर्थे विहितस्य बहुव्रीहेर्धर्मिपरताया निर्विवादत्वात् । उद्धृतौदना स्थालीत्यत्र हि ओदनकर्मकोद्धरणावधिभूतेत्यर्थः ।

जुगुप्सेति । भाष्यकारास्तु जुगुप्सादीनां तत्पूर्वकनिवृत्तिलक्षकतामाश्रित्य सूत्रेण तत्सिद्धिमाहुः । एवमुत्तरसूत्रेष्वपि ।

"भीत्रा" ( पा० सू० १।४।२५ ) ॥ कथं तर्हि "कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे" इति रामायणम् ।

अत्राहुः—कस्य संयुग इति । न चैवं संयुगस्यैवापादानसञ्ज्ञापत्तिः । परयाऽधिकरणसंज्ञया बाधात् । अधिकरणत्वाविवक्षायां त्विष्टापत्तिः । अध्ययनादिति । अध्ययनसम्बन्धिनी ग्लानिरित्यर्थः ।

"जनिकर्तुः" ( पा० सू० १।४।३० ) ॥ जननं जनिरुत्पत्तिः । "इञजादिभ्यः" ( पा० सू० ४।२।११२ ) इति जनेर्भावे इञ् । "जनिघसिभ्यामिण्" ( उ० सू० ५७९ ) इत्युणादिसूत्रेण इण्वा । "जनिवध्योश्च" ( पा० सू० ७।३।३५ ) इति वृद्धिप्रतिषेधः । तस्याः कर्तेति शेषषष्ठ्या समासः । तथा च धात्वन्तरयोगे ऽपि भवति 'अङ्गादङ्गात्सम्भवसि' इति यथा । तदेतदाह—जायमानस्येति ।

एतेन "इक्श्तिपौ धातुनिर्देशे" ( का० वा० ) इति इका निर्देशोऽयमित्याश्रित्य "गमहन" ( पा० सू० ६।४।९८ ) इत्युपधालोपप्रसङ्गमर्थासङ्गतिं,

शब्दरत्न ।

विशेषणमिति । वस्तुतो ऽवध्यवधिमद्भावरूपविभक्त्यर्थसम्बन्धेनावधिक्रिययोरन्वय इत्यन्यत्र निरूपितम् । सा च क्रिया विभागरूपा । कालिकसम्बन्धेन फलाश्रये ऽतिप्रसङ्गवारणाय फलतावच्छेदकसम्बन्धस्य कर्मलक्षणे निवेशान्न तदाश्रयस्य कर्मत्वं विभागजन्यसंयोगस्य धात्वर्थत्वाद्वेत्यन्यत्र विस्तरः । निवृत्तीति । विश्लेषेत्यर्थः । इष्टापत्तिरिति । शेषत्वविवक्षया कस्येति षष्ठीत्यन्ये । संबन्धिनीति । तज्जन्येत्यर्थः । अर्थासङ्गतिमिति । न हि धातुं प्रति कर्तृत्वं किं तु तद्वाच्यक्रियां प्रत्येवेत्यर्थः ॥

समासासुपपत्तिं, चोद्भावयन्तो मीमांसावार्त्तिककाराः समाहिता इति भावः ।

इह सूत्रे प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम् । पुत्रात्प्रमोदो जायत इत्युदाहरणात् । उपादानमात्रपरमिति तु भाष्यकैयटमतम् । तदुभयसाधारणमुदाहरणमाह—ब्रह्मण इति । ब्रह्मा हिरण्यगर्भः । स च हेतुरेव न तूपादानम् । किं च ब्रह्म मायाशबलम् । तद्धि सर्वकार्य्योपादानमिति(१) वेदान्तसिद्धान्तः ।

"भुवः" ( पा० सू० ४।१।४७ ) । भवनं भूरिति । सम्पदादित्वाद्भावे क्विप् । पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते स्वरितत्वादित्याह—भूः कर्तुरिति । प्रभवत्यस्मादिति प्रभवः ।

---

शब्दरत्न ।

समासानुपपत्तिः "तृजकाभ्याम्" ( पा० सू० २।२।१५ ) इति निषेधात् । उपधालोपप्रसङ्गस्तु "गमेरिड्" ( पा० सू० ७।२।५८ ) इत्यादाविव जनिघसिभ्यामित्यादाविव चानुकार्यस्वरूपभङ्गभिया न कृत इत्यन्ये । सौत्रत्वादिति परे । भाष्यकैयटेति । इदमेव युक्तम् । प्रकृतिशब्दस्य तत्रैव प्रसिद्धेः । प्रत्याख्यानपरभाष्यसंमतत्वाच्च ।

किं च वृत्तिमते "कारक" इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यान्वयो ऽसम्भवी, न हि कारणानां मध्ये उपादानकारणमितिवत्कारणानां मध्ये कारणमिति सम्भवति ।

भावे क्विविति । व्याख्यानाज्जनिसाहचर्याच्चेति भावः । प्रभवतीति । प्रभवनमत्र प्रथ-

ज्योत्स्ना ।

भाष्यकैयटयोर्मतमिति । तत्र भाष्ये "अयमपि योगः शक्योऽवक्तुम् । कथम् ; गोमयाद्वृश्चिका जायन्ते, गोलोमाविलोमभ्यो दुर्वा जायन्ते, अपक्रामन्ति तास्तेभ्यः" इति उक्तम् । तत्र अपक्रामन्तीति प्रतीकमुपादाय लोकप्रसिद्ध्याश्रयेणैतदुच्यते लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीति कैयटेन व्याख्यातम् । तत्र यदि प्रकृतिशब्दः कारणमात्रपरः स्यात्तदा दण्डादिनिमित्तकारणवाचकादपि पञ्चमी स्यात् । प्रत्याख्यानपक्षे तु ततः कार्यस्य निर्गमाभावात्प्रत्याख्यानविरोधः स्यादेवेति सूत्रे प्रकृतिशब्द उपादानकारणमात्रपर इति दिक् ।

वेदान्तसिद्धान्त इति । "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" अ० १ पा० ४ सू० २३ इति व्यासमुनिप्रणीतसूत्रेण ब्रह्मण एवाभिन्ननिमित्तत्वस्योपपादनादिति भावः ।

---

प्र० ( १ ) वेदान्तसिद्धान्त इति । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' अ० १—पा० ४—सू० २३ इति व्यासमहर्षिप्रणीतसूत्रेण ब्रह्मण एवाभिन्ननिमित्तोपादानत्वस्य सिद्धान्तितत्वादिति भावः ।

"ल्यब्लोप" ( का० वा० ) इति । ल्यबन्तस्य गम्यमानार्थकत्वादप्रयोग इत्यर्थः ।

"यतश्च" (का० वा०) इति । यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते तस्मादित्यर्थः । तेन पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः ।

कालादिति । तद्युक्यादित्यपेक्ष्यते । प्रपञ्चार्थमिति । न च इतरस्त्वन्यनीचयोरित्यमरोक्तेर्नीचार्थकस्येदं ग्रहणमिति वाच्यम् । अस्मात्तारो मन्दो वेत्यादाविव "पञ्चमी विभक्तेः" ( पा० सू० २।३।४२ ) इत्येनेनैव सिद्धत्वात् ।

यत्तु इतर इति निर्दिश्यमानप्रतियोगिक एव प्रयुज्यते । तद्यथा—चैत्रः शूरः, इतरः कातर इति । अतो नायमन्यार्थ इति । तन्मन्दम् । प्रतियोग्याकाङ्क्षाया उभयत्र तुल्यत्वात् । उदाहृतकोशविरोधाच्च । ऋते कृष्णादिति । कथन्तर्हि 'पुरुषाराधनमृते' इति । प्रमादोऽयमित्येके ।

अन्ये तु "उभः सर्वतसोः" इत्यत्र दृशिग्रहणात् चैत्रं यावच्छीतमित्यादाविव ऋते योगे द्वितीयापि साधुरित्याहुः । युक्तं चैतत् । 'ऋते द्वितीया च' इति चान्द्रसूत्रात् । प्रभृतियोग इति । (१) प्रभृत्यर्थैर्योग इत्यर्थः । तथा च

शब्दरत्न ।

मप्रकाशः । सूत्रे भवनमप्येतदेव ।

अप्रयोग इति । तदन्तशब्दाज्ञानेऽपि तदर्थज्ञाने इत्यर्थः । यथा प्रविश पिण्डीमित्यादौ "इग्यणः" ( पा० सू० १।१।४५ ) इति सूत्रभाष्योक्तरीत्या वाक्यैकदेशप्रयोगस्तस्यैव च पदस्य वृत्त्या संपूर्णवाक्यार्थबोधकता तथा प्रकृते ऽपीति बोध्यम् । एवं फलेभ्यो यातीत्यादावपि ।

अर्थद्वारा युक्तादिति । तदर्थपरिच्छेद्यादित्यर्थः । सिद्धत्वादिति । अन्यार्थयोगे तु न तेन सिद्धिः । निर्धारणप्रयोजकीभूतधर्मानभिधानात् परस्परप्रतियोगिकभेदस्य परस्परवृत्तित्वेनानिर्धारकत्वात् । तुल्यत्वादिति । तद्वदन्यः कातर इत्यस्यापि वक्तुं शक्य-

ज्योत्स्ना ।

प्रभृत्यर्थैर्योगे इत्यर्थ इति । "अपादाने पञ्चमी" इति सूत्रस्थेन "यतश्चाध्वकालनिर्माणं ततः पञ्चमी" कार्तिक्या आग्रहायणी मासे इति वार्तिकप्रत्याख्यानाय प्रवृत्तेन, इदम-

प्र० ( १ ) प्रभृत्यर्थैर्योग इति । 'अपादाने पञ्चमी' इतिसूत्रस्थेन 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी' कार्तिक्या आग्रहायणी मासे' इति वार्तिकप्रत्याख्यानाय प्रवृत्तेन 'इदमत्र प्रयोक्तव्यं सत्र प्रयुज्यते कार्तिक्याः प्रभृति आग्रहायणी मासे' इति भाष्येण प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थस्य बोधितत्वात् 'प्रभृत्यर्थयोगे पञ्चमी' इति वचनं सिध्यतीति भावः ।

कार्तिक्याःप्रभृतीति भाष्यं विवृण्वन् कैयटः प्रायुङ्क्त—तत आरभ्येत्यर्थ इति। वचनग्रहणादिति। सामर्थ्यादवधिमात्रं विवक्ष्यते। तेन विनेति विशेषणांशस्तु नेति भावः।

यद्वा मर्यादेति शब्द उच्यतेऽस्मिंस्तन्मर्यादावचनम्। "आङ्मर्यादाभिविध्योः" (पा० सू० २।१।१३) इति सूत्रम्, तत्र य आङ् दृष्टः स उक्तसञ्ज्ञ इत्यर्थः। परिहरेरिति। "परेर्वर्जने वा वचनम्" (का० वा०) इति वार्त्तिकात्पक्षे द्विर्वचनाभावः। परित्रेति। अत्र पञ्चमीविधौ वर्जनार्थेनापेन साहचर्यादिति भावः।

"प्रतिनिधिप्रतिदाने च" (पा० सू० २।३।११)॥ अस्मादेव निर्देशादाभ्यां योगे पञ्चमीत्याहुः। मुख्यस्याभावे तत्सदृश उपादीयते स प्रतिनिधिः। दत्तास्य प्रतिनिर्यातनं प्रतिदानम्।

---

शब्दरत्न

त्वादिति भावः। कैयट इति। मेरुपृष्ठादारभ्येति पातञ्जलभाष्यप्रयोगोऽपि बोद्धयः। आरभ्येति। (१)अवधिमादायेत्यर्थकं तत्। आदिप्रकारार्थप्रभृतिशब्दयोगे तु न पञ्चमी। मानाभावादित्यन्यत्र विस्तरः। विशेषणांशस्तु नेति। तेन विनेति मर्यादा, तेन सहेत्यभिविधिरिति वृद्धोक्ताविति भावः।

अस्मादेव निर्देशादिति। यत्त्वनेन सूत्रेणैवेति। तन्न। एतद्घटकीभूतप्रत्योः प्रतिनिध्याद्यर्थकत्वाभावेन कर्मप्रवचनीयत्वाभावात्। उपादीयते इत्यस्य य इत्यादिः। दत्तस्य तत्तुल्यमूल्यादेः प्रतिनिर्यातनं परावृत्त्य दानम्।

ज्योत्स्ना।

त्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृति आग्रहायणी मासे इति भाष्येण प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी इत्यर्थस्य बोधनात्,'प्रभृत्यर्थयोगे पञ्चमी' इति वचनं सिद्धमिति दिक्।

अवधिमादायेत्यर्थकं तदिति। तत्—प्रभृतिपदम्। एवञ्च प्रभृतिपदस्य आरभ्येत्यर्थकत्वे आरभ्येत्यस्य प्रभृत्यर्थकत्वं नानुचितम्। आरभ्येत्यस्य गृहीत्वा इत्यर्थस्यापि सत्वेन आवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोक इति पातञ्जलभाष्यप्रयोगे तदर्थकारभ्यप्रयोगे द्वितीया साधुरिति बोध्यम्।

---

प्र० (१) अवधिमादायेत्यर्थकमिति। आरभ्यशब्दस्य गृहीत्वा इत्यर्थस्यापि सत्त्वेन अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोक इति पातञ्जलभाष्यप्रयोगे तदर्थकारभ्यशब्दयोगे द्वितीया साधुरिति बोध्यम्।

"अकर्तरि" ( पा० सू० ३।३।१९ ) ।। पञ्चमी स्यादिति । तृतीयापवादोऽयम् । शतेनेति । शतमिह उत्तमर्णाय धार्यमाणत्वाद्दणम् । "तत्प्रयोजको हेतुश्च" ( पा०सू० १।४।५४ ) इति चकारेण कर्तृसंज्ञा च । योगविभागादिति । एतच्च "हेतुमनुष्येभ्यः" (पा०सू० ४।३।८१) इति सूत्रे हरदत्तग्रन्थे स्पष्टम् । स्त्रियां चेति । 'बाहुलकं प्रकृतेस्तनु दृष्टेः' ( का० वा० ) इति वार्तिकनिर्देशोऽपीह ज्ञापकः ।

"पृथग्विना" ( पा० सू० २।३।३२ ) ।। समुच्चयार्थमिति । निपातानामनेकार्थत्वादिति भावः । पञ्चमीति । तत्र मण्डूकप्लुत्या पञ्चमी । द्वितीया तु सन्निहितैव । दूरं दूरेण चेति । इह सप्तम्यपि वक्ष्यते ।

किं च "दूरान्तिकार्थेभ्यः" ( पा० सू० २।३।३५ ) इति सूत्रस्योत्तरत्राप्यनुवर्तनादधिकरणे ऽप्येभ्यो विभक्तिचतुष्टयं बोद्धव्यम् । तथा च प्रयुज्यते 'दूरादावसथान्मूत्रम्' इति । आवसथस्य दूर इत्यर्थः । असत्त्वेति । सत्त्ववचनत्वं च तद्विशेष्यकत्वम् । एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते । तदाह—दूरः पन्था इति ।

---

शब्दरत्न ।

तृतीयेति । हेतुतृतीयेत्यर्थः । हरदत्तग्रन्थेति । भाष्ये तु न दृश्यते । इह—अगुणे स्त्रियां चेत्यत्र ।

सन्निहितैवेति । (१)उभयोः समुच्चयस्तु व्याख्यानादिति बोद्धव्यम् । सप्तम्यपीति । प्रतिपदिकार्थमात्र इति शेषः । तद्विशेष्यकत्वमिति । सत्त्ववचनप्रातिपदिकार्थविशेषणत्वमित्यर्थः । "दूरान्तिकार्थेभ्यः" ( पा० सू० २।३।३९ ) इत्यस्योदाहरणे क्रियाविशे-

ज्योत्स्ना ।

ननु सन्निहितत्वाद्द्वितीयाया एव समुच्चयः स्यादत आह—व्याख्यानादिति । अन्यतरस्यां ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीति भाष्योक्तिमूलकाद्व्याख्यानादित्यर्थः ।

---

प्र० ( १ ) उभयोः समुच्चयस्तु व्याख्यानादिति । अन्ये तु द्वितीया न समुच्चीयन्ते । विना वातं विना वर्षमित्यादौ द्वितीयायाः 'क कर्म प्रध्वस्तं फलति पुरुषाराधनमृते' 'चैत्रं यावत् शीतम्' इत्यादाविव 'ततोऽन्यत्रापि दृश्यते' इत्यनेनैव सिद्धत्वात् । अत एव भाष्ये द्वितीयासमुच्चयो नोक्तः । अत एवोत्तरत्र 'करणे च स्तोक' इति सूत्रेण तृतीयापञ्चम्योरेव विधानं, न तु द्वितीयाया अपि । अन्यथा अत्र द्वितीयायाः समुच्चये उत्तरत्रापि तदनुवृत्तिः पञ्चम्या इव स्यात् । द्वितीयानुवृत्त्यभावे तु पञ्चम्यपि नानुवर्तेत सन्नियोगशिष्टत्वादिति प्राहुः ।

एतेन "करणे च स्तोक" (पा० सू० २।३।३३) इति सूत्रे करणे किम् ? क्रियाविशेषणे कर्मणि मा भूत् स्तोकं पचति, क्रिया न द्रव्यमिति प्राचां ग्रन्थो व्याख्यातः।

यत्तु तमनूद्य क्रियाया विशेष्यत्वेन द्रव्यत्वावश्यंभावाच्चिन्त्यमित्यूचुस्तदेव चिन्त्यम्। धातुवाच्यायाः क्रियाया असत्त्वरूपास्याकरे प्रसिद्धत्वात्। न च विशेष्यत्वे तदनुपपत्तिः। कृदभिहितभाववल्लिङ्गसङ्ख्याद्ययोगित्वमात्रेण तदुपपत्तेः। यद्यपि हतशायिकाः शय्यन्त इत्यादौ भाष्ये संख्यान्वयः स्वीकृतः।

---

शब्दरत्न।

षणत्वेनासत्त्ववाचिता बोद्धया। "सप्तम्यधिकरणे च" (पा० सू० २।३।३६) इत्यत्र तु नास्य सम्बन्धो व्याख्यानादिति बोद्धयम्। क्रिया न द्रव्यमिति। एवं च तत्समानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्याद्रव्यवाचित्वमिति भावः।

तमनूद्येति। प्राचां ग्रन्थमनूद्येत्यर्थः। तदनुपपत्तिः—असत्त्वानुपपत्तिः। कृदभिहितभाववदिति। वैधर्म्ये दृष्टान्तः। यद्वा पक्त्वा पक्तुमित्यादिकृदभिहितभावेत्यर्थः। इत्यादाविति। इदमुपलक्षणं पचतीत्यादावपि कारकगतसंख्यां क्रियायामारोप्य तत्रैव

ज्योत्स्ना।

अन्ये तु—अत्र द्वितीया न समुच्चीयते, 'फलति पुरुषाराधनमृते', चैत्रं यावच्छीतम्, इत्यादिवत् विना वातं विना वर्षं इत्यादौ द्वितीयायास्ततो "अन्यत्रापि दृश्यते" इत्यनेनैव सिद्धत्वात्। अत एव भाष्ये द्वितीया समुच्चयो नोक्तः। अत एव उत्तरत्र "करणे च स्तोकाल्प" इति सूत्रेण तृतीयापञ्चम्योरेव विधानं, न तु द्वितीयाया अपि। अन्यथा अत्र द्वितीयायाः समुच्चये पञ्चम्या इव तत्रापि द्वितीयाया अपि अनुवृत्तिः स्यात्। द्वितीयानुवृत्त्यभावे पञ्चम्या अपि अनुवृत्तिर्न स्यात्। सन्नियोगशिष्टत्वादिति प्राहुः।

"सप्तम्यधिकरणे च" इत्यत्रेति। आकरोक्तादृशोदाहरणप्रदर्शनमूलकादित्यर्थः।

ननु 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' पाकः इत्यादावस्ति। तत्र लिङ्गसंख्यायोगोऽपि। अतस्तत्र असत्त्ववचनमस्तीति दृष्टान्तासंगतिरित्याह—वैधर्म्ये दृष्टान्तः। एवञ्च पाक इत्यत्र भावो घञ्प्रतिपाद्यो यथा द्रव्यवत् प्रकाशते तथा प्रकृते नेत्यर्थः कार्यः।

साधर्म्ये दृष्टान्तसम्भवे वैधर्म्यपर्यन्तानुधावनं व्यर्थमित्याह—यद्वेति। अव्ययकृतो भावे" इति सिद्धान्तात् पक्त्वादिपदप्रतिपाद्यक्रियाया यथाऽद्रव्यत्वं तथा धातूपस्थाप्यफलस्याप्यद्रव्यत्वमस्तीति साधर्म्ये दृष्टान्तत्वसम्भवादित्यर्थः।

पचति भवतीत्यादौ कर्तृत्वकर्मत्वान्वयश्च । तथाऽपि लिङ्गस्य कारकान्तरस्य चाऽभावो निर्बाध एव । उक्तं च—

क्रिया न युज्यते लिङ्गक्रियानाधारकैः ।
असत्त्वरूपता तस्या इयमेवावधार्यताम् ॥

इति पञ्चमी ॥

राज्ञः पुरुष इति । प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव षष्ठी, तदर्थश्च पुरुषे विशेषणम् । प्रधानात्तु न षष्ठी । उक्तन्यायविरोधात् ।

शब्दरत्न ।

( पा० सू० ४।१।१ ) तदन्वयस्य "ङ्याप्" सूत्रे भाष्ये उक्तत्वात् । भवतीत्यादाविति । पश्य मृगो धावतीत्यादिशब्दार्थः । लिङ्गस्येति । तन्निरूपितविशेष्यतायामेव द्रव्यत्वमिति भावः ।

क्रियानाधारेति । धात्वर्थानाधारेत्यर्थः । करणत्वादिभिरिति यावत् । स्वातिरिक्तपदान्तरवाच्यक्रियानिरूपितकरणत्वादिभिर्न युज्यत इत्यर्थः । इयमेव—लिङ्गकरणत्वादिभिरसम्बन्धरूपैव । असत्त्वरूपतेत्येतदपेक्ष्य स्त्रीलिङ्गनिर्देशः ॥

इति पञ्चमी ॥

प्रत्ययार्थस्य—संबन्धस्य । प्रकृत्यर्थम्—राजार्थम् । प्राधान्यादिति । संसर्गविशेष्योभयनिरूपितत्वस्य प्रकारतायां स्वीकारादिति भावः । तदर्थश्च—प्रकृत्यर्थश्च । विशेषणम्—षष्ठ्यर्थसंबन्धेनेति भावः ।

यत्तु तदर्थशब्देन प्रत्ययार्थः संबन्ध इति । तन्न । तस्य संसर्गविधयैव भानस्य भा-

ज्योत्स्ना ।

ङ्यापसूत्रे भाष्ये उक्तत्वादिति । तत्र हि प्रातिपदिकाधिकारस्य प्रयोजनकथनावसरे धातोः स्वाद्युत्पत्तिशङ्काया अपवादैस्तिबादिभिर्बाधेन निवारणे कृते "तिङन्तात्तर्हि मा भूवन्" इति परेणोक्ते "एकत्वादिभिरर्थैस्स्वादयो विधीयन्ते ते चात्र तिङन्तोक्ता एकत्वादय" इति कृत्वा "उक्तार्थत्वान्न भविष्यन्ति, टाबादयस्तर्हि तिङन्तान्माभूवन्निति स्त्रियां टाबादयो विधीयन्ते । न च तिङन्तस्य स्त्रीत्वेन योगोस्ति" इति भाष्ये उक्तम् । टाबादय इति प्रतीकमुपाय कैयटेनोक्तम्—यथा तद्गतलिङ्गाभिधायकत्वमपि स्यादिति भावः । नच तिङन्तस्येति, क्रियाप्रधानत्वादाख्यातस्य क्रियायाश्चासत्वभूतत्वात्सत्वधर्मेण लिङ्गेन योगो न भवति । न च द्रव्यधर्मलिङ्गग्रहणयोग्यत्वं नियतत्वाच्छब्दशक्तीनामिति ।

इति पञ्चमी ॥

संसर्गविधयैव भानस्य भाष्येति । ननु व्युत्पत्तिवादोक्तरीत्या प्रतिबध्यप्रतिबन्धक-

शेषत्वाभावाच्च । पुरुषशब्दो हि यथायथं प्रातिपदिकार्थमात्रवृत्तिः कारकार्थको वा । यदा तु नैवं तदा पुरुषशब्दादपि षष्ठी भवत्येव । यत्त्वप्रधानं शेष इति । तन्न । प्रातिपदिकार्थमात्रे शुक्लो घट इत्यादौ विशेषणे षष्ठीप्रसङ्गात् । न च प्रथमया बाधः । तस्याः प्राधान्ये चरितार्थत्वात् ।

कर्मादीनामपीति । यथा विशेषाविवक्षायां रूपवानितीति तद्विवक्षायां तु नीलः पीत इत्यादि प्रयुज्यते तथेदमपि न्यायसिद्धमिति भावः ।

सतामिति । एवं च 'नपुंसके भावे क्तस्य योगे शेषत्वविवक्षायां च' इति 'तृप्त्यर्थानां करणे षष्ठी वा' इति च प्राचां ग्रन्थे पठ्यमानं नापूर्वं वचनमिति भावः ।

---

शब्दरत्न ।

ष्यादिसंभवत्वात् ।

उक्तन्यायेति । प्रकृत्यर्थस्यैव प्रत्ययार्थं प्रति प्राधान्यापत्तेरित्यर्थः । राजसम्बन्धी पुरुष इत्येव बोधादिति भावः । शेषत्वाभावमुपपादयति—पुरुषशब्द इति । इदमपि—कर्मादीनां संबन्धसामान्येनान्वयविवक्षणमपि ।

नापूर्वमिति । "षष्ठी शेषे" (पा० सू० २।३।५० ) इति सूत्रेण सिद्धत्वादिति भावः ।

ज्योत्स्ना ।

भावलाघवानुरोधेन प्रकारतयैव भानमिष्यताम्, किन्तद्विरुक्त्येति चेन्न । ज्ञानद्वयस्य युगपदसम्भवेन ज्ञानघटितसामग्रिककार्यद्वयासम्भवात् । प्रतिबध्यप्रतिबन्धकभावोपगमस्य व्यर्थत्वात् । समूहालम्बनस्यैकस्यापि कार्यद्वयप्रयोजकस्य सम्भवे तु प्रत्यक्षशब्दात्मकस्यैकस्यापि समूहालम्बनात्मकस्य कार्यस्य सम्भवेन प्रतिबध्यप्रतिबन्धकभावोपगमवैयर्थ्यं तदवस्थमेव । मनसः परमाणुरूपस्य निरवयवस्य सत्त्वेन युगपत् ज्ञानद्वयासम्बन्धेन तार्किकाणां कथंचित् प्रतिबध्यप्रतिबन्धकभावावश्यकत्वेऽपि जन्यत्वेन सावयवं मनः इति सांख्यमतमनुगच्छतां वैयाकरणानां प्रतिबध्यप्रतिबन्धकभावानभ्युपगम एव । एकदेशावच्छिन्ने नैकस्यापरदेशावच्छिन्नेन मनसा ऽपरस्य ज्ञानद्वयजननसम्भवात् । दीर्घशष्कुलीभक्षणादौ युगपदनेकज्ञानानुभवाच्च । तस्मादभेदवादोक्तकार्यकारणभावलाघवानुरोधेन संसर्गविधयैव भानमङ्गीकार्यमिति दिक् ।

प्राधान्ये चरितार्थत्वादिति । एवञ्च प्रधाने 'घट'इत्यादौ चरितार्थायाः प्रथमायाः 'राज्ञः पुरुषः' इत्यत्र राज्ञ इति भागे चरितार्थायाः षष्ठ्याः विशेषणे फलत्वाद्बाधापत्तिरिति भावः । षष्ठीवाच्यः सम्बन्धः स्वस्वामिभावादिः स च स्वस्वत्वसमूहरूप एव । न तु स्वत्वमात्रम्, स्वामित्वमात्रम्वा । तस्यैकव्यक्तिमात्रवृत्तितया सम्बन्धत्वायोगात् । सम्बन्धो हि सम्बन्धिभ्यां भिन्नः द्विष्ठ एव भवति । नचोक्तान्यतरस्य षष्ठी-

सर्पिष इति । "ज्ञोऽविदर्थस्य करणे" ( पा०सू० ५१।२।३ ) "अधीगर्थदयेषां कर्मणि," ( पा०सू० २।३।५२ ) "कृञः प्रतियत्ने" ( पा०सू० २।३।५३ ) "रुजार्थानां भाववचनानामज्वरेः" ( पा०सू० २।३।५४ ) "आशिषि नाथः" ( पा०सू० २।३।५५ ) "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" ( पा०सू० २।३।५६ ) "व्यवहृपणोः समर्थयोः" (पा०सू० २।३।५७) "कृत्वोर्थप्रयोगे कालेऽधिकरणे" ( पा०सू० २।३।६४ ) इत्यष्टसूत्री तु नेह व्याख्याता, तस्याः समासनिवृत्तिफलकत्वात् ।

तथा हि–तत्र शेष इत्यनुवर्तते । शेषत्वेन विवक्षिते च करणादौ षष्ठी सिद्धैव । तदयमर्थः—इह षष्ठ्येव न तु तल्लुक्; तथा च लुकः प्रयोजकीभूतः समास एव नेति । तथा च वार्त्तिकम्–"प्रतिपदविधाना च"(का०वा०)इत्यादि । हरिश्चाह—

कारकैर्व्यपदिष्टं च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ इति ।

तेन शेषत्वविवक्षायां सर्पिषो ज्ञानं, मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि । हरिस्मरणमित्यादीनि तु शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासे

शब्दरत्न

अष्टसूत्रीति । "कृत्वोर्थ" ( पा०सू० २।३।६४) इति सूत्रं वृत्तिरीत्या धृतम् । वस्तुतस्तत्र शेषग्रहणं नानुवर्त्तते मध्ये विच्छेदादित्यन्ये । तेषां सप्तसूत्रीति बोद्धयम् । अनुवर्त्तत इति । अत एव "अधीगर्थ" ( पा० सू० २।३।५२ ) इति सूत्रे " शेषे " (पा०सू० ४।२।९२) इति वर्त्तत इति भाष्ये उक्तम् । तत्बलाल्लुगभावोऽस्तु समासाभावः कुत इत्यत आह—तथा चेति । प्रतिपदविधाना षष्ठी न समस्यत इति वार्तिकबलात्तथा कल्पनेति भावः । वस्तुतो निषेधवार्त्तिके ऽनुवादायेमानि सूत्राणीति बोद्धयम् ।

स्मरणमिति । करणे ल्युट् । कृद्योगषष्ठ्येति । अत एव समासनिषेधप्रकरणे एतानि नोक्तानि । तथा सति कर्मादिषष्ठ्यामपि समासनिषेधापत्तेः । "दिवस्तदर्थस्य" ( पा० सू० ३।३।५८ ) इत्यत्र "कर्मणि" ( पा० सू० २।२।१४ ) इत्यस्य कर्त्तव्यतापत्ते-

ज्योत्स्ना ।

वाच्यत्वेऽपि तत्र आश्रयत्वनिरूपकत्वान्यतरसम्बन्धेन उभयसम्बन्धिवृत्तित्वमस्तीति वाच्यम् । निरूपकतासम्बन्धस्य वृत्तित्वानियामकतया उभयत्र सम्बन्धवत्वप्रतीत्यसम्भवात् । उक्तसमूहस्य वाच्यत्वे तु तस्य सम्बन्ध्यभिन्नतया राज्ञि स्वामित्वस्य पुरुषे स्वस्वस्य सत्वमाश्रयतयैव वर्तत इति सम्बन्धि-

बोद्धव्यानि। तत्र च कारकपूर्वकत्वात्कृदुत्तरपदप्रकृतिस्वरः। शेषषष्ठ्या समासे त्वन्तोदात्तत्वं स्यात्तच्चानिष्टम्। तथा च स्वरार्थेयमष्टसूत्रीति परमनिष्कर्षः। किं च मातुः स्मृतमित्यादौ समासाभावोऽपि फलम्। न हि तत्र कारकषष्ठी लभ्यते। "न लोक" ( पा०सू० २।३।६९ ) इति निषेधात्।

आह च—

निष्ठायां कर्मविषया षष्ठी च प्रतिषिद्धयते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते॥ इति।

एवं स्थिते वृत्त्यादिबहुग्रन्थेषु इह प्रकरणे उदाहरणं प्रत्युदाहरणं च यद्यन्तिङन्तं दृश्यते तत् सर्वमुपलक्षणतया नेयमिति हरदत्तादयः।

"सर्वनाम्नस्तृतीया च" ( पा०सू० २।३।२७ )॥ इह सर्वनाम्न इति षष्ठी। तदाह—सर्वनाम्नः प्रयोगे इति। पञ्चम्यां तु हेतुशब्दात् षष्ठीतृतीये न स्यातामिति भावः।

निमित्तपर्यायेति। पर्यायग्रहणस्य फलमुदाहरति—एवमित्यादिना।

---

शब्दरत्न।

श्च। ननु शेषत्वविवक्षायां कृद्योगषष्ठ्या वैकल्पिकसमासाङ्गीकारे "अधीगर्थ" (पा०सू० २।३।५८) इत्यादीनां वैयर्थ्यमेवेत्यत आह—तत्र चेति। करणल्युडन्तस्मरणादिशब्दैः कृद्योगषष्ठ्या समासे "अनो भावकर्मवचन" ( पा० सू० २।२।१९ ) इत्यस्याप्राप्तिरिति भावः। मातुः स्मृतमिति। आदिक(१)र्मणि कर्तर्यत्र क्तः। प्रशब्दं विना ऽपि अनुदात्तादौ आदिकर्मबोधवदत्रापि प्रकरणादिना तद्बोधसम्भवः।

एतेन 'अत्र कर्मणि क्ते कर्मण उक्तत्वात् "अधीगर्थ" ( पा० सू० २।३।५८) इत्यस्य विषय एव न। भावे तु क्तो दुर्लभः सकर्मकत्वात्। गत्याद्यर्थकत्वाभावाच्च। कर्मणः शेषत्वेन विवक्षायामविवक्षितकर्मत्वेनाकर्मककर्तरि स दुर्लभ इत्यपास्तम्। कर्मणः शेषत्वेन विवक्षायामविवक्षितकर्मत्वेनाकर्मक- तया भावे क्तस्य सुलभत्वाच्च। षष्ठी चेति। चस्त्वर्थे। एवं च तत्र समासाभावोऽपि फलमिति भावः।

ज्योत्स्ना।

द्व्यवृत्तित्वनिर्वाहः। "यस्मादधिकं यस्य चेश्वरवचनम्" इति सूत्रभाष्यमपि समूहस्यैव वाच्यत्वे गमकम्। तत्र हि 'अधि ब्रह्मदत्ते पाञ्चाला' इत्यत्रानेन सूत्रेण ब्रह्मदत्तपदात्

---

वि० (१) आदिभूतव्यापारस्यातीतत्वेऽपि भूतार्थकस्य क्तस्य साधनायारब्धं यत् "आदिकर्मणि क्तः कर्तरि" इति तेन कर्तरि क्तप्रयत्य इत्यर्थः। एवञ्च कर्मणोऽनभिधानादस्यैव "अधिगर्थ" सूत्रस्य प्राप्तिरिति भावः।

प्राचा तु किमर्थमित्युदाहृतं तत्र किमः क्लीबत्वं दुर्लभम् । सामान्ये नपुंसकतां समासञ्चाश्रित्य कथं चिद्वा नेयम् । असर्वनाम्न इति । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्'( का० वा० )इति वार्तिकं हि वृत्तिकारेण यद्यपीहोक्तं तथाऽपि भाष्यकृता "हेतौ" ( पा०सू०२।३।२३ ) इत्यत्र पठितम्, तेन सर्वनामाप्रयोगेऽपि प्रवर्तते; किं तु प्रायग्रहणात्तत्र तृतीयादय एवेत्यर्थः । वर्द्धमानस्तु प्रथमामपीच्छति ।

'षष्ठ्यतसर्थप्रत्ययेन" ( पा०सू० २।३।३० ) । पञ्चम्या इति । कथं तर्हि 'ततः पश्चात् इति । 'ततः पश्चात्स्रंस्यते ध्वंस्यते च' इति भाष्यप्रयोगात्पश्चाद्योगे पञ्चम्यपि । प्रत्ययग्रहणं चिन्त्यप्रयोजनम् ।

"एनपा" ( पा० सू० २।३।३१ ) ॥ कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्'इति । उत्तरेणेति तृतीयान्ततोरणेनेत्यनेन समानाधिकरणं बोद्धयम ।

शब्दरत्न ।

दुर्लभमिति । अर्थशब्दस्य द्वितीयान्तत्वे तु कमर्थमित्युचितम् । प्रथमान्तत्वेऽर्थशब्दस्य पुंस्त्वान्नपुंसकत्वं दुर्लभमिति भावः । कथं चिदिति । आद्ये क्लिष्टमन्त्ये लक्षणाभावोऽर्थासङ्गतिश्च । कोऽर्थः किमर्थमिति समासे सामान्ये नपुंसकत्वाश्रयणं चेति भावः ।

तेनेति । यत्तु सर्वनामसूत्रशेषे भाष्ये भवतः सर्वनामत्वे तृतीया प्रयोजनं 'सर्वनाम्नस्तृतीया च" ( पा० सू २ । ३ । २७ ) इति, तत्तु यथाश्रुतसूत्रमते । अत एव सूत्रोपन्यासः । न तु तद्बलादिदं सर्वनामविषयम् । कैयटादिविरोधात् "हेतौ" ( पा० सू० २ । ३ । २३ ) इत्यत्रोपन्यासस्य निर्बीजत्वापत्तेश्चेति बोद्धयम् ।

पञ्चम्यपीति । अत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिलित्यन्ये । चिन्त्यप्रयोजनमिति । इदमत्रैव सूत्रे भाष्ये स्पष्टम् ।

समानाधिकरणं बोध्यमिति । 'स्त्र्यधिकारात्परेण वासरूपविधिर्न' इत्यत्र परेणेति

ज्योत्स्ना ।

सप्तम्या, पाञ्चालशब्दात् कर्मप्रवचनीययुक्ते द्वितीया प्राप्नोति । अधिद्योत्यस्य ब्रह्मदत्तनिष्ठसम्बन्धस्य सप्तम्युक्तत्वेऽपि तद्योत्यस्य पाञ्चालनिष्ठसम्बन्धस्य तयाऽसम्प्रत्ययादित्युक्तम् । "उपपदविभक्तेः"इति न्यायेन समाहितमिति त्वन्यत् । अत एव स्वस्वामिभावो ऽवयवावयविभाव आधाराधेयभावः प्रतियोग्यनुयागिभाव विशेषणविशेष्यभावादिः सम्बन्ध इति प्रामाणिकानां व्यवहारः सङ्गच्छते । हरिणाप्युक्तम्—

"द्विष्ठोऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते ।

"दूरान्तिकार्थैः" ( पा० सू० २।३।३४ )॥ अन्यतरस्यां ग्रहणं(१) समुच्चयार्थम् । तेन च विप्रकृष्टापि पञ्चमी समुच्चीयते व्याख्यानात् । न तु षष्ठीद्वितीयातृतीयाः । तदेतदाह–पञ्चमी चेति ।

"दिवस्तदर्थस्य" ( पा० सू० ३।३।५८ )॥ तच्छब्देन व्यवहृपणौ परामृश्येते तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतौ इत्याशयेनाह—द्यूते इति कर्मणोति । 'इह शेष' इति न सम्बद्ध्यते, उत्तरसूत्र-

शब्दरत्न ।

तृतीया । ततः परेण शास्त्रेण वासरूपसंबन्धो नेत्यर्थः । ततः परेण नायमनुवर्त्तत इत्यत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिलिति बोद्ध्यम् ।

समुच्चीयत इति । अतः षष्ठीपञ्चम्योरेवात्र विधानमित्यर्थः । न तु षष्ठीति । विधीयन्त इति शेषः । षष्ठीद्वितीयातृतीया अत्र न विधीयन्त इत्यर्थः । तत्राद्योपात्ता अन्त्ये समुच्चये इति बोद्ध्यम् । समुदायविधानाभावे तात्पर्यम् ।

उत्तरसूत्रद्वयेति । अयं भावः—अत्र "शेष" इत्यस्य संबन्धे "विभाषोपसर्गे" ( पा० सू० २।३।३९ )इत्यत्र "शेष" ( पा० सू० ४।२।९२ ) इति संबध्यते, उत न । नाद्यः । "दिवस्तदर्थस्य" (पा० सू० ३।३।९८) इत्यनेनैव समासाभावस्य सिद्धत्वेन सूत्रवैयर्थ्यापत्तेः । न च पक्षे "षष्ठी शेषे" ( पा० सू० २।३।५० ) इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिः फलम् । 'नोपसर्ग' इति न्यासेन "दिव" इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणस्य तथापि वैयर्थ्यात् । नान्त्यः । वेदेऽपि

ज्योत्स्ना

तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥

अस्यार्थः हेलाराजीये स्पष्टमिति दिक् ।

अन्यतरस्यां ग्रहणं समुच्चयार्थमिति । "पृथग्विना" इति साहचार्यादित्यर्थः । तत्रान्यतरस्यांग्रहणेन मण्डूकप्लुत्यानुवृत्तपञ्चम्याः समुच्चयादत्रापि तस्या एव समुच्चयः । सन्निहितत्वात् "पृथग्विना" इति तृतीयायाः समुच्चये त्वत्रत्यं पुनरन्यतरस्यां ग्रहणं व्यर्थं स्यात् । 'षष्ठी च' इति न्यासेनैव सन्निहिततृतीयायाश्चकारेणानुवृत्तिसम्भवादिति हरदत्तीयपदमञ्जर्यां स्पष्टम् ।

विप्रकृष्टापि पञ्चमी समुच्चीयते । न तु षष्ठीद्वितीयातृतीयेति पाठः । तथा च षष्ठ्या

(१) पृथग्विनेति साहचर्यादन्यतरस्यां ग्रहणं समुच्चयार्थम् । [तत्रान्यतरस्यां ग्रहणेन मण्डूकप्लुत्यानुवृत्तपञ्चम्याः समुच्चयादत्रापि तस्या एव समुच्चयः । सन्निहितत्वात् "पृथग्विना" इत्यत्र तृतीयायाः समुच्चये तु अत्रत्यं पुनरन्यतरस्यां ग्रहणं व्यर्थं स्यात् । षष्ठीचेति न्यासेनैव सन्निहिततृतीयायाश्चकारेणानुवृत्तिसम्भवादिति हरदत्तकृतपदमञ्जर्यां स्पष्टम् ॥

द्व्यारम्भादिति भावः । अत एवेह त्रिसूत्र्यां तिङन्तमुदाहरति शतस्य दीव्यतीति ।

शब्दरत्न ।

"विभाषोपसर्गे" ( पा० सू० २।३।५९ ) इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वापाधरूपस्य तत्राभावाच्च "द्वितीया ब्राह्मणे" ( पा० सू० ६।४।१७१ ) इत्यस्य वैयर्थ्यापत्तेः । न च तन्निरुपसर्गे द्वितीयार्थमिति वाच्यम् । कर्मत्वविवक्षायां "दिवः" (पा० सू० ४।२।९२ ) इत्यस्याप्रवृत्त्या "कर्मणि द्वितीया" ( पा० सू० २।३।२ ) इत्येव सिद्धत्वेन वैयर्थ्यस्य तदवस्थत्वात् । न च "द्वितीया ब्राह्मणे" ( पा० सू० २।३।६० ) इति सूत्रे 'शेषे' इत्यनुवर्तते, तेन कर्मत्वाविवक्षायां द्वितीयार्थमिति वाच्यम् । विच्छिन्नत्वेनानुवृत्तेरयुक्तत्वात् । वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्च । कृतित्विदं य प्रवर्तते इति पुनर्विधानं समासाभावायेत्यपि न वाच्यम् । अत एव "द्वितीया ब्राह्मणे" ( पा० सू० २।३।६० ) इति सूत्रे भाष्यम् । किमुदाहरणम्—"गां प्रतिदीव्यन्ति । पूर्वेणाप्येतत् सिद्धम् । इदन्तर्हि गामस्य तदहः सभायां दीव्येयुः" इति । "दिवस्तदर्थस्य" ( पा० सू० ३।३।५८ ) इति नित्यं षष्ठी प्राप्नोतीति कैयटश्चेति । त्रिसूत्र्यामिति । तृतीयस्य वैदि-

ज्योत्स्ना ।

अप्यत्र समुच्चयो निषेध्य इति प्रतीयते, एतदयुक्तम् । षष्ठीपदस्य सूत्रे एव सत्वादित्याशङ्कापरिहाराय शेषम्पूरयति विधीयन्ते इति । शेष इति स्पष्टप्रतिपत्तये । तदर्थमाह—षष्ठीद्वितीयातृतीया इति । तत्र विशेषमाह—तत्राद्या षष्ठी इत्यर्थः । एकसत्वेऽपि द्वयं नास्तीति प्रतीतेराह समुदायेति । अयम्भाव इति । अस्यायमाशयः तथाहि अत्र शेषे इत्यस्य सम्बन्धे विभाषोपसर्गे इत्यत्र शेषे इति सम्बध्यते न वा सम्बन्धे तस्य वैयर्थ्यम् । एतच्च तत्रैवोपपादयिष्यते । तत्र शेषे इत्यस्यासम्बन्धे वेदेऽपि "विभाषोपसर्गे" इत्यनेनैव कर्मणि द्वितीयायाः सिद्धौ द्वितीयाब्राह्मणे इत्यस्य वैयर्थ्यापत्तिः न च पक्षे प्राप्तषष्ठीनिवृत्यर्थं तदिति वाच्यम् । दृष्टानुविधानस्यैव वेदे सत्वेन षष्ठ्यापादनासम्भवात् । न च निरूपसर्गे द्वितीयार्थं द्वितीयाब्राह्मणे इत्यस्य चारितार्थ्यं वक्तुं शक्यम् । "दिवस्तदर्थस्य" इत्यत्र शेषग्रहणानुवृत्यङ्गीकारे अशेषभूते कर्मणि तेन षष्ठ्या अप्राप्तौ "कर्मणि द्वितीया" इत्यनेनैव द्वितीयायाः सिद्धत्वात् ।

न च "द्वितीया ब्राह्मणे" इत्यस्य शेषग्रहणानुवृत्या कर्मत्वाविवक्षायां द्वितीयार्थं तदिति वाच्यम् । "विभाषोपसर्गे" इत्यत्र विच्छिन्नत्वेन उत्तरत्रानुवृत्तेरयुक्तत्वात् । न च कृद्योगे पुनर्द्वितीयाविधानं समासाभावार्थमिति वाच्यम् । किमुदाहरणं गां प्रति दीव्यन्ति । पूर्वेणाप्येतत्सिद्धम् । इदं तर्हि 'गामस्य तदहः सभायां दीव्येयुः' इति "द्वितीयाब्राह्मणे" इति सूत्रस्थभाष्योक्त्या अत्र "दिवस्तदर्थस्य" इति षष्ठी प्राप्नोतीति कैयटोक्त्या च कृद्योगे तस्याप्रवृत्तेर्लाभात् । तस्मात् "दिवस्तदर्थस्य" इत्यत्र शेषपदस-

"प्रेष्यब्रुवोः" ( पा० सू० २।३।६१ ) ॥ इष्यतेर्दैवादिकस्य गत्यर्थस्य लाण्मध्यमपुरुषैकवचनं 'प्रेष्य' इति। तत्साहचर्यात् ब्रुविरपि तथाभूत एव गृह्यते। अत एवेह शेषग्रहणं न सम्बद्ध्यते; तिङन्तेन सह समासस्याप्रसक्तत्वात्।

"कर्तृकर्मणोः कृति" ( पा० सू० २।३।६५ ) ॥ गुणेति। तदुक्तम्—

'प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्' ॥ इति।

कृतपूर्वीति। कृतं पूर्वमनेनेति विग्रहः। पूर्वं कृतवानित्यर्थः। अविव-

शब्दरत्न।

क्षयामुपन्यासो द्रष्टव्यः।

अप्रसक्तत्वादिति। कल्पाद्यन्तस्य तु न प्रैषे प्रयोग इति भावः।

उभयथा— 'षष्ठीतदभावौ' इदं चाकथितसूत्रभाष्ये स्पष्टम्।

अविवक्षितेति। तद्धितवृत्तेः पूर्वमविवक्षितेत्यर्थः। पश्चात्तु कर्मयोगो भवत्येवेति बोद्धव्यम्। अयं च प्रकारस्तद्धितविषय एव। तेन घटं क्रियते इत्यादि न। नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव। प्रान्तं देशमित्यादि तु "गत्यर्थाकर्मक"(पा०सू०३।४।७२) इति

ज्योत्स्ना।

म्बन्धाङ्गीकारे "विभाषोपसर्गे"इत्यत्र तत्सम्बन्धे तस्यैव वैयर्थ्यम्। "विभाषोपसर्ग" इत्यत्र तदसम्बन्धे "द्वितीया ब्राह्मणे"इत्यस्य वैयर्थ्यमिति "दिवः"इत्यादित्रिसूत्र्याम् उभयोः सार्थक्याय तत्सम्बन्धावश्यकः। तथा च उपसर्गयोगे शतस्य शतं वा प्रतिदीव्यतीति द्वितीयाषष्ठी बाधनार्थं "विभाषोपसर्गे" इति 'गामस्य तदहः सभायां दीव्येयुः' इत्यत्र "दिवस्तदर्थस्य" इति षष्ठीं बाधित्वा द्वितीया विधानार्थं "द्वितीया ब्राह्मणे" इति च चारितार्थ्यमिति दिक्।

कृतपूर्वीति। सूत्रे कृद्ग्रहणसामर्थ्यात् कृदन्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्तृकर्मणोः षष्ठी इति सूत्रार्थः। कृष्णस्य कृतिः तण्डुलानां पाचकः इत्यादौ च तमबादिसमभिव्याहारं विनापि पाकादिक्रियानिष्ठविशेष्यतानिरूपितकर्मत्वकर्तृत्वान्यतरसम्बन्धावच्छिन्नतण्डुलादिनिष्ठप्रकारताकबोधस्योदयात्।

तादृशबोधं प्रति तण्डुलादिपदसमभिव्याहृतकृदन्तपाचकादिपदस्यैव कारणत्वेन कृदन्तशक्तिबोधीयक्रियानिष्ठविशेष्यतानिरूपितकर्तृत्वकर्मत्वान्यतरसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं तण्डुलानां पाचकतम इत्यादावपि अस्त्येवेति तत्रापि षष्ठी भवत्येव। कृतपूर्वीकटमित्यादौ तु पूर्वं कर्माविवक्षया भावे प्रत्यये पश्चात् कर्मान्वयस्य तद्धितविषये एव भाष्यप्रामाण्यात् स्वीकारेण कृद्घात्वर्थनिष्ठविशेष्यतानिरूपितकर्मत्वसम्बन्धावच्छिन्नकटादिनिष्ठप्रकारताकबोधं प्रति कटादिपदसमभिव्याहृतकृतपूर्वीतद्धि-

त्तितकर्मकतया भावे क्तः । "सुप्सुपा" ( पा० सू० २।१।४ ) इति समासः । "पूर्वादिनिः" ( पा० सू० ४।१।८६ ) "सपूर्वाच्च" (पा० सू० ४।१।८६) इति कर्तरि इनिः । तद्विधौ "श्राद्धमनेन ( पा० सू० ५।२।८७ ) इति सूत्रादनेनेत्यनुवृत्तेः । अथ कथं'धायैरामोदनुत्तमम्' इति भट्टिः ।

शब्दरत्न ।

क्तेन निर्बाधम् । तत्सूत्रोपात्तधातुभ्यश्च न ते । तस्य भावे विधानादित्यन्यत्र विस्तरः । धायैरामोदमुत्तममिति । दधातेः "ददातिदधात्योर्विभाषा" (पा०सू० ३।१।१३९) इति(१) णः । "आतो युक्" (पा०सू०७।३।३३।) इति जयमङ्गला । धयरिति ह्रस्वपाठो लेख-

ज्योत्स्ना ।

तान्तस्यैव कारणत्वान्न कटादीनां कृदन्तपर्याप्तशक्तिग्रहप्रयोज्यबोधविषयक्रियानिरूपितं कर्मत्वमिति न ततः षष्ठीति भावः ।

एतेन कृतमिति व्यस्ते कृतपूर्वीति वृत्तौ च विद्यमाने कृतपदे एकस्या एव क्रियाविषयकबोधानुकूलायाः शक्तेः सत्वेन कृतपूर्वीत्यत्र कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियायां नास्तीति दुर्वचमितिशङ्का समाहिता । एवमेव च देवदत्तेन कृतमित्यादौ क्तान्तस्यार्थवत्त्वेन कृद्ग्रहणपरिभाषया कृदन्तत्वात्प्राप्तप्रातिपदिकसंज्ञाया अर्थवत्समुदायविषयकेण समासग्रहणनियमेन वारणं सङ्गच्छते । अत एव च ' देवदत्तो गार्ग्यः, इत्यादौ देवदत्तो गार्ग्येत्यस्य सुरहितस्यार्थवत्त्वाभावेन समासग्रहणेनाव्यावृत्तौ प्राप्तायां प्रत्ययग्रहणपरिभाषया प्रातिपदिकसंज्ञा भाष्ये वारिता । देवदत्तकर्तृककरणकर्मरूपार्थस्य 'देवदत्तेन कृतपुत्रः' इति वाक्यादपि प्रतीतेः सुरहिते एवाकाङ्क्षास्थानीयानुभाविकी शक्तिः सुरहितादेवदत्तो गार्ग्येत्यस्मात्तु 'न देवदत्ताभिन्नो गार्ग्य इति तत्र प्रत्यय इति तत्र सुसहित एव सेति सुधिभिर्विचार्यताम् ।

न च कृतपूर्वीकटमित्यत्र "न लोक" इति निषेधादेव षष्ठी न स्यादिति कृद्ग्रहणाभावेऽपि नात्रेति वाच्यम् । कृतपूर्वी कटमित्यस्य कर्त्तव्यपूर्वीकटमित्येतदुपलक्षणत्वात् । निष्ठान्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यबोधविषयक्रियाकर्तृकर्मणोरेव "न लोक"इत्यनेन षष्ठीनिषेधाच्च ।

यद्वा "निष्ठा" इत्यनेन नात्र क्तः, किन्तु "नपुंसके भावे क्तः" इत्यनेन । एवं च अनेन निषेधप्राप्तौ "नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्"इति वार्त्तिकेन षष्ठी प्राप्ता कृद्ग्रहणान्न । यद्यपि वार्त्तिकमिदं शेषत्वविवक्षया भाष्यकृता प्रत्याख्यातम्; तथापि वार्त्तिकरीत्यैवेदमुदाहरणमिति केचिदाहुरिति दिक् ।

---

वि० ( १ ) तस्य विकल्पेन शप्रत्ययविधायकतया तदभावे "श्याद्व्यध" इतिसूत्रेणाकारान्तलक्षणो ण इत्यर्थः ।

अत्राहुः—अनित्यमिदम् । "तदर्हम्" (पा० सू० ५।१।११७) इति निर्देशात् ।

स्त्रीप्रत्यययोरिति । कथं तर्हि "सुट्तिथोः" (पा०सू० ३।४।१७) इति सूत्रे सुटा सीयुटो बाधो नेति वृत्तिः । करणत्वविवक्षायां तृतीयेति गृहाण ।

"न लोकाव्ययनिष्ठा" (पा० सू० २।३।३७)॥ उश्च उकश्च उकौ, लश्च उकौ चेति विग्रहः । उकारेण कृतो विशेषणात्तदन्तविधिस्तदाह—हरिं दिदृक्षुरलङ्करिष्णुर्वेति । शेषे षष्ठी त्विति । एतेन 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः' 'अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्' इत्यादि व्याख्यातम् ।

शब्दरत्न ।

कप्रमादात् । उत्तमपुष्पादिसम्बन्ध्यामोदं धारयद्भिरित्यर्थाभिमानेन प्रश्नः । यदि त्वामोदं गृहीत्वा मादृशां दुःखस्य पोषकैरित्यर्थो जयमङ्गलाव्याख्यातरीत्या स्वीक्रियते, तदा न काप्यनुपपत्तिः ।

निर्देशादिति । अयं भावः—तत्रैव, तस्य, अर्हम्, इति सूत्रत्रयं कार्यम् । अर्हमित्यत्र योग्यताबलात्कर्मणि षष्ठीति "तस्य भावः" (पा० सू० ६।१।११) इत्यत्र च तस्येति न वाच्यम् । एवं सिद्धे तदिति निर्देशोऽसमस्तद्वितीयान्तत्वबोधनार्थः ।

एतेन सूत्रे कर्मोपपदादण्प्रत्यये उपपदसमासो अजन्तस्य कर्मषष्ठ्या वा समास इति निरस्तम् । अत एव द्वितीया समर्थादिति व्याख्यायते । राजानमर्हतीति च विगृह्यते । तत्फलं त्वनित्यत्वबोधनमेवेति । भाष्ये तु नैतद् दृश्यत इति बोध्यम् ।

उकौ चेति । अव्ययं चेत्यादेरुपलक्षणमिदम् । तदन्तविधिरिति । व्यपदेशिवद्भावेन तस्यापीति बोध्यम् । ननु नपुंसके भावे क्तस्येति भाष्ये वार्तिकात्कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न । तत्प्रत्याख्याने त्वनभिधानात् क्तातिरिक्तविषये सा (१)न ।

ज्योत्स्ना ।

जयमङ्गलाव्याख्यातरीत्येति ।

'ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्' ।
"लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः" ॥

इति पद्यम् । इदञ्च तत्रैव व्याख्यातम् । मादृग्भ्यो दुःखन्ददद्भिरुत्तमामोदम्पुष्पादीनाङ्गृहीत्वा मादृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृविरहार्तिव्याप्रश्चेतयश्चेतयन् ज्वलः ज्वलयन्निव न स्यादिति । दाधातोः पोषणार्थाद्धाञश्च "ददातिदधात्योर्विभाषा" इति शणौ "लिम्पेः शः" "ज्वलेर्णः" ।

टि० (१) सा—शेषत्वविवक्षा, नेत्यर्थः । आरम्भप्रत्याख्यानयोः फलैक्याय एवमेव कल्पनौचित्यादिति भावः ॥

यद्वा इक्ष्वाकूणां सिद्धय इत्यन्वयः। न तु इक्ष्वाकूणां दुराप इति। तथा वागधिपस्य विस्मयमित्यन्वयः। न तु वागधिपस्य दुर्वचमिति।

"तुल्यार्थैः" (पा० सू० २।३।७२)॥ कथं तर्हि 'तुलां यदारोहति दन्तवाससा' इति कालिदासः। 'स्फुटोपमं भूतिसितेन शम्भुना' इति माघश्च। उच्यते—"सहयुक्तेऽप्रधाने" (पा० सू० २।३।१७) इति तृतीया। 'स्वबालभारस्य तदुत्तमाङ्गजैः समं चमर्येव तुलाभिलाषिण" इत्यत्र यथा। उक्तं हि—विनापि तद्योगं तृतीयेति।

व्याख्यानादिति। सूत्रेऽर्थशब्दोऽपि पृथङ्निमित्तम्। तथा च द्वन्द्व एव। न तु अर्थशब्देन बहुव्रीहिरिति भावः॥

इति षष्ठी॥

आधारस्त्रिधेति। एतच्च "संहितायाम्" (पा० सू० ६।३।१५४) इति सूत्रे भाष्ये स्पष्टम्। चतस्र इति। प्रातिपदिकार्थमात्रे इति भावः।

किं च "दूरान्तिक" (पा०सू० २।३।३४) इतिसूत्रस्य इहाप्यनुवर्तना-

---

शब्दरत्न।

अत एव "पूरणगुण" इति सूत्रे सद्ग्रहणं भाष्ये प्रत्याख्यातमित्यरुचेराह—यद्वेति।

"सहयुक्ते" इति। स्फुटोपममित्यत्रोपमाशब्दो भावसाधनः॥

इति षष्ठी॥

प्रातिपदिकार्थमात्रे इति। "सप्तम्यधिकरणे च" (पा०सू०२।३।३६) इति सूत्रेणाधिकरणे सप्तम्याः सिद्धत्वाच्चकारेणान्तरङ्गप्रातिपदिकार्थमात्रे सप्तमी विधीयते। प्रागुक्ताश्च तिस्रः। इयं च सप्तमी निरवकाशत्वात्पराया अपि प्रथमाया बाधिकेति भावः।

ज्योत्स्ना

अत एव "पूरणगुण" इति सूत्रे इति। तत्र हि सति "किमुदाहरणम्—ब्राह्मणस्य कुर्वन्। नैतदस्ति, कारकषष्ठ्या निषेधात्। शेषषष्ठ्यान्तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्सतीति व्यर्थम्" इत्युक्तम्। यदि कारकषष्ठीविषयेऽपि शेषत्वविवक्षा स्यात्तदा कुर्वन्नित्येतद्योगेऽपि शेषत्वविवक्षा। कटादियोगेनासामर्थ्यप्रदर्शनमसङ्गतं स्यात्तेनेदं ध्वनितमित्यर्थः।

इति षष्ठी।

ननु चकाराद्दूरान्तिकार्थेभ्योऽधिकरणे सप्तमी विधानेऽपि कथं विभक्तिचतुष्टयलाभोऽत आह—सप्तम्यधिकरणे इति।

ननु प्रातिपदिकार्थसूत्रस्य परत्वात् तेन परत्वाद्बाधिका प्रथमैव स्यादिति कथं तिस्रो विभक्तय इत्यत आह—इयं च सप्तमीति।

ज्योत्स्ना।

ननु प्रवृत्तिनिमित्तमधिकरणशब्दस्याधिकरणत्वमेव, तच्चैकमिति कथमाधारस्य त्रैविध्यमिति चेन्नेति। आधारतायाः सम्बन्धावच्छिन्नत्वनियमेनोपकारकसम्बन्ध-भेदादधिकरणं त्रिविधमिति उच्यते। यत्राधारताभिमतपदार्थीययत्किञ्चिदवयवा-वच्छेदेन संयोगे सति कर्तृकर्मसमवेतक्रियानिरूपिताधारत्वविवक्षास्ति सः। यत्र वा उप समीपे श्लेषः इति व्युत्पत्त्या व्यवहितसामीप्यसम्बन्धावच्छिन्नाधेयतानिरूपितक-र्तृकर्मसमवेतक्रियानिरूपिताधारत्वस्य विवक्षास्ति: स च औपश्लेषिकाधिकरण इत्यु-च्यते। अत एव भृत्येभ्यो यन्मासिकन्दीयते तत्र "मासे दीयते" इति मासिकमिति व्युत्पत्तिः "तत्र च दीयते" इतिसूत्रसम्मता भवति। अत्र बुद्धिस्थपरिच्छिन्नमासस्य दाधात्वर्थफलविशिष्टाधारकालस्य चोपश्लेषोऽस्तीति मास औपश्लेषिकमधिकरणम्। मासेऽतिक्रान्ते दीयते उत्तरकाले दीयत इत्यर्थः। स्पष्टप्रतिपत्तये क्रियते फलितार्थ-सूचनाय।

ननु संयोगसमवायान्यतरसम्बन्धेन यः कर्तृकर्मव्यवहितक्रियाधारस्तत्र रूढित्वा-द्योगार्थमादाय सामीप्यमादाय कथं व्यवहितस्य ग्रहणमिति चेन्न। 'गङ्गायां गावः' 'कूपे गर्गकुलम्, इति भाष्यकारीयव्यवहारबलेन तस्यापि ग्रहणात्। अत एव "इको यणचि" इत्यस्य अजुपश्लिष्टस्येक इत्यर्थविवरणं सम्यक् सङ्गच्छते। अत एव "शब्दस्य शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति: अन्यदतः उपश्लेषात्" इति भाष्योक्तिश्च सङ्गच्छते। साक्षात्क्रियाधारस्य कर्तृकर्मसंज्ञाऽधिकरणसंज्ञाया बाधिका भविष्यतीति परम्परया क्रियाधारस्य सा भवति। सा च परम्परा क्वचित् संयोगघटिता, क्वचित् समवायघटिता, क्वचिदन्यतरातिरिक्तविशेषणतासम्बन्धघटिता। कटे शेते, तण्डुलं पचतीत्यादौ च आद्या। पटे शैक्ल्यम्, द्रव्यादिषु जातिः, घटे घटत्वम्, इत्यादिषु द्वितीया। तृतीया तु घटाभावे पटाभावे इत्यादौ।

तदुक्तं हरिणा—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ १ ॥

अत्र व्यवहितामित्युक्तेऽप्यसाक्षादित्युक्तिस्तु परम्परयाऽन्वयसूचनाय। अत एव अक्षेषु शोण्ड इति विग्रहे "सप्तमी शौण्डैः" इत्यनेन समासः। वैषयिकाधारस्तु 'मोक्षे इच्छास्ति' इत्यादौ। यत्र सर्वावयवावच्छेदेन सम्बन्धोऽस्ति स अभिव्याप-काधार इत्युच्यते।

यथा—तिलेषु तैलम्, दध्नि सर्पिरित्यादौ यथा। अथायं विशेषः—इच्छा इत्यादौ धात्वर्थेच्छाविषयता यदा मोक्षस्य विवक्षिता, तदा मोक्षमिच्छतीत्यादावन्तरङ्गत्वा-त्कर्मसंज्ञैव भवति। यदा तु—प्रत्ययार्थसद्भावस्थापन्नार्थविषयता मोक्षस्य विवक्षिता,

दधिकरणेऽप्येता बोद्धव्याः ।

क्तस्येति । इन् इन्नन्तः शब्दो विषयो वृत्तिभूमिर्यस्य क्तस्येत्यर्थः ।

हेतुतृतीयेति । तादर्थ्ये चतुर्थीत्यपि बोद्धव्यम् । सीमेत्यादि । एतच्च दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम् । मेदिनीकारोऽप्याह—

'सीमाघाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' । इति ।

'अथ पुष्कलको गन्धमृगे क्षपणकीलयोः' ॥ इति च ।

हरदत्तादयस्तु पुष्कलकः शङ्कुः, सीम्नि सीमज्ञानार्थम्, हतो निहतो निखात इत्याहुः ।

शब्दरत्न ।

वृत्तिभूमिर्यस्येति । यत् क्तान्तनिरूपितपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्द इत्यर्थः । अत्रेनो विषयस्येनः प्रकृतेः क्तान्तस्येति षष्ठीतत्पुरुषोऽपि वक्तुं शक्यः ।

तादर्थ्ये इति । फलस्य हेतुत्वेन विवक्षणात्फलार्थत्वाच्च करणस्येति भावः ।

ज्योत्स्ना ।

तदा मोक्षे इच्छास्तीति भवति । अत्रापि प्रकृत्यर्थसाध्येच्छाविषयत्वविवक्षायाङ्कर्मणि षष्ठीति दिक् ।

"क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्" इत्यत्र विषयशब्दो वृत्तिभूमिपरत्वेन मूले व्याख्यातस्तदर्थमाह—यत्क्तान्तनिरूपित इति । यत्क्तान्तार्थ इत्यर्थः । वार्तिके क्तशब्दः तदन्तपरः । एवमिन्शब्दोऽपि तदन्तपरः, विषयशब्दो वृत्तिभूमिपरः । तदर्थस्तु परार्थभिधायकत्वाश्रयः । तथा च इन्नन्त शब्दः परार्थविधायकत्वाश्रयो यस्य क्तान्तार्थस्येति फलितः । यस्येति षष्ठ्यर्थो निरूप्यनिरूपकभावः । यत् क्तान्तार्थनिरूपिताभिन्नपरार्थाभिधाकत्वाश्रय इन्नन्तः शब्दः तस्य क्तान्तस्य कर्मणि सप्तमीति वार्तिकार्थः सम्पन्नः । एवञ्च बहुव्रीहिपर्यन्तानुधावनं व्यर्थं षष्ठीतत्पुरुषे लाघवमिति दिक् ।

हेतुतृतीयेति । निमित्तात्कर्मयोग इत्यत्र । दार्शनिकास्तु—कर्म-क्रिया, तस्य योगे—सम्बन्धे, निमित्तवाचकात्सप्तमी भवतीति वार्तिकार्थः । निमित्तं तु—यत्प्राप्तीच्छाप्रयोज्या, यत्प्रयोजिका वा क्रिया तदुभयम् । तत्राद्ये चर्मणि द्वीपिनमित्यादौ सप्तमी ।

द्वितीये—अविद्यारजनीक्षये यदुदेति इत्यादौ सप्तमी । तथा च 'चर्मणि द्वीपिनम्' इत्यादौ प्राप्तीच्छैव सप्तम्या अर्थः । अविद्यारजनीक्षये इत्यादौ त्वनुकूलत्वं सप्तम्यर्थः । अनुकूलत्वे च तृतीयाचतुर्थीसप्तमीति तिस्रो विभक्तयः भवन्तीति न तासां परस्परं बाध्यबाधकभाव इत्याहुः । अत एव वाचस्पतिमिश्रैः "तत्र स्थितौ यत्नोऽभ्यासः" इत्यत्र निमित्तसप्तमीत्युक्तम् । भाष्यकारास्तत्रार्थे उदासीना इति दिक् ।

"यस्य च" (पा०सू० २।३।३७)॥ निर्ज्ञातकालाक्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणम् । तदाश्रययोः कर्तृकर्मणोर्बोधकादियं सप्तमी । तत्र ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम् । कर्मण्याह—गोष्विति । इह अधीयानानां ब्रह्मणानां दुह्यमानानां गवां च प्रतीयमानलक्षकत्वं विशेषणीभूतयोरध्ययनगोदोहनक्रिययोर्विश्राम्यति ।

शब्दरत्न ।

ननु ज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावो भूयो दर्शनाश्रयो दृष्टस्ततश्चोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते, कदाचिद्धि गोषु दुह्यमानास्वसौ गत इत्यत आह—निर्ज्ञातकालेति । कालो देशस्याप्युपलक्षणं तदुदाहरणं सति गुणे द्रव्यत्वमस्तीति । तदाश्रययोरिति । क्रियाश्रययोरित्यर्थः । विशेषणीभूतयोरिति । शिखो ध्वस्त इत्यादौ शिखायां ध्वंसप्रतियोगित्वविश्रान्तिवद्विशिष्टवेषेणैव तस्य लक्षकत्वात् ।

ज्योत्स्ना ।

"यस्य च भावेन भावलक्षणम्" इति । अत्र सूत्रे भावशब्दः क्रियापरः । एवञ्च यत्सम्बन्धिक्रियया यस्य क्रिया लक्ष्यते ततः सप्तमीत्यर्थः ।

सति गुणे इति । अत्र गुणसत्त्वक्रियाधिकरणादेशः पृथिव्यादिर्ज्ञात इति गुणसत्त्वक्रिया द्रव्यसत्त्वक्रियाया लक्षणम् । यत्सम्बन्धिक्रिया इत्यत्र यत्पदबोध्यः क्वचित्कर्म, क्वचित् कर्ता । अत एव मूले उक्तम् तदाश्रययोः कर्तृकर्मणोरिति कर्तुः कर्मणश्च यदुदाहरणं तत्र तयोः कृदन्तबोध्यत्वात् क्रियायास्तु विशेषणत्वमिति प्रधानयोरेव लक्षणत्वप्रतीतिरित्यभिप्रायेणोक्तम् ।

इहेति । कर्तृकर्मबोधकप्रत्ययान्तघटितोदाहरणद्वये प्रतीयमानमित्युभयत्र सप्तम्यर्थो ज्ञाप्यज्ञापकभावः, दोहनादिक्रियाधिकरणकालसम्बन्धश्च । तस्य प्रकारस्त्वमते गोष्वित्यादिवाक्याद्वर्तमानकालावच्छिन्नव्यापारजन्यदोहनाश्रयगोनिष्ठज्ञापकतानिरूपितज्ञाप्यताविशिष्टो दोहनाधिकरणकालसम्बन्धविशिष्टव्यापारजन्यगमनाश्रयश्चैत्र इति बोधः ।

अत्रेदम्बोधनम्—काचित् क्रियास्वाधारकालावच्छिन्नामन्यां क्रियां लक्षयति । यथा गोषु दुह्यमानासु गत इत्यादौ । काचित् स्वाधारकालाव्यवहितपूर्वकालावच्छिन्नां क्रियां लक्षयति । यथा गोषु धोक्ष्यमाणास्वागतः चैत्र इत्यादौ । काचित्तु स्वाधारकालानन्तरकालावच्छिन्नामन्यां क्रियां लक्षयति । यथा गोषु दुग्धासु गत इत्यादौ । लक्षकक्रियाश्रयवाचकत्वन्द्वयोरपीति गोपददुह्यमानपदयोरुभयोरपि सप्तमी ।

ननु यत्र क्रियाश्रयवाचकं पदं न प्रयुज्यते, विवाहे नान्दीमुखं कुर्यादित्यादौ यथा, तत्र कथं सप्तमी? इति चेदित्थम्—अत्र विवाहपदस्य तत्प्राक्कालिके लक्षणायां "सप्तम्यधिकरणे च" इति सप्तमी । 'राहूपरागे स्नायात्' इत्यादौ राहूपरागपदस्य राहूपरा-

भेद एवेति। न तु शब्दान्तरोपात्तसामान्यरूपाक्रान्ततेति भावः। माथुरा इति। न ह्यत्र गवां कृष्णेत्यादाविव सामान्यविशेषभावः, किं तु शब्दोपात्तयोर्धर्मयोर्विरोध एव।

शब्दरत्न।

न त्विति। गवां कृष्णेत्यादौ गोत्वाद्याक्रान्तता यथेति भावः। तदाह—न ह्यत्रेति।

ज्योत्स्ना।

ग्रकाले लक्षणा। तस्य सप्तम्यर्थाधारतायामन्वयः। तस्यास्तु स्वनिरूपिताधेयतासम्बन्धेन स्वाधात्वर्थेऽन्वये सिद्धमाष्यसमभिव्याहारन्यायेन राहूपरागशब्दयोर्निमित्तनिमित्तिभावे पर्यवसानमिति दिक्।

न ह्यत्र गवां कृष्णेत्यादाविति। अत्रेदं बोध्यम्—उक्तत्रिविधाधिकरणेषु मुख्यमधिकरणमभिव्यापकं सर्वावयवावच्छेदेन यत्राधेयस्य सम्बन्धस्तदेव। अत एव "स्वरितेनाधिकारः" इति सूत्रे भाष्ये "आचार्यः किमधिकरणं न्याय्यममन्यते, यत्र कृत्स्न आधारात्मव्याप्तः" इत्युक्तम्। अस्य न्याय्यत्वन्तु-प्रकृत्यर्थतावच्छेदकविशिष्टे तद्वानाद्भवति अन्यदधिकरणं गौणम्। सप्तमी तु सर्वस्मिन्नप्यधिकरणे "सप्तम्यधिकरणे च" इत्यत्राधिकरणपदे स्वरितत्वप्रतिज्ञानाद्भवति। अत एव 'गङ्गायां गावः' 'कूपे गर्गकुलम्', इत्यादौ सप्तम्युदाहृता गौणाधारे। "पञ्चमी विभक्तेः" इत्यत्र "यतश्च निर्द्धारणम्" इत्यनुवर्तते। अत्र विभक्तशब्दार्थो भेदः। एवञ्च यतो निर्द्धारणं भेदश्च ततः पञ्चमीत्यर्थः। यत्र निर्द्धारणं तत्र भेदस्य सर्वत्र सत्वात्। विभक्तपदसामर्थ्याद्यत्र भेद इति नियमलाभः। भेद एवेत्यस्य भिन्नधर्मप्रकारकप्रतीतिविशेष्यत्वमेव। एवकारेणाभेदस्य व्यवच्छेदः। स च निर्द्धार्यमाणस्य क्वापि नास्तीति नियमप्रदर्शनवैयर्थ्यं प्राप्नोतीत्याह—मूले—न तु शब्दान्तरेत्यादि।

निर्द्धारणविभक्त्यर्थस्तु-तत्र मूलकृता पृथक्करणमिति वदता जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्वप्रकारकज्ञानविषयीकरणं निर्द्धारणमित्यर्थः सूचितः। 'यत' इति पञ्चमी निर्द्धारणघटकीभूतव्यावृत्तत्वे ऽन्वेति। एवं यद्व्यावृत्तधर्मवत्त्वं जात्यादिविशिष्टस्य प्रतिपाद्यते, ततः षष्ठीसप्तम्याविति फलति। अस्ति च 'नराणां ब्राह्मणः श्रेष्ठः' इत्यादौ ब्राह्मणत्वादिविशिष्टस्य तदितरनरादिव्यावृत्तश्रेष्ठत्वधर्मवत्तया प्रतिपत्तिरिति तत्र षष्ठीसप्तम्यौ भवतः। 'नरेभ्यो राक्षसः क्रूरतमः' इत्यादौ राक्षसत्वविशिष्टे तदितरनरादिव्यावृत्तक्रूरतमत्वविवक्षायामपि नानेन षष्ठीसप्तम्यौ। "पञ्चमी विभक्तेः" इत्यनेन बाधात्। एवं च व्यावृत्ततत्वाख्यः सम्बन्धो निर्द्धारणविभक्तेरर्थः। व्यावृत्तत्वं च अत्यन्ताभावप्रतियोगित्वरूपं विधेयतावच्छेदकावच्छिन्नम्। अतो 'नराणां ब्राह्मणः प्राणी' इत्यादिनं प्रयोगः। ब्राह्मणेतरनरेषु प्राणित्वघटोभयाभावसत्वेऽपि प्राणित्वत्वस्य तद्वृत्त्यभावप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्वात्। व्यावृत्तत्वञ्च-अभेदान्व-

निपुणो राज्ञ इति। साधुशब्दप्रयोगे त्वर्चां विना ऽपि सप्तमी भवत्येव। "साध्वसाधुप्रयोगे च" ( का० वा० ) इति वार्त्तिकात्।

प्रसित इति। 'तत्परे प्रसितासक्तौ, इत्यमरः।

मूलेनेति। "नक्षत्रेण युक्तः कालः" ( पा० सू० ४।३।२१) इत्यणो "लुबविशेषे" ( पा० सू० ४।२।४ ) इति लुप्।

पर्यायेणेति। ईश्वरशब्दो भावसाधनः। यस्य स्वामिन ईश्वरत्वमुच्यते इत्येकं व्याख्यानम्। यस्येति स्वं निर्दिश्यते। यस्य स्वस्य ईश्वर उच्यते

---

शब्दरत्न।

वार्तिकादिति। साधुभृत्यो राज्ञ इति तु राज्ञो भृत्येनान्वये साधु। प्रत्यासत्त्या च राजविषयमेव साधुत्वं गम्यते; न तु शब्देन तत् स्पृश्यते। अर्चायां प्रतियोगिनिषेधार्थं त्वत्र साधुग्रहणमिति तत्त्वम्।

ज्योत्स्ना।

यिविधेयसमभिव्याहारस्थले विधेयतावच्छेदकेऽन्वेति। भेदान्वयितत्तत्समभिव्याहारस्थले तु विधेये एव, व्युत्पत्तिवैचित्र्यात्। विभक्त्यर्थव्यावृत्तघटकाभावे च सामानाधिकरण्यसम्बन्धेन ब्राह्मणत्वादिविशेष्यधर्मावच्छिन्नप्रतियोगिताकभेदविशिष्टो यः प्रकृत्यर्थतावच्छेदको नरत्वादिः, तन्निष्ठाधारतानिरूपिताधेयत्वादिसम्बन्धेन प्रकृत्यर्थनरत्वादिप्रदार्थेऽन्वयः। आकाङ्क्षावशात्। तथा च तादृशसम्बन्धेन नरवृत्त्यभावप्रतियोगिश्रेष्ठत्ववदभिन्नो द्विज इति बोधः। नराणां क्षत्रिये शौर्यमित्यादौ तादृशसम्बन्धेन नरवृत्त्यभावप्रतियोगिशौर्यमिति बोध इति दिक्।

ननु यदि साधुशब्दस्यार्थिको योगो राज्ञि गम्यते इति भवत्सम्मतं तदा वृत्तिप्रदर्शितं प्रथमोपस्थितं साधुर्भृत्यो राज्ञः इति प्रत्युदाहरणमपि सम्यगेव। प्रकृतसूत्रेऽर्चायामित्यस्याभावे साधुनिपुणाभ्यामिति तृतीयया योगमात्राक्षेपादिति तत्त्यागानौचित्यमित्याह—अर्चायां प्रतियोग इति। साधुर्मातरं प्रति पर्यंतु इत्यत्र यदा अर्चा विवक्षिता तदा मातृशब्दात्सप्तमी प्राप्ता, परन्तु प्रति योगस्य सत्वान्न भवति।

एतेन प्रकृतसूत्रे साधुग्रहणमनर्थकम्। साधुशब्दप्रयोगे 'साध्वसाधुप्रयोगे च' इति वार्तिकेन सप्तम्या दुर्वारत्वादिति कस्यचिदुक्तिः समाहिता। प्रकृतसूत्रे पुनः साधुशब्दप्रयोगसामर्थ्यात् प्रत्यादिभिर्योगे साधुशब्दे प्रकृतसूत्रेण वार्तिकेन वा प्राप्ता सप्तमी भवतीति भावः।

इत्यपरम् । एवं च व्याख्याभेदात्पर्यायेण विभक्तिः । सा च विशेषणात् षष्ठीवदिति भावः ॥

इति सप्तमी ॥

इति श्रीमद्भट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां कारकप्रकरणम् ॥

---

शब्दरत्न ।

तत्परे इति । रूढत्वादेतदर्थस्यैव ग्रहणम् । तेन प्रकर्षेण स्थित इत्यर्थे न ॥

इति सप्तमी ॥

इति श्रीमद्भट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने-कारकप्रकरणम् ॥

ज्योत्स्ना ।

इत्यर्थे इति । परममूले "यस्मादधिकं यस्य चेश्वरवचनम्" इतिसूत्रस्य व्याख्यानं मङ्गलार्थम् । "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति भाष्यात् । तत्र "यस्य चेश्वरवचनम्" इतिशब्दस्य परमस्वस्य ईश्वरः कथ्यते तद्वाचकादित्यर्थे स्ववाचकात्सप्तमी । यदात्वीश्वरशब्दो भावप्रधान ईश्वरत्ववचनस्तदा स्वामिवाचकात्सा भवति । अधिभुवि रामः, अधिरामे भूः, इत्युदाहरणे इति दिक् ।

कारकान्ता समाप्तेयं ज्योत्स्नाटीका सुनिर्मला ।
जगन्नाथप्रसादेन श्रीजगन्नाथशर्मणा ॥ १ ॥

# अथाव्ययीभावः ।

समर्थाश्रित(१) इति । सूत्रे समर्थशब्दो लाक्षणिक इति भावः । कतिपयेति । यद्यपि उदात्तवता गतिमता च तिङा गतेः समासो नित्याधिकारे वार्तिककृतोक्तः । तथा ऽपि नासौ नियतः । य आनयत्, अभिप्रभर-

### शब्दरत्न

नित्याधिकारे इति । "उपपदमतिङ्"इत्यत्रेत्यर्थः । नियत इति । अप्रतिबद्धप्रसरो नित्यः

### ज्योत्स्ना ।

समर्थेति । "समर्थः पदविधिः" इति सूत्रे सामर्थ्यं द्विविधं गृह्यते एकार्थीभावरूपं व्यपेक्षारूपञ्च । परस्परव्यपेक्षा सामर्थ्यमेके इति एकार्थीभावोऽत्र सामर्थ्यं परिभाषा- चेति च भाष्योक्तेः । तत्र व्यपेक्षारूपस्य विशिष्टा अपेक्षेति व्युत्पत्त्या स्वार्थपर्यवसायिनां पदानां आकाङ्क्षादिवशात् यः परस्परसम्बन्धः सा व्यपेक्षेति लक्षणं निष्पन्नम् ।

---

प्र० (१) सूत्रे समर्थशब्दस्य सामर्थ्यविशिष्टरूपार्थबोधकस्य पदविधिशब्देन सह साक्षात्समानाधिकरण्यासंभवादाह—समर्थाश्रित इति । समर्थशब्दो लाक्षणिक इति च । अत्र च 'संसृष्टार्थं समर्थम्' इति भाष्योक्तं समुदायशक्त्या एकोपस्थितिजनकत्वरूपैकार्थीभावसामर्थ्यं गृह्यते । नतु व्यपेक्षारूपं व्याख्यानात् ।

ननु पृथगर्थानां समुदायनिष्ठशक्त्या एकोपस्थितिजनकत्वमिति एकार्थीभावस्य लक्षणे सति घटपदस्यापि घटत्वघटरूपार्थयोः घट इति समुदायनिष्ठशक्त्याऽभिन्नोपस्थितिजनकत्वात्तत्रापि तत्त्वापत्तिरिति चेन्न । यत्किंचिच्छक्तिविशिष्टत्वं तत्त्वमिति परिष्कारेणादोषात् । वैशिष्ट्यं च स्वग्रहप्रयोज्यग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्वम्—स्वपर्याप्त्यधिकरणघटितत्वं—स्वनिरूपकपदार्थेतरपदार्थनिरूपकपदार्थेतरपदार्थनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वमिति त्रितयसंबन्धेन । यथा राजपुरुष इत्यादौ राजत्वावच्छिन्ननिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूत—राजसंबन्धिपुरुषत्वावच्छिन्ननिरूपितशक्ति—पर्याप्त्यधिकरणत्वं, राजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरण—राजपद—घटितत्वं, राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकराजपदार्थेतर—पुरुषत्वावच्छिन्नरूपपदार्थनिरूपित—शक्तिपर्याप्त्यधिकरण—पुरुषपद—घटितत्वं चास्तीति लक्षणसमन्वयः । घटपदे तु प्रथमसंबन्धाभावान्नातिव्याप्तिः । द्वितीयतृतीयसंबन्धौ ह्यत्र स्वरूपपरिचायकौ न कस्यचिद्व्यावृत्तिफलकौ । एवं वाक्येऽपि विशिष्टे शक्त्यभावेन प्रथमसंबन्धाभावादेव नातिव्याप्तिः । क्विबन्तस्थले तु लिह् . क्वि.प् इत्यवस्थायामेव विग्रहानरयैकार्थीभावस्य लिह् इत्यादावारोपान्नाव्याप्तिरिति बोध्यम् ।

ज्योत्स्ना ।

एकार्थीभावस्य तु—'संसृष्टार्थं समर्थमिति भाष्योक्तेः" विशेषणविशेष्यभावावगाह्युपस्थितिजनकत्वमिति लक्षणम् । उदाहरणं व्यपेक्षायाः वाक्ये—राज्ञः पुरुष इत्यादौ । अत्र हि अपेक्षायां सत्त्यां यो यः सन्निहितो योग्यश्च तेन तेन सम्बन्धः स्वीक्रियते, यथा राज्ञः पुरुषः अश्वश्च राज्ञः देवदत्तस्य च पुरुषः इति ।

एकार्थी भावस्य तु—राजपुरुषः इति वृत्तिघटकमेव । एकार्थीभावश्च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः । अत एव "पृथगर्थानामेकार्थीभावः सामर्थ्यं वाक्ये पृथगर्थानि राज्ञः पुरुष इति । समासे पुनरेकार्थानि राजपुरुष" इति भाष्योक्तं सङ्गच्छते । अत एव राजपुरुष इत्यादौ राज्ञि ऋद्धस्येत्यादिविशेषणत्वेन नान्वेति । पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति न्यायात् । न च देवदत्तस्य गुरुकुलम्' इत्यादौ देवदत्तस्यानन्वयापत्तिरिति वाच्यम् । देवदत्तस्य प्रधानीभूतकुलेनैवान्वयस्य स्वीकारेणादोषात् । तदुक्तम्—

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ।

इति वाक्यपदीये ।

यद्वा ससम्बन्धिकस्य पदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । तदप्युक्तम्—

सम्बन्धिशब्दः सापेक्षो नित्यः सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ।

इति च । तथा च-यत्किञ्चित् पदजन्यपृथगुपस्थितिविषयकत्वेन लोकदृष्टानां विशिष्टविषयकैकशक्त्या एकोपस्थितिजनकत्वमेकार्थीभाव इति लक्षणं निष्पन्नम् । तेषां तत्वं तु समानानुपूर्वीकत्वेन तुल्यत्वाज्ज्ञेयम् । समासघटकानां पदानां गौणमेकार्थत्वं बोधयितुमेकार्थीभाव इति च्विप्रत्ययनिर्देशः । यथा पदानामसत्वात् तत्सत्ताव्यवहारो गौणः । तथा तेषामेकार्थत्वव्यवहारोऽपीति ध्येयमित्यलम् ।

सूत्रे समर्थपदं लाक्षणिकमित्याह—समर्थाश्रित इति । अत्र समर्थपदव्यावर्त्यं पश्यति कृष्णं श्रितो देवदत्तम् इत्यादौ समासाभावः, तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यादौ अणभावः ।

पदविधिरित्यत्र पदस्य-पदयोः-पदानाम्-वा विधिरिति षष्ठीतत्पुरुषः । तेन पदसहचरितोऽपि पदविधिशब्देन गृह्यते तत्फलं सन्नन्तादौ एकार्थीभावसम्पादनम् ।

वस्तुतस्तु—पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वं पदविधित्वम् । तच्च कृत्प्रत्ययविधायके तद्धितप्रत्ययविधायके समाससंज्ञाविधायके सनादिविधायके, चास्ति । तत्र प्रथमत्रयाणां पदसंज्ञाप्रयोजकसुप्रत्ययोत्पत्तिप्रयोजकप्रातिपदिकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेद-

घृषत, इत्यादौ समासादर्शनात्। अत एव भाष्यकृता 'सह'इति योगविभागेनायं साधितः। यथोत्तरं मुनीनां प्रामाण्यमिति भावः।

स चेति। एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते। एतच्च सम्प्रदानसञ्ज्ञासूत्रे पदमञ्जर्यां स्पष्टम्। यदि हि लोकेऽपि स्यात्; तर्हि अभिप्रैति इत्यादौ समासात्त्वादयः स्युः। पचतिकल्पमित्यादौ तद्धितान्ताद्यथा। न च लिङ्गसर्वनामनपुंसकताभ्युपगमेन निर्वाहः। प्रकुरुते इत्यादौ ह्रस्वापत्तेः। प्रकुर्वीरन्नित्यत्र नलोपापत्तेश्च।

निर्देशादिति। अन्यथा हि प्रथमानिर्दिष्टत्वाविशेषेऽपि उपसर्जनसञ्ज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः।

---

शब्दरत्न।

इत्यर्थः। एवं चाधिकारप्राप्तमपि नित्यपदं तदंशे न सम्बध्यत इति भावः। योगविभागेनेति। तस्य च वैकल्पिकत्वं वक्ष्यति।

एतदपीति। छन्दस्येवेत्येतदित्यर्थः। एतदुत्तरं छन्दस्येवेति प्रतीकपाठो लेखकप्रमादात्। एतच्चेति। उक्तच्छान्दसत्वमित्यर्थः। निर्वाह इति। शयितव्यमित्यादेः क्रियावाचकस्यापि नपुंसकत्ववदस्यापि प्रातिपदिकत्वे तत्त्वेन लुका तदश्रवणादित्यर्थः।

अन्यथेति। सुवन्तमित्यनेनान्यतरस्यैव ग्रहणे विनिगमकाभावादिति भावः। पूर्वशब्दस्यैवेति। तस्य कालवाचकत्वेन क्रियायां विशेषणत्वादिति भावः।

ज्योत्स्ना।

कक्कत्व—तद्धितत्व—समासत्वान्यतमावच्छिन्नसम्पादकत्वात्। सनादिविधायकस्य च पदसंज्ञाप्रयोजक-तिङ्प्रत्ययोत्पत्तिप्रयोजक-धातुसंज्ञाविधायक—"सनाद्यन्ता धातवः" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकसन्त्वाद्यवच्छिन्नसम्पादकत्वात्। अत एव "समासेऽङ्गुलेः सङ्गः" इत्यत्र समासग्रहणं "पदान्ताद्वा" इत्यत्र पदान्तग्रहणञ्च सङ्गच्छत इति दिक्।

पूर्वशब्दस्यैवेति। पूर्वशब्दस्य कालवाचित्वात्—

"क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका"

इतिवचनात् क्रियायां विशेषणत्वादितिभावः। पूर्वं भूत इति व्युत्पत्तौ पूर्वमिति क्रियाविशेषणम्। भूधातोः सत्तोत्पत्तिर्वा शंक्यः पूर्वकालवृत्तिसत्ताश्रयः पूर्वकालिकभवनमिति वा बोधः। न च पूर्वशब्दस्य कालेनान्वयात्सामर्थ्याभावात्कथं समास इति वाच्यम्। "भूतपूर्वे चरट्"इतिनिर्देशेन सामर्थ्याभावेऽपि समासकल्पनादिति दिक्।

"इवेन" इति ॥ अयमपि समासः पूर्ववत्काचित्क एव । तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः । 'उद्बाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगोऽपि सङ्गच्छते ।

"गोस्त्रियोः" ( पा० सू० १।२।४८ ) ॥ उपसर्जनं य इति । यत्तु प्राचा गोऽन्तस्त्रीप्रत्ययान्तयोरुपसर्जनयोरित्युक्तम् । तन्न । चित्रगुरित्यादौ गोशब्दस्योपसर्जनत्वेऽपि तदन्तस्यातथात्वाद् । गौरीपतिरित्यादौ अतिप्रसङ्गाच्च । कथं सुगोकुलं राजकुमारीपुत्र इति चेत् । न । शृणु । उपसर्जनस्य ससम्बन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति उत्तरपदयोर्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वम् (१) ।

शब्दरत्न ।

काचित्क इति । कादाचित्क इत्यपि बोद्धयम् । योगविभागसिद्धत्वात् तदनुवादेन विभक्त्यलोपस्यैवानेन विधानमिति भावः । व्यस्तप्रयोग इति । समासे ह्येवस्य परनिपातः स्यादिति भावः । अयं लोपश्च प्रत्यासत्त्या समासावयवविभक्तेरेव । तेन समासादुत्पन्नस्य "अव्ययात्" ( पा० सू० २।४।४२ ) इति लुग्भवत्येव ।

ननु गोपदार्थस्येव चित्रगो इति समुदायार्थस्य चित्राभिन्नगोरूपस्यान्यपदार्थोपसर्जनत्वमेवेत्यरुचेराह—गौरीपतिरिति । राजकुमारीपुत्रे स्त्रीप्रत्ययान्तस्य प्रातिपदिकत्वलाभाय समस्तस्य पूर्वपदत्वकरणम् । उत्तरपदभूतयोरिति स्वरूपकथनम् । उत्तरपदस्यैव तथात्वसम्भवात् ।

ज्योत्स्ना ।

"गोस्त्रियोरुपसर्जनस्य" इति । किं तावदत्रोपसर्जनत्वम्—शास्त्रीयं लौकिकम्वा । अत्राहुः कुमारीमिवाचरन् ब्राह्मणः कुमारी इत्यादौ दोषवारणाय शास्त्रीयमुपसर्जनत्वं गृह्यते । अप्रधानमुपसर्जनग्रहणे अत्रापि दोषः स्यादिति ।

तदैव ह्रस्वत्वमिति । तदुक्तं भाष्यकृता—"अप्रधानमुपसर्जनम्, सम्बन्धिशब्दावेतौ तत्र सम्बन्धादेतद्गन्तव्यम्, यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवति" इति यत्समासशास्त्रे प्रथमानिर्दिष्टं तस्य तद्घटितसमासस्य—सः—अप्रधानशब्द इत्यर्थः ।

---

प्र० (१) तदुक्तं भाष्ये 'अप्रधानमुपसर्जनमिति संम्बन्धिशब्दावेतौ तत्र संबन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवति" इति यत्—समासशास्त्रे प्रथमानिर्दिष्टम् । तस्य—तद्घटितसमासस्य । सः–अप्रधानशब्द । इत्यर्थः ।

अत्र उपसर्जनपदेन 'प्रथमानिर्दिष्ट' इत्यादि शास्त्रीयमेवोपसर्जनत्वं गृह्यते 'इद्गोण्या' इतिसूत्रस्थभाष्यप्रामाण्यात् । तत्र हि 'गोण्या न' इत्येव वक्तव्यं किमर्थमित्वं विधीयते, पञ्चगोणिरित्यादौ

दिशयोरिति । दिशोरिति हलन्तेन विग्रहेऽप्येतदेवरूपम् । दिश्शब्दस्य शरदादित्वाट्टच् ।

वचनसामर्थ्यादिति । 'विभक्ति-' इत्यनेन हि येन सुबन्तेन सह समासस्तद्घटकीभूतैव विभक्तिर्गृह्यते सन्निधानात् । तदर्थद्योतकश्चाधिरिति भावः । परिशिष्टे तु प्रथमान्तेनायं समासः, षष्ठ्यन्तेन वा, इत्यपि पक्षद्वयं स्थितम् ।

शब्दरत्न ।

टजिति । यतष्टच् अत एतदेव रूपमित्यन्वयः । सन्निधानादिति । उपस्थितत्वादित्यर्थः । परिशिष्टे त्विति । अत्रारुचिः स्पष्टैव । द्योतकसमभिव्याहारे षष्ठ्या अप्राप्तेश्च । वाचकत्वे ऽपि सन्निधानत्यागे न मानमिति ।

ज्योत्स्ना ।

अत्रोपसर्जनपदेन प्रथमानिर्दिष्टमित्यादिशास्त्रीयमेवोपसर्जनत्वं गृह्यते । तत्र "इद्गोण्या" इति सूत्रस्थं भाष्यं मानम् । तत्र हि गोण्या न इत्येव वक्तव्यम्, किमर्थमित्वं विधीयते । पञ्चगोणिः इत्यादौ "लुक् तद्धितलुकि"इत्यनेन लुकि प्रतिषिद्धे "एकविभक्ति"इत्यनेनोपसर्जनत्वात् गोणीशब्दस्य ह्रस्वत्वं सिद्ध्यतीति किमर्थमित्वमित्याशङ्क्य गोणीमात्रमिदं गोणिरित्यत्र शास्त्रीयोपसर्जनत्वाभावात् ह्रस्वो न स्यादित्यभिप्रायेणेत्वविधानमावश्यकम् । अनेन भाष्येण शास्त्रीयस्यैवोपसर्जनस्य ग्रहणं स्पष्टमेवाभिहितमिति दिक् ।

नन्वेवमतिराजकुमारिण्यत्यत्र राजकुमारीशब्दस्य शास्त्रीयोपसर्जनत्वेऽपि स्त्रीप्रत्ययान्ततदादित्वाभावात् ह्रस्वो न स्यात् । कुमारीमात्रस्य च विग्रहीयविभक्त्यन्तत्वाभावादिति चेन्न । "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषया तदादिनियमनिषेधात् राजकुमारीत्यस्य स्त्रीप्रत्ययान्तत्वमित्यदोषात् । नच तस्य अत्यर्थं प्रति उपसर्जनत्वेन कथं स्त्रीप्रत्ययान्तत्वम् "उपसर्जनस्त्रीप्रत्यये तदादिनियमात्" इति वाच्यम् । यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थम्प्रति स्त्रीप्रत्ययस्यानुपसर्जनत्वमेवेत्यदोषात् । अत्रायं निष्कर्षः—आचारक्विबन्तकुमारीशब्दघटितराजकुमारीशब्दस्यातिशब्देन समासे अतिराजकुमारीत्यत्र तु न ह्रस्वः । परिभाषायां

---

'लुक्तद्धितलुकि' इति लुकि अनेन प्रतिषिद्धे 'एक विभक्ति' इत्यनेनोपसर्जनत्वाद् गोणीशब्दस्य ह्रस्वत्वं सेत्स्यतीति किमर्थमित्वविधानमित्याशङ्क्य गोणीमात्रमिदं गोणिरित्यत्र शास्त्रीयोपसर्जनत्वाभावात् ह्रस्वो न स्यात् । अत इत्वविधिरावश्यक इत्युक्तम् । तेन शास्त्रीयस्यैवोपसर्जनत्वस्यात्र ग्रहणं बोध्यते । अत एव कुमारीमिच्छन् ब्राह्मणः कुमारी, गौवक्र्यणीत्यादौ च कमारीवक्र्यण्योः लौकिकोपसर्जनत्वेऽपि न ह्रस्वः । शास्त्रीयोपसर्जनत्वं तु 'पोटायुवति'इत्यत्र प्रथमानिर्दिष्टजातिवाचकगोशब्दस्यैवास्ति' किन्तु ङ्यन्तत्वाभावान्न ह्रस्वः ।

यत्तु प्राचोक्तं हरौ अधिकृत्येति विग्रहे हरावधीति स्थिते इति। तन्न। नित्यसमासत्वेन विग्रहायोगात्।

यदाहुः—अविग्रहो नित्यसमास इति। नन्वस्वपदविग्रहोऽपि स्वीक्रियते। कुम्भं करोतीति यथा। अयमपि तथाऽस्तु। अधिकृत्येति ल्यबन्तस्य समासाप्रविष्टस्य सत्त्वादिति चेन्न। समासार्थलेशमपि अबोधयतस्तस्य विग्रहे प्रवेशस्यैवासम्भवात्।

यत्तु व्याचख्युः। विग्रहः इव विग्रहः अर्थकथनमात्रम्। तेनाविग्रहत्वान्नित्यसमासत्वमविरुद्धम्। अत एव समासप्रकृतिभूतमलौकिकं वाक्यान्तरं दर्शयति—हरौ अधीति स्थित इतीति।

अत्रेदं वक्तव्यम्—विग्रह इवेत्यसङ्गतम्। अर्थकथनवाक्यस्यैव विग्रहत्वेन ततो भेदाभावात्। अर्थकथनमात्रमित्यपि न। ल्यबन्तेन समासार्थाऽसंस्पर्शात्। यच्च हरौ अधीति अलौकिकमित्युक्तम्। तदपि न। तत्र हरि ङि इत्यस्यैव प्रवेशात्। 'अन्तरङ्गानपि' इति न्यायात्। अन्यथा समासे हरिशब्देकारस्य दुर्लभत्वापत्तेश्च।

यदपि व्याचख्युः—अलौकिकत्वादेवाधिशब्देनाभिहितेऽपि सप्तमी, अन्यथा सा न स्यात्, अनभिहिताधिकारादिति। तदप्यापाततः। अलौकिकत्वं हि नित्यविध्यन्तरप्राप्तिविषयत्वेनापरिनिष्ठितत्वम्। न त्वेतावन्मात्रेणान-

---

शब्दरत्न।

विग्रहायोगादिति। एवं च विग्रहे इति तदुक्तिरसङ्गतेति भावः। प्रवेशस्यैवेति। एवं च तादृशविग्रहस्वरूपकथनमसङ्गतमिति भावः।

असंस्पर्शादिति। एवं च तत्रार्थकथनत्वस्यैवाभावेन तन्मात्रत्वोक्तिरसङ्गतेति भावः। दुर्लभत्वापत्तेरिति। कृतात्वेन कृतैकादेशौकारस्यैव लुकापहारेणेति भावः।

वैकल्पिकेडादिविषये सेढेत्यादावलौकिकत्ववारणाय—नित्येति। आकरे—"अनभिहित" (पा० सू० २।३।१) सूत्रे भाष्ये। परिगणनफलस्य भीष्मं कटमित्यस्यान्यथासिद्धिस्तत्रोक्ता।

ज्योत्स्ना।

लौकिकोपसर्जनग्रहणेन राकुमारीशब्दार्थं प्रति स्त्रीप्रत्ययस्योपसर्जनत्वेन तदादिनियमस्य दुर्वारत्वेन शास्त्रीयोपसर्जनस्य राजकुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वाभावात् सुन्दर रगावौ यस्य इति द्वन्द्वगर्भबहुव्रीहावपि न ह्रस्वः। द्वन्द्वात्मकसमुदायस्य बहुव्रीह्यर्थं प्रति उपसर्जनत्वेऽपि गोशब्दमात्रस्य तत्त्वाभावात्।

नुशिष्टायाः सप्तम्यास्तत्र प्रवेशः सूपपादः । अतिप्रसङ्गात् ।

यत्तु तत्पौत्रेण व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिना ऽभिहिते ऽपि सप्तमीति । तन्न । परिगणनस्याकरे प्रत्याख्यातत्वात् । "कर्मणि द्वितीया" ( पा० सू० २।३।२ )इति सूत्रे स्वयमपि तथैवोक्तत्वात् । 'क्रमादमुं नारद इत्यबोधि स' इत्यादिप्रयोगविरोधाच्च ।

द्वितीया(१)पञ्चम्योरिति । एतच्च रक्षितग्रन्थे स्पष्टम् । यत्तु वदन्ति

शब्दरत्न

रक्षितग्रन्थे इति । अत्रारुचिबीजं तु मध्यार्थकसमयायोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्यमिति(२) ।

ज्योत्स्ना ।

अत एव कल्याणं घःपादं यस्या इति द्वन्द्वगर्भबहुव्रीहौ "स्वाङ्गाच्चोपसर्जनात्" इति न ङीबित्यलम् ।

पञ्चमीविधानस्य चारितार्थ्यमिति । तस्मात् समया–निकषा–आराच्छब्दानामधिकरण-

---

वि० (१) रक्षितग्रन्थानुसारेणेदमुक्तम् । वस्तुतो मध्यार्थकसमयाशब्दयोगे द्वितीयविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य च चारितार्थ्यादिदमयुक्तम् । समयानिकषाराच्छब्दा अधिकरणशक्तिप्रधाना इति समीपमात्रवाचित्वान्नैतैः सहसमासः । समीप इति हि तेषामर्थोऽब्भक्षन्यायेन । विभक्त्यर्थसमीपादिमात्रवाचिन एव अव्ययस्य तेन समासविधानात् । उपशब्दस्तु समीपमात्रवाची इति भवत्येवोपकृष्णमिति समास इति ध्येयम् ॥

प्र० ( २ ) चारितार्थ्यमिति । तस्मात् समया—निकषाऽऽराच्छब्दानामधिकरणशक्तिप्रधानतया समीपमात्रवाचित्वाभावान्न तैः समास इति समाधानं वक्तव्यम् । अब्भक्षन्यायेन विभक्त्यर्थसमीपसमृद्ध्यादिमात्रवृत्त्यव्ययस्यैव 'अव्ययं विभक्ति' इत्यनेन समासविधानात् । उपशब्दस्तु तन्मात्रवाची उपकृष्णं गोपा इत्यादौ कृष्णसामीप्यवन्तो गोपा इत्यर्थप्रतीतेरिति शब्दरत्नाशयः ।

वस्तुतस्तु मध्यार्थकसमयाशब्दयोगे द्वितीयैव न भवति, निकषाशब्दसाहचर्येण समीपार्थकसमयाशब्दयोगे एव तद्विधानात् । नन्वेवं द्वितीयाविधानसामर्थ्यात्समयाग्रामं निकषालङ्कामित्यादौ समासवारणेऽपि आराद्वनादित्यादौ समासः स्यादेव दूरार्थकाराच्छब्दयोगे 'अन्यारादितरर्ते' इति पञ्चमीविधानस्य चारितार्थ्यात् । समीपार्थे विशिष्य तद्विधानाभावच्चेति चेन्न । अन्चूत्तरपदाजाहियुक्ते इति तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणात्तद्युक्तमात्रे पञ्चमीविधानसामर्थ्येन समीपार्थेऽपि विशिष्य पञ्चम्या विधानलाभेन तत्सामर्थ्यात्तत्र समासस्य सुपरिहरत्वात् । अत एव 'अव्ययम्' इति विभक्तयोगेनाप्यत्र समासो न । अब्भक्षन्यायेन वारणे तु उक्तविभक्तयोगेन समासः स्यादेव । अपिच अब्भक्षन्यायेन पदान्तरसमभिव्याहारे समासवारणेऽपि तदसमभिव्याहारे तद्वारणं न स्यात् । अधिकरणत्वस्य संसर्गरूपस्य पदान्तरसमभिव्याहारे एव प्रतीतिसंभवात् । तदसमभि-

चैत्रस्य वनादारादित्यादौ सापेक्षत्वादसमासे चरितार्थत्वाद्विधानसामर्थ्य नास्तीति । तच्चिन्त्यम् । नित्यसमासस्य न्याय्यत्वे सति चैत्रस्येत्यादिविशेषणप्रयोगस्यैवासम्भवात् ।

उक्तं हि भाष्ये—'वृत्तस्य विशेषणयोगो न' इति । ननु 'सविशेषणानां वृत्तिर्न' इत्यपि भाष्ये उक्तमिति चेत्सत्यम् । अनित्यसमासविषयन्तत् । नित्यसमासस्यापि सविशेषणेष्वप्रवृत्तौ महतः कुम्भस्याप इत्याद्यापद्येत ।

यत्तु प्राचा कृष्णस्योपेत्युक्तम् । यच्च व्याचख्युरोद्देशे प्रक्रियावाक्ये स्थिते इति । तदुभयमपि प्रागुक्तरीत्या प्रामादिकमेव ।

सम्प्रति नेति । सम्प्रतीत्यव्ययमिदानीमित्यर्थे ।

एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा ॥ इत्यमरः॥

तच्चाधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवान्वयार्हम् । निषेधोऽपि क्रियाया एव । तदेतदाह—युज्यते इति । असम्प्रतीति समासवृत्तौ तु युजिक्रियान्तर्भवति । दध्योदन इत्यत्र सेकक्रिया यथा ।

यत्तु प्राचोक्तम्—असम्प्रतीति सम्प्रत्यभाव इत्यर्थः । अनेनोपभोग्यवस्तुनो यो वर्तमानः कालस्तस्यैव निषेधः क्रियते इति । तन्न । अधिकरणस्य निषेधं प्रतियोगित्वेनान्वयस्य सर्वतन्त्रविरुद्धत्वात् । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत इति कश्चिदभ्युपैति, न वा युक्तिसहमित्यास्तां तावत् ।

शब्दरत्न ।

प्रागुक्तरीत्या—अधिहरीत्यत्रोक्तया । अधिकरणशक्तीति । कालवाचकत्वादित्यपि बोध्यम् । क्रियापदेनैवेति । कर्तृकर्मद्वारेति भावः । निषेधोऽपीति । अत्यन्ताभावार्थकनञः क्रियान्वयित्वव्युत्पत्तेरिति भावः ।

न वा युक्तीति । उक्तव्युत्पत्तिविरोधादिति भावः । ततो भूतलाधारकघटाभावप्रतीतिस्त्वार्थीति बोध्यम् ।

ज्योत्स्ना ।

शक्तिप्रधानतया समीपमात्रवाचित्वाभावान्नैतैः समास इति समाधानं भवति । वायुभक्षन्यायेन विभक्त्यर्थसमीपसमृद्धिमात्रवृत्त्यव्ययस्यैव "अव्ययं विभक्ति" इत्यनेन

---

व्याहारे तु प्रातःकल्पमित्यादौ वृत्तिविषये अधिकरणशक्तिप्रधानस्यापि प्रातः शब्दादेः अधिकरणताविशिष्टबोधकत्वस्यैव समयादिशब्दानां अधिकरणताविशिष्टसमीपमात्रार्थस्यैव बोधकत्वेन समासापत्तेस्तदवस्थत्वात् । तस्मात्तत्तद्विभक्तिविधानसामर्थ्यादेव वारणं साध्विति विभावनीयम् ।

इति हरीति। स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः। प्रतिश(१)ब्दस्येति।

यत्त्वाहुः—ग्रामस्य वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति। तत्प्रागेव दूषितम्।

हरदत्तस्त्वाह—अर्थमर्थं प्रतीति भाष्यकारप्रयोगाद् वाक्यमपि साधु। यद्वा नात्राव्ययं वीप्सावृत्ति किं तर्हि कर्मप्रवचनीयत्वात् सम्बन्धमवच्छिनत्ति, वीप्सा तु द्विर्वचनद्योत्येति।

सह पूर्वाह्णमिति। साकल्ये ऽव्ययीभावः। गुणभूतेऽपीति। यदि सादृश्य इति नोच्येत ततो यत्र सादृश्यं प्रधानं तत्रैव स्यात्। अव्ययार्थप्राधान्यस्याव्ययीभाव औत्सर्गिकत्वादिति भावः।

अन्त इति। इदानीमेतावान्प्रदेशोऽध्येतव्य इति यावतः प्रदेशस्य परिग्रहः कृतस्तदपेक्षया समाप्तिरिहान्तो विवक्षितः। स चासकले ऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते। अग्निशब्दस्तदर्थे ग्रन्थे वर्तते स तृतीयान्तः समस्यते। यद्यप्यग्निना सहेति प्रयोगार्हमेव, तथा ऽपि साहित्यमात्रे तथा। अन्तत्वविवक्षायां तु समासो नित्यः। अत एवाग्निग्रन्थपर्यन्तमित्यस्वपदविग्रहो दर्शितः।

शब्दरत्न।

भाष्यकारेति। संज्ञा तु प्रतिस्थानमित्यादा षत्वाभावार्थेति तदाशयः। अत्र—अर्थमर्थं प्रतीति वाक्ये। प्रतिशब्दस्येत्यादि मूलं तु रक्षितानुसारीति बोद्धयम्।

साकल्ये इति। पूर्वाह्णमपरित्यज्येत्यर्थ इति भावः। औत्सर्गिकत्वादिति। उन्मत्तगङ्गमित्यादौ व्यभिचारादिति भावः।

नन्वग्निग्रन्थादग्रेऽप्यध्ययनमस्तीत्यत आह—इदानीमिति। तदर्थे—तत्प्रतिपादके। अन्तत्वविवक्षायाम्—तस्यापि विवक्षायामित्यर्थः। ग्रन्थपर्यन्तमिति। तदन्तमित्यर्थः।

ज्योत्स्ना।

समासविधानात्। उपशब्दस्तु तन्मात्रवाची उपकृष्णं गोपा इत्यादौ कृष्णसामीप्यवन्तो गोपा इतिबोध इति शब्दरत्नाशयमाहुः।

परे तु—मध्यार्थकमध्यशब्दयोगे द्वितीयैव न भवति, निकषाशब्दसाहचर्येण

वि० (१) अत्र विधानसामर्थ्यादिति यदुक्तं तत्प्राचामनुरोधेन। वस्तुतस्तु प्रतिस्थानमित्यादौ षत्वाभावसम्पादनेन सा चरितार्था। तस्मादर्थमर्थं प्रतीति सरूपसूत्रस्थभाष्यप्रयोगात् यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात्समासाप्राप्तौ वाक्यं साध्विति बोध्यम्॥

यत्तु अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठ्यन्तेन वा विग्रह इति प्रथमान्तेन षष्ठ्यन्तेन वा समास इति। तन्न। सहशब्दस्यान्तवाचकत्वाभावात्। अन्तत्वस्य तु सुतरामलाभात्। तस्याध्ययने ऽनन्वयाच्च। सहयुक्ते तृतीयाया न्याय्यत्वाच्च। सतृणमत्तीत्यत्र साकल्यस्येव साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्येह तत्परित्यागस्य निर्मूलत्वाच्च।

यावच्छ्लोक(१)मिति। यावदित्यव्ययं समस्यते, विग्रहस्तु तद्धितेनेत्यस्वपदत्वं बोद्धव्यम्।

"विभाषा" (पा० सू० ६।१।११)॥ एतदिति। न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम्। टिघुभादिसञ्ज्ञानामिव समाससञ्ज्ञाया अपि नित्यप्राप्तत्वा-

शब्दरत्न।

अन्तत्वस्य सुतरामिति। प्राधान्येनेत्यर्थः। तस्येति। अन्तत्वस्येत्यर्थः। ननु सहशब्दस्यान्तवाचकत्वाभावे तेन समासो न स्यात्, अग्निग्रन्थपर्यन्तमिति विग्रहप्रदर्शनेन भवता ऽपि तस्य स्वीकारात्। अग्निरन्तो यस्येत्यस्य त्वदुक्तविग्रहसमानार्थत्वादत आह—सह युक्ते इति। एवं च प्रथमान्तेन समास इत्यसङ्गतम्। साहित्यं च सहशब्दार्थः। तत्र च सूत्रे विनिगमनाविरहादधिकार्थकसहशब्दस्य ग्रहणमिति भावः। साकल्यस्येवेति। यस्तृणानि भक्षयेत् स कथमन्यत्परित्यजेदिति प्रतीतेरिति भावः। एवं च यत्र 'न त्वत्र तृणभक्षणे तात्पर्यम्' इति ग्रन्थसूचितं साहित्यप्रतीतौ न तात्पर्यं तत्रापि चेत्तृतीया तर्हि यत्र तदपि भासते तत्र कथं न तृतीयेति तात्पर्यम्। साहित्यद्योत्यतयेति। साहित्यवद् द्योत्यतया बोद्धयतयेत्यर्थः। मयूरव्यंसकादित्वात् "सुप्सुपा" (पा० सू० १।४।१०३) इति वा समासः। यथाश्रुते तु ग्रन्थद्वयस्य सहाध्ययने ऽपि साहित्यप्रतीतिर्जायते, न त्वन्तत्वप्रतीतिरिति तस्य तद्द्योत्यतोक्तिरसङ्गतैव स्यादिति दिक्।

ज्योत्स्ना।

समीपार्थकसमयाशब्दयोगे एव तस्य विधानात्। नचैवं द्वितीयाविधानसामर्थ्यस्य चारितार्थ्येऽपि पञ्चमीविधानसामर्थ्यं दुर्निरूपम्, दूरार्थकशब्दयोगे तस्य चारितार्थ्यात्। समीपार्थे तस्य विशेषरूपेण विधानाभावादिति वाच्यम्।

---

वि० (१) अत्राव्ययमित्यनुवर्तते। तेनानव्यययावच्छब्दस्य व्यावृत्तिः। अवधारणं नाम—संख्यादिना इयत्तापरिच्छेदः। 'यावन्तः श्लोका' इत्यत्र अस्वपदविग्रहे समासस्य नित्यत्वेऽपि समासाभावः। विग्रहे यावदित्यस्यानव्ययत्वात्॥

(१)द्वचनं विना विद्धचन्तराणामिव संज्ञानामपि विकल्पालाभात् ।

स्यादेतत् । "सुप्सुपा" (पा० सू० १।४।१०३) इत्यपि तर्हि नित्यं स्यात् । न चेष्टापत्तिः । अपसिद्धान्तात् । तथा हि–चरट्सूत्रे वृत्तिकृतोक्तं पूर्वं भूतो भूतपूर्वः । सुप्सुपेति समासइति । तथा शाकलसूत्रे 'सिन्नित्यसमासयोः शाकलप्रतिषेध' इत्यत्र 'नित्यग्रहणेन नार्थ इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्व' इति भाष्ये कैयटो व्याख्यत्—वाप्यश्व इति "सुप्सुपा ( पा० सू० ६।५ ) इति समासः । "सञ्ज्ञायाम्" ( पा० सू० ४।१।७२ ) इति समासस्य नित्यत्वात्सिद्धः प्रतिषेध इति । तथा "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१५८ ) "असिद्धवदत्र" ( पा० सू० ६।४२२ ) इत्यादिसूत्रेष्वपि कैयटे स्पष्टम् । अत आह—सुप्सुपेतीति । समासेति । योगविभागेनैव सिद्धे समासे उत्तरसूत्रैः पुनर्विधानं प्राचीनस्य काचित्कतां ज्ञापयति । एवं च इवेन समासस्यापि काचित्कत्वादुद्बाहुरिव वामन इत्यादि सिद्धम् । "इवेन" ( का० वा० ) इति वार्तिकं तु यद्यपि "कुगति" ( पा० सू० २।२।१८ ) इत्यत्र पठ्यते, तथापि "सुप्सुपा" ( पा० सू० १।४।१०३ ) इत्यत्रत्यमेव नित्याधिकारे स्मारितमिति कैयटः । एवं स्थिते इवेन समासस्य छान्दसत्वं कल्पयन्तः प्रत्युक्ताः । जीमूतस्येवेत्यत्र बह्वृचैः समासाभ्युपगमे ऽपि तैत्तिरीयैर्व्यस्तस्यैव पाठादिति दिक् ।

शब्दरत्न ।

न्यायसिद्धत्वमेवाह–वचनं विनेति । विकल्पबोधकशब्दं विनेत्यर्थः । नित्यत्वादिति । वाक्येन सञ्ज्ञानवगमान्नित्यसमाससदृशत्वेन नित्यत्वादित्यर्थः । पुनर्विधानमिति । समाससञ्ज्ञाया इति भावः । अन्यथा तद्विहितसमाससञ्ज्ञानुवादेनाव्ययीभावादिसञ्ज्ञामेव विदध्यात् । अत्र च व्याख्यानमेव शरणं वृद्धानाम् । न च तत्सञ्ज्ञाविधानमव्ययादीनां समासशास्त्रप्रथमानिर्दिष्टत्वसम्पादनेनोपसर्जनसञ्ज्ञार्थं चरितार्थमिति कथं ज्ञापकमिति वाच्यम् । तत्र सूत्रे समासे इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधौ प्रथमानिर्दिष्टमित्यर्थे बाधकाभावादिति दिक् । इवेन समासस्य काचित्कत्वे हेतुमाह–जीमूतस्येवेति ।

ज्योत्स्ना ।

आजाहिभिरित्येव वक्तव्ये युक्तग्रहणेन तदुक्तमात्रे पञ्चमीविधानेन समीपार्थेऽपि त-

---

टि० (१) स्वभावसिद्धमित्यर्थः । तदुक्तम्भाष्ये–"इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्चेति । तत्र स्वभावतश्चैतद्भवति वाक्यञ्च वृत्तिश्चेति" इति ॥

"अपपरिबहिः" ( पा० सू० १।२।१२ ) ॥ अत एव ज्ञापकाद् बहिर्योगे पञ्चमी । ज्ञापकसिद्धं न सर्वत्र । 'तेन करस्य करभो बहिः' इति सिद्धम् । आबालमिति ।

यत्तु आ परमाणोः आ च भूगोलकमिति किरणावल्यां प्रयुक्तम्, तत्प्रामादिकम् । समासमध्ये चकारप्रयोगासम्भवात् । आभूगोलकादिति तु पाठ्यम् ।

थं पदार्थमिति । सूत्रे यदिति सामान्ये नपुंसकम् । "अव्ययं विभक्ति" ( पा०सू० २।१।६ ) इत्यनेन सिद्धे विभाषार्थं सूत्रम् । तेन पक्षे वनस्यानु इत्युदाहार्यम् ।

अनुगङ्गमिति । इहाऽऽयामो लक्षणत्वं चानुना द्योत्यते । लक्ष्यं तु समासार्थः । अत एव वाराणस्याः सामानाधिकरण्यम् । एवं स्थिते फलितमाह—गङ्गादैर्घ्येति । वाराणसीति । वरं च तदनश्च वरानः, श्रेष्ठोदकं, तस्यादूरभवा । "अदूरभवश्च" ( पा० सू० ४।२।७० ) इत्यण् । आदिवृद्धिः । "पूर्वपदात्सञ्ज्ञायाम्" ( पा० सू० ८।४।३ ) इति णत्वम् । अणन्तत्वान्ङीप् ।

शब्दरत्न ।

अत एव ज्ञापकादिति । बहिर्योगे पञ्चम्या समासविधानाज्ज्ञापकादित्यर्थः ।

लक्षणत्वं वस्तुतश्चिह्नमित्तं न तु तेन सम्बन्धेनान्वयस्तदाह—अव्ययमिति । अनोः समीपार्थत्वादिति भावः । वनस्यान्विति । कर्मप्रवचनीयसञ्ज्ञा तु नात्र । तद्द्योत्येन लक्ष्यलक्षणभावेनेतरत्रान्वयाभावात् । वनसमीपमित्येव बोधादिति भावः । तेन सम्बन्धेनान्वये तु वनमन्वित्येव बोद्धयम् । अग्निमभीतिवत् ।

अनुना द्योत्यत इति । दीर्घगङ्गासदृशीति वाच्योऽर्थः । गङ्गादैर्घ्येत्यादिः फलितोऽर्थः । द्योत्यार्थस्य विशेषणताया एव सर्वसम्मतत्वात् ।

यद्वा द्योत्यते इत्यस्य बोद्ध्यते इत्यर्थः । स च शक्त्यैवेति बोद्धयम् । लक्षणत्वं च वस्तुतस्तदेव निमित्तम् । एवं चात्रापि तेन सम्बन्धेनान्यत्रान्वयाभावान्न कर्मप्रवचनीयत्वप्रयुक्ता द्वितीया । सादृश्याद्यन्तर्भावश्चैकार्थीभावबलात् । उपलक्षितेत्यस्य विशिष्टेत्यर्थः । गङ्गादैर्घ्यसदृशेत्यादिबोधोत्तरं नियमेन मनसा तद्गतज्ञापकत्वबोधात्तस्यानुद्योत्यतोक्ता । यथा प्रारभ्यत इति क्रियाध्याहारकतया ऽथशब्दस्य प्रारम्भद्योतकतेति बोद्धयम् ।

ज्योत्स्ना ।

द्विशेषरूपेण विधानस्य सत्वात् । समासाभावश्च विधानफलम् । अत एव "अव्ययम्" इति विभक्त सूत्रेणापि न समासः । तत्र वायुरक्षन्यायेन समासवारणे तु विभक्तसूत्रेण

"नदीभिश्च" ( पा० सू० २।१।२० ) ॥ स्वरूपस्य सञ्ज्ञाया नद्याश्च नेह ग्रहणं बहुवचननिर्देशात्। किं त्वर्थस्य। न च तस्य समासः सञ्ज्ञा भवति। अतस्तद्वाचिनामयं समासः। ते च न केवलं विशेषशब्दा एव, किं तु सामान्यशब्दोऽपि।

नित्यसमास इति। एतच्च वृत्तौ स्पष्टम्। शाकलसूत्रे कैयटस्वरसोऽप्येवम्।

नन्वेवं न्यायसाम्याद् बहुव्रीहेरपि नित्यसमासत्वं स्यादिति चेन्नैवम्। यस्येत्यादिपदान्तरसमभिव्याहारेणान्यपदार्थप्रतीतेः। अत एव सञ्ज्ञानवगमादित्युक्तं न त्वन्यपदार्थोऽनवगमादिति। सञ्ज्ञायां किम्? शीघ्रगङ्गो देशः। अथाव्ययीभावे ऽसाधारणान् समासान्तानाह—

"अव्ययो" ॥ (पा०सू०५।४।१७ ) ॥ समासान्त इति। समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः। तेनोपशरदमित्यत्र "नाव्ययी-

शब्दरत्न।

सामान्यशब्दोऽपीति। तेन पञ्चनदं सप्तगङ्गमित्यादिसिद्धिः। पदान्तरसमभिव्याहारेणेति। तद्घटितमेव तत्र वाक्यं न केवलवृत्तिपदार्थघटितमिति भावः।

समासस्येति। इदं च "समासान्ता" ( पा० सू० ५।४।६८ ) "अन्त" ( पा० सू० ८।४।२० ) इत्यादिसूत्रेषु भाष्ये स्पष्टम्। समासार्थोत्तरपदस्य वेति। अयं पक्षः "सरूप" सूत्रे कैयटे स्पष्टः। परं तु चिन्त्यः। समासपदस्य तदर्थोत्तरपदलक्षणायां मानाभावात्। तदर्थवाक्यस्योपचारेण समासपदेन ग्रहणमित्यर्थस्यैव "गोस्त्रियोः" (पा० सू० १।२।४८) इति भाष्ये उक्तत्वाच्च। "अन्तः" ( पा० सू० ६।२।९२ ) इति सूत्रस्थभाष्येणोत्तरपदावयवत्वपक्षस्य विरोधाच्च। "सरूप" ( पा० सू० १।२।६४ ) सूत्रस्थभाष्यं (१)तु समासावयवत्वपक्षेऽपि सुयोजं सुधियाम्। तद् ध्वनयन्नाद्यपक्षे एव फलद्वयमाह— तेनेति। अदन्ताव्ययीभावत्वप्रयुक्तोऽयम्, अदन्तद्विगुत्वप्रयुक्तो ङीप् चेत्यर्थः।

ज्योत्स्ना।

समासस्य दुर्वारत्वं प्रसज्येत। अथ न्यायेन अन्यपदसन्निधाने वारणेऽपि तदसन्निधाने वारणं न सम्भवति। अधिकरणत्वस्य संसर्गतया पदान्तरसन्निधानं विना तत्प्रतीतेरभावेनाधिकरणशक्तिविशिष्टस्य प्रातःशब्दादेः प्रातःकल्पमित्यादिवृत्तिविषये अधिकरणताविशिष्टबोधकत्वस्येवान्यपदसामीप्ये अधिकरणताविशिष्टसमीपमात्रार्थकत्वस्यैव समयादीनां सम्भवात्। तस्मात्सामर्थ्येनैव समासवारणं सुवचमिति दिक्।'

सरूपसूत्रस्थं भाष्यमिति। इत्थं हि तत्र भाष्यम्—कृतद्वन्द्वानां विभक्तौ परतः एक-

प्र० (१) सरूपसूत्रस्थं भाष्यमिति। एवं हि तत्र भाष्यम्—"कृतद्वन्द्वानां विभक्तौ परत एक

भावात्" (पा०सू०२।४।८३) इत्ययम् । द्विपुरीत्यादौ "द्विगोः" ( पा० सू० ४।१।२१) इति ङीप् च सिद्ध्यति । "जरायां" इति गणसूत्रम् ।

शब्दरत्न ।

न च द्विपुरीत्यादावकारान्तोत्तरपदत्वाभावात् स्त्रीत्वं कथं स्यादिति वाच्यम् । लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चात्रत्यद्विगौ स्त्रीत्वाभावनियामकत्वाभावात् । तदुक्तं "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति "समासान्ता" ( पा० सू० ५।४।६८ ) इत्यादिसूत्रेषु भाष्ये । न चोत्तरपदावयवत्वेऽपि अवयवावयवस्य समुदायावयवत्वेनोक्तप्रयोगयोः सिद्धिरिति वाच्यम् । "अन्त" ( पा० सू० ६।३।४२ ) इति सूत्रे समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये इदम्प्रथमका इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा अस्तु तर्हुत्तरपदस्येत्युक्त्वा तत्पक्षे 'अनृच' इत्यत्रान्तोदात्तत्वासिद्धि(१)रित्यर्थपरभाष्यविरोधेन तत्प-

ज्योत्स्ना ।

शेष इतिपक्षे ऋक् च ऋक् च ऋचावित्यत्रैकशेषो न स्यात् । असारूप्यस्य सत्वादिति । समासान्तानां समासावयवत्वेऽपि तत्प्रागभागस्य विभक्तिपरकत्वाभावः । तद्विशिष्टस्य तु न सरूपत्वमित्येकशेषो न प्राप्नोतीति भङ्ग्या तद्भाष्यं सुयोज्यं सुधीभिः ।

अन्तोदात्तत्वासिद्धिरिति । इति कथनेन उभयोरपि प्रकरणेन लक्ष्यानुरोधात् क्वचि-

शेष इति पक्षे "ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति" इति' ॥ समासान्तानां समासावयवत्वेऽपि तत्प्रागभागस्य विभक्तिपरकत्वाभावः, तद्विशिष्टस्य तु न सरूपत्वमिति हेतोरेकशेषो न प्राप्नोतीति भङ्ग्या तद्भाष्यं सुयोजं सुधियामिति भावः ।

वस्तुतस्त्वेवं तद्भाष्यलापने समासान्तविशिष्टस्य द्वितीयऋचशब्दस्यानर्थकत्वेन एकशेषाप्रासरूपदोषस्य भाष्येऽनुद्भावनान्नायं प्रकारो भाष्यसंमतः । नच द्वन्द्वावयवानामर्थवतामेवैकशेष इत्यत्र मानाभावान्नायं दोष उद्भावनार्ह इति वाच्यम् । सहविवक्षायामेकशेषप्रवृत्तेः सर्वसंमतत्वेन समुदितार्थविषयकबोधतात्पर्येणोच्चरितानामेव सरूपाणामेकशेषोद्देश्यतावच्छेदकाक्रान्तत्वात् समुदितार्थबोधकत्वरूपव्याप्यधर्मेण व्यापकस्यावयवार्थत्वरूपधर्मस्यावश्यसत्ताबोधकानुमितेरेव प्रमाणत्वेन मानाभावाभावात् । तस्मादुत्तरपदावयवत्वं समासान्तानामाश्रित्यैव तद्भाष्यं सुयोजम् । तेषामुत्तरपदावयवत्वादेव च काक्ष इत्यत्र अक्षिशब्देन बहुव्रीहौ षच् प्रत्यये तस्योत्तरपदावयवत्वेन अक्षशब्देन ग्रहणात् 'लक्षणप्रतिपदोक्त' परिभाषायाश्च "कोः कत्तत्पुरुषेऽचि"इत्यत्र तत्पुरुषग्रहणसामर्थ्येनास्मिन् प्रकरणेऽप्रवृत्तिज्ञानपदस्याभियुक्तैरुक्तत्वात् 'का पथ्यक्षयोः' इत्यनेन कोः कादेशः, द्वीपम् , अन्तरीपमित्यादौ "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इति ईदादेशश्च सिध्यति । अन्यथाऽनर्थकत्वान्न स्यादिति विभावनीयं सुधीभिरित्यलम् ।

प्र०(१) इत्यत्रान्तोदात्तत्वासिद्धिरिति । इत्युक्त्वा उभयोरपि प्रकरणेन लक्ष्यानुसारात् क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्वमिति भाष्ये समाहितमिति बोध्यम् ।

प्रतिपरेति। अक्ष्णः परमिति। अविषय इत्यर्थः। वृत्तिविषये ऽक्षिशब्द इन्द्रियमात्रपरः। समक्षमिति। अक्ष्णो योग्यम्।

"नदी"। ( पा०सू०२।१।२० )।। इह स्वरूपस्यैव ग्रहणं न सञ्ज्ञायाः पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात्।

उपनदीति। टजभावे नपुंसकह्रस्वः। इदं त्ववधेयम्। "नदीभिश्च" ( पा०सू०।२।१।२० ) इति सूत्रे विशेषाणामिव सरूपस्य ग्रहणम्। विशेषाणामेवेत्यत्र मानाभावादित्युक्तम्। तेन पञ्चनदमिति सिद्ध्यति। अत्र च नित्योऽच्।

---

शब्दरत्न।

क्षस्याङ्गीकर्त्तुमशक्यत्वादित्यलम्।

इन्द्रियमात्रपर इति। बाह्येन्द्रियेत्यर्थः। सर्वबाह्येन्द्रियाविषये परोक्षत्वव्यवहारादिति भावः।

न सञ्ज्ञाया इति। तत्सञ्ज्ञकस्येत्यर्थः। नपुंसकह्रस्व इति। उपलक्षणमेतदुपसर्जनह्रस्वस्यापि।

ज्योत्स्ना।

दुत्तरपदान्तस्य क्वचित् समासान्तस्योदात्तत्वमिति समाहितं भाष्यकृतेति बोध्यम्।

इत्यलमिति। तदर्थस्तु—उत्तरपदावयवत्वमपि समासान्तानां सरूपसूत्रभाष्यसम्मतम्। द्वन्द्वावयवानामर्थवतामेवैकशेष इत्यर्थे मानाभावादिति तन्न्यूनत्वस्य परिहारो न ज्यायान्। सहविवक्षायामेवैकशेषप्रवृत्तेः सर्वसम्मतत्वादिति समुदितार्थविषयकबोधतात्पर्येणोच्चरितानामेव सरूपाणामेकशेषविषयकोद्देश्यतावच्छेदकत्वेन अर्थवत्त्वाभावे च तव्याप्यस्य समुदितार्थबोधकत्वस्य सुतरामभावेन तदनुक्त्या तन्न्यूनत्वापरिहारात्। उत्तरपदावयवत्वादेव च काक्ष इत्यादौ अक्षिशब्देन बहुव्रीहौ षच्प्रत्यये उत्तरपदस्यावयवीभूतेन तेन अक्षशब्देन ग्रहणात् "कापथ्यक्षयोः" इति सूत्रेण कादेशः सिद्ध्यति। 'अन्तरीपम्, द्वीपम्' इत्यादौ च "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इति ईदादेशश्च भवति। अन्यथा अनर्थकत्वान्न स्यादिति सामर्थ्येन तत्प्रवृत्तिकल्पनापेक्षया उत्तरपदावयवत्वकल्पनमेव ज्यायः इति शम्।

इति श्री आजमगढ़प्रान्तान्तर्वर्त्तिश्रीसनातनधर्मसंस्कृतप्रधानपाठालयीयप्रधानाध्यापकेन श्रीजगन्नाथपण्डितेन संकलिता रत्नज्योत्स्ना समासाऽव्ययीभावान्ता ॥

तदुक्तम्—

"गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि" ॥ इति ॥

एतच्च "अच्प्रत्यन्वव" ( पा०सू०५।४।७५ ) इत्यत्राजिति योगविभागात्सिद्धम् ।

पूजार्थमिति । अन्यतरस्याङ्ग्रहणस्य प्रकृतत्वादिति भावः ॥

इत्यव्ययीभावः ॥

---

शब्दरत्न ।

तदुक्तमिति । माधवादिभिरिति भावः । "नदीभिश्च" ( पा० सू० २।१।२० ) इत्यत्र कैयटोऽप्येवम् । परन्तु योगविभागसिद्धस्य सामान्यत्वेन विशेषेण "नदीपौर्णमासी" ( पा० सू० ६।४।११० ) इत्यनेन बाधः कथं नेत्यत्र दृढं मानं फलं च चिन्त्यम्, तदेतत्तदुक्तमित्यनेन ध्वनितम् ॥

इत्यव्ययीभावः ॥

---

ज्योत्स्ना ।

श्री राधारमणं नत्वा श्रीजगन्नाथशर्मणा ॥
कृतेयं सुखदा ज्योत्स्ना रत्नौ सम्पूर्णतामगात् ।
नवाष्टनवभूवर्षे पौषे बाणतिथौ सिते ।
रत्नज्योत्स्नाभिधानेन प्रीयतां शशिशेखरः ॥

इति शम् ।

श्रीमहागणाधिपतये नमः ॥

पण्डितराज-श्रीजगन्नाथकृता-

# मनोरमाखण्डनरूपा—कुचमर्दिनी ।

## संज्ञाप्रकरणम् ।

(१)लक्ष्मीकान्तपदाम्भोजं प्रणम्य श्रेयसां पदम् ।
पण्डितेन्द्रो जगन्नाथः (२)स्यति गर्वं गुरुद्रुहाम् ॥ १ ॥

इह खलु केचिन्निखिलविद्वन्मुकुटमणिमयूखमालालालितचरणकमलानां गीर्वाणगुरुगौरवग्रासमांसलमहिममण्डिताखण्डमहीमण्डलानां शेषावंशावतंसानां श्रीकृष्णाख्यपण्डितानां चिरायार्चितयोः पादुकयोः प्रसादादासादितशब्दानुशासनास्तेषु च पारमेश्वरं पदं प्रयातेषु कलिकालवंशंवदीभवन्तस्तत्रभवद्भिरुल्लासितं प्रक्रियाप्रकाशमाशयानवबोधनिबन्धनैर्दूषणैः स्वयं निर्मितायां मनोरमायामाकुलयांचक्रुः सा च प्रक्रियाप्रकाशकृतां पौत्रैरखिलशास्त्रमहार्णवमन्थाचलायमानमानसानामस्मद्गुरुवीरेश्वरपण्डितानां तनयैर्दूषिता अपि स्वमतिपरीक्षार्थं पुनरस्माभिरपि निरीक्ष्यते ।

तत्र तावत् "सार्वधातुकमपित्" इतिसूत्रगतेन 'परत्र परशब्दप्रयोगात् कल्प्यमानो वतिः सप्तम्यन्तान्न कल्प्यो ङितीव ङिद्वदिति तथासत्यनुयोगिनि सप्तमीप्रसङ्गात्सार्वधातुकेऽपितीत्यादिना संख्यावद्भिरुपहेलनीयमर्थं निरूपयताम्—तथा "अणुदित्" सूत्रगतकौस्तुभे उच्चारितानां

---

( १ ) वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ १ ॥
लक्ष्मीकान्तेत्यतः पूर्वं पुस्तकान्तरेऽयं श्लोको दृश्यते ।

( २ ) 'षो—अन्तकर्मणि' धातोर्लटि रूपम् । स्यति—अन्तकर्म प्रापयतीत्यर्थः । गुरुद्रुहाम्—भट्टोजीदीक्षितानां गर्वमभिमानं स्यति—दूरीकरोतीति भावः ॥

शब्दानामर्थोपस्थापकत्वं न प्रकारान्तरेण ज्ञातानामित्यर्थस्य निर्णयेन त्रिलक्षणं स्वव्युत्पत्तिपाटवमुद्गिरताम् "भवतेरः" इति सूत्रगतमनोरमायां सार्वधातुकीयकर्त्रर्थज्ञानानपेक्षस्य 'रुदादिभ्य' इत्यादेः प्रवर्तनेन कृतार्थस्य शितपः शित्त्वसामर्थ्यमालम्ब्य शपः प्रवृत्तिं समर्थयमानानां गुरुद्वेषदूषितमतीनां यद्यपि पुरुषायुषेणापि न शक्यन्ते गणयितुं प्रमादास्तथापि दिङ्मात्रेण कानपि कुशाग्रधिषणेषु निरूपयामः ।

हलन्त्यमिति । ( पा० सू० १।३।३ ) । अत्रेदमवधेयम्—सूत्रावृत्तिरियमतितमामयुक्तैव पाणिनिसूत्रन्यासविरुद्धत्वाद्गौरवाच्च । कथं तर्हि अनुपपत्तिपरिहार इति चेत् ? इत्थम्—"हल्"इत्येकं सूत्रं "अन्त्यम्"इति चापरम्, तत्र द्वितीयसूत्रे मकारात्परतो ल् इति व्यञ्जनं संयोगान्तलोपेन लुप्यते, उपदेशे इति इदिति चानुवर्तते, तेन उपदेशेऽन्त्यं ल् इत् स्यादितिवाक्यार्थेन णलादिलकारसाधारण्येन हल्सूत्रान्त्यलकारस्येत्संज्ञायां सत्यां हल्प्रत्याहारसिद्धौ हलिति प्रथमवाक्यार्थधीः, अत्रार्थेऽन्त्यमिति देहलीदीपन्यायेनान्वेति उपदेशे इतिचानुवर्तते, तेन न काचिदनुपपत्तिः ।

यद्वा "हलन्त्यम्" इत्येकं सूत्रम् , 'ल्'इति चापरम् । तत्र व्यञ्जनात्मकस्य द्वितीयसूत्रस्य लुप्तस्याप्यनुसंधानेन विषयीकृतस्यानुवृत्तेस्त्रिभिः पदैः(१) सह योजने कृते प्रागुक्तवाक्यार्थधियः साम्राज्यम्, न हि श्रुतमेव वाक्यमर्थबुद्धिमुत्पादयतीत्यास्ते नियमो भावनोपनीतादपि तस्माद् व्युत्पन्नानामर्थबुद्धेः सर्वसंमतत्वात्, अमुं चार्थम् "अणुदित्" सूत्रगतकौस्तुभखण्डनावसरे व्यक्तमुपपादयिष्यामः ।

यद्वा "हल्"इति सूत्रे (२)लकारोऽनुनासिकः क्रियते, तस्यानुनासिकत्वसामर्थ्यादनचोऽप्युपदेशेऽजनुनासिक इतीत्संज्ञा भविष्यति अस्मिन्नेव सूत्रे लकारात्परतो लकारस्य संयोगान्तलोपाद्वा, यँल्लोकमित्यत्रोपदेशाभावादसिद्धत्वाद्वा नेत्संज्ञा ।

अथात्र संयोगान्तलोपो दुर्लभः संयोगान्तस्य पदस्याभावा-

( १ ) उपदेशे, अन्त्यम् , इत् , इति पदैरित्यर्थः ।

( २ ) "हल्" इति चतुर्दशे सूत्रे इत्यर्थः ।

दिति चेन्न—'संयोगान्तस्य सतः पदान्तस्य लोप' इति पक्षस्यापि तत्र स्थितत्वात् । अन्यथा समुदायस्य संयोगसंज्ञा नावयवानामि- ति मुख्यपक्षे संयोगेन पदस्य विशेषणेनान्तलाभेऽन्तग्रहणस्य वैयर्थ्या- पत्तेः । "अस्तिसिचोऽपृक्ते" इत्यत्र विभक्तिसकारोत्तरं प्रश्लिष्टस्य सकारस्य लोपायास्याश्रयणीयत्वात्(१) । "कर्मवत्" (२)सूत्रगतमनोर- मायां "स्थानिवत्" सूत्रगतकौस्तुभे(३) च पक्षस्यास्यापि स्वयमेवा- श्रितत्वाच्च । "सरूप" (१-२-६४) सूत्रे वृक्षरूस् (४)इत्यत्र संयोगा- न्तलोपस्यैव भाष्यकृतोक्तेश्च । तत्रत्यकैयटकृता हल्ङ्यादिलोपव्याख्या तु न स्वरससिद्धा स्वोक्तेन प्रकृत्याक्षेपेण विरुद्धा च । "कर्मवत्" सूत्रगतमनोरमाकौस्तुभयोर्लकारस्य स्वयं संयोगान्तलोपोक्तेश्च ।

एतेन*'लकारस्य संयोगान्तलोपो दुर्लभ'* इति मनोरमाऽसम्बद्धैव ।

न च यणः प्रतिषेधारम्भे झलो लोपविधाने च लस्य संयोगान्त- लोपो दुर्लभ इति वाच्यम्, 'बहिरङ्गलक्षणत्वाद्वा'इतितृतीयपक्षावलम्ब- नेन तस्य सुलभत्वात् । न च पक्षत्रयानुगृहीतस्यैव साधुत्वं नान्य- स्येति वाच्यम् ? त्रयाणामपि पक्षाणां प्रत्येकमितरनिरपेक्षतयैवाकारसि- द्धत्वात् । गिरिवेश्मयतौ पक्षभेदेन रूपभेदस्य स्वयमेव वक्ष्यमाणत्वा- च्च । एवं स्थिते सहविवक्षाविरहाद् द्वन्द्वानुपपत्तिः सिद्धासिद्धयो-

---

(१) आश्रयणीयत्वादिति । अन्यथा 'अस्तिसिचस् स्' इति समुदायस्य पदत्वाभावेन संयोगान्तलोपो न स्यात्, मम तु संयोगान्तस्य सतः पदान्तस्येत्यर्था- न्न दोष इति भावः ।

(२) "व्यत्ययो बहुलं लिङ्याशिष्यङ्" इति लुप्तनिर्दिष्टो लकारः लोपस्तु "संयोगान्तस्य लोप" इत्यनेन इति मनोरमा ।

(३) कौस्तुभ इति । तत्रहि अस्ति सिचस् स् इति च्छेदः सकारस्य संयो- गान्तलोप इत्युक्त्वा नन्वत्र कथं संयोगान्तलोपः कथं लुप्तविभक्तिकस्य स् इत्यस्य पदत्वेऽपि संयोगान्तत्वाभावादित्याशङ्क्य संयोगान्तस्य सतः पदान्तस्य लोप इति व्याख्यानादित्युक्तम् ।

(४) भाष्ये प्रकृतीनामेकशेषे कृते विभक्तीनां श्रवणं प्राप्नोतीति शङ्कायां सं- योगान्तलोपेन सिद्धमित्युक्तम् ।

युगपदनुवादानुपपत्त्या बोधकत्वे क्लेशश्चेत्यादिदोषाभासानां परिहारार्थमायासोऽपि नापततीति सुधियो विभावयन्तु ।

यत्तु *'व्यस्तप्रयोगोऽपि तत्रानिष्ट'* इत्युक्तं—तन्न—"अस्तेर्भूः" इत्यत्र भवति संदेहः अस्तेः समीपे अनन्तरे वेति "षष्ठीस्थाने" इतिसूत्रगतेन इत्यनन्तरयोगे एषा षष्ठी इति "उरण्रपर" इति सूत्रगतेन च भाष्यग्रन्थेन सह विरोधापत्तेः । तथा तत्सूत्रगतेन 'उः समीपे यो ऽण् तस्यापि रपरत्वप्रसङ्गः' इत्यनेन 'सामीप्यलक्षणोऽपि संबन्धोऽवगम्येतेत्यर्थ' इत्यनेन च कैयटग्रन्थेन विरोधापत्तेश्च ॥

आद्योच्चारणमुपदेश इति । यत्तु *यद्यपि उपदिश्यते ऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु स्थितं, तथापि तत् प्रौढिवादमात्रम् करणे घञो दुर्लभत्वाल्ल्युटा बाधात्* इति ।

तदसत्—"अपृतृन्" सूत्रेणाऽसिद्धस्यापि उद्गातार इत्यत्र दीर्घस्येवोपदेश इत्यत्र करणे घञो भाष्यकारवचनादपि सुसाधत्वात्, अहो महानयमनयो यत् कल्पितगुणतात्पर्यमादाय दीर्घनिर्देशस्य साधुत्वमभ्युपेयते स्फुटोपलभ्यमाने मुख्यतात्पर्ये सत्यपि करणघञुक्तेः प्रौढिवादत्वम्, सूत्रविरुद्धस्यापि स्वकतृपितृकादेर्भाष्यकारवचनानुगृहीतस्य 'यथोत्तरम्' इत्यादिना भवतः सुशब्दताया अभ्युपगमाच्च ।

अपिचैवं सति प्रियाष्टन्शब्दस्य शसादौ ष्टुत्वेन णत्वं भवता दूषितमसंगतं स्यात्—एतद्रूपे ष्टुत्वसिद्ध्यर्थमेव मूर्धन्यानुवृत्तिमुपेक्ष्य प्रतिपदोक्तं णत्वं सूत्रकृता कृतमिति तदाशयं वर्णयता ष्टुत्ववादिनापि मूर्द्धन्यानुवृत्तिपराया भाष्यकारगिरः प्रौढिवादताया वक्तुं सुशक्यत्वात्। प्रत्युत युक्तमस्यैव प्रौढिवादत्वकथनं ष्टुत्वा(१)नुगुणसूत्रन्यासविरुद्धत्वात् न तु करणे घञ्वचने तस्य सूत्रानुसारित्वात् तच्च बाहुलक-

(१) "रषाभ्यां नो णः" इति न्यासपक्षे "तस्य दोषः" इत्यत्रप्रतिपदोक्तणस्यैव ग्रहणमिति ष्टुत्वे स्थानिवत्त्वं "पूर्वत्रासिद्धे न स्थानिवत्" इत्यनेन निषिध्यत एवेतिष्टुत्वानुगुणोऽयं सूत्रन्यासः रषाभ्यामित्यत्र णग्रहणमकृत्वा मूर्धन्यानुवृत्तिपक्षे प्रतिपदोक्तस्य णस्याभावात् ष्टुत्वेऽपि "तस्य दोषः" इत्यस्य प्रसक्त्या स्थानिवत्त्वे ष्टुत्वं न स्यात् इति ष्टुत्वानुगुणः स न्यास इति बोध्यम् ।

तात्पर्यंज्ञैर्भाष्यकारैरेव स्फुटीकृतम्, एवं स्थिते एव यथोत्तरं मुनित्रयस्य प्रामाण्यं निरीक्ष्यते, तदा भाष्यकारवचनत्वाविशेषान्मूर्द्धन्यानुवृत्तिगिर इव करणे धक्रूगिरोऽपि प्रामाण्यमुचितम् ।

वस्तुतस्तु प्रियाष्टनि णत्वमशुद्धमिति गीरेवाशुद्धा । तथाहि—यथोद्देशपक्षे "रषाभ्याम्" इति सूत्रगते "तस्य दोषः" इति वार्तिकस्थे च णवचने सति, असति वा तदुभयगते तस्मिन् प्रियाष्टनि णत्वं सिद्ध्यति । स्थिते तु सूत्रगते णवचने वार्तिकस्थणत्ववचनप्रत्याख्यानपक्षः(आनु)स्थानपराहत एव सूत्रस्थणवचनस्य वार्तिकस्थणवचनालम्बनेनैव प्रियाष्टनि णत्वनिर्णयरूपे प्रयोजनहेतुत्वात् । कार्यकालपक्षे सूत्रस्थणवचनप्रत्याख्यानविशिष्टवार्त्तिकगतणवचनप्रत्याख्यानपक्षे वा प्रियाष्टनि णत्वमिष्टमिति व्यवस्थायां सत्यां भाष्यकारादीनामस्योपजीव्यस्य महर्षेः सूत्रकृतो मूर्द्धन्यानुवृत्तिप्रतिसंधानमेव नास्तीति सा च प्रामाणिकैर्वक्तुमसाम्प्रतम् । अतश्च सूत्रकारानुरक्तैर्णसामर्थ्यात् प्रियाष्टनि णत्वस्य साधुत्वं वाच्यम् । भाष्यकारानुरक्तैश्च "यथोत्तरम्"इत्यादिकां वाचमाचक्षाणैस्तस्यासाधुत्वम्, उपेक्षणीयश्चोत्सर्गसिद्धो रूपभेदात् प्रत्याख्यानसंभवः ।

तदित्थम्—अन्याय्यं यदस्मादुभयस्मात् पूर्वविधावित्यत्र पञ्चमीसमासस्य क्वाचित्कतया प्रकृते स्थानिवद्भावशून्यत्वात् 'तस्यदोष' इत्यत्र णत्वग्रहणरूपोपायोत्थापनद्वारा प्रियाष्टनि णत्वे निर्णीत एव पञ्चमीसमासानाश्रयणं"तस्य दोष" इत्यत्र णत्वग्रहणप्रत्याख्यानाश्रयणं वा समुन्मिलति तस्योपयोगो नान्यथेति मत्वा सूत्रकारैर्णवचनं कृतम् । एवं सति वार्त्तिकगतणत्वप्रत्याख्यानमपि दुःशकमेव। तस्य सूत्रगतणत्ववचनोत्थापितत्वात्। भाष्यकारस्तु तत्प्रत्याख्यानप्रकारमितिमुनिद्वयप्रतिभयोरेव च वैलक्षण्यं न तु वैलक्ष्यवैलक्षण्यम् । अतो न प्रागुक्तदोषत्रयावकाश इति सूक्ष्ममालोचनीयम् ।

यत्तु तत्र कार्यकालपक्षाश्रयणेऽन्तरङ्गपरिभाषाप्रवृत्त्या णत्वं नेति निरूपितम्, तदप्यसदेव, प्रियाष्टनि णत्वमात्रफलकारणेनेति प्रतिपदोक्तणकारकरणोत्थितादेव प्रकृते यथोद्देशपक्षस्याश्रयणीयत्वात् ।

स्यात्तदा प्रमातुरेवायमपराधो न प्रमाणप्रमेययोः, तस्मादत्र विपरीतमेव मनोरमोक्तमिति सूक्ष्ममीक्षणीयम् ।

*बाहुलकं त्वगतिकगतिरिति*अप्यसङ्गतमेव । तात्पर्यनिर्णायकदृढप्रमाणाभाव एव तस्यागतिकगतित्वात्। इह तु भाष्यकारवचनस्यैव तात्पर्यग्राहकत्वात्।तस्मात्*करणे यत्नो दुर्लभत्वात्*इति गीरेवासङ्गता।

"ऊकालः" ॥ यत्तु*ऊशब्देन स्वोच्चारणकालो लक्ष्यते,*इत्याहुस्तन्न—ऊशब्दलक्ष्यस्य स्वोच्चारणकालस्य सादृश्यादिरूपभेदसम्बन्धेनोत्तरपदार्थेनान्वयस्यानुपपत्तेः, नामार्थयोर्भेदेनान्वयस्यायोगात् अभेदेनान्वयस्य चासङ्गतेः । न ह्युकारादीनामुच्चारणकालः, सर्वस्यैवोकारोच्चारणकालो भवतीत्यस्ति नियमो येन तादृशकालभेदघटितो लक्षणवाक्यार्थः सकललक्ष्यसाधारणः स्यात्, क्वाचित्कं तु कालैक्यं सम्भवदपि न लक्षणस्य सकलह्रस्वादिसाधारण्याधायकम् । स्वोच्चारणकालसदृशस्वोच्चारणयोग्यकालो लक्ष्यत इति युक्तं वक्तुम् । सादृश्यं च मात्रात्वादिकालगतधर्मेण बोध्यम् ।

"तस्यादितः" ( पा० सू० १।२।३२ ) इति । यत्त्वत्र*ह्रस्वग्रहणमविवक्षितम्, स्वरितस्यार्धमुदात्तमित्येव बोध्यम्, तदविवक्षायां च मानं लक्ष्यदर्शनं प्रातिशाख्यं च*इत्याहुः—तत्र लक्ष्यदर्शनं तावदसाधकम् । दृश्यमानलक्ष्यस्यर्ग्वेदमात्रगतत्वेन तत्र च प्रातिशाख्यगतानाम्—

'उदादायार्धमस्याथ शिष्टं निघ्नन्ति कम्पितम् ।

इत्यादीनां तत्तच्छाखापराणां विशेषवचनानां बाधकतया सकलवेदलोकसाधारणस्यास्य व्याकरणस्य विशेषविषयातिरिक्तविषयताया एव कल्पयितुं युक्तत्वेन व्यर्थपदताकल्पनस्यान्याय्यत्वात् ।

इत्थं च यत्र विशेषवचनं नास्ति; लक्ष्यं च निश्चितं, तत्र लौकिके प्रयोगेऽर्धमात्रैव दीर्घप्लुतयोरुदात्ते बोधयितुं ह्रस्वग्रहणम् । नहि प्रातिशाख्यवचनैरस्यैकवाक्यतोचिता ।

यत्तु-'मध्ये तु कम्पयेत् कम्पम्'इत्यादि(१)तदपि न साधकम्.'अर्ध-

( १ ) क्षप्राकृतदीर्घान्तर तु मध्य तु कम्पयत्कम्पम् इत्यादिवचनात् पूर्वोत्तरभागौ नीचौ मध्ये तूदात्तः रथीवेति कौस्तुभः ।

मात्रार्धमेव वा' इति पक्षयोःपाणिनिकृतसामान्यलक्षणशाकल्यादिकृत- विशेषलक्षणाभिप्रायकृतया व्यवस्थितेः। एवकारो विशेषलक्षणेन कृतायाः सामान्यलक्षणव्यावृत्तेरनुवादाय, वा शब्दो व्यवस्थितविकल्पार्थः।

एतेन *'अर्द्धह्रस्वशब्देनार्धमात्रा लक्ष्यत' इति हरदत्तग्रन्थास्तु म- तान्तरपरतया कथञ्चिन्नेया* इति यदुक्तं तदपि परास्तम्। हरदत्तो- क्तस्यैव प्रकृतसूत्राशयात्।

"ऋलृवर्णयोः" (का० वा०) यत्तु—*आ च आ च ऋलौ तौ चेमौ वर्णौ च उश्च उलृच ऋलोस्तयोर्वर्णयोरिति वा प्रथमान्तेन परिनिष्ठित- विभक्त्यन्तेन वा विग्रह* इत्याहुः, तन्न। ऋलाविति रूपस्यासिद्धेः। "ऋत्यकः" ( पा० सू० ६।१।१२८ ) इति शाकलप्रकृतिभावेन तदभावे सवर्णदीर्घेण च यणादेशस्य बाधात्।

न च शाकलप्रतिषेधपक्षे सवर्णदीर्घाप्रसक्तेर्लृकारस्य "ऋतो ङि" ( पा० सू० ७।४।११०)इत्यलि गुणे कृते निमित्ताभावात्प्रकृतिभावस्य दीर्घस्य चाप्राप्त्या यणादेशो निर्बाध एव(१)। "अचः परस्मिन्" इति गुणस्यालः स्थानिवद्भावेन प्रकृतिभावनिमित्तस्य जागरूकतया तद- प्रवृत्तेरयोगात्। न च प्रकृतिभावः पदान्तविधिः, विकाराभावमात्रपर्य- वसितस्य तस्य वृत्तवादौ वलोपस्येव पदचरमानवयवत्वात् भावसा- धनस्यैव विधिशब्दस्य "न पदान्त" सूत्रे षडिकानुरोधेनाकरे सिद्धा- न्तितत्वात्। इत्थं च प्रकृतिभावपक्षे ऋ अलावित्येव रूपम्।

न च प्रकृतिभावाभावपक्षेऽन्तरङ्गत्वात्प्रवृत्तं सवर्णदीर्घं बाधित्वा "वार्णादाङ्गम्बलीय" इति प्रथमं गुणे कृते निमित्तविरहात् सवर्णदीर्घाप्र- सक्तौ यणेव न्याय्य इति वाच्यम्। समानाश्रय एव वार्णादाङ्गस्य बली- यस्त्वात्। गुणे कृते तस्य स्थानिवत्त्वात् सवर्णदीर्घप्रवृत्तेरौचित्याच्च। न च दीर्घविधौ स्थानिवद्भावनिषेधः शङ्क्यः। स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेधात्।

एवं "पदान्तविधौ न स्थानिवत्" इति निषेधोऽपि नात्र प्रवर्तते। सवर्णदीर्घस्य पदचरमावयवत्वाभावाद्विशिष्टस्यानिष्पत्तेः। न च ऋ-

( १ ) अत्र इति वाच्यमिति शेषो बोध्यः।

लृवर्णयोः पदत्वात् तदादेशस्य दीर्घस्य पदत्वं व्यपदेशिवद्भावात् तच्च-रमावयवत्वं चेति वाच्यम् । अजादौ सर्वनामस्थाने परे पदसंज्ञासामान्यस्य भाष्यकारमते निषिद्धतया परमवाचावित्यत्रेव द्विवचनात् पूर्वभागस्य पदत्वासिद्धेः । 'असर्वनामस्थाने च' इतिनिषेधेन स्वाहजिकसुबन्तत्वप्रयुक्ताया इवातिदेशिकसुबन्तत्वप्रयुक्तपदताया अपि निवृत्तेः । नच "उत्तरपदत्वे च" इति वचनारम्भपक्षे सर्वनामस्थाने परे पदसंज्ञाविधिनिषेधयोरभावात् सवर्णदीर्घस्य प्रागुक्तदिशा स्यादेव पदान्तत्वमिति वाच्यम् । उश्च ऊश्च ऊ ३ श्च व इत्यत्र पक्षे शाकलप्रकृतिभावस्य सर्वनामस्थाने पदसंज्ञानिषेधं विना दुर्वारत्वेन "उत्तरपदत्वे चापदादिविधौ" इति वचनारम्भेऽप्यनिवारणात् ।

यदि तु पूर्वस्यैव विधौ स्थानिवद्भावो; न तु पूर्वपरयोर्विधौ' इति निरीक्ष्यते, तदापि गुणापेक्षयामतरङ्गत्वेन सवर्णदीर्घ एव बलवानिति प्रागुक्तदूषणान्नास्यैव निस्तारः ।

यच्च रलोरित्यपि तैरुक्तं तदप्यसङ्गतमेव—शाकलप्रकृतिभावेन सवर्णदीर्घेण च ऋकारस्थाने यणादेशस्य बाधात् ।

ननु शाब्दं परत्वं नित्यत्वं चाश्रित्य परस्य यणादेशे कृते प्रकृतिभावदीर्घयोरप्रसक्तौ तस्य स्थानिवद्भावादपि यणादेशो निर्बाधः, न च स्थानिवद्भावादेव तयोः प्राप्तिरिति वाच्यम् । सवर्णदीर्घस्य पूर्वमात्रस्य विधित्वाभावेन तस्मिन् कर्तव्ये स्थानिवद्भावानुपपत्तेरुक्तत्वात् । प्रकृतिभावस्यात्र पाक्षिकतया पक्षे प्रवृत्त्यभावस्य सिद्धेः । न-चातरङ्गत्वात् सवर्णदीर्घप्रवृत्तिः प्रथमं दुर्वारेति वाच्यम् । "नाजानन्तर्य" इतिनिषेधस्य जागरूकत्वादिति चेद्—

मैवम् "असिद्धं बहिरङ्गमतरङ्गे" इति परिभाषाया "नाजानन्तर्य" इति निषेधेन निवृत्तिर्नतु "अन्तरङ्गं बलीय" इति परिभाषाया इति "अचः परस्मिन्" इति सूत्रगतकौस्तुभे भवतैव व्यवस्थापितत्वेन सवर्णदीर्घस्यात्ततेः । अत एव "अचः परस्मिन्" इति सूत्रे—

नित्यः परयणादेशः परश्चासौ व्यवस्थया ।
युगपत्सम्भवो नास्ति बहिरङ्गेण सिद्ध्यति ॥

इति भाष्यान्ममोक्तं सङ्गच्छते ।

यदि वा विवरणकारोक्तरीत्या "षत्वतुकोरसिद्ध" इत्यत्र "नाजानन्तर्यं" इति परिभाषा न ज्ञाप्यते, किन्तु बहिरङ्गपरिभाषाया अनित्यत्वमित्युच्यते, एवमपि प्रमाणसिद्धप्रयोगनिष्पत्त्यर्थं तत्स्वीक्रियते न त्वप्रामाणिकप्रयोगसिद्ध्यर्थम् ।

"अणुदित्सवर्णस्य" । (पा०सू०१।१।६९) ॥ यत्तु *प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा* इत्यमुमर्थमेतत्सूत्रगतकौस्तुभे प्रपञ्चयाञ्चक्रुः । तथाहि—"अकः सवर्णे दीर्घः" इत्यदावक्प्रत्याहारान्तरीकारादयः कथं ग्राह्याः ? न हि तद्वाचकः शब्दस्तस्मिन् सूत्रे उपात्तोऽस्ति । नन्वक्शब्देन इकारादयोऽप्युपस्थिता इति, चेत्तर्हि वाक्यार्थे तेऽन्वयन्तु नाम पदार्थसंसर्गस्य वाक्यार्थत्वान्न तु तेऽपि स्वार्थोपस्थापकाः, अनुच्चारितत्वात् । अत एव ऋचं वेत्तीत्यत्र शब्दविशेषं वेत्ति इत्येवार्थो, न तु तदर्थं वेत्तीत्यादि ।

तत्रानुच्चारितत्वादगादिसंज्ञाप्रतीता इकारादयः स्वसंज्ञिनामीकारादीनां नोपस्थापका इत्याशयस्तावदसङ्गत एव । अर्थोपस्थितौ वाचकतावच्छेदकरूपेण वाचकज्ञानसामान्यस्यैव तन्त्रत्वात् । अन्यथा रहसि मौनाकुलितवदनस्य पुस्तकमीक्षमाणस्य ग्रन्थार्थशाब्दबोधानापत्तेः । शाब्दबोधकारणतावच्छेदककोटावुच्चारितत्वप्रवेशे गौरवाच्च । नापि शक्त्युपस्थितस्य न बोधकत्वं लिप्याद्युपस्थितस्य तु बोधकत्वमित्यपि राज्ञामाज्ञास्ति, अग्निनिष्ठार्थशक्ततावच्छेदकानुपू-(र्व्या ज्ञानादग्नित्वाग्निनार्थविशिष्टार्थशक्ततावच्छेदकानुपू)र्व्यज्ञानादर्थत्वादिना च रूपेणार्थस्य वेदनकर्मतया बोधापत्तेरनुपपत्तेः ।

ननु कैयटोक्तरीत्या यत्र प्रकरणादिवशाद्विशिष्टसंनिवेशापि "अग्निमीड"इत्यादिरूपा ऋक् ऋक्शब्देन प्रतीयते तत्रार्थं वेत्तीति बोध आपाद्यत इति चेत्—एवमर्थकर्मत्वविशेषणकार्थवेदनविषयकबोधापादनमयुक्तमेव । अर्थ(वत्त्वविशिष्ट)वाचकस्य तदुत्तरकर्मताबोधकविभक्तेश्चाभावात् । ऋक्शब्दोत्तरद्वितीया त्वानुपूर्वीविशेषावच्छिन्नाया ऋच एव कर्मतां बोधयितुमीष्टे नार्थस्य तस्य ऋक्शब्दार्थत्वाभावात् ।

नन्वर्थपदमीडनादिरूपार्थविशेषपरमिति चेत् । एवमपि तद्वाचकोत्तरकर्मविभक्तिज्ञानस्य विरहेण तत्कर्मकवेदनबोधापादानस्यासङ्गतत्वात् । वक्ष्यमाणेन हेतुना अग्निकर्मकबोधस्याप्यनापाद्यत्वात् ।

अथ "अग्निमीड" इत्यादिऋगर्थस्य कर्मतासंसर्गेण वेदनेऽन्वयबोध आपाद्यते "अग्निमीड" इति वाक्यत इति चेत् ? ऋक्शब्दोत्तरद्वितीयाश्रुतिमाहात्म्यात् ऋग्विशेषस्य कर्मताद्वारा । वेदनान्वयबोधेसतिनिराकाङ्क्षत्वात्तदर्थस्य कर्मतासंसर्गेणान्वयबोधनासङ्गतेः ।

अथ कथं प्रत्याहारग्रहणे सवर्णग्रहणमनुपदेशात् । ह्रस्वसम्प्रत्ययादिति चेत् ? इत्थं देवदत्तादिशब्दानां घटत्वावच्छिन्ने गृहीतसंकेतस्य पुंसो देवदत्तः शोभत इत्यस्माद्वाक्याद् घटशब्द एव शोभनोद्देशतया भासते । तद्बोधकदेवदत्तपदे तदुद्देश्यतानुगुणयोर्योग्यविभक्त्यन्तत्वतद्विधेयप्रयोगोच्चरितत्वयोः सत्त्वात् । न तु घटशब्दोपस्थितोऽपि घटः । तद्बोधकघटपदस्य तयोरसम्भवात् । यथा देवदत्तं न जानातीत्यस्माद्वाक्याद्घटशब्दं नजानाति कर्मतया न घटम् । उभयत्रापि हेतोरुक्तेः तद्बोधकघटपदोत्तरं कर्मताबोधकविभक्तेरभावात् । एवमिहापि "अकः सवर्णे दीर्घः" (पा०सू०६।७) इति वाक्याद्दीर्घोद्देश्यतारूपं स्थानित्वमक्पदबोध्यानामक्षरसमाम्नायगतानामिकारादीनामेव स्यान्नतु तद्बोध्यानामीकारादीनां तदुपस्थापके तादृशोद्देश्यताबोधिकायाः स्थानषष्ठ्या अभावात् । स्थानषष्ठीयुक्ते च तदुपस्थापकताविरहात् । अतः शेषाद्यसिद्धिरिति तेषामाशयः । नत्वनुच्चारितानामर्थोपस्थापकतैव नास्तीति । उक्तदोषप्रसङ्गात् । (१)वार्तिकपदव्याख्या चैवं प्रत्याहारे उच्चारिते सतीति शेषः । सवर्णग्रहणं सवर्णानामीकारादीनामग्रहणमन्वयबोधाजनकत्वं प्राप्नोतीति शेषः । अनुपदेशात् ईकारादीनां मध्यगत्वाभावादाद्यन्तरूपया संज्ञया सह तेषामसति संकेतपरिच्छेदे प्रतिज्ञासिद्धिः । ह्रस्वसम्प्रत्ययात्—ह्रस्वैरुपस्थापनात् । उच्चार्यमाणसम्प्र-

(१) वार्तिकं—तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात्, ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणशब्दसंप्रत्यायकत्वाच्छब्दस्यावचनम्, अणुदित्सूत्रस्थे वार्तिके ।

स्थायकत्वात्—उच्चार्यमाणस्य तत्तद्बोधानुकूलयोग्यविभक्त्यन्तत्वादिना ज्ञातस्य सम्यगुद्देश्यविधेयभावविवेकेन प्रत्यायकत्वादन्वयबोधकत्वात् । शब्दस्यावचनम्-इष्टान्वयबोधाजनकत्वम् । एवं च ह्रस्वैर्दीर्घाणामुपस्थितावपि सा मुधेति भावः । अथोच्चार्यमाणस्यैव शब्दस्यार्थोपस्थापकतेति नियमस्यानङ्गीकारे देवदत्तपदस्य घटमिति द्वितीयैकवचनान्ते पदे गृहीतसंकेतस्य देवदत्तं वेत्तीतिवाक्यात् घटकर्मकवेदनबोधापत्तिरिति चेन्न—उत्तरस्य प्रागेव निवेदनात् ।

प्रकृते तु अगादिसंज्ञानां षष्ठ्यादिविशिष्टेकारादौ सङ्केतग्रहाभावेन च विधेया अप्ययोगादबोध एव । 'अगित्युक्ते संपाठमात्रं गम्यत' इति भाष्यमप्यध्ययनादिकर्मत्वादिविधेयोद्देश्यतयेति शेषपूरणेन तथाविधशाब्दबोधपरतयैव व्याख्येयम् । अक्शब्देन प्रकरणादिवशाद् विशिष्टसन्निवेशा अक् प्रतीयमानापि स्वार्थं न प्रत्याययतीति कैयटोऽप्येवं परतयैव व्याख्येयः ।

पुस्तकादिदर्शनस्थलेतु नानालिपिदर्शनप्रतीतेर्नानाविधविभक्त्यन्तपदसमूहात्मकवाक्यविकल्पस्य प्रतीतेर्नानोद्देश्यकनानाविधेयकशाब्दबुद्धेः साम्राज्यम् । अत एव तत्र लिपिगतविभक्त्याद्यभिव्यञ्जकाक्षराणां प्रमादवशात् भ्रष्टानामुपस्थितौ न भवति लिपिबोधेऽपि शाब्दधीर्भवति च तेषामुद्दिनोपस्थितौ । एतेन प्रतीयमानस्य प्रत्यायकत्वायोगादिति पस्पशाह्निकगतकैयटोऽपि विवरणोक्तदिशा यथाकथञ्चिन्नेय इति दिक् ।

"तपरस्त" । यत्तु 'तकारविशिष्टेयं संज्ञा नत्वणूमात्रं तस्य टिघुभाद्यन्तर्गताएवदिह पदैकदेशत्वेनानर्थक्यात ग्राहकताप्रसङ्ग एव नास्तीति निष्कर्षः' इति कौस्तुभेन निर्णीतम् । तदसत् । विशिष्टसंज्ञात्वे मानाभावात् । सूत्रतात्पर्यवर्णनेनास्मदाद्युत्प्रेक्षितस्य विशिष्टसंज्ञात्वस्याप्रामाणिकत्वात् । न हि पित्रा पुत्रस्य रहसि देवदत्त इति कृतं नाम स्फुटमन्यत्तणेषु रहस्यज्ञेषु तद्बन्धुषु तद्वचनमजानानेषु विदित इति नाम कृतमपि तु देवदत्त इति मार्दङ्गिके वादयितुम् ।

तथा च भाष्यम्—'यद्यत्राणग्रहणमनुवर्तते ततो नियमार्थम्,

अथ निवृत्तं ततः प्रापकं नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति प्रापकमिति चेत्, ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः । विप्रतिषेधात् सिद्धमिति,

यदि चात्र विशिष्टस्य संज्ञात्वं स्यात्तदा तस्यानणत्वात्पूर्वेण प्राप्त्याभावान्नियमोक्तिरसंगता स्याद्; विप्रतिषेधश्चानुपपन्नः स्यात् । तस्माद्विशिष्टस्य संज्ञात्वं बाधकविरहेऽपि नैतच्छास्त्रस्य विषयः । तकारस्तर्हि किमर्थं इति चेत्, अकारादेस्तत्कालसंज्ञात्वे लिङ्गमिति गृहाण प्रातिपदिकसंज्ञा त्वतोऽजित्यादिनिर्देशाल्लिङ्गात् विशिष्टसंज्ञैव । न केवला संज्ञेति विभावनीयम् ।

यत्तु स्वं रूपं संज्ञीति तत्पूर्वापरवाक्यापर्यालोचनात् "अणुदित्सवर्णस्य" ( पा० सू० १।१।६९ ) "तपरस्तत्कालस्य" ( पा० सू० १।१।७० ) "येन विधिस्तदन्तस्य" ( पा० सू० १।१।७२ ) इत्यादिषु संज्ञासूत्रेषु प्रथमान्तानां संज्ञासमर्पकत्वेन षष्ठ्यन्तानां संज्ञिसमर्पकत्वेन च प्रक्रान्तेः । तथा च "प्रत्ययलोपे" ( पा० सू० १।१।६२ ) इति सूत्रे भाष्यं—"स्वंरूपं शब्दस्य संज्ञा भवति इति हन्तेरपि हन्तिः संज्ञा भविष्यति" "स्वरूपम्" ( पा० सू० १।१।६८ ) इति सूत्रेऽप्येवम् । रूपग्रहणं किमर्थं स्वशब्दस्य संज्ञा भवतीति ॥

इति संज्ञाप्रकरणम् ।

---

## परिभाषाप्रकरणम् ।

"मिदचोऽन्त्यात्" ( पा० सू० १।१।४७ ) ॥ यत्तु "शे मुचादीनाम्" (पा० सू० ७।१।५९) इत्यादौ *अन्त्यस्याचोऽसम्भवात्* इत्यन्तेन ग्रन्थेन प्राचीनप्रक्रियाकृतां वृत्तिरदूष्यत । तत्तदाशयानबोधात् । न हि वृत्तावच इति पञ्चम्यन्तं येनान्त्यादिति पञ्चम्यन्तेन समानाधिकरणं स्यात् । अपि तु सूत्रे इव निर्धारणषष्ठ्यन्तं जातौ चैकवचनमित्यर्थविसंवादाभाव एव । नह्यचोऽन्त्यादित्युक्त एवाच इत्यस्य षष्ठ्यन्तत्वमन्त्यादच इत्युक्ते तुष्यतु भवानेवमपि भवदुक्तौ न दोषः । तथाहि—मुचादीनामन्त्यस्याचो नुम् न स्यादिति वदतः किं तवा-

भिप्रेतं मुचादीनां सर्वथैव नुम्न स्यादित्याहोस्विदिष्टदेशे न स्यादिति । नाद्यः । वचनानर्थक्यप्रसङ्गेन सर्वथैव नुमभावापादनस्यासंगतेः । नापि द्वितीयः । गुणेऽपि प्रधानबाधस्य संभवात्, इति बाधकल्पनस्य न्याय्यत्वेन तावतैव प्रकृतेऽभीष्टसिद्धेः ॥

"षष्ठी स्थानेयोगा" (पा० सू० १।१।४९) । अत्रेदं बोध्यम्—"इको गुणवृद्धी" ( पा० सू० १।१।३ ) इति वदयमपि योगः पदोपस्थापक एवास्तु । इह शास्त्रे या निर्धारितसंबंधविशेषा षष्ठी सा स्थाने शब्देन युज्यते । स्थाने इति सप्तम्यन्तं तत्रोपस्थितं स्यादित्यर्थः । स्थानं योगोऽस्या इति च विग्रहः । एवम् "अलोऽन्त्यस्य" (पा०सू० १।१।५२) "ङिच्च" ( पा० सू० १।१।५३ ) "आदेः परस्य" ( पा० सू० १।१।५४ ) "अनेकाल्शित् सर्वस्य" ( पा० सू० १।१।५५ ) "तस्मिन्निति निर्दिष्टे पूर्वस्य" ( पा० सू० १।१।६६ ) "तस्मादित्युत्तरस्य" ( पा० सू० १।१।६७ ) इत्यादावपि शक्यते । यत्तु यदि प्राचो न कुप्यन्ति ।

तस्मिन्निति । यत्तु *अचि यणित्युक्ते व्यवहिते ऽव्यवहिते च प्राप्ते ऽव्यवहितस्यैवेति पूर्वस्य परस्य च प्राप्ते पूर्वस्यैवेति नियम्यते* इति वर्णितम्, तदसत्—परिभाषा हि विध्यङ्गभूतास्ताभिरुपश्लिष्टो विधिर्निष्पन्नशक्तिकःसन्नुदाहरणे प्रवर्तते । प्रवृत्युत्तरकाले चातिप्रसक्तो नियम्यते । इह त्वचि यणि कृते इति व्यवहितेऽव्यवहिते च पूर्वस्य परस्य वा स्थानदुर्घटाः कुतः पुनरतिप्रसक्तिः । अन्तरे समीपे वा इत्यनेकसंशयदूषितत्वेन "तस्मिन्" ( पा० सू० १।१।६६ ) इत्यादिपरिभाषासंबन्धात् पूर्वपरिनिष्ठितार्थरूपस्य शरीरस्य निष्पत्तेरेवाभावात्प्रवृत्तिरेव दुर्घटा कुतः पुनरतिप्रसक्तिः । अन्यथा "मिदचोऽन्त्यात्" ( पा० सू० १।१।४७ ) "आद्यन्तौ" (पा०सू०१।१।४६) "स्थानेऽन्तरतम" इत्यादीनामपि नियमविधित्वापत्तौ विगलितं शास्त्रमर्यादया, विस्रस्तमेव "इको गुणवृद्धी" इत्यस्य नियमरूपतामाचक्षाणानां प्राचामुक्तिनिरस्यत्या भवदीययापि गिरा । भाष्ये तु नियम्यते इति नियमफलसम्पत्त्योक्तम्।अत एव "अलोऽन्त्यस्य" परिभाषापि तत्र नियमपदेन व्यवहृता । न ह्येवमन्येन व्यवहर्तुं साम्प्रतम् ।

"अनेकाल्" ( पा० सू० १।१।५५ )। अत्र 'शिदनेकाल्ङिस्सर्वस्य' इति यद्यपि शक्यते सूत्रयितुम् । "आदेः परस्य" (पा० सू० १।१।५४ ) इति अशिदनेकाल् "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) "ङिच्च" (पा०सू०१।१।५३) इति सूत्रन्यासो वा । अशिदनेकाल् इति "अलोन्त्यस्य" इत्यत्राप्यनुवर्तते । "अलोन्त्यस्याशिदनेकाल्" "ङिच्च" ( पा० सू० १।१।५३ ) "आदेः परस्य" ( पा० सू० १।१।५४ ) इति तु न शक्यते । अशिदनेकालित्यस्य "ङिच्च" (पा०सू० १।१।५३) इत्यात्रासम्बन्धात् "आदेः परस्य" ( पा० सू० १।१।५४ ) इत्यत्राप्यसम्बन्धापत्तेः। मण्डूकप्लुत्यानुवृत्तिस्तु क्लिष्टा । तथापि तातङो विप्रतिषेधहेतुकं सर्वादेशत्वमेवंविधसूत्रनिर्माणे दुरुपपादं स्यात् । ज्ञापकान्तरेण तदुपपादनं चेदास्तां तावत् । नानेकाल्शिदिति निषेधस्तु 'अनन्तरस्य विधिर्वा" इति नियमात् "आदेः परस्य" ( पा० सू० १।१।५४ ) इत्यस्यैव स्यान्न तु "अलोन्त्यस्य" इत्यस्यापि "ङिच्च" (पा०सू० १।१।५३) इत्यपवादेन व्यवहितत्वाच्च ।

इति परिभाषाप्रकरणम् ।

## अच्सन्धिप्रकरणम् ।

"इको यणचि" (पा० सू० ६।१।७७ )। यत्तु *इक्शब्देन षट्षष्टिर्वर्णा गृह्यन्ते यण्शब्देन सप्तेति नास्ति यथासंख्यम्* इति 'तन्न—"स्थानेऽन्तरतम" ( पा० सू० १।१।५० ) इति सूत्रगतस्य भाष्यग्रन्थस्याकुलीभावप्रसङ्गात् । तथाच तत्रोक्तं "किमुदाहरणम् ? "इको यणचि" ( पा० सू० ६।१।७७ ) दध्यत्र संख्यातानुदेशेनाप्येतत्सिद्धमिति । न चेक्शब्दबोध्यसंज्ञाचतुष्टयबोध्यानां क्रमेण यण्शब्दबोध्यसंज्ञाचतुष्टयबोध्या भवन्तीत्येवंपरो भाष्यग्रन्थ इति वाच्यम् । एवमपि प्रकृतसूत्रे यथासंख्यपरिभाषाप्रवृत्तिनिरासपरताया 'नास्ति यथासंख्यम्' इति भवदुक्तेर्भाष्यविरुद्धताया अपरिहारात् । ऋकारबोध्यस्य लृकारस्य रेफप्रसक्त्या प्रागुक्तस्यार्थस्य दुष्टत्वाच्च । नाप्यापातत एवायं पूर्वपक्षगतो भाष्यग्रन्थ इति युक्तं वक्तुम्, शक्यक्रियायां गतावापातत

इति गिरो महर्षिवचनेऽत्यन्तमसङ्गतेः ।

गतिश्चेत्थं इक्शब्दबोध्येत्वादिजातिचतुष्टयावच्छिन्नानां क्रमेण यण्शब्दबोध्ययत्वादिजातिचतुष्टयावच्छिन्ना भाव्यन्ते; इति जातिसंख्यामादाय संख्यातानुदेशो भाष्यकृतामभिप्रेतः। निरूढलक्षणाप्येवं सति भवदुक्ता नाङ्गीकर्तव्येति परं लाघवं; "सवर्णेऽणग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति "अणुदित्" ( पा० सू० १।१।६९ ) सूत्रगतं वार्तिकमप्यनुगृहीतं भवतीति ग्रन्थच्छायान्वयपरिपुष्टा भवति । एवं जातिपक्षे व्यवस्था ।

व्यक्तिपक्षेऽपि शक्यतावच्छेदकसंख्यामादाय यथासंख्यप्रवृत्तिरव्याहता । निरूढलक्षणादिकं तु न वार्यते । इत्थं च स्थान्यादेशानां संख्यातानुदेशेनान्यथासिद्धिमुक्त्वा प्रकृतितोऽन्तरतमनिर्वृत्तिं(१) दूषयद्भिर्भाष्यकारैः "इको यणचि"(पा० सू० ६।१।७७) इति यणांयेऽन्तरतमा ( इकस्तत्रैव दध्यत्र इत्यादौ यण् स्यात्, नतु कुमार्यर्थमित्यादौ) इत्यादिना ( उक्ता स्थानेऽन्तरतमपरिभाप्रवृत्तिः संगच्छते ) । न चेत्वाद्यवच्छिन्नानां क्रमेण यत्वाद्यवच्छिन्नविधानेऽप्यनुनासिकानामनुनासिकयणवारणायान्तरतमपरिभाषैवाश्रयणीयेति तेन ग्रन्थेन पुनः "स्थानेऽन्तरतम" इत्यस्य प्रवृत्तिरुक्ता, अन्यथा यण्विधौ अन्यथासिद्धिपराहतिकृतस्यास्य पुनरग्रिमग्रन्थे तत्र प्रवृत्तिरकथनीयैव स्यादिति वाच्यम् । एवमपि स्थानिगतेत्वादिचतुष्टयस्यादेशगतयत्वादिजातिचतुष्टयसंख्यासाम्यमादाय परत्वादन्तरतमपरिभाषाबाधेन प्रवर्तमानाया 'यथासंख्यम्' इति परिभाषायाःप्रकृते तया गतार्थत्वेऽपि दुष्परिहारत्वात् । इह यथासंख्यपरिभाषाया विषय एव नास्तीत्यमुमर्थं समर्थयितुं त्वदुपपादितस्य संख्यासाम्यवैकल्यस्य वैयर्थ्याच्च । अनुनासिकाननुनासिकव्यवस्थायां तु यथासंख्यपरिभाषायाः व्यापारस्य विरहात् तदंशेऽन्तरतमपरिभाषायाः प्रवृत्तिः परैरपि न वार्यते । अयमेव "इको यणचि" इत्यत्र "यथासंख्यम्"इतिपरिभाषायाः प्रवृत्तिमाचक्षाणानां

( १ ) 'स्थानेन्तरतमे' इति सप्तम्यन्तपाठपक्षे अन्तरतमे स्थानिनि आदेशो भवतीत्यर्थे प्रकृतितोऽन्तरतमनिर्वृत्तिरित्यर्थः ।

प्राचीनप्रक्रियाकृतां तद्व्याख्यातॄणां चाशयः ।

"न पदान्तद्विर्वचन"।। यत्तु *नचेष्टवादत्यतिदिष्टेन णिचि भत्वेन पदत्वबाधः, णिचो लुप्तत्वात्। न च प्रत्ययलक्षणं वर्णाश्रयत्वात्* त्युक्तम्, तत्र चिन्त्यते किमत्र वर्णाश्रयं; न तावदिष्टवदित्यतिदेशः, तस्य णिमात्राश्रयत्वेन वर्णाश्रयताया विरहात्, न च भसंज्ञाशास्त्रम्; तस्याऽतिदेशलभ्यत्वेन निमित्तविरहेऽपि क्षतिविरहात्, नापि यदंशवैकल्यप्रयुक्तः प्राप्तिविरहस्तदंशेऽतिदेशव्यापारो न त्वंशान्तरेऽपीति वाच्यम् । एवमपि मुख्यतया वर्णाश्रितत्वविरहेण "वर्णाश्रये प्रत्ययलक्षणं नास्ति" इतिनिषेधस्य तत्राप्रवृत्तेः। प्रवृत्तिस्तु तस्य सुयशा इत्यादौ "वा शरि" इत्यादौ कर्तव्ये, अन्यथाऽतृणेडित्यत्र इमागमो न स्यात् । विशेषणतयाऽलाश्रये विधौ स्थानिवद्भावस्यानभ्युपगमात् प्रत्ययलक्षणसूत्रं सार्थकमितिवार्तिककारैः स्वीकारात् ।

अथ तृणह इम् विधौ हलग्रहणानुवृत्तिमनङ्गीकुर्वतां सुदूषदित्यादौ "सोर्मनसो अलोमोषसो" इति स्वरस्य "अत्वसन्तस्य" इतिदीर्घस्य च निरासार्थं प्रत्ययलोपे प्रत्ययरूपाश्रयं न भवति न तु प्रत्ययाप्रत्ययसाधारणरूपपुरस्कारेण क्रियमाणं कार्यमिति नियमविधिमाश्रयतां भाष्यकृतामेतत्सूत्रविषये स्थानिवद्भावेन गतार्थतां मन्यमानानां मतमाश्रित्येदमुच्यते वर्णाश्रयत्वादिति इति चेन्मैवम्—एवमपि "अचः परस्मिन्" इति णिलोपस्य स्थानिवत्त्वाण्णिचि कथं नाम शक्यते भत्वं वारयितुं कर्मसाधनपक्षे, अन्यथा पटुः कृतः पटितः लघुः कृतो लघित इत्यादौ टघयोर्जश्त्वं दुर्वारं स्यात्; त्वदुक्तरीत्या भत्वाभावेनान्तर्वर्त्तिविभक्त्या पदत्वात् । न च भावसाधनपक्षे षडिक इव टिलोपादावपि भसंज्ञायाःपदविधित्वात्तत्राणिचः स्थानिवत्त्वस्य दुर्लभतया कथं नाम सा शक्यते सम्पादयितुम्, अतो जश्त्वनिवृत्त्यै समाध्यन्तरमेवास्थेयमितिवाच्यम् । भाविनोऽप्यपवादस्य विषये उत्सर्गस्याप्रवृत्तेस्तत्राङ्गीकृततया तथैव प्रकृतेऽपि पदसंज्ञायाः सुवारणीयत्वात् षडिके तुटकाराऽनुरोधेन विषयभेदस्यैव वाच्यत्वात्। अथ टघयोर्नपदत्वाभावेन वारणम्, अपि तु टिलोपस्य स्थानिवत्त्वेन जश्त्वारूढपदत्व-

स्य पूर्वविधित्वादपदान्तविधित्वाच्चेति चेत्तर्हि एवमेव वृक्षवित्यत्रापि निमित्तीभूतायां वकारगतपदान्ततायामपि सुवचत्वेन क्रूःसाधनवि- धिशब्दाश्रयणेऽपि भवदुक्तदोषस्यासङ्गत्यापत्तेः ।

यदि तु सिद्धान्तेऽपि पठित इत्यादौ वेतस्वानित्यस्येव दुर्लभा भसंज्ञा स्थानिवद्भावात्सुलभा च पदसंज्ञा भावसाधनपक्षे स्थानिव- त्वनिषेधादिति वीक्ष्यते, तदा सुवन्ताणिजुत्पत्तिपक्षे पदे अन्तः पदान्तः इति पक्षमालम्ब्य पदसंज्ञायामपि स्थानिवत्त्वनिषेधनिरासो विधेयः ।

सुध्युपास्य इति । यत्तु *"त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्त्तते" इत्युक्तं तद्युक्तं नार्कुटः नार्पत्यः इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्व- स्य तत्रैव भाष्ये स्पष्टत्वात् । संयोगान्तलोपे "यणः प्रतिषेध" इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात् । स्वयमपि तथैवानूदितत्वाच्च, तस्मा- दिह यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषायाः अप्रवृत्तये* इत्याद्युक्तम् ।

तदसत् । तथाहि–सुध्युपास्य इत्यत्र त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरि- भाषा न प्रवर्तत इत्युक्तवद्भिरेव भवद्गुरुभिः "नश्च" इत्यत्र प्राचीनैरुक्तं धुटः परादित्यस्य प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात् प्रत्युक्तमि- त्युक्तम् । इत्थं च तद्ग्रन्थयोः पूर्वोत्तरयोः विरोधः प्रसक्त इति तत्परि- हाराय सच्छिद्रेणभाष्यता तदाशयोऽयं वर्णयितुमुचितो यद्यथोद्देश- पक्षाश्रयणेनैको ग्रन्थो अपरश्च कार्यकालपक्षावलम्बनेनेति, एवमाशय- वर्णनेनैव भाष्यादिग्रन्थेषु विरोधाः परिह्रियन्ते । अन्यथा त्वदुक्तदोषा- भासेनैको ग्रन्थः परश्च विसर्जनीयसूत्रगतभाष्यकैयटयोरपि विरुद्धः । अतः कोऽयमनयोर्यत्परग्रन्थेष्वाशयकल्पनं गुरुग्रन्थे विरोधोद्भा- वनमिति, तस्मात् भाष्यग्रन्थ इव गुरुग्रन्थोऽपि रमणीय एव ।

"एत्येधत्यूठ्सु" ॥ यत्वेधयतेरेधत्यपेक्षया प्रकृत्यन्तरत्वेनैधतिग्रह- णेनाग्रहणात् मा प्रेदिधदित्यत्र वृद्धिप्राप्तिरेव नास्ति इत्येची- त्यनुवृत्तमेतेरेव विशेषणमिति धातुवृत्तिकृतां मतं प्रत्याचक्षाणैरुपेधत इत्यत्राव्यापनं नोद्भावितं तदस्फूर्तिवशात् ।

"स्वादीरेरिणोः" ॥ यत्तु लिङ्गविशिष्टपरिभाषया स्वैरिणी इति निष्फ- लम्' *स्वैरिणी इत्यत्र 'ङीपः' प्रागभागमादाय वृद्धिसिद्धेः* इतिवर्णितं

तद्गुरुग्रन्थाशयानवबोधात् । तथा हि—ईरस्य ज्ञानमीरस्य प्रियइत्यादौ ईरशब्देन कृते समासे पश्चात् स्वस्येरज्ञानं स्वस्येरप्रिय इति विगृह्य; कृते समासे स्वेरज्ञाने स्वेरप्रिये च प्राथमिकसमासपूर्वपदीभूत ईरशब्दे परे वृद्धेर्वारणाय ईरेरिणोरुत्तरपदयोर्वृद्धिरित्यावश्यं वाच्यम् । इत्थं च डोषः प्रागुवर्त्तिन ईरिणोऽनुत्तरपदत्वाद् वृद्धेरप्राप्तौ लिङ्गविशिष्ट-परिभाषैव शरणमिति हि तेषामाशयस्तत्र किमुच्यते निष्फलमिति ।

ननु "स्वादीरेरिणोः"इत्यत्र समासग्रहणस्याभावात् केनोत्तरप-दस्याक्षेपः स्यादितिचेत्समासग्रहणस्याभावेऽपि वस्तुतः समास एव वृद्धेरिष्टत्वात् नान्तरीयकतया प्राप्तनापि समासेनैवास्याक्षेपस्यारो-पेणापि वाच्यत्वात्, अन्यथा प्रागुक्तोदाहरणेष्वतिव्याप्तेर्दुर्वारत्वा-पत्तेः, न च तेषु वृद्धिरिष्टैवेतिशक्यं वदितुं । स्वाछन्द्यात् प्रतीतावेव तस्यादृष्टेः ।

नन्वस्य पदविधित्वात् समर्थपरिभाषोपस्थितेर्वारणीयतया प्रागुक्तनिरासः स्वशब्देनेरशब्दस्यान्वितार्थकत्वाभावादिति चेत्, एवमपि ईरश्च घटश्चेरघटौ स्वस्येरघटौ स्वेरघटावित्यत्रातिव्याप्ते-रनिरासात् ।

"प्रादूहोढो" ॥ यत्तु *ऊढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्त-स्यैकदेशः* । *उपस्थितस्यार्थस्य शब्दं प्रति विशेषणताया औचि-त्यात्* । "व्रश्चादि"सूत्रे राजेः पृथग् भ्राजिग्रहणेन 'अर्थवद्ग्रहणेना-नर्थकस्य' परिभाषोपस्थितेर्वारणीयतया प्रशब्दद्योत्यार्थान्वितार्थको-ढादिवृद्धेः प्रवृत्तेर्निर्व्यूढायामुत्तरपदाक्षेपे सति क्तवत्वन्तैकदेश ऊढशब्दे परे वृद्धेः प्रसङ्गस्यैव विरहेणार्थवत्परिभाषोपन्यासस्य नि-ष्फलत्वात् ।

आवश्यकः पुनरयं समर्थपरिभाषया च संस्कृतेऽप्यस्मिन् वि-धावजहत्स्वार्थायामुत्तरपदाक्षेपः, अन्यथा ऊढश्च घटश्चोढघटौ प्रकृष्टौ ऊढघटौ प्रोढघटौ इत्यत्रातिप्रसक्तेः । प्रस्य द्वन्द्वेन सह सामर्थ्ये तदवयवेन सह सामर्थ्यस्य निष्प्रत्यूहत्वात्, ऊढशब्दस्यार्थवत्वाच्च ।

नन्वजहत्स्वार्थायां वृत्तावुत्तरपदाक्षेपस्यावश्यकत्वेऽपि जहत्स्वार्था-

यामर्थवत्परिभाषयापि शक्यते प्रयोजनानि साधयितुम्, अतस्तदुपन्यासो नातीव निष्फल इति चेत् ? न । जहत्स्वार्थायां तदुपन्यासस्य बाधपराहतत्वात् ।

तथाहि—'प्रौढ' इति समासे नाचरपदीभूता ऊढादयः प्रकृतवार्तिके परत्वेन निर्दिष्टा इति हि तावन्निर्विवादम् । एवं जहत्स्वार्थायां पूर्वपदस्येवोत्तरपदस्यापि गलितार्थकतया नास्त्येवार्थवतो ग्रहणमित्यविषय एवायमर्थवत्परिभाषायाः । न च वृत्तेः पूर्वमुस्थितानां ऊढादीनामर्थवत्तामादाय तस्याः प्ररोह इति वाच्यम्, ऊढघटावित्यादौ हि पूर्वपदभूतानामूढादीनां तथाविधाया अर्थवत्तायाः सम्भवात् । तस्माज्जहत्स्वार्थायां बाधपराहता समर्थपरिभाषोपस्थित्या गतार्थाचेयमर्थवत्परिभाषा,अजहत्स्वार्थायां तु सन्निहितापि प्रौढघटावित्यादावतिप्रसङ्गवारणाय 'अर्थवत्' "समर्थ"इतिपक्षद्वयेऽप्युत्तरपदाक्षेप एवेति उपन्यासायोग्या ।

अथ यदि दीक्षितकृतोऽर्थवत्परिभाषोपन्यासोऽपि सफलीकरणीय इत्याग्रहः,तदित्थं सफलीक्रियतां,सत्युत्तरपदाक्षेपे ऊढ इति यदि कस्यचिन्नाम क्रियते तदा तस्मिन्नुत्तरपदे प्रौढ इत्यत्रातिप्रसङ्गवारणाय प्रसिद्धयप्रसिद्धनिबन्धनो गौणमुख्यन्यायोऽनुसरणीयः, स चार्थवत्परिभाषाप्रतिसन्धानाधीन इति तदुपन्यासः सफलः ।

"उपसर्गादृति धातौ ।" यत्तु सूत्रेऽस्मिन् उपसर्गेणेति प्रतीकमादाय 'यत्क्रियायुक्ता' इत्यादिना मनोरमायामाशयवर्णनं कृतम्, तत् "उपसर्गाः क्रियायोगे" इति सामान्यलक्षणेनापि प्रकृतार्थस्य सामञ्जस्ये 'यत्क्रियायुक्ता' इति विशेषलक्षणोपन्यासस्यानुपयुक्तत्वादरमणीयमेव भाति, तथापि इत्थञ्चेद्व्याख्यायते तदा रमणीयमेव । तथाहि–ननु धातुग्रहणाभावे धातावुपसर्गेणाक्षिप्तेऽपि प्रभूत ऋद्धो यस्मिन् ग्रामे स प्रर्ध ग्राम इत्यत्र वृद्धिप्रसङ्गो दुर्वारः । प्रस्योपसर्गत्वादृद्धस्य ऋकारादिधातुप्रभवत्वाच्च । अतश्चैवंविधधातुनिवृत्तिद्वारा प्रकृतोपसर्गगतोपसर्गताप्रयोजकधातुविशेषलाभार्थंधातुग्रहणं भविष्यतीति कथं योगविभागार्थमुच्यते इत्यत-

आह—*यत्क्रियायुक्त इत्यादि* । तथाचोपसर्गसंज्ञयैव एतादृश-धातुनिवारणं धातुविशेषलाभश्च भविष्यतीति धातुग्रहणं योगविभागार्थमेवेति हृदयम् ।

"निपात एकाजनाङ्"।यत्तु *पर्युदासादेवाज्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थम्*इति वदन्ति, तन्न । अनाङित्यस्य "पर्युदासत्वे प्रतिषेधार्थोऽयमारम्भ" इत्येतत्सूत्रगतभाष्यासङ्गतेः । न च सोऽभ्युच्चयवादः, कथमन्यथा अदोऽभवत् इत्यादौ अतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तस्यैव ग्रहणमिति समाधानं ब्रूयादिति वाच्यम् । लाक्षणिकत्वेऽपि पाठसामर्थ्यात् प्रतिपदोक्तशङ्काया अद्धतेः । अत एवाहो इत्यादीनां अखण्डत्वेऽप्येकत्वबुद्धौ तद्व्यवधाने आम् अहो देवदत्तेत्यत्र "आम एकान्तरम्" इति निघातप्रतिषेधः सङ्गच्छते । अपि च कौस्तुभे वार्णे विधौ लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरुक्ततया प्रतिपदोक्तस्यैव ग्रहणमिति भाष्यग्रन्थस्यापि प्रौढिवादत्वमुक्तप्रायम् । इत्थं च प्रौढिवादस्वरसेन ग्रन्थान्तरस्य प्रौढिवादमश्रुतपूर्वमेव ।

अथ च प्रसज्यप्रतिषेधाश्रयणस्य वाक्यभेदासमर्थसमासाश्रयणरूपदोषदूषितत्वं प्रौढिवादतावीजमिति चेत् ? अनच्यशित्यकितीत्यादौ प्रतिषेधाश्रयणस्यैव सर्वसम्मतत्वात् कार्यार्थं तत्र तदिति चेत्—इहापि तस्य कार्यार्थत्वात् । तथाहि—आ आत् अम् अमीत एत इत्यत्र अशब्दस्य स्वाभाविकमाङ्भिन्नत्वं स्थानिवद्भावकृतनिपातत्वं चाश्रित्य प्राप्तायाः प्रगृह्यसंज्ञायाः प्रसज्यप्रतिषेधाश्रयणं विना दुर्वारत्वात् । न चाऽऽशब्दस्य स्थानिवद्भावेन सत्याङ्त्वे आङ्भिन्नत्वव्यपदेशनिवृत्तिरुचितेति वाच्यम्, 'गुरुवत् गुरुपुत्रे वर्त्तितव्यम्' इत्यतिदेशेन गुरुत्वस्येवाङ्त्वाभावेनाङ्त्वस्यानतिदेशात् । अतिदेशे वा अङि आङ्बुद्धेराङ्भिन्नोऽयमिति बुद्ध्यविरोधितत्वात् । अत एव तद्वदतिदेशेऽकिद्विधिप्रसङ्ग इति "गाङकुटादि"सूत्रगतभाष्यं संगच्छते । अन्यथा कित्वे सति किद्भिन्नप्रयुक्तविरोध्यापादानासङ्गतेरसङ्गतं स्यात् । णलादिष्वपित्त्वनिबन्धनकित्वापादनं तु तत्रापि प्रसज्यप्रतिषेधाश्रयणेनैव परिहरणीयम् । अस्तु वैकादेशेऽपि स्थानिवद्भा—

वेनैव परसवर्णगताङ्भिन्नत्वस्याश्रयणं कैयटकौस्तुभयोरपि परादिवद्भावेनकादेशस्याङ्भिन्नत्वाश्रयणात् । अतश्च शास्त्रीयकार्यातिदेशे लौकिकस्याङ्भिन्नत्वस्य कथमतिदेश आश्रयणीयः; "न धातुलोप"इति सूत्रे लोलुव इत्यत्रोवङ्स्थानिवद्भावकृतस्य यङ्कारापेक्षया पूर्वत्वस्य नवीनैराश्रयणात् । "अचः परस्मिन्"इति सूत्रे स्थवीयानित्यत्र गुणस्य स्थानिवद्भावानादिष्टादचः पूर्वत्वस्य कैयटेनाभिधानाच्च । अविशेषणद्वारकं शास्त्रीयत्वं तु प्रकृतेऽपि तुल्यम् । न च परिभाषाश्रयणेनैव निपातत्वे लब्धे पुनर्निपातग्रहणं निपात एव निपात इत्यर्थलाभार्थम् । तेन स्थानिवद्भावलब्धस्वाभाविकं निपातत्वमनुभवत एवानेन संज्ञा विधीयत इति नैत इत्यत्राकारस्य प्रगृह्यप्रसङ्ग इति वाच्यम् । स्पष्टार्थमिहैव कृतमिति प्रकृतग्रन्थस्यासम्बद्धतापत्तेः । 'जानु अ अस्य रुजति' इत्यत्र सवर्णदीर्घस्य प्रगृह्यतानापत्तेश्च । "ओत्" सूत्रगतभाष्यकैयटकौस्तुभविरोधाच्च । इत्थं चोत्सूत्रगतकौस्तुभग्रन्थः सर्वोऽप्यसङ्गत इति ध्येयम् । अधिकं कौस्तुभखण्डनादवसेयम् ।

ईदूतौ च सप्तम्यर्थे ॥ यत्त्वस्य सूत्रस्य सप्तम्यन्तत्वात्प्रमीशब्दादिरप्युदाहरणमिति कौस्तुभे निर्णीतम्—तन्न—सप्तम्यन्तत्वात्प्रम्यादिशब्दानां प्रयोगस्य दुर्लभत्वात् । न च शब्दानां लक्षणानुसारिणां कथं प्रयोगदुर्लभतेति वाच्यम्, सति हि प्रयोगे द्वन्द्वरूपसप्तम्यभावप्रतिपादकवशात् 'तत्रापि सरसी यदि' इति वार्तिकग्रन्थस्य विरुद्धत्वापत्तेः, "न चास्ति "इदूतौ सप्तमी"इति भाष्यग्रन्थस्य विरुद्धत्वापत्तेश्च । न च वचनस्य निरवकाशताप्रयुक्तसामर्थ्यमात्रे भाष्यवार्तिककृतोस्तात्पर्यं, नत्वीदूपसप्तम्या आभावे निरवकाशता तु वचनस्येदंशे गलिताप्यूदंशे विधावसति विवक्षितार्थसिद्धये स्यादेवेति वाच्यम् । एवमपि ईदंशनिरवकाशतां स्फुटं प्रतिपादयतोर्मुनिद्वयवचनयोरशुद्धयापत्तेस्तादवस्थ्यात् । नाप्यूदंशनिरवकाशताप्रतिपादनपरता ग्रन्थस्यास्य जात्वपि संभवति । ईकाररूपसप्तमीपरसरश्शब्दोद्भावनस्य ङीषन्तसरसीशब्दव्यवस्थापनस्य चासंगत्यापत्तेः ।

न च तद्ग्रन्थस्यार्थवादवन्न स्वार्थे तात्पर्यम्, अपि तु यथा कथंचि-

न्निरवकाशत्व इति शङ्कयम् । "सस्थानत्वं नमः ख्यात्रे" इत्यस्यापि न स्वार्थे तात्पर्यम्; अपि तु खशानुकरणावश्यकत्व इत्यस्यापि सुवचत्वेन ख्याधातोरार्धधातुकविवक्षायामसाधुत्वस्य त्वदुदीरितस्यासिद्धिप्रसङ्गात् । न च भवन्मतेऽपीदंशनिरवकाशताकथनस्य नैरर्थक्यं प्रागुक्तदिशा ऊदंशनिरवकाशतोऽपि परस्येष्टसिद्धेरिति वाच्यम् । यदंशे निरवकाशत्वं तदंश एव मुख्यार्थत्यागपूर्वको गौणार्थपरिग्रहः संज्ञाविधिप्रत्ययतदन्तग्रहणनिषेधस्य बाधो वा नांशान्तरस्य इति यदि कश्चिद्ब्रूयात्तंप्रतीदंशनिरवकाशे तात्पर्यमस्तीतिप्रदर्शनं रमणीयमेव । अन्यथा कोऽह्येव संनिहितं निशितं क्षुरमपेक्ष्य शकलया माणवकं मुण्डयन्नुपहसनीयो न स्यात् । कश्च वा तप्ते वारिण्युपस्पृश्य समुपलभमानं परं प्रति धूमेनाग्निं साधयेत् "सस्थानत्वं नमः ख्यात्रे" इति वचनरूपाल्लिङ्गादार्धधातुकविषये ख्याधातोरिव वातप्रम्यादेरपि सप्तम्यां प्रयोगोऽनिष्ट एवेत्यस्मादेव भाष्यवार्तिककृतोर्वचनादवसीयते । कथमन्यथा "ईदूतौ" इति कल्पनारूपाल्लिङ्गात् प्रियाष्टन्शब्दस्य च भविषये कृते ष्टुत्वेऽस्य भवता चासाधुत्वमुक्तं संगच्छते । तदित्थं वातप्रम्यादिशब्दानां प्रयोगदौर्लभ्यं निरूपितम् ।

एवमपि यदि तेषां प्रयोगयोग्यत्वमस्तीति दुराग्रहस्तथाऽप्येतत् सूत्रोदाहरणत्वमयुक्तं वक्तुम् । सूत्रकारैरनुपसंग्रहात् ।

तथाहि—शिष्टशब्दो लुप्तस्यार्थमभिधत्ते, यथा व्यतिसेऽहन्नित्यत्र प्रकृतिप्रत्यययोरित्युद्देश्यदलार्थः संपद्यते । तत्र सप्तम्याः लुकि सति या तस्याः प्रकृतिः ईदूद्भ्यां विशेष्यते न सप्तम्यर्थे वर्तमाना ईदूदन्ता या प्रकृतिरित्युद्देश्यदलार्थः संपद्यते । तत्र सप्तम्यर्थे वर्तमानेत्यनेन सप्तम्या लोपो गम्यते । नह्यलुप्ते प्रत्यये प्रत्ययार्थे वर्तमाना प्रकृतिर्भवति । इत्थं च सप्तम्या लुकि सति या तस्याः प्रकृतिरीदूदन्ता सा प्रगृह्यसंज्ञा भवतीति निकृष्टो वाक्यार्थः । सप्तम्यर्थस्य स्थाने सप्तमी लुगिति लुकोक्तमर्थमात्रालाभात् 'शिष्टो लुप्तार्थाभिधायी' इत्यर्थस्याशिष्टानुकरणीयतया बोधनीयत्वाच्च । एवं च एवंविधार्थस्य प्रकृतसूत्रस्य भवदुक्तमुदाहरणं कथं नाम संगच्छते । अयं चार्थो भा-

ण्यादिसकलग्रन्थसंम्मत एव । तदुपदेशिसकलार्थानुगुणत्वात् ।

किं च भाष्यवृत्यादिषु सर्वेषु प्रामाणिकग्रन्थेषु एतत्सूत्रोदाहरणाभावस्य प्रदर्शितत्वात् वातप्रम्यादीनामनुदाहरणे अतिरमणीयः पन्थाः । न हि शास्त्रकृतां तादृशोदाहरणास्फूर्तिः शक्या संभावयितुम् ।

एतन छन्दोऽनुवृत्त्यभावान्नास्य छन्दोविषयत्वमिति कौस्तुभोक्तमशुद्धमेव । छन्दोऽनुवृत्त्यभावेऽपि सूत्रार्थस्य लौकिकोदाहरणेष्वयोगेन छन्दोमात्रविषयतायाः पर्यवसानात् ।

"संबुद्धौ शाकल्य"। यत्तु-*"ओत्"इत्यत्र निपातानुवृत्तेरिहसंबुद्धग्रहणस्य वृत्त्यादौ 'गवित्ययमाह' इति प्रत्युदाहरणमुक्तम्, तन्न प्रगृह्यसंज्ञासत्त्वेऽपि अपदान्तत्वेन प्रकृतिभावाप्रसक्तेः* इति मनोरमा तन्न । "इको ऽसवर्ण" इत्यत्र पदान्ता इत्यस्य सम्बन्धेऽपि "प्लुतप्रगृह्या" इत्यत्र तत्सम्बन्धस्यानावश्यकत्वात् ।

यत्तु 'अन्यथा यरो ञमि ञमेवेत्येवाद्यदिति' तन्न, तथा सति यथासंख्यापत्तेः । यद्यपि—"आन्महतः" "सन्महत्" इत्यादिनिर्देशैर्लिङ्गैर्नात्र परिभाषा प्रवर्त्तत इति शक्यते परिहर्तुम् । अतो नोपन्यस्तो दोषान्तरं तु स्यादपि ॥

इत्यचां सधिद्वयं समाप्तिमगमत् ।

## अथ हल्सन्धिप्रकरणम् ।

"स्तोः श्चुना श्चुः" । यत्तु *"स्तोः" इति समाहारद्वन्द्वः, सौत्रं पुंस्त्वम्* इत्युक्तं तदसत्—गत्यन्तरस्य (१)संभवे सौत्रपुंस्त्वस्यागतिकगतेरनाश्रयणीयत्वात् ।

"ष्टुना ष्टुः" ॥ यत्तु *स्तोः श्चौ श्चुः ष्टौ ष्टुः इति सुवचम्, न च "तस्मिन्" इतिपरिभाषोपस्थाने याञ्ञा ईड्टे ईष्टे इत्यादिर्न सिद्ध्येत, "शात्" "न पदान्ताट्टोः" इतिलिङ्गेन तस्या इहानुपस्थानस्य अभ्युपगमात्* इत्याहुः, तन्न—"न पदान्ताट्टोः" इति निषेधरूपलिङ्गस्य टवर्गांशे

(१) स् इति श् इति "सुपां सुलुक्" इति लोपेन लुप्तषष्ठीके इत्येवंरूपस्य गत्यन्तरस्येत्यर्थः ।

"तस्मिन्निति" परिभाषोपस्थानबाधेनाप्युपपत्तौ षकारांशे बाधकल्पनाया अयोगादिष्ट इत्यादौ ष्टुत्वानापत्तेः । न च लिङ्गस्य सामान्यतः प्रकृतसूत्रविषयत्वावच्छेदेन तादृशपरिभाषाप्रवृत्तिविरहबोधकत्वमितिवाच्यम्, परिभाषायाः सर्वथैवेहाप्रवृत्तौ तत्प्रापितस्य पूर्वत्वस्येवाव्यवहितत्वस्याप्यनुपस्थितौ सुटीका कटुतैलमित्यादौ ष्टुत्वप्रसङ्गात् । नचेहाव्यवहितस्य प्रापकं योगान्तरमस्ति ।

अथ यदंशबाधं विना लिङ्गमनुपपन्नं तदंशबाध एव लिङ्गेन बोध्यते, न तु सर्वात्मना सूत्रप्रवृत्तिबाध इति परत्वांश एव बाध्यताम्, न तु शकारादिपरत्वांश इति ( चेन्न ) ( षकारांशे पूर्वत्वांशाबाधेन ) ईष्ट इत्यादौ ष्टुत्वाप्रसङ्गात् ।

"शि तुक्" ॥ *यत्तु इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात् प्रत्युक्तमिति गुरुग्रन्थमनूद्य तत् पाक्षिकं, त्रिपादीस्थेऽतरङ्गेपरिभाषेयं न प्रवर्तत इति सुध्युपास्य इत्युदाहरणे स्वोक्त्या सह विरुद्धं च* इत्याहुः, तद् गुरूणामाशयस्यानवबोधात् ।

तथाहि—कार्यकालतायां बहिरङ्गपरिभाषया धुटोऽसिद्धत्वेन णत्वनिषेधस्य निष्प्रत्यूहतया यथोद्देशतायां णत्वनिषेधो धुटः परादित्वे प्रयोजनमिति हि प्राचीनैरुक्ते प्रयोजने पाक्षिकतारूपस्य दोषस्य गुरुभिरहितस्यापाक्षिकात्वात्तत् पाक्षिकमित्यभिधानमसंदेहः, सुध्युपास्य इत्यत्र त्रिपादीस्थे अन्तरङ्गपरिभाषेयं न प्रवर्तते इति तेषामुक्तिस्तु यथोद्देशपक्षावलम्बिनी इह त्वागतार्थोक्तिः पुनः कार्यकालपक्षाश्रयेति विरोधोद्भावनमप्यसंगतमेव, अहो अयं महानस्य द्रोहोद्रेको यदुदासीनानां प्राचां ग्रन्था आशयविशेषकल्पनेन समर्थ्यन्ते; न च समर्थ्यन्ते गुरूणामिति ।

"ङमो ह्रस्वादचि" ॥ यत्तु *ङम् प्रत्याहारः संज्ञायां च कृतं टित्वं सामर्थ्यात् संज्ञिभिः संबद्धयते* इत्याहुस्तदसारम्—संज्ञायां टित्वस्याप्रसक्तेः । न ह्यत्र ङम्शब्देन संज्ञायां ग्रहणस्य प्रसक्तिरस्ति । 'अशब्दसंज्ञा' इतिनिषेधात् । ङमुटि नहि समासोऽयं ङमः पर उड्यस्मिन् सोऽयं समुदायो ङमुट्–इट् णुट्–नुटश्च समासार्थः ।

यद्वा ङ्म पर उट्ङमुट् सं च ङटादित्रयरूपशब्दार्थत्वात् प्रकृते विधीयते । न तु ङमुट्शब्दः । अर्थबोधने ङमुशब्दस्य निवृत्तेः । अन्यथा "पूर्वौ तु ताभ्यामैच्" इति अत्रैकाकारान्त्यकारात्मकस्य समुदायस्य भाव्यत्वापत्तेः ।

इत्थं च ङुडादिसमुदायस्य विधेयस्यैव टित्वं; न ङमुशब्दस्येति किमुच्यते संज्ञायां कृतं टित्वमिति, किम्वोच्यते सामर्थ्यादिति,

किं च संज्ञात्र ङमुशब्द "आदिरन्त्येन" इत्यनेन शास्त्रेण तस्यैव संज्ञात्वेन बोधनात् । न तु ङमुट्शब्दः,तस्य संज्ञात्वेनाप्रसिद्धेः । टित्वं पुनरित्संज्ञकटकारावयवकत्वं ङमुडिति समुदायस्य सति विधेयत्वे संभवति न ङमुशब्दरूपायाः संज्ञायाः, नापि ङणनानां संज्ञिनां मतो ग्रन्थोऽयं कौस्तुभमनोरमयोः निरर्थकलक्षणासापेक्षव्याख्य एव ।

यदप्युच्यते*सुगण्णीश इति णयल्लोपानां न स्थानिवत्"पूर्वत्रासिद्धे तन्निषेधात्"*इति । तदप्यहृद्यम् । ङमुटः परादिवत्त्वे न स्थानिवद्भाव इतिपक्षाश्रयेण शङ्कोत्थान इति वाच्यम् । तस्य पक्षस्य भवतैव "निष्ठा सेट्" इत्यत्र सेड्ग्रहणाल्लिङ्गात् क्वाचित्कतया स्वीकारेण बहुलग्रहणादिवद्निष्ठार्थेऽप्रवृत्तेः । अन्यथा क्वाचित्कत्वस्वीकारो निष्फल एव स्यात् । हल्ङ्यादिलोपसंयोगादिलोपार्थं भवताप्यत्र क्वाचित्कताया एव शरणीयकरणीयत्वाच्च।तस्य"पूर्वस्मात्"इत्यया-देशस्याल्लोपस्थानिवद्भावेनाप्रवृत्तौ तस्या एवाश्रयणीयत्वात् ।

यच्च*बहिरङ्गपरिभाषायान्तर्गतत्वाच्च तदुभयमप्यसङ्गतम्*इति गुरु-ग्रन्थे पाक्षिकं दूषणमुपन्यस्तम् । तत्तेषामाशयस्यानवबोधादित्युक्तमेव॥

इतिहल्संधिः ।

---

"शर्परे" ॥ यत्तु यदि तु "शर्परे न" इत्येवोच्येत, तर्हि प्रकृते सत्वे निषिद्धेऽपि "कुप्वोः ᳲक ᳲपौ" स्यातां, वासः क्षौममद्भिः प्सातमिति । विसर्जनीयवचनात्तु विकारमात्रं बाध्यते*इत्याहुः ।

तत्र विचार्यते-"कुप्वोः"इतियोगे चकारेण"शर्परे" इत्यत्र प्रकृतो विस-र्जनीयः समुच्चीयते। पक्षप्रसक्तबाधद्वारा विसर्जनीयश्रुते "शर्परेन"इति कृते तु विसर्जनीयस्याप्रस्तुतत्वात् । सत्वनिवृत्तेश्चादेशविधानपक्षेऽ

प्यपवादसिद्धत्वेनानुवाद्यतया आदेशाभ्यां सह समुच्चेयतायाः अनुपपत्तेः । निषेधविधानसामर्थ्यात् तत्र आदेशाभावपक्षे स्यादवगतिरिति चेत्तर्हि सामर्थ्यादेव पक्षे सत्वमपि भवतीत्यर्थोऽप्यवगन्तुं शक्यत इति क्लिष्ट एवायं पन्थाः । तत्रैव विसर्जनीयग्रहणेन विशेषाभावात् पूर्वपक्षोत्थापनमेव न संगच्छते ।

इत्थं पुनः पूर्वपक्षोत्थापनं वक्तव्यं "कुप्वोः" इति योगो विभज्यते। तत्र "न शर्परे" इत्यनेनेति "विसर्जनीयस्य स" इति चानुवर्त्तते । तथा च कुप्वोः परयोर्विसर्जनीयस्य सो नेति प्रथमयोगार्थः,ततश्च विसर्जनीयस्य कुप्वोः परयोः ×क× पौ भवत इति द्वितीययोगस्य । इह च प्रथमयोगविहितनिषेधस्य नान्तरीयकत्वाभावबोधकचकारस्य च सामर्थ्यात् कुप्वोः परयोर्विसर्जनीयश्रुत्या सह विकल्पः पर्यवस्यति । नित्यत्वे हि तयोरपवादत्वादेशे उत्सर्गस्य निवृत्तौ सिद्धायां षत्वनिषेधस्थानस्य नैरर्थक्यापत्तेः । समाधानं तु 'तर्हि' इत्यादि मनोरमास्थमेव। पुनरिहाप्यवधेयं विसर्जनीयस्य शोऽशर्परे वा शरि कुप्वोः ×क× पौ विसर्जनीय इतिन्यासो विधेयः । "कुप्वोः" इत्यत्र 'वा शर्परे' इत्यनुवर्तनीयम् । इत्थं च मात्रालाघवं वाक्यलाघवं सकारसिद्धिश्च भवति ।

न च "वा शरि" इत्यत्रापि अशर्परे इत्यनुवृत्तिः स्यादिति वाच्यम् । सत्यामनुवृत्तौ दोषस्थलस्य दौर्लभ्यात् । अस्तु वा मण्डूकप्लुत्या "कुप्वोः" इत्यत्रैव तदनुवृत्तिः ।

अथ 'वासः क्षौममद्भिः प्सातम्, इत्यादौ रुत्वविसर्गयोरसिद्धत्वात् सस्य "स्कोः" इतिलोपो दुर्वारः । न च "शर्परे" इत्यनेन निरवकाशत्वाद्बाधबुद्धेरकप्राकृतिकविसर्जनीयेत्यस्य सावकाशत्वात् । नचाष्टमिकवार्तिकरीत्या सञ्ज्युक्तौ दोषनिरासः । तत् प्रत्याख्यानं तु भाष्यकृतः सरणौ दोषस्य तथाप्यनुद्धारति चेत् ? समाधेरदूरत्वात् ॥

इति स्वादिसंधिः ।

---

श्रीमत्पदवाक्यप्रमाणपारावारीणपण्डितराजजगन्नाथकृतौ मनोरमाखण्डनकुचमर्दिन्यां पञ्चसन्धिप्रकरणं समाप्तिमगमत् ।

# परिष्कारदर्पण

( परिष्कारों का विचित्रग्रन्थशास्त्रार्थकलासहित )

आप महानुभावों की सेवा में निवेदन करते हुए अत्यन्त हर्ष होता है कि जिस परिष्कारदर्पणनामक ग्रन्थ के लिये विद्वज्जन बहुत दिनो से आकाङ्क्षित थे वह प्रकाशित हो गया। इस ग्रन्थ में ३ प्रकरण हैं। जिसमें प्रथम प्रकरण पारिभाषिक ( अवच्छेदकत्त्व अवच्छेद्यत्त्व निरूपितत्त्व निरूपकत्त्व सम्बन्धावच्छिन्नत्त्व आदि ) शब्दों के लक्षण उदाहरण समन्वय दोषादिवारणपूर्वक दिखाये हैं। द्वितीयप्रकरण व्याकरण के परिष्कारों तथा पाणिनीय सूत्रों के शाब्दबोधों का है उसमें शेखरादिग्रन्थप्रतिपादित एवम् अप्रतिपादित प्रायः सभी स्थलों का परिष्कारविवरण परीक्षोपयोगी तथा अध्ययनाध्यापनादि का महोपकारक है। इस ग्रन्थ के बनानेवाले जौनपुर बदलापुर निवासी घटिकाशतकशतावधानाशुकविकौमुदीकल्पलतिकाद्यनेकग्रन्थकार वैयाकरणशिरोमणि प्रसिद्ध शास्त्रार्थी पण्डितवर शुक्लश्रीवेणीमाधवशास्त्री जी हैं। शास्त्री जी का अतुलनीय श्रम तथा इनकी विचित्र परिष्कारशैली एवं कल्पनायें ग्रन्थ के देखने से ही आप को अनुभूत होंगी। ग्रन्थकार के द्वितीयपुत्र श्रीराजनारायणशुक्लशास्त्री जी ने इस ग्रन्थ की भी टिप्पणी वैसी ही विचित्र की है जैसी आप लोग कौमुदीकल्पलतिका में देख चुके होंगे। इस ग्रन्थ को पास में रखने से पूर्ण विश्वास है कि परिष्कारों का बनाना समझना तथा उनके द्वारा परीक्षा में उत्तीर्ण होना अतीव सरल है। शास्त्री—आचार्य परीक्षाओं का अत्यन्त उपकारक है। तृतीयप्रकरण इस ग्रन्थ का शास्त्रार्थकला नाम से है। जिसमें परिभाषेन्दुशेखर की परीक्षोपयोगिपरिभाषाओं का ज्ञापक परिष्कारादि दिखलाते हुये अन्त में विचित्र कल्पनाओं द्वारा शेखर ही का खण्डन कर दिया गया है। उपरोक्तविषयों से यह ग्रन्थ अत्यन्त उपादेय हो गया है। इतना होते हुये भी इसका मूल्य स्वल्प ही १=) अट्ठारह आना मात्र रक्खा है। अधिक क्या प्रशंसा करें यदि इसके लिये अतिशीघ्र आर्डर न दिये तो इसके आधुनिकलक्षणों से प्रतीत होता है कि द्वितीयसंस्करण की प्रतीक्षा करनी पड़ेगी।

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत सीरिज आफिस, बनारस सिटी।**